श्रीरङ्गरामानुजमुनिवरविरचितम्—

केन-कठ-प्रश्न-मुण्डक-माण्डूक्य

श्वेताश्वतर-अथर्वशिखा-कौषीतकि-मन्त्रिका-अग्निरहस्य-

भाष्यम्

श्रीश्रुतप्रकाशिकाचार्य-श्रीसुदर्शनसूरिप्रणीतं सुबालोपनिषद्भाष्यम्

पुरुषसूक्तश्रीसूक्तभाष्यसहितम्

एतत्सर्वभाष्यपरिष्कार-

महोपनिषदथर्वनारायणोपनिषद्द्वयोपनिषत्परिष्कार-अथर्वशिरस्सार-

तत्तदुपनिषदर्थसंग्रहकारिकाभूषितम्



परिष्कार-तत्तत्संग्रहकारिकाप्रणेता उभयवेदान्तग्रन्थमालासंपादक

शिरोमणि-तर्कार्णव-पण्डितरत्न-पण्डितमार्तण्ड-

श्रीदेशिकदर्शनधुरन्धर-पूर्वोत्तरमीमांसाप्रदीप-उभयमीमांसावल्लभ-

अभिनवदेशिकविरदभूषित नानाशास्त्रग्रन्थनिर्माणालङ्कर्मीणः

उत्तमूर्- ति. वीरराघवाचार्यः

25. नाथमुनि वीथी

ति नगर्-मद्रास् 17.



LORD SRI VENKATESWARA

[Block courtesy:—THE LITTLE FLOWER Co, MADRAS-17]

## समर्पणम्

"श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा"

"अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥"

एकतो द्रमिडसूक्तिसत्सरैरन्यतस्सुरवचोमयैरपि ।
साधु संग्रथितया स भूष्यते श्रीपतिः श्रुतिकिरीटमालया ॥

यैषाऽऽमोदवहा सुवर्णशतपत्राढ्यैर्विशुद्धैस्सरैः
श्लाघ्यश्रीगुरुकल्पवृक्षसुमनस्संदोहगुम्भैः कृता ।
एनां प्राज्ञमतल्लिकाः ! मधुमयीं वेदान्तमालां करैः
गृह्णीत श्रितवेङ्कटं निजपतिं श्रीशं वरीतुं वरम् ॥

गोपिकाभिरिव गोदयेव वा दिव्यसूरिभिरिवापि गुम्फ्यताम् ।
श्रीपतिः स्वहृदि तेन दत्तया स्त्रीमयैरिह समैरस्त मालया ॥

पवित्राढ्यवेदान्ततद्भाष्यमालां
परिष्काग्रहृद्यार्थसंदर्भमव्याम् ।
ममेष्यद्भिरेवं मरैः सघट्य्य
स्वयं धर्तुमिच्छत्वयं श्रीनिवासः ॥

## *BOOKS READY FOR SALE!*

| | | Rs | P. |
|---|---|---|---|
| 1 | Sri Bhashya with Sruta Prakasika | 50 | 00 |
| 2 | Sri Bhashya with Bhashyartha Darpana | 25 | 00 |
| 3 | Vedanta Dipa | 4 | 00 |
| 4 | Paramartha Bhushana | 25 | 00 |
| 5 | Vaiseshika Darsana with Rasayana | 7 | 00 |
| 6 | Tarkasangraha with Sukha Pravesini | 1 | 00 |
| 7 | Upayukta Parayana | 2 | 50 |
| 8 | Rakshagranthas—by Srimad Vedanta Desika | 10 | 00 |
| 9 | Seswara Mimamsa and Mimamsa Paduka with Commentary | 10 | 00 |
| 10 | Yadavabhyudaya with Appayya Dikshita's Commentary and Tamil Translation | 40 | 00 |
| 11 | Paduka Sahasra with Sanskrit and Tamil Commentaries | 35 | 00 |
| 12 | Sankalpa Suryodaya ,, ,, | 30 | 00 |
| 13 | Subhashita Nivi ,, ,, | 15 | 00 |
| 14 | Sri Bhagavad Gita with Sri Ramanuja Bhashya & Sri Desika's Commentary and footnotes | 35 | 00 |
| 15 | ஸ்ரீ பகவத்கீதை தமிழ் பெயர்ப்பு—கீதார்த்தம் | 20 | 00 |
| 16 | Kenadyupanishat - Purusha Sukta Sri Sukta Bhashya | 20 | 00 |

**All other Sri Desika's works are being published**

UBHAYA VEDANTA GRANTHAMALA
**25, NATHAMUNI STREET, T.NAGAR**
**MADRAS -17**

श्रीः

श्रीमते श्रीवेङ्कटेशपरब्रह्मणे नमः

# उभयवेदान्तग्रन्थमालाभूमिका

अनुसंधीयते खल्वशेषमनाविवेकवित्तैरखिलभूतक्षेमकामैराचार्यैः तदनुयायिभिश्च—

"सर्वदेशदशाकालेष्वव्याहतपराक्रमा ।
रामानुजार्यदिव्याज्ञा वर्धतामभिवर्धताम् ॥" इति ।

तत् आत्मवत् सर्वभूतानि पश्यतामास्तिकवर्याणां प्रथममिदं कर्तव्यम्, यदेतस्य भगवद्रामानुजमतस्य सर्वतः सम्यक् प्रचारणं नाम । मनुव्यासपराशरप्राचेतसादिप्रतिपोषित परिशुद्ध वेदार्थ-मर्वाचीनक्षोभपरिहारेण यथावत् प्रचिचारयिषुणा हि भगवन्नित्य-शेषभूतस्य मनुजानां मनोवाक्कायशोधनाय योगशब्दवैद्यकानुशा-सनानि प्रणीतवतः आदिशेषस्यापरावतारेण भगवद्रामानुजमुनिना प्रथमतो वेदार्थसंग्रहाभिधानः प्रबन्धो व्यबन्धि । व्यवेदि च भगवतः श्रीशैलपतेः श्रीनिवासस्य पुरस्तात्, सति तन्नियमने संप्रदायस्यास्य प्रचारः प्रजाहितायेति । यदाहुः—

"श्रीभाष्यकृदुपन्यस्तो यः श्रीशैलपतेः पुरः ।
वेदार्थसंग्रहस्यास्य कुर्मस्तात्पर्यदीपिकाम् ॥" इति ।

तदिदं व्यज्यते च भगवन्नियमनम्, 'ब्रह्मणि श्रीनिवासे' इति श्रीभाष्योपक्रमश्लोकविन्यासविशेषेण। निशाम्य च तेनैव श्रीवेङ्कटेशेन कलियुगप्रत्यक्षदैवतेन शरणागतसर्वाभीष्टविश्राणनविश्रुतेन भक्ता-ग्रेसरभगवद्रामानुजपरतन्त्रेण स्वयमेव श्रीमद्वेदान्तदेशिकरूपेणा-वतीर्य तत्सिद्धान्तसंप्रदायप्रतिष्ठापनेन दर्शनमिदम् अखिलतन्त्र-कर्शनमित्युद्घुष्य पृथिव्यां प्रापितभूयःप्रचारमिति निश्चप्रचमेतत् ।

तस्यैतस्य मतस्य सम्यग्बोधाय कर्तव्येषु परश्शतविधलेखन-प्रवचनप्रकाशनादिषु मुख्यांशं विधायोपकर्तुमियम् 'उभयवेदान्तग्रन्थ-माला' श्रीवेङ्कटेशस्य तद्भक्तानाञ्च परमां कृपां पुरस्कृत्य प्रकाश

प्राप्यते। अत्रास्य सिद्धान्तस्य साकल्येन वेदमूलकतया सर्ववेदसामरस्यविधानप्रवणतया च उपजीव्यभूतानामुपनिषदां प्रकृतविशिष्टाद्वैतसिद्धान्तैकपरत्वं सुस्पष्टयितुं ता एव प्रथमं प्रसिद्धभाष्यग्रन्थैः सह प्रकाशं प्रापणीया इति, तथाकरणेनेयं वेदान्तग्रन्थमालेति नाम समन्वर्थयन्ती वेदान्तार्थवैशद्याय प्रवृत्ततया वेदान्तव्यवहारभाजां ब्रह्मसूत्रतद्भाष्यादिमुख्यग्रन्थानामपि प्रकाशने प्रवर्ततामिति च मनसिकृत्योपनिषन्मुद्रणमुपाक्रमि। एवं द्रमिडवेदरूपदिव्यसूरिसूक्तिजातस्यापि सव्याख्यस्य मुद्रणम्। एवमुपक्रम्य मुद्रितानामुपनिषद्भाष्यकोशानां प्रायो व्ययितत्वात् पुनर्मुद्रणमिदानीं क्रियते। 1970 संवत्सरे ईशोपनिषद्भाष्यम् अस्मदाचार्यभाष्यतात्पर्यसहितं पुनर्मुद्रितमासीत्। अथ 1971 संवत्सरे केनाद्युपनिषदां यथावन्मुद्रणारम्भो व्यधायि।

"भगवद्बादरायणप्रणीतस्य ब्रह्मसूत्रस्य विशिष्टाद्वैतसिद्धान्तैकपरत्वमवश्यमभ्युपेत्यम्। तथा खलु भगवद्रामानुजाचार्येण निश्शेषाक्षेपनिरसनेन निपुणमुपापादि। एवमप्युपनिषदः अद्वैतपरा इत्येव स्वरसतः प्रत्येतव्यम्" इति केचिद्भ्रान्ताः भ्रमयितारस्सन्ति। नूनमेते सर्ववेदवेदान्तविदो भगवतो बादरायणस्य यथावदुपनिषदर्थपरिज्ञानासामर्थ्यं स्वात्मनामेव च तत्र सामर्थ्यमनया प्रक्रियया विवक्षन्तीव। को हि नाम वैदिक आस्तिकः कुलपारम्पर्येण, प्रकृष्टेन तपसा च प्राप्तवेदसंपदं परमर्षिं पाराशर्यं बादरायणमनभिज्ञं मन्येत। को नु द्वैताद्वैतविशिष्टाद्वैतादिषु किमप्यातिष्ठमानोऽपि उपनिषच्छारीरकयोरैककण्ठ्यमध्यवस्येत्। नूनं ब्रह्मसूत्राणामिवोपनिषदामपि स्वयमेव भगवद्रामानुजमुनिना भाष्याकरणमेव तत्रापराध्यति। अन्यथा हि—तासामपि यदि तेन भाष्यमभाविष्यत, नूनमेते भ्रान्ताः शारीरकस्येव उपनिषदामपि विशिष्टाद्वैत एव स्वारस्यमुद्घोषयन्त, ईदृशं दुर्वादमत्यक्ष्यन्। तद्भाष्यविरहादेव स्वयमत्रापोद्वापासमर्थैः

परमतभाष्यमात्रदर्शिभिरियं किञ्चिद्भाति । भगवद्रामानुजमुनिस्तु वेदार्थसंग्रहं श्रीभाष्यञ्च स्वकीयमभ्यस्यता परमतभाष्यत एव पद-पदार्थव्युत्पत्तिमता यथावदुपनिषदर्थः सुगम इति तत्रोदासाञ्चक्रे ।

एवमपि कथमस्यैवमुपनिषदां भाष्यपर्यायभ्रमो मा भूदिति, आनुपूर्व्या उपनिषद्व्याख्याना तदर्थस्य चानवबोधे तद्विषये प्रवृत्तानां श्रीभाष्यादीनामप्यर्थग्रहणे क्लेशोऽस्तीति, तथा उपनिषत्सु प्रतिपदं पर्यालोच्यमानासु परग्रन्थास्पृष्टाः परद्रढता विशेषाः सन्त्यनुभावनीया इति च विवेचितवद्भिरनेकैरुपनिषद्व्याख्यानेऽपि विशिष्टाद्वैतिभिः प्रववृते । एवं प्रवर्तमानास्सर्वेऽपि स्व स्वमुपनिषद्व्याख्यानं सम्यग्भाष्यनाम भर्तुमर्हमपि, 'श्रीभाष्यं वेदार्थसंग्रहदर्शितार्थप्रकाशमात्रपरमिदम्, एतद्विषयेऽपि श्रीभाष्यादिकमेव भाष्यम्' इत्याकलयन्त इव न भाष्यनाम्ना स्वं व्यपजह्रुः, यथा न्यायभाष्यकारादयः, किन्त्वन्यथा । अथाप्यर्वाचीभिः यथावस्थितगौरवदर्शिभिः भाष्यपदेनैव तानि व्याख्यानानि व्यवहारपथमनीयन्त । गमनिकेयमन्यत्रापि दृश्यते ॥

## वेदान्तोपनिषत्पदार्थः

वेदे कर्मकाण्डज्ञानकाण्डात्मना द्वेधा विभक्ते द्वितीया विधा वेदान्तः, उपनिषत् । वेदस्यान्ते वर्तमानत्वात् वेदान्तः । तथा वेदार्थनिर्णयोपयोगित्वादपि । अन्तोऽवसानं संशयापगमो निर्णय इति । वेदान्तव्युत्पत्तिमलब्धवता च पूर्वकाण्डार्थोऽपि दुर्ग्रहः । किन्देवतोद्देशेन कर्माणि प्रवृत्तानि, किञ्च कर्मणां मुख्यं लक्ष्यमिति वेदान्तत एव विज्ञेयम् । सुसूक्ष्मं तत्त्वं सुबहु परिश्रम्य गृहीतमेव स्थेम्ने कल्पत इति धर्मादनन्तरं वेदे तत्त्वोपदेशः । अत एव खल्वारुणिर्गौतमः स्वात्मजं श्वेतकेतुं स्वयमनध्याप्य अन्यत्र प्रेष्य स्वधीते तस्मिन् प्रतिनिवृत्ते तस्याप्यज्ञानमुद्घाट्य तस्मिन् ज्ञातुं त्वरमाणे उपदिदेश, यस्मिन् ज्ञाते सर्वमिदं ज्ञातं भवति, यद्विद्या सर्वविद्याप्रतिष्ठा, तत्

तत्त्वं परमं रहस्यम्। अतो यदुपरि वेदनीयं किमपि नावशिष्यते, तत् वेदान्तेन वेद्यत इति। अथ कस्मादुपनिषत्। उप=समीपे, निषद्य= उपविश्य शिष्येणाऽऽचार्यात् गृह्यमाणत्वादुपनिषदिति केचित्। सर्वस्यापि वेदस्य विद्यास्थानस्य चेदमविशिष्टम्। अथापि परमरहस्यत्वाद्वेदान्त एवात्यन्तसमीपे उपविश्यान्तेवासिना गृह्यत इत्याशयो वाच्यः। शाङ्करोपनिषद्भाष्ये च 'षद्लृ विशरणगत्यवसादनेषु' इति विशरणार्थकोऽयं धातुः उपनिपूर्वः निश्शेषतापत्रयविदारणं ज्ञानं तत्संपादकतया वेदभागश्च वक्तीत्यभापि। अत्र प्राचीनः सांप्रदायिकोऽर्थः श्रुतप्रकाशिकायामेवं दर्शितः—"ब्रह्मण्युपनिषण्णेत्युपनिषत्। 'उपनिषण्णत्वाद्वा उपनिषत्' इति हि वाक्यम्। 'गहने ह्ययं विद्या सन्निविष्टा' इति तद्विषयं द्रमिडभाष्यम्। 'गहने ब्रह्मण्युपनिषण्णे'ति भाष्यविषया वामनटीका। अद्वारकभगवत्प्रतिपादकत्वमुपनिषण्णत्वम्" इति। वाक्यं नाम छान्दोग्यव्याख्यानरूपो ब्रह्मनन्दिकृतो ग्रन्थः।

"यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च। गृणन्ति सत्यकर्माणम्" इति च महाभारतवचनम्। अत्र वाकेषु=मन्त्रेषु, अनुवाकेषु= तदर्थदर्शिषु ब्राह्मणेषु, निषत्सु=देवताप्रतिपादकभागेषु, तथोपनिषत्सु च इत्यर्थः' इत्याहुः। स हि सत्यकर्मा सर्वकर्मसमाराध्यः सृष्टिस्थितिसंहारनियमनविभूतिविहारावतारादिसत्यक्रियः परमपुरुषः। निषत्पदाभिधेयो देवतान्तरप्रतिपादकभागोऽपि तद्विषये निषत्; वेदान्तस्तूपनिषदिति इतोऽवगमात् उपेत्येतत् अद्वारकभगवत्प्रतिपादकत्वाभिप्रायेण प्रयुक्तमिति ज्ञायते। (अनेन सत्यकर्मपदेन उपनिषदां सगुणब्रह्मपरत्वं प्रपञ्चसत्यत्वञ्च स्पष्टम्।) निषीदत्यस्यां देवतेति निषदिति केचिद्व्युत्पादयन्ति। द्रमिडभाष्याद्यनुसारे तु निषीदतीयं देवतायामिति व्युत्पत्तिर्युक्ता। अर्थे शब्दस्य वृत्तिश्च प्रसिद्धा। अत्र सत्यकर्माणमित्यस्य स्थाने 'सत्यधर्माणः' इत्येव पाठ इति पाञ्चरात्राधिकरणश्रुतप्रकाशिकातो ज्ञातव्यम्। तथा तत्र ग्रन्थे

न्यायपरिशुद्धौ चैकायनश्रुतिविषयमिदं वचनं निरदेशि। अस्तु निपत्पदं यत्किञ्चिदर्थम्। सर्वथा उपनिषत्पदमन्ततः श्रुतप्रकाशिका-दर्शितेऽर्थे वर्तते। प्रयुज्यते चोपनिषत्पदं रहस्यार्थे, 'एषा वेदोपनिषत्', 'तस्योपनिषद्दहरिति' इत्यादौ॥

( उपनिषद्व्याख्यानम् )

आसामुपनिषदामपवर्गजनतीकर्यायावश्यं व्याख्यानं विधेय-मित्याशयेनैव, श्रीभाष्यगीताभाष्यादिमुख्यग्रन्थार्थवैशद्यविधित्सा-कृतेन विविधग्रन्थरत्नविरचनवैयग्र्येणालब्धावकाशावपि श्रीमद्व्या-सार्यवेदान्तदेशिकावाचार्यौ प्रत्येकमेकामुपनिषदं व्याख्याय सरणि-मादर्शयताम्। तत्र पूर्वेणाचार्येण शङ्कराचार्यादिभिरव्याख्याताऽपि ब्रह्मसूत्रकृदभिमता नारायणपरायणा सुबालोपनिषद् व्याख्याता। उत्तरेण चाचार्येण संहितान्तर्गतापि संक्षिप्तरूपापि सर्वापेक्षितार्थ-द्म्परा शाङ्करादिव्याख्याने सत्यपि व्याख्येयविशेषांशेति ईशावास्यो-पनिषत् उपनिषत्सु प्रथमा व्याख्याता। तेन परव्याख्याने सत्यसति च सर्वा व्याख्येयेत्यसूचि। तदिदमाकलय्य श्रीरङ्गरामानुजमुनिरा-चार्यः श्रीभाष्यश्रुतप्रकाशिकादिव्याख्यादिरूपं भावप्रकाशिकादि प्रणीय उपनिषद्विषये परव्याख्यापारतन्त्र्यं प्रतिक्षेप्तुमनाः सर्वा अपेक्षिता उपनिषदो व्याचख्यौ। तदस्य परिप्रबन्धनिर्माणनिरूढ-यशसोऽपि दशोपनिषद्भाष्यकार इत्येव भूयसी प्रसिद्धिरवश्यापेक्षित-पूरणात्। एवं प्रसिद्धावपि दशकादधिका अप्युपनिषद्स्सन्त्ये-वैतद्व्याख्याताः। एवमन्येऽपि केचित् सन्त्येव महान्तः विशिष्टा-द्वैतसिद्धान्तानुसारेण कतिपयोपनिषद्व्याख्यानकारिणः। तदन्यतम-भूतश्च श्रीमत्साइश्रीमन्नारायणमुनिः। श्रीदेशिकभाष्यानुसारि यस्येशावास्यव्याख्यानमपि प्राङ्मुद्रितम्। तमधिकृत्य वक्तव्यं सर्वं तत्रैवावोचाम।

यस्य खल्वसंख्यासु मनुव्यासप्राचेतसपरिषद्दर्शासु सुधामय-

सूक्तिषु मुक्तिसौधविशिखासोपानपङ्क्तिषु वैशम्पायनशौनक-प्रभृतयः श्रेष्ठाः शिरःकम्पिनः, यस्य सूक्त्युपन्यासे श्रोत्रपथमागे, कामं केचन, 'मौनं बिभ्रतु मत्सरेण नमिताः, तूर्णं त एव ध्रुवं कालोन्निद्रकदम्बगोलकवपुषः कम्पस्फुरन्मौलयः । किञ्चिद्व्रीडितकुञ्चिताक्ष-मवशादुच्चानदत्ताननाः प्रस्तोष्यन्त्यधि प्रयोगपदवीसारस्यसारस्य ॥' इत्यानुभविकम्, तस्यैतस्य सरलसमुचितं सावधानप्रियं वा सम्प्रधानं परफाणितिपरिष्काररूपं वा विविधं विविधाधिकार्यनुकूलं ग्रन्थरत्नम-नुगृहीतवतः श्रीमद्वेदान्तदेशिकस्य कृतिरीशावास्योपनिषद्भाष्यम् । तत् अस्मदीयेन आचार्यभाष्यतात्पर्येण सह प्रागेव पुनर्मुद्रितम् ।

केनोपनिषदादिभाष्यप्रणेता श्रीरङ्गरामानुजमुनिवरस्तु श्रीभाष्य-गुरुपरम्परायां श्रीमद्वेदान्तदेशिकात् दशमः, मुनित्रयशाखायां श्रीपद्मपराङ्कुशस्वामिनस्तुरीयः, श्रीतातयार्यचरणशरणः तच्छिष्य-श्रीवात्स्यानन्तार्यसेवासमधिगतवेदान्तः श्रीब्रह्मतन्त्रस्वामिनः पञ्च-दशात् (१५) श्रीपरकालमठगुरुपरम्परानिविष्टात् श्रीज्ञानाब्धिब्रह्म-तन्त्रपरकालमुनीश्वरात् प्राप्तपारमहंस्यः, अप्पय्यदीक्षितोक्तेष्वर्थेष्व-भिमतग्रहणस्यानभिमतखण्डनस्य च स्वग्रन्थेषु कर्ता, स्पष्टमेव च दोड्डयाचार्येति प्रसिद्धमहाचार्यग्रन्थनामस्वग्रन्थे उल्लेखितेत्येवंप्रकारे-णास्यापि कालनिर्णयः सामान्यतस्सुकरः। सोऽयमाचार्यः मद्रनगरात् त्रिंशत्क्रोशदूरदक्षिणदिक्स्थित–वेलामूर्–ग्रामाभिजनः पूर्वं वरदवि-ष्णवाचार्यनामा छन्दोग इति, (ब्रह्मचर्यादेव विद्याधिगमसमनन्तरप्राप्त-संन्यास इति,) श्रीकाञ्च्यां केवलं भिक्षाकाले श्रीदेवाधिराजदिव्या-लयसन्निधिर्नाधि प्रति गच्छन् अन्यदा श्रीदेशिक–दीपप्रकाशमन्दिर-समीपे आश्रमे विरचितवेदान्तप्रवचनग्रन्थनिर्माणो महाविरक्त इति च वदन्ति । कदाचित् महाचार्यः एतस्य स्वामिनस्सन्निधमेत्य, स्वीय-मागमनमविज्ञाय अनवलोक्य च भाष्यादिसूक्तिसुधास्वानुभवनिमग्न-मेनमुद्दिश्य, अहो मकरन्दास्वादमधिगमेति शशाप इति, श्रीमद्भिर्दि-

कासु भर्त्सितासु मकरन्दास्वादे कोऽत्रपाय इत्येनेन प्रयुक्तमिति च किंवदन्ती । षष्टिग्रन्थनिर्मातृत्वेन प्रसिद्धस्यास्य सम्प्रत्युपलभ्यमाना कृतयस्तावत् (१) केन (२) कठ (३) प्रश्न (४) मुण्डक (५) माण्डूक्य (६) तैत्तिरीय (७) छान्दोग्य (८) बृहदारण्यक (९) मन्त्रिका (१०) अथर्वशिखा (११) कौषीतकी (१२) श्वेताश्वतर (१३) अग्निरहस्यानां भाष्याणि, (१४) श्रीभाष्यव्याख्या मूलभावप्रकाशिका (१५) श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका (१६) विषयवाक्यदीपिका (१७) शारीरकशास्त्रार्थदीपिका (१८) तिरुप्पल्लाण्डु (१९) तिरुप्पावै (२०) तिरुवाय्மொழி इति द्रमिडग्रन्थानां संस्कृतानुवादाश्च । इमा मुद्रिताः कृतयः । अमुद्रितासु (२१) कण्णिनुण्शिरुत्ताम्बुव्याख्यानमस्तीति वदन्ति । (२२) रामानुजसिद्धान्तसारसङ्ग्रहस्तु दृश्यत एव । एवं (२३) पुरुषसूक्तभाष्यमपीत्याहुः । (२४) तत्त्वनिष्कर्ष (२५) महोपनिषद्भाष्यम् (२६) श्रीरहस्यत्रयसारव्याख्या तात्पर्यकौमुदी (२७) प्रतितन्त्रपरिष्क्रिया इति चतुष्टयं महीशूरराजकीयकोशालयपट्टिकायामेतत्कृतत्वेन निर्दिष्टमस्ति । अन्यास्तु कृतयः का इत्यन्वेषणीयम् ।

अस्यास्यर्थमद्वैतप्रस्थानेषु तथा न्याये, व्याकरणे, मीमांसायाञ्च परकीयप्रबलाक्षेपविमर्शखण्डनानुगुणं विशुद्धं वैदुष्यमिति, अतिसरलया प्रक्रियया सरसमशेषार्थोपपादनसमर्था शैलीति चास्य ग्रन्थाः स्फुटमावेदयन्त्येव । अयञ्चेशावास्ये श्रीमद्वेदान्तदेशिकप्रदर्शितया सरण्या तत्र तत्र श्रीभाष्यादिसूक्तिः तथा स्वयं व्यासार्यसूक्तिश्च स्वोक्तार्थे प्रमाणयन्, यावदपेक्षमुपनिषद्वाक्यानुवादपूर्वकमेव भाष्यं भाषमाणः, ब्रह्मसूत्रविषयवाक्यव्याख्यानावसरे च सरसमधिकरणरचनामप्यारचयन्, आवश्यकस्थलेषु अद्वैतवादाद्यनुपपत्तिमपि विमृश्य स्फुटमुद्घाटयन्, अनाग्रहेण परोक्तमपि युक्तं परिगृह्णन् उपनिषद्भाष्यमभाषिष्ट । शाङ्करभाष्याद्यालोडनपूर्वकमेव चोपनि-

पञ्चाख्यं निर्मिमाणोऽपि प्रायेण भाष्यान्तरदर्शिनार्थानुवादतत्खण्ड-नैदम्पर्यमुपेक्ष्य श्रीभाष्यकार इव अन्यादृशसमुचितार्थमात्रभाषणेन सारग्रहणपराणां सौकर्यमाकलयामासेत्यलं बहुना ॥

## मुद्रणरीतिः

'उपनिषद्भाष्याणि यद्यपि आन्ध्रलिप्यां ग्रन्थलिप्याञ्च प्रागेव मुद्रितानि । अथापि सांप्रतं तेषामलाभात् पुनर्मुद्रणमवश्यमासम् । तत्राधुना देवनागरलिप्यामेवातिशयितः पण्डितानामपि परिचय इति, तथासत्येव सर्वत्र देशे एषां ग्रन्थानां प्रचारः स्यात् । एवमम्मुद्रणादेवास्मदीयसिद्धान्तरसो न बहुभिरास्वादितो भवति' इति विचिन्त्य नागराक्षरमुद्रणं प्रागेवास्माभिरुभयवेदान्तग्रन्थमालायां निरवर्ति । तदा बहून् प्राचीनतालकोशान् आनीय विमर्शे कृते तत्र तत्रैतावदप्रकटिताः समुचिताः पाठाः प्रत्यक्षा आसन् । तत एव च तालकोशेभ्यः प्राचीनमुद्रितग्रन्थसरणिर्बहुलमन्यथाऽन्यथा समस्तीति स्पष्टमासीत् । अतो यथाशक्ति शोधयित्वा मुद्रणं सुबहूपकारायेति सा रीतिराद्रियत । सर्वे च पाठाः यथार्हं प्रकटीकृताः ।

मुद्रणरीतिञ्चेमां सादरावधानमवेक्ष्य परितुष्यास्मदाचार्यैः विश्वविख्यातैः परमहंसपरिव्राजकाचार्यैः श्रीतृतीयरङ्गरामानुजमुनिवर्यैरिमे श्लोका अन्वग्राहिषत, ये पूर्वमुद्रणे भूमिकायां तदनुगृहीत-श्रीमुखमध्ये प्रागेव प्राकाशिषत—

> "प्रतिबोधयतु श्रीमान् आस्तिकानां करीश्वरः ।
> स्वकैङ्कर्येषु सागंशं येन स्याल्लोकरक्षणम् ॥
> कर्ता सप्रतिपन्नश्चेत् कार्यञ्च गुणवत्तरम् ।
> नाभिनन्देत् कथं लोको गुणवश्यमना यतः ॥
> वेदशीर्षद्वयग्रन्थमालेयं प्रथतां भुवि ।
> सज्जनोपकृतिस्मेरप्रसूनग्रथितैस्सरैः ॥

पुलकोद्गमानन्दाश्रुमन्तो पण्डितोत्तमाः ।
शुद्धपाठसमालोकदशाभाविनमन्नमाः ॥ इति"

भाष्यकारैः क्रमेण उपनिषद्वाक्यानां खण्डशोऽनुवादेनैवार्थभाषणात् पृथङ्मूलमुद्रणत्यागे उपनिषन्मात्रपारायणमशक्यमिति उपनिषदोऽप्युपरि निवेशिताः । पृथगुपनिषन्मुद्रणात् भाष्यतालकोशस्थितः भाष्यमध्ये उपनिषद्वाक्यानां खण्डशोऽनुवादो नातीवापेक्षित इति कल्पनया यो मुद्रितग्रन्थेषु दृष्टः भाष्यकारकृतानुवादपरित्यागः प्रायः, तमनादृत्य यथातालकोशमनुवादरीतिरपि रक्षिता । तेन यद्यत्र भाष्यकाराभिमतोपनिषत्पाठोपलम्भसौकर्येण भाष्यस्वारस्यग्रहणे वैयाकुली व्यलुप्यत । अत एव विशिष्टाद्वैते माध्वशाङ्करयोश्च तत्तत्र स्थित उपनिषत्पाठभेदोऽपि सर्वोपयोगितया यथायथमदर्श्यत । तथा शुक्लयजुर्वेदे काण्वमाध्यन्दिनपाठभेदोऽपि । भाष्याणि तु काण्वानुसारीणि । तत्तत्रोपनिषदाम्, भाष्यस्य, पाठभेदस्य च स्वारस्यविमर्शाय परिष्कारोऽपि स्वयं सह योजितः, योज्यते च । तत्रोपनिषदाद्यर्थवर्णनप्रकारोऽन्यग्रन्थगतोऽप्युदाह्रियत । क्वचिदपूर्वार्थोऽपि व्यमृश्यत । श्रुत्यन्तरसंवादोऽपि व्यधापि । कतिपये विषयाः टिप्पणपरिशिष्टेऽपि न्यवेचन्त । नवीनरीत्या द्रष्टृणामानुकूल्यसंपादनाय विषयमाला—प्रमाणाकर—मन्त्राकारादिप्रभृतीनां निवेशोऽपि कृतः । ग्रन्थमध्य एव तत्र तत्र प्रमाणाकरनिर्देशे क्रियासमभिहारेण गृह्यमाणानां प्रमाणवाक्यानां पुनःपुनराकरनिर्देशे गौरवमिति स पृथगेवाकारि । तत्तदुपनिषद्भाष्ये तत्तदुपनिषद्वाक्यानामेवोद्धृतानां पूर्वापरभूतानां विषये आकरनिर्देशः अल्पाकारासूपनिषत्स्वनावश्यक इति सोंश उपैक्षि । एवमुपनिषद्भाष्यमुद्रणविषये उपयुक्ता मातृकाग्रन्थास्तत्तत्रोपक्रमनिर्दिष्टात् संकेतत एव सुग्रहाः कृताः । प्रायो मुद्रितग्रन्थेषु पाठो यत्रैकरूपः, तत्र पृथक्पृथक् संकेतकल्पनं वृथेति तत्रोदासि । सांप्रतं प्राचीं रीतिं प्रायोऽनुसृत्यैव द्वितीयमिदं संस्करणं विधीयते ।

अप्राण , अमना , शुभ्र , अक्षरात् परत पर , द्युलोकादिमूर्धादि , सर्वभूतान्तरात्मा, परामृतम् , गुहानिहितम , आत्रि संनिहितम् , गुहाचरम् , सदसद्वरेण्यम् , विज्ञानात् परम् , वरिष्ठम् , अर्चिमत् , सत्यम् , अमृतसेतु , बहुधा जायमान , दिव्यब्रह्मपुरप्रतिष्ठित , मनोमय , प्राणशरीरनेता, अन्नप्रतिष्ठित , आनन्दरूप , परावर , परापरविद्यावेद्य , विरज , निष्कलम्, शुभ्रम्, ज्योतिषा ज्योति, चन्द्रार्कवपु , कृतभूतभावन सुपर्ण , सखा, सयुक्, अनश्नन्, जुष्ट, रुक्मवर्ण , कर्ता, ईश , ब्रह्मयोनि , ज्योतिर्मय , सत्यपरमनिधानम्, बृहत् , दिव्यम् , अचिन्त्यरूपम् , सूक्ष्मतरम् , परमधाम, सर्वग , परामृतम् , दिव्यपुरुष ॥

माण्डूक्योपनिषदि—

जागरितस्थान , बहिःप्रज्ञ , सप्ताङ्ग , एकोनविंशतिमुख , स्थूलभुक्, वैश्वानर , स्वप्नस्थान , अन्तःप्रज्ञ , प्रविविक्तभुक्, तैजस सुषुप्तस्थान , एकीभूत , प्रज्ञानघन , आनन्दभुक्, चेतोमुख , प्राज्ञ , सर्वेश्वर , सर्वज्ञ , अन्तर्यामी, सर्वयोनि , प्रभव , अप्यय , नान्तःप्रज्ञ नबहिःप्रज्ञ , नोभयतःप्रज्ञ , नप्रज्ञानघन , नप्रज्ञ , नाप्रज्ञ , अदृष्टम् , अव्यवहार्यम् अग्राह्यम् अलक्षणम् अचिन्त्यम् अव्यपदेश्यम् ऐकात्म्यप्रत्ययसारम् प्रपञ्चोपशमम् शान्तम् शिवम् अद्वैतम् अ उ म ओम् अमात्र अव्यवहार्य प्रपञ्चोपशम शिव अद्वैत आत्मा ब्रह्म ॥

श्वेताश्वतरोपनिषदि—कारण ब्रह्म देवात्मा एकनेमि त्रिवृत् षोडशान्त शतार्धार अष्टकषट्कयुक्त विश्वरूपैकपाश त्रिमार्गभेद द्विनिमित्तैकमोह सर्वाजीव सर्वसंस्थ बृहन् ब्रह्मचक्रम् प्रेरिता ईश ज्ञ

अनन्त आत्मा विश्वरूप आत्मसस्थ सर्वव्यापी सविता महीदेव तत्त्वम् अज ध्रुव विशुद्ध जालवान् रुद्र गोपा विश्वाधिक महर्षि गिरिशन्त विश्वपरिवेष्टिता महापुरुष आदित्यवर्ण उत्तरतरम् अरूपम् अनामयम् सर्वाननशिरोग्रीव सर्वभूतगुहाशय भगवान् सर्वगत शिव महाप्रभु सत्त्वप्रवर्तक ईशान अव्यय अङ्गुष्ठमात्र सर्व जनहृदयसनिविष्ट हृन्मनीषामिक्लृप्त सहस्रशीर्ष सहस्राक्ष सहस्रपात् अमृतत्वेशान सर्वत पाणिपाद सर्वतोक्षिशिरोमुख सर्वत श्रुतिमान् सर्वेन्द्रियविवर्जित सर्वप्रभु सर्वशरणम् सर्वसुहृत् अपाणिपाद जवन ग्रहीता अचक्षु अकर्ण वेदिता वेदितृविहीन अग्र्यपुरुष अजर पुराण धाता अणोरणीयान् महतो महीयान् गुहानिहित सुपर्ण सखा अनश्नन् जुष्ट मायी महेश्वर वरद ईश देवाधिप विश्वस्रष्टा अनेकरूप विश्व कर्मा वरेण्यम् अप्रतिम हृदिस्थ अनाद्यनन्त अनेकरूप भावग्राह्य भावभावकर कालकाल गुणी सर्वविद्य धर्मावह पापनुत् भगेश आत्मस्थ विश्वधाम ईश्वराणा परम देवताना परम पतीना पति भुवनेश अकार्यकरण नि समाभ्यधिक परविविधशक्ति परविविध स्वाभाविकज्ञानबलक्रिय अपति अनीश अलिङ्ग करणाधिपाधिप जनकादिरहित सर्वभूतान्तरात्मा कर्माध्यक्ष सर्वभूताधिवास साक्षी चेता केवल निर्गुण सर्वचेतनकामविधाता नित्यचेतन एकहस विश्वकृत् विश्ववित् आत्मयोनि प्रधानक्षेत्रज्ञपति गुणेश ससार मोक्षस्थितिबन्धहेतु ब्रह्मविधायी वेदोपदेष्टा आत्मबुद्धिप्रकाश निष्कल निष्क्रिय शान्त निरवद्य निरञ्जन अमृतपरसेतु,

**मन्त्रिकोपनिषदि** — अष्टपात् — शुचि विसूत्र अणु निर्गुण अजाध्यासक स्वच्छन्द उदासीन षड्विंश सप्तविंश अद्वैतम् द्वैतम् त्र्यात्मा पञ्चात्मा सप्तात्मा भगवान् ।

**सुबालोपनिषदि**—

नासन्नसन्नसदसत् सहस्रशीर्ष सहस्राक्ष सहस्रपात् महद् भूतम् वैश्वानर परदेव असत् अजातम् अमृतम् अप्रतिष्ठितम् अशब्दम् महान् बृहन् अप्राणस्वाग्निमत् अपारम् अनिर्देश्यम् अनपावृतम् अप्रकाश्यम् असत्रृतम् चक्षुरादिकरणादिनिविष्ट सर्वेश सर्वेश्वर सर्वाधिपति अन्तर्यामी सर्वयोनि सर्वसौख्योपास्यमान वेदशास्त्रोपास्यमान सर्वान्न अनन्नम् सर्वनयन प्रशास्ता अन्नमयो भूतात्मा प्राणमय इन्द्रियात्मा मनोमय संकल्पात्मा विज्ञानमय कालात्मा आनन्दमयो रथात्मा ऐक्यरहित द्वैतरहित मर्त्यभाव रहित मरणसम्बन्धविलयप्रमगरन्ति शान्त प्रज्ञ नवहि प्रज्ञ नोभयत — प्रज्ञ नप्रज्ञानघन नप्रज्ञ नाप्रज्ञ विदितवेद्यरहित, अमूलम् अनाधारम् दिव्य देव एक नारायण धाता विधाता कर्ता विकर्ता उद्भव सम्भव माता पिता भ्राता निवास शरणम् सुहृद् गति विष्णु परमपदवासी पुरुष अमृतत्वस्येशान अ यक्ताक्षरमृत्युप्रभृति सर्वशरीरी सर्वान्तर सर्वसंचारी सर्ववेद्य सर्वभूतान्तरात्मा अपहत पाप्मा अचिन्त्यरूप असङ्ग तेजस्काय विभ्राजमान अशोकम् अनन्तम् अभयम् निर्बीजम् निर्वाणम् सत्य श्रीमन्नारायण ॥

श्रीः

## सभाष्यपरिष्कारोपनिषत्सूची

## उपनिषदर्थसंग्रहकारिकासूची-



—०—०—

## शुद्धम्

| पुटम् | पङ्क्तिः | |
|---|---|---|
| 401 | 16 | प्रधानममृताक्षरम् |
| 495 | 15 | अत्रामिलोक |
| 762 | 4 | यतः |

शुभमस्तु

श्री

# केनोपनिषत्

( तलवकारोपनिषत् )

[सामवेदशान्तिपाठ —ओं आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मो(ह्मौ)पनिषदम् माऽहं ब्रह्म निराकुर्याम्। मा मा ब्रह्म निराकरोत्। अनिराकरणमस्तु। अनिराकरणं मेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु। ओं शान्तिश्शान्तिश्शान्तिः ॥]

---

श्री

श्रीमते रङ्गरामानुजस्वामिने नमः

[येनोपनिषदां भाष्यं रामानुजमतानुगम्।

रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥]

## श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम्

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया।

अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥

---

॥ श्री ॥

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः।

श्रीवात्सवीरराघवाचार्यविरचितः

## उपनिषद्भाष्यपरिष्कारः

श्रीरङ्गरामानुजयोगिनर्थान् वेदान्तरामानुजयोगिनश्च।

गुरून् अशेषांश्च रमानिधिं च प्रणम्य केनोपनिषत्परेऽस्मि ॥

[श्रीमन्निगमान्तमहादेशिकैरीशावास्ये दर्शितां सरणिमनुसरद्भिः श्रीरङ्गरामानुजस्वामिभिः स्वभाष्ये सर्वत्र व्याख्यातव्यानामुपनिषद-

व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
व्याख्यां तलवकारोपनिषदः करवाण्यहम् ॥ २ ॥

---

वाक्यखण्डानां पूर्णानुवादपूर्वकमेव व्याख्यानं कृतं तालकोशेषु स्पष्टं लक्ष्यते । तदनुरोधेन कतिपयोपनिषद्भाष्यमुद्रणञ्च आनन्दाश्रममुद्रालये कृतमस्ति । (तत्र मुद्रिता केनोपनिषत्प्रकाशिका परं न प्रसिद्धरङ्गरामानुजस्वामिविरचितं भाष्यमित्यन्यदेतत् ।) एवंसति आन्ध्राक्षरादिमुद्रितकोशेषु उपनिषद्भागस्य तत्र तत्र भाष्ये क्वचित् प्रतीकरूपेण निवेशः, क्वचिन्मूलभागस्य परित्यागः इत्यादिरीतिरवलम्बिता किं तादृशमातृकोपलम्भेन, किं वा उपनिषदांऽप्युपरि पृथङ्मुद्रणात् पुनर्निवेशो वृथेति स्वयमेव तादृशांशानां निष्कासकल्पनादिति विमृश्यमेतत् । यथातालकोशं मूलवाक्यखण्डानुवादपूर्वकभाष्यपठन एव च भाष्यकृदभिमतपाठादिनिष्कर्षः, पदेपदे मूलग्रन्थावलोकननैरपेक्ष्यम्, अर्थंतत्त्वावधारणसौकर्यञ्चेति विचिन्त्यते । अथापि निस्सन्देहस्थले पूर्णमूलपुनर्मुद्रणं विहाय यथार्हं निवेश्यतेऽत्र द्वितीयसंस्करणे । तत्र केनोपनिषद्भाष्यं कोत्तमङ्गलतालकोशमेव प्रायशोऽनुसृत्य, पाठान्तरञ्च प्रदर्श्य प्रकाश्यते ।]

व्यासम्-वेदान् विभज्य वेदान्तार्थं निर्णीतवन्तं ब्रह्मसूत्रकृतं भगवन्तं बादरायणम् । अन्यान्-श्रीमद्वेदान्तदेशिक-सुदर्शनभट्टार्याभिधानश्रुतप्रकाशिकाचार्यप्रमुखान् । तलवकारोपनिषदः—'जैमिनीयापरपर्यायतलवकारोपनिषद्ब्राह्मणान्तर्गतस्य केनेत्यादेरनुवाकस्य' इति उपलभ्यमानरीत्या वक्तव्यं भवति । चतुरध्यायात्मकं जैमिनीयोपनिषद्ब्राह्मणं हि मुद्रितमस्ति । तत्र द्वादशानुवाकात्मनि चतुर्थेऽध्याये अयं दशमोऽनुवाक इति ॥ शाङ्करे तु अयं नवमाध्याय इत्युक्तम् ।

हरि ओम् । केनेषित पतति प्रेषित मन
केन प्राण प्रथम प्रैति युक्त ।
केनेषिता वाचमिमा वदन्ति
चक्षुश्श्रोत्र (त्रे) क उ देवो युनक्ति ॥ १ ॥

---

१ परमात्मस्वरूप प्रश्नप्रतिवचनरूपप्रकारेण (प्रकाररूपेण) प्रकाशयितु प्रश्नौति–'केनेषित पतति प्रेषित मन केन प्राण प्रथम प्रैति युक्त । केनेषिता वाचमिमा वदन्ति चक्षुश्श्रोत्र(त्रे) क उ देवो युनक्ति' । मन केन वा(?) प्रेषित प्रेरित सत् स्वविषये प्रवर्तत इति भाव । इषितम् इष्ट मनम् । प्राणाना मध्ये प्रथमः प्राणः मुख्य प्राण केन प्रेरितस्सन् प्रैति प्रकर्षेण सञ्चरति । तथा केन वा प्रेरितामिमा वाच—वागिन्द्रियमवलम्ब्य व्यवहरन्ति लोका ।

---

मन प्रभृतीनीमानि पञ्च करणान्येव ब्रह्मज्ञानसाधनत्वेन बहुश उपनिषत्सूद्घोषितानि । तदिदम् अस्माभिर्विरचिते वेदान्तपुष्पाञ्जलौ व्यक्तम् । ऐतरेयारण्यके च स्पष्टमेतत्, (१) 'स एष गिरिश्च क्षुश्श्रोत्र मनो वाक् प्राण । त ब्रह्मगिरिरित्याचक्षते' इति । अत इहापि पञ्चानामेव ग्रहणम् । तत्रैतेषा ब्रह्मणि यथावत् प्रवृत्तिमपश्यन्, कृत्स्नब्रह्मज्ञान विना च अमृतत्व न भवतीति मन्वान तदर्थं तत्प्रेरकदेवप्रसादेन तेषा वशीकरणमिच्छन् शिष्य पृच्छति केनेति ॥

इषित पततीति पतते सकर्मकत्व द्वितीयाश्रितातीतपतिते त्यादिपाणिनिसूत्रसूचितमेव । प्रेषितमिति पदस्सद्भावात् इषित मित्यस्य पुनरुक्तता मा भूदिति इष्टमित्यर्थस्वीकारेऽपि इषितमित्यस्य प्रेत्युपसर्गं विनाऽपि प्रेषितमित्यर्थ अवश्यापेक्षितत्वात् स्वीकृत – प्रैतीत्यत्र प्रत्युपसर्ग (३) प्रयायेति वक्ष्यमाणस्य इव प्र वा व्याचष्टे प्रकर्षेण सञ्चरतीति । व्यवहरन्तीति । आदितोपात् व्यवहर्तव्य सर्व

श्रोत्रस्य श्रोत्रं मनसो मनो यद्
वाचो ह वाचं स उ प्राणस्य प्राणः ।

---

तथा चक्षुश्श्रोत्रयोश्च कः प्रेरकः । अचेतनानामेषां चेतनाप्रेरितानां कार्यकरत्वासम्भवात्—इति गुरुमुपेत्य शिष्यः पप्रच्छेत्यर्थः ॥ (1)

२ गुरुः प्रतिवक्ति—श्रोत्रस्य श्रोत्रं ... भवन्ति। चक्षुरादीनां

---

कर्म । वाचमिति तु प्रसिद्धकरणपञ्चकान्तर्गतवागिन्द्रियपरम् । इमाम्-प्रकृतप्रश्नवाक्याद्युच्चारणभूतवाग्जातीयाम् । चक्षुःश्रोत्रयो रिति द्विवचनं गोळकादिरूपावयवात्मकप्राण्यङ्गातिरिक्ताऽऽहङ्कारिकेन्द्रियविवक्षणात् समाहारो न कर्तव्य इत्याशयेन स्यात्। एवञ्च मूले चक्षुः श्रोत्रमिति पाठे नैकं पदम्। समाहारविवक्षया वा स्यात् चैकपदम् ॥

प्रतिवर्तीति । सम्पूर्णब्रह्मविज्ञानाय हि श्रोत्रादिवशीकरणं त्वविघ्नम् । न श्रोत्रादीनां तथा ब्रह्मग्रहणसामर्थ्यमस्ति । एवं तेषाम् सामर्थ्यादेव प्रत्येकं तत्तदधिष्ठातृभिर्देवान्तरैरप्यत्र साध्यं न किञ्चि दस्ति । तर्हि कृत्स्नज्ञानाभावे कथममृतत्वमिति न मन्तव्यम् । एभिः करणैर्दुर्ग्रहमिदमित्येव ज्ञानतः एवामृतत्वसम्भवात् । देवमनुष्यादीनां सर्वेषामप्यत्र अकृत्स्नज्ञत्वस्याविशिष्टत्वादिति प्रतिवर्तीति निष्कर्षः । श्रवणमननप्रवचन [प्राणायामसाध्य] ध्यानदर्शनानां क्रमभावित्वात् गुरुणा श्रोत्रादीनां क्रमेणोक्तिः । पूर्वं शिष्याद्युक्तक्रमस्तु 'किन्तु उत्तरोत्तरकार्यसाधननिराकरणप्रयासेन, पूर्वपूर्वसाधनस्यैवावश्यत्वात् । ग्रन्थार्थश्रवणोपयोगि चक्षुःश्रोत्रमपि खलु न वशेऽस्ति इति दर्शयितुम् ॥ श्रोत्रादिप्रेरकः कः इति प्रश्ने श्रोत्रादिप्रेरको यस्स इति-समाधानायोगात् श्रोत्रस्य श्रोत्रमित्यादिकं न श्रोत्रादिप्रवृत्ति निर्वाहकपरम् , किन्तु 'यथा शब्दादीनां विषयाणां ग्राहकं श्रोत्रादिकं तद्ग्राहकमेव, न तु तद्ग्राह्यमपि, तथा श्रोत्रादिकं प्रति श्रोत्र-

चक्षुषश्चक्षुरतिमुच्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥

---

प्रकाशकं चक्षुरायनधीनप्रकाशम् अप्राणाधीनप्राणनश्च यत् स उ-स एव-इत्येवम् अतिमुच्य ज्ञात्वा अस्माल्लोकात् अर्चिरादिना मार्गेण गत्वा मुक्ता भवन्तीत्यर्थः ॥ (2)

---

दिभूतं ब्रह्म श्रोत्रादिग्रहसाधनमेव न तु श्रोत्रादिग्राह्यमपि' इत्यर्थपरमित्याशयेनाह चक्षुरादीनां प्रकाशकमित्यादि । उपरितन मन्त्राणां पर्यालोचनया अयमर्थो विवक्षितो गम्यत इति भावः । वाचमिति यथाशाट्रं व्यत्ययेन प्रथमान्तमभिप्रेतम् , अन्येषां प्राणवत् प्रथमान्तत्वात् । स एवेति । चक्षुरादीनां स्वरूपस्थिति हेतुस्तत्कृत्यश्च यः स एव तत्प्रवृत्तिहेतुरपि न पुनरादित्यादीनि अधिष्ठातृदेवतान्तराणीति भावः । एतावता को युनक्तीति प्रश्ने, स एव एव चक्षुः श्रोत्रादि सर्वं युनक्तीति समाधिरुक्तः । अन्तिमप्रश्नवाक्यानुसारेण सौकर्यात् स इति प्रथमान्ततया निर्देशः । अतिमुच्येत्यत्र प्राक् इतिशब्दोऽध्याहार्यः । एवं तद्वेदनस्य नियन्तृत्वे तस्याविज्ञेयत्वाद् दुर्लभममृतत्वमिति शङ्कां परिहर्तुम् अतिमुच्ये त्यादि मूलम् उक्तोपासनमेव पर्यायमिति तदाशय इति प्रकरणान्निश्चित्याह इत्येवमिति । आमुच्य प्रतिमुच्येत्यादावपि उपसर्गवलेन धातोः सदर्थानुगुणार्थवर्णनं युक्तमित्याशयेन अतिमुच्येत्यस्य ज्ञात्वेत्यर्थ उक्तः । मोचनमपि समग्रं हि ग्रहणमेव । यदि तु पूर्वज्ञानायोगप्रतिपादनाय अतिमुच्येत्यस्य अधिकारविमोकेनेत्यर्थ एवेष्यते तर्हि ज्ञात्वेति न तदर्थं किन्तु धीरपदविवक्षितार्थः । अतिमुच्य धीरा इत्यस्य अधिकारविमोकेन अपेक्षितानुसन्धाना इत्यर्थ इति भावो वर्णनीयः ।

न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः ।
न विद्मो न विजानीमो यथैतदनुशिष्यात् ॥ ३ ॥

३. तदेव प्रपञ्चयति—**न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः** ॥ तत् किमुपदेष्टव्य(तर्हि तत् कथमुपदेष्टव्य)-मित्यत्राह—**न विद्मो न विजानीमः** य(?)**थैतदनुशिष्यात्**—किं तदिति पृष्ट आचार्यः, 'नान्तरिन्द्रियेण न बहिरिन्द्रियेण च ज्ञेयं तत्' इत्येव तदुपदिशेत् ॥

४. ननु तस्य सर्वात्मना ज्ञानाविषयत्वे तुच्छत्वं स्यात्;

---

३. ननु उत्तरखण्डे 'नाहं मन्ये' इत्यादिमन्त्रद्वयेन श्रवणमनननिदिध्यासनाविषयत्वकथनात् तद्वदिहापि 'नो मन' इति मननाविषयत्वम् 'न विद्मो न विजानीमः' इति श्रवणनिदिध्यासनाविषयत्वञ्च कथितमस्तु । किञ्चोक्तानां पञ्चानां करणानां मध्ये चक्षुरादित्रयस्य पूर्वार्धोक्ततया विद्म इति श्रोत्रजज्ञानं, विजानीम इति प्राणायामाङ्गकध्यानं च विवक्षितुमर्हम् । श्रवणमननाद्यविषयत्वञ्च अपरिच्छिन्नत्वात् । इदमेव च अन्यदेवेत्यादिना उपरि विवियते । अतः किमिति 'नान्तरिन्द्रियेण न बहिरिन्द्रियेण' इत्यर्थवर्णनमिति चेत्—उच्यते । नात्र प्रत्यक्षमात्राविषयत्वमुच्यते । किन्तु सर्वज्ञानाविषयत्वमेवेत्युत्तरमन्त्रावतरणे व्यक्तम् । तत्र 'न श्रोत्रं न प्राणः' इत्यनुक्त्वा न विद्म इत्यादिभङ्ग्यन्तरादरणात्, अन्तरिन्द्रियसाध्यमननध्यानादिकं बहिरिन्द्रियसाध्यज्ञानञ्चात्र इन्द्रियप्रस्तावे विभज्य क्रोडीकृतं स्यादित्याशयादेवं व्याख्यानमिति ॥ यथेत्यनेन, न विद्म इत्याद्युक्तवेदनाद्यविषयत्वरूपप्रकार उच्यते । तादृशप्रकारवत्तया ब्रह्म उपदिशेदिति । तथेति भाष्यदृष्टोपनिषत्पाठसत्त्वे तु सोऽर्थः स्पष्ट एव ॥

अन्यदेव तद्विदितादथो अविदितादधि ।
इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ४ ॥
यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥

---

ब्रह्मजिज्ञासया गुरूपसदनादिकञ्च न स्यादित्यत्राह—'अन्यदेव तत् विदितादथो...तद्व्याचचक्षिरे'। ये अस्माकं पूर्वे गुरवः ब्रह्मोपादिशन् तेषाम्, 'सर्वात्मना विदितादपि विलक्षणं सर्वात्मना अविदितादपि विलक्षणमेवंरूपं ब्रह्म' इतीदृशीं वाचं वयं श्रुतवन्त इत्यर्थः ॥ (4)

५-९. एतदेव प्रपञ्चयति—'यद् वाचाऽनभ्युदितं .. नेदं यदिदमुपासते'। वागादिभिरप्रकाश्यं स्वयं वागादीन्द्रियप्रकाशकञ्च,' तदेव ब्रह्मेति जानीहि। यद्वस्तु इदमिति इदङ्कारगोचरतया हस्तामलकवत् सुविदिततयोपासते जनाः, तद् ब्रह्म नेत्यर्थः। एवमुत्तरत्रापि ॥ 'यच्चक्षुषा

---

५.९. यद्वास्त्वित्यादि। श्रुतप्रकाशिकायां जिज्ञासाधिकरणे, "नेदं यदिदमुपासत इत्यस्यायमर्थः—यदिदं प्रतीकमुपासते, तन्न। तदेव परं ब्रह्म त्वमुपास्स्व" इति वर्णितोऽर्थः इह विवक्षित इति भाव्यम्। समन्वयाधिकरणे च भाषितम्, "नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते। अपितु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते" इति। तत्र च श्रुतप्रकाशिका, "यदिदमुपासत इत्यत्रेदमंशे निषेधस्य तात्पर्यम्" इति। तर्हि उपासत इति वाक्यानि किमर्थानीति चेत्-तेन वागादीनामुपासनोपयोगितया प्रश्न इति व्यज्यते। अयमाशयः- अर्थान्तराणामिव ब्रह्मणोऽपि कात्स्न्येनोपासनं वागादिवशीकारे सुकरमिति हि तदधिष्ठातृदेवताप्रश्नः शिष्येण कृतः। तत्रैवं गुरु-रुपदिशति, 'वागादिसम्यग्वशीकरेण संपूर्णतच्छक्त्युपयोजनेनोपा-

यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥
यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ९ ॥

इति प्रथमः खण्डः

---

न पश्यति येन' चक्षूंषि पश्यति' । येन परमात्मना साधनेन पुमान् इतरत् पश्यतीत्यर्थ ॥ 'यत् प्राणेन प्राणिति येन प्राण प्रणीयते' । प्रणीयते—प्राणितीत्यर्थ ॥ इति प्रथम खण्ड ।

---

श्यमानं कात्स्न्र्येन यद्भवति तद्विलक्षणमिदं ब्रह्म, स्वयं वागादिप्रकाशकत्वात् यथायत्तद्प्रकाश्यत्वात् इति । वागादीन्द्रियप्रकाशकञ्चेति वागिन्द्रियादिसर्वप्रकाशकञ्चेत्यर्थः । अभ्युद्यते–प्रोच्यते । अत्र येनेति न कर्तरि तृतीया, किन्तु येन चक्षूंषि पश्यतीत्यादाविव करणे हेतौ वा । चक्षूंषीति गोलकाभिप्रायम् । योगबलाद्वा इन्द्रियदर्शनम् । द्रष्टव्यसर्वोपलक्षणमिदम् । पश्यति पश्यन्तीत्यर्थ इति कश्चित् पाठ. । अन्यच्च दृश्यन्त इत्यर्थ इति । श्रुतम् शब्दबोधविषय· । प्रणीयत इत्यस्य प्रणीतमिति व्याख्यानमुद्रणमशुद्धम् । 'अभ्युद्यते' 'पश्यती'ति वर्तमानकालस्यापि पूर्व श्रवणेन भूतकालविवक्षाया अनावश्यकत्वात् । पुल्लिङ्गप्राणशब्दं प्रति प्रणीतमिति विशेषणायोगाच्च । किन्तु पूर्व वागादिपदव्युत्पत्तिपर्यालोचनया 'उदितं, पश्यते, मनुते, मतम्' इत्यादिप्रयोगात् इहापि प्रपूर्वस—अनधात्वर्थ एव विवक्षित इति, 'प्राण्यते' इति स्यादित्यालोचितम् । अत्र प्राणितीति पाठो लभ्यते एवेति स एव साधिष्ठ· ॥

यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्।
यदस्य त्वं यदस्य देवेषु अथ नु मीमांस्यमेव ते मन्ये विदितम्॥ १

२. १ शिष्य प्रत्याह—'यदि मन्यसे सुवेदेति...अथ नु मीमांस्यमेव ते'। अहं ब्रह्मस्वरूपं सुष्ठु वेदेति यदि मन्यसे, न तत् तथा। अस्य ब्रह्मण इह लोके यदपि रूपं त्वं वेत्थ, तन्नूनं दभ्रमेव अल्पमेव। देवेषु यद्रूपं त्वं वेत्थ, तदपि दभ्रमेव-अल्पमेव। त्वया ज्ञातं सर्वं ब्रह्मणो रूपमल्पमेव। न सर्वं ब्रह्मरूपं त्वया ज्ञातम्। अतः परमेव ते ब्रह्म विचार्यम्; नात पूर्वं सम्यग्विचारितमित्यर्थं एतद्वाक्यं श्रुत्वा सम्यग्विचार्य शिष्य आह 'मन्ये विदितम्'। अहं विदितमेव मन्ये॥

२. १. यदपीति। प्रथमं यदीति, उत्तरवाक्ये यदपीति च युक्तम्–अथापि मूले अपिशब्दस्य प्रथमवाक्य एव सत्त्वात् तथोक्तिः। मन्येऽविदितमिति ब्राह्मणमुद्रणे कृतः अकारप्रश्लेषः, उपरि, 'स्वर्गे लोकेऽज्येये' इति तत्कृताकारप्रश्लेषवत् सर्वव्याख्यानानारूढः। तत्र अज्येये इति पाठस्वीकारे स्वापेक्षया ज्येयोरहिते सर्वज्येष्ठे अनुत्तमे इत्यर्थो भाव्यः।

शिष्य आहेति। किमर्थमेवम्? सर्वमपि गुरुवाक्यमेवास्तु। 'नाहं मन्ये सुवेद' इति मन्त्रोऽपि शिष्यं प्रति गुरुणा स्वस्थिति-प्रदर्शनार्थं इत्युक्तिसंभवात्; यथा आनन्दाश्रममुद्रितव्याख्याने। यद्वा गुरुवाक्यरूपप्रथमश्लोकान्तर्गतः 'मन्ये विदितम्' इति भागोऽपि परं गुरुवाक्यमेवास्तु; उपरि तु शिष्यवाक्यमिति; यथा परमार्थ-प्रकाशिकायामस्माभिरेवोक्तमिति यद्यपि स्यात्—अथापि, 'यदि मन्यसे सुवेदेति,' नाहं मन्ये सुवेद' इति च सन्दर्भे परिशील्यमाने उक्तिप्रत्युक्तिरूपता स्वरसा। एवं च तद्वत् उत्तमपुरुषघटितत्वात् 'मन्ये विदितम्' इति भागोऽपि शिष्यकर्तृक एवोचित इत्याशयेन

नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ २ ॥
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ३ ॥

---

२. २. कथमित्यत्राह—नाहं मन्ये सुवेदेति नो न वेदेति वेद च । अहं सम्यग्वेदेत्यपि न मन्ये ; न वेदेत्यपि न । अपितु वेदैव । ततश्च कार्त्स्न्येन ज्ञातत्वमज्ञातत्वञ्च नास्ति ; किञ्चित् ज्ञातत्वमस्तीत्यर्थः । 'यो नस्तद्वेद तद्वेद नो न वेदेति वेद च' नः अस्माकं ब्रह्मचारिणां मध्ये तत् 'नो न वेदेति वेद च' इति निर्दिष्टं तत् अर्थतत्त्वं यो वेद, स तद् ब्रह्म वेदेत्यर्थः ।

२. ३. 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' । यः (यस्तु) परिच्छिन्नत्वेन ब्रह्म न मनुते, स ब्रह्म मनुते । यस्तु परिच्छिन्नत्वेन ब्रह्म मनुते, स तु न जानातीत्यर्थः । 'अविज्ञातं विजानतां विज्ञातमविजानताम्' । ब्रह्म एतावदिति परिच्छेदज्ञानवतां ब्रह्माविज्ञातं भवति ।

---

यथाशाङ्करभाष्ये । एवमपि यस्यामतमित्यादिकं शाङ्करोक्तरीत्या श्रुतिसंदर्भवचनमेव वाऽस्तु; मध्ये संवादविच्छेदे मानाभावात् गुरुवाक्यमेव वा । यस्यामतमिति मन्त्रमात्रमपि वा शिष्यवाक्यमस्त्विति तत्रानिर्भरं व्यङ्क्तुं यस्यामतमित्यत्र श्रुतिराहेत्यादिकं नोक्तम् ॥

२. २. नाहमिति मन्त्रस्य एवमप्यर्थः संभवति 'अहं सुवेदेति न मन्ये; न वेदेति चाहं नो वेद । अस्माकं मध्ये यः तद्वेद—ब्रह्म वेद, सः तद्वेद—सुवेदेत्येवं न वेद्यमित्येतत् वेद ; न वेदेति च स नो वेद' इति । एवंच मन्ये विदितमित्युक्तं पूर्वार्धेन विवृतम् ; यो नस्तद्वेदेति तदेव विदितत्वमन्यानिष्ठतया उक्त्वा उपरितनार्धेन पूर्वार्धवत् विवृतमिति औचित्यम् । एवं प्रकारान्तराण्यपि संभा-

प्रतिबोधविदितममृत (विदित मत) ममृतत्व हि विन्दते ।

परिच्छिन्नत्वज्ञानशून्यानां ब्रह्म विज्ञातं भवतीत्यर्थः । उक्तञ्च भगवता **भाष्यकृता**—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति ब्रह्मणोऽनन्तस्य [1]अपरिमितगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन एतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्म अविज्ञातम् अमतमित्युक्तम् , अपरिच्छिन्नत्वाद् ब्रह्मणः । अन्यथा, 'यस्यामतं तस्य मतम्', 'विज्ञातमविजानताम्' इति तत्रैव मतत्वविज्ञातत्ववचनं विरुध्येत" इति । ततश्चाविज्ञातत्वादिवचनं कार्त्स्न्येन ज्ञानाविषयत्वपरम् , न तु सर्वात्मना ब्रह्मणः ज्ञानागोचरत्वपरमिति द्रष्टव्यम् । तथा हि सति, 'ब्रह्मविदाप्नोति परम्,' 'तमेव विदित्वाऽति मृत्युमेति' इत्यादिशास्त्राणामसङ्गताभिधानप्रसङ्गात् , वेदानां नैरर्थक्यप्रसङ्गाच्च । (३)

२ ४ 'प्रतिबोधविदितममृतममृतत्वं हि विन्दते' । प्रतिनियतो बोधः **प्रतिबोधः** । सत्यत्वज्ञानत्वानन्तत्वादिरूपासाधारणधर्मविशिष्टतया ज्ञातम् अमृतं ब्रह्मस्वरूपं तत्क्रतुन्यायेन स्वोपासकस्याप्यमृतत्वं विन्दते

---

विवृतानि । अथापि समाधितप्रकारेषु शाङ्करप्रकारोऽप्यस्तु नाम मिति अनतिभेदेन स एव दर्शितः ॥

२. ३ विजानतामिति । परिच्छिन्नत्वेन ध्यायतामित्यर्थः ॥

२ ४ प्रतिबोधेत्यादि । उपनिषत्सु यथेच्छं पदच्छेददर्शनात् पर्वपदाध्याहारगौरवपरिहाराय प्रतिबोधवित्—प्रतिनियतबोधवित् 'प्रतिबुद्धा न सेवन्ते' इति प्रसिद्धमव्यभिचारि भक्तिरूपं ज्ञानं तस्य द्विधाप्यवस्थितमात्मविषयमौपदेशिकं बोधं वा प्राप्त , इत-कृत्स्नज्ञानं विना एवमेव पूर्वं प्राप्त, मतम्-अभिमतममृतत्वं विन्दते । तत्र न

---

1 श्रीभाष्ये अपरिच्छिन्नेतिनिवन् अपरिमितेत्यपि तालं पाठ ।

आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ४ ॥
इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।

---

लम्भयन्तीत्यर्थः । अन्तर्भावितण्यर्थोऽयं विदिधातुः । लम्भनप्रकारमेवाह 'आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम्'। 'स नो देवः शुभया स्मृत्या संयुनक्तु' इत्युक्तरीत्या विद्यानिष्पत्त्यनुकूलं वीर्यं प्रसन्नेन परमात्मना लभते । प्रसन्नपरमात्माऽऽहितवीर्यार्जितया विद्यया अमृतत्वमश्नुत इत्यर्थः ॥ (4)

२. ५. ब्रह्मज्ञानस्य त्वरामुत्पादयति, 'इह चेदवेदीदथ सत्यमस्ति; न चेदिहावेदीत्, महती विनष्टिः'। इहैव जन्मनि ब्रह्म ज्ञातवांश्चेत्, अथ-समनन्तरमेव अस्ति-सन् भवति। सत्य(ब्रह्म?) ज्ञानाभावे आत्मनोऽसत्ता भवति; 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुत्यनुरोधादिति द्रष्टव्यम् । 'भूतेषुभूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति'। भूतेषुभूतेषु सर्वभूतस्थं परमात्मानं प्रज्ञाशालिनः स्वेतरसमस्तविलक्षणत्वेन

---

वाक्यार्थबोधमात्रम् अलम्, किन्तु भक्तिरूपापन्नविद्यापर्यन्तमावश्यकमित्युत्तरार्धेनोच्यत इति व्याख्याऽपि संभवेत् । परंतु 'प्रतिबोधविदितममृतम्' इति भाष्यसंमतः पाठः । न तु प्रतिबोधविदितं मतमिति। मतश्च दत्र्याख्यानात्; अमृतमिति तात्कोशे प्रतीकोपलम्भात्, अमृतं ब्रह्मस्वरूपं तत्प्राप्त्यर्थेनेत्यादिव्याख्यानाच्च । न च अप्रसिद्ध एवं पाठ इति वाच्यम्—उपरि, 'न चेनदुपसर्पति' इति पाठेऽप्येवमाशङ्कायास्तुल्यत्वात् । यथावदध्ययनपारम्पर्यविच्छेदात् तत्र पाठविषये प्रागेव विवादः स्थितस्स्यादिति चेत्—तुल्यमिहापि ॥ (4)

भूतेषुभूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥५॥

इति द्वितीयः खण्डः

ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्त, अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १ ॥ तद्धैषां विजज्ञौ । तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत(न्त) किमिदं यक्षमिति ॥ २ ॥

---

निर्गत्य अस्माल्लोकादर्चिरादिमार्गेण परमात्मानं प्राप्य मुक्ता भवन्तीत्यर्थः ॥

३. १-२. आत्मना विन्दते वीर्यमित्युक्तार्थे आख्यायिकामाह, 'ब्रह्म ह देवेभ्यो विजिग्ये' । परमात्मा देवानामनुग्रहार्थमसुरादीन् शत्रून् विजितवान् । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त' । ब्रह्मकर्तृकविजये सति देवा पूजिता अभवन् । 'त ऐक्षन्त अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति' । देवाः, अयमसुरविजयोऽस्मत्कर्तृक एव, तदनुकूलसामर्थ्यादिकमप्यस्मदीयमेव' इत्यमन्यन्त । 'तद्धैषां विजज्ञौ' ।

---

२. ५. 'इहचेदशकत् योद्धुं प्राक् शरीरस्य विस्रसः । ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते' (कठ-६) इति मन्त्रः, (बृ. ४-१४) 'इहैव सन्तोऽथ विद्मस्तत् वयं न चेदवेदिर्महती विनष्टिः' इति मन्त्रश्चानुसंधेयौ । (2, 5)

३. १. ननु तत्तदिन्द्रियाधिष्ठातृदेवताप्रसादेनाभिमतं सेत्स्यतीति शङ्कायाम्, तासामपि सर्वथा इयी केशाधीनत्वमाख्यायिकया दर्शयति ब्रह्म हेत्यादिना । सूत्रितञ्च, 'ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात्' इति । ऐक्षन्तेति । अत्र शाट्यम् 'असुरान् जित्वा जगदार्तान् ईश्वरसेतुमेत्तन्, देवेभ्यो जयं तत्फलञ्च प्रायच्छन् जगतः सीम्ने । सर्वदात्रेः जगतः स्थितिं चिकीर्षोरयं जयो महिमा चेत्यजानन्तस्ते देवा ऐक्षन्त' इति ॥ यक्षमिति । पूज्यमित्यर्थः ॥

तेऽग्निमब्रुवन्, जातवेदः ! एतद्विजानीहि किमेतद्यक्षमिति। तथेति ॥ ३ ॥ तदभ्यद्रवत् ॥ तमभ्यवदत् कोऽसीति ॥ अग्निर्वा अहमस्मीत्यब्रवीत्, जातवेदा वा अहमस्मीति ॥ ४ ॥ तस्मिंस्त्वयि किं वीर्यमिति ॥ अपीदं सर्वं दहेयम् यदिदं पृथिव्यामिति ॥ ५ ॥ तस्मै तृणं निदधौ, एतद्दहेति। तदुपप्रेयाय सर्वजवेन। तन्न शशाक दग्धुम्। स तत एव निववृते, नैत(नैन)दशकं विज्ञातुम्, यदेतद्यक्षमिति ॥ ६ ॥

अथ वायुमब्रुवन्, वायो एतद्विजानीहि किमेतद्यक्षमिति ॥ तथेति ॥ ७ ॥ तदभ्यद्रवत् ॥ तमभ्यवदत्, कोसीति ॥ वायुर्वा अहमस्मीत्यब्रवीत्, मातरिश्वा वा अहमस्मीति ॥ ८ ॥ तस्मिंस्त्वयि किं वीर्यमिति ॥ अपीद सर्वमाददीय(यं), यदिद पृथिव्यामिति ॥ ९ ॥

तादृश तेषामभिमान परमात्मा ज्ञातवानित्यर्थ । 'तेभ्यो ह प्रादुर्बभूव'। तेषां देवानामनुग्रहार्थं तत् ब्रह्म यक्षरूपं प्रादुर्भूतम्। 'तन्न व्यजानत किमिदं यक्षमिति'। एतत् यक्षस्वरूपं किमिति ते देवा न व्यजानत-न ज्ञातवन्त इत्यर्थ (२)

३. ३–१०. 'तेऽग्निमब्रुवन् . किमेतद्यक्षमिति'। जातवेदः एतद्विजानीहि किमेतद्यक्षमितीत्युक्तवन्त । 'तथेति तदभ्यद्रवत्... . . जातवेदा वा अहमस्मीति'। तथेति स यक्षसमीपं गत तेन कोऽसीति पृष्ट, अग्नि जातवेदा ' इति प्रसिद्ध नामद्वयमुक्तवानित्यर्थ । 'तस्मिंस्त्वयि किं वीर्यमिति । अपीद सर्वं दहेय यदिद पृथिव्यामिति'। तव क सामर्थ्यमस्तीति यक्षेण पृष्टोऽग्नि पृथिव्यन्तर्गतसकलदाहसामर्थ्य-मस्तीत्युक्तवान् । 'तस्मै स तत एव निववृते'। तदिदं तृण दहेति यक्षेणोक्त सर्वेण जवेन तत्समीपं गत दग्धुमसमर्थो निवृत

तस्मै तृण निदधौ, एतदादत्स्वेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाकाऽऽदातुम् । स तत एव निववृते, नैत (नैन)दशक विज्ञातुम्, यदेतद्यक्षमिति ॥ १० ॥

अथेन्द्रमब्रुवन्, मघवन्नेतद्विजानीहि किमेतद्यक्षमिति ॥तथेति तदभ्यद्रवत् ॥ तस्मात् तिरोदधे ॥ ११ ॥ स(?) तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमा हैमवतीम् ॥ ता होवाच किमेतद्यक्षमिति ॥ १२ ॥　　इति तृतीय खण्ड

---

इत्यर्थ । उपप्रेयाय समीप गत इत्यर्थ । 'नैतदशक विज्ञातु यदेतद् यक्षमिति'। एवं देवान् प्रति उक्तवानिति शेष । एवमुत्तरत्रापि ।

३. ११-१२ 'तस्मात्तिरोदधे' । तस्मात् मघोनस्सन्निधे, एतस्य गर्वभङ्गो मा भूदिति तिरोहितमभवदित्यर्थ । 'तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमा हैमवतीम् । ता होवाच किमेतद्यक्षमिति'। तस्मिन्नेव प्रदेशे हिमवत्पुत्री बहुभिराभरणैश्शोभमाना पार्वती सर्वज्ञामिन्द्रानुग्रहाय प्रादुर्भूता दृष्ट्वा तत्समीपमागत्य, इय सर्वं जानातीति मन्यमान किमेतत् यक्षमिति पप्रच्छेत्यर्थ ॥ इति तृतीय खण्ड ।

---

तिरोदध इति । अग्निवाय्वोरिवेन्द्रे व्यवस्थितत्वायैविदोषस्य दुर्वचतया, न प्रति, त्वयि कि वीर्यमिति प्रश्ने उत्तरमप्युचितमर्थं न स्यादिति नमकृत्वैव तिरोदधे । अन्यथा ह्यस्याधिको गर्वभङ्गस्स्यादिति च ॥ तस्मिन्नेवेति । कथमपि तद्यक्ष विज्ञातव्यमिति श्रद्धया तस्य तत्रैव स्थितत्वादिति भाव । बहुशोभमानामित्यस्य बहुषु मध्ये शोभमानामिति निर्धारणे समासो न स्यात् । अतो बहुभिश्शोभमानामित्याह । बहु इति क्रियाविशेषण पृथक्पदमिव मुद्रित ब्राह्मणे । हैमवतीमित्यस्य हेममयाभरणवतीमित्यर्थान्तरमपि शाङ्करे । उमाम्-

[सा] ब्रह्मेति होवाच, ब्रह्मणो वा एतद्विजये महीयध्वम् (ध्वे) इति। ततो हैव विदाञ्चकार ब्रह्मेति ॥ १ ॥ तस्माद्वा एते देवा अतितरामिवान्यान् देवान्, यदग्निर्वायुरिन्द्रः। ते ह्येन-

---

४. १. 'ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति'। ब्रह्मैव यक्षरूपेण युष्मन्मोहशमनाय प्रादुर्भूतम्। अतो ब्रह्मसंबन्धिनि विजये निमित्ते पूजां प्राप्नुत। अस्माभिरेव विजयः कृत इति दुरभिमानस्त्यक्तव्य इत्यर्थः। 'ततो हैव विदाञ्चकार ब्रह्मेति'। तदुपदेशादेव ब्रह्मेति ज्ञातवानित्यर्थः।

४. २-३. 'तस्माद्वा एते देवा अतितरामिवान्यान् देवान्,

---

उमारूपेणाविर्भूतां विद्यामिति च तत्र। एवम् उमामित्यत्रापि उ इति पृथक्पदमिति वा एकपदत्वेऽपि उकारवाच्यां मां लक्ष्मीमिति वाऽर्थ इह कल्प्येत। लक्ष्म्या इन्द्रं प्रति उपदेशस्य भारते लक्ष्मीतन्त्रे च दर्शनात्—अथापि लक्ष्म्या अपि यक्षरूपेऽन्तर्भाव इति, पार्वतीमुखेनेन्द्रस्य शिक्षणं समुचिततममिति च स्फुटप्रतिपत्त्यर्थत्वाच्च अयमर्थ एवादृतः। अपरिचितलक्ष्मीदर्शने च यक्षस्यैवेदं रूपान्तरमिति मतिरस्य स्यात् ॥ (12)

४. १. पूर्ववाक्ये स इति, अत्र वाक्ये सा इति च पदं भाष्ये न व्याख्यातम्; नापि गृहीतम्। तत्र सा इति पदं विनैव अनेके मुद्रणमप्युपनिषदो दृश्यते। अत इति। एवमनुकूलब्रह्मसम्प्रदाया-दित्यर्थः॥ प्राप्नुतेति लटि मध्यमपुरुषबहुवचनम्। अतो मूले ऽमहीयध्वमिति पदच्छेदो भाव्यः। देवा अमहीयन्तेति पूर्वं प्रयोगात्। औचित्याच्च। प्राप्नुथेति लङन्तरूपं चादर्शे। 'महीयध्वे' इति [illegible] रक्षणमुद्रणरीत्यनुसरणे तद् युक्तम्।

नेदिष्ठं पस्पृशुः । ते(स)ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥२॥
तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् । स ह्येनन्नेदिष्ठं पस्पर्श ।
स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ ३ ॥

तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा इति, इन्न्यमिष

---

यदग्निर्वायुरिन्द्रः । ते ह्येतन्नेदिष्ठं पस्पृशुः । ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति'—तस्मादेव हेतोः एते एवाग्निवाय्विन्द्रा इतरान् देवान् अतितरामिव । इवशब्द एवार्थः । अतितरामेवेत्यर्थः । यस्माद्धेतोः नेदिष्ठं-समीपे वर्तमानं तद् ब्रह्म **पस्पृशुः**-दृष्टवन्तः, यतश्च हेतोः **प्रथमो विदाञ्चकार** प्रथमास्सन्तो ब्रह्मेति विदाञ्चक्रुः, अत एवैते देवान्तरापेक्षया अग्निवाय्विन्द्रा अतिशयित (अतिशयि) वन्त इत्यर्थः । वचनव्यत्ययश्छान्दसः । 'तस्माद्वा ब्रह्मेति' । अग्निवाय्विन्द्राणां मध्ये यस्मादिन्द्रः सन्निहितं ब्रह्म दृष्टवान्, सर्वेभ्यः पुरस्तात् पार्वतीमुखात् इदं ब्रह्मेति ज्ञातवान्, अतः सर्वातिशायीत्यर्थः ।

४ ४-५ 'तस्यैष आदेशः' । तस्य आविर्भूतस्य सद्यस्तिरोभूतस्य ब्रह्मण एष आदेशः वक्ष्यमाण उपमानोपदेश इत्यर्थः । 'यदेतद् विद्युतो व्यद्युतदा इति' । यथा विद्युतो विद्योतनं क्षणिकम्, तद्वदित्यर्थः ।

---

४ ४ विदितब्रह्मताग्नीन्द्रादीनां सम्यग्दर्शने विस्मरणे च कारणमथोच्यते । यदेतद्विद्युत इत्यादेः शाङ्करव्याख्याने बहुः क्लेशः । इह विवक्षितयोजना त्वेवम् विद्युत इतीदं षष्ठ्यन्तं यदेतदित्यत्रान्वेति । व्यद्युतदा इति, न्यमिषदा इति च विद्युतो यदेतत् द्वयम्, एष आदेश इति । विद्योतवत् निमेषोऽपि विद्युत एव विवक्षितः न तु चक्षुषः; अधिदैवतप्रकरणात् । चक्षुर्ह्यध्यात्मम् । तथाच प्रकाशतिरोभाव इति भाष्ये विद्युत इति शेषः । विद्युत् प्रकाशो न्यमिषदित्युक्तौ

(मीमिष)दा इत्यधिदैवतम् ॥ ४ ॥ अथाध्यात्मम्, यदेत(न)द्गच्छतीव च मनो न (मनोऽनेन) चैन(त) दुपस्मरत्यभीक्ष्णं सङ्कल्प ॥ ५ ॥

---

आ इति प्रसिद्धौ । उपमानान्तरमाह इन्न्यमि(मीमि)षदा इति । अत्रापि आ इत्येतत् पूर्ववत् । इच्छब्द उपमानान्तरसमुच्चयार्थ । यथा न्यमिषत् (न्यमीमिषत्) निमेष प्रकाशतिरोभाव क्षणेन, एव ब्रह्मापि तिरोऽभूत् इत्यर्थ । यथा विद्युतस्तिरोहिता भवन्तीत्यर्थ (थं:)-न्यमीमिषदिति वचनव्यत्ययश्छान्दस । इत्यधिदैवतम् । अनात्मभूताकाशादिगतविद्युद्विषय ब्रह्मण उपमानदर्शनमुक्तमित्यर्थ । अथाध्यात्मम् । अनन्तर देहस्थो दृष्टान्त उच्यत इत्यर्थ । यदेतत् मन । एतद् ब्रह्म मनो गच्छतीव । ब्रह्मविषयकमनोगमनमिवेत्यर्थ । यथा मनसो ब्रह्मविषयीकरण न चिरस्थायि, एवमेव यक्षस्य ब्रह्मण प्रकाशोऽपीत्यर्थ । मनसा ब्रह्मविषयीकरण क्षणिकमेव न चिरानुवृत्तमिति दर्शयति न चैतत्...

---

प्रकाशापन्नाध्याहारे दोष ॥ प्रथमाबहुवचनान्तत्वविवक्षया विद्युत इत्यस्यैव कर्तृपरत्वे त्वाह् यथा विद्युतस्तिरोहिता इत्यादि । न्यद्युतदित्यस्याप्युपलक्षणमिदम् । तत्रापि हि वचनव्यत्यय एव । एतद्वाक्यस्यापि विद्युद्विषयकत्वस्पाष्ट्याय अस्य विशिष्य ग्रहणम् । न्यमीमिषदिति स्याथ णिजिति शाङ्करम् । अत्र तु किमपि नोक्तम् । ब्राह्मणे तु न्यमिषदिति पाठो दृश्यते । तत्र इत् इत्यपि नास्ति । अर्थं इति प्रथमान्तपाठे 'यथा विद्युत' इत्यत्र यद्वा विद्युत इति स्यात् ।

॥ ५ अवदामर्थैश्वरणप्रवृत्तशिष्यानुभूतो दृष्टान्त उच्यते अथाध्यात्ममिति । एतद्ब्रह्म मनो गच्छतीवेति । यद्यपि यदेतदित्यस्य पूर्ववाक्य इवात्रापि उपमानपरत्व युक्तम्, न तु एतच्छब्दस्य ब्रह्मपरत्वम् । तथा मनो गच्छतीति मनसो विषयान्तरगमनमपि विव

तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम् । स य एतदेवं वेद, अभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥ ६ ॥

---

सङ्कल्पः–न हि मनोजनितसङ्कल्पो ध्यानविशेष अभीक्ष्णं चिरम् एतद्ब्रह्मोपसरति , न विषयीकरोतीत्यर्थ । ततश्च यथा ब्रह्मणो मनसा विषयीकरणं न चिरानुवृत्तम् , एवं यक्षस्य ब्रह्मण प्रादुर्भावोऽपि न चिरानुवृत्त । अत्र दृष्टान्तोक्तिव्याजेन ब्रह्मध्यानानुवृत्तिर्दुस्साकेति दर्शितं भवति ।

**४. ६ तद्ध तद्वनं नाम ; तद्वनमित्युपासितव्यम्** । एतादृश महिमविशिष्टं तत् ब्रह्म सर्वैरपि जनैर्वननीयत्वेन–प्रार्थनीयत्वेन वननामक भवति । तस्मात् तत् ब्रह्म वनमित्युपासितव्यमित्यर्थ । वनत्वेनोपासनस्य फलमाह **स य ... संवाञ्छन्ति** । सर्वैरपि प्रार्थनीयो भवतीत्यर्थ ॥

---

क्षितु शक्यम् तत्रापि तस्यास्थिरत्वात्—अथापि विषयान्तरापेक्षया प्रकृतब्रह्मग्रहणमेव सम्भवात् चेत् साम्प्रतम् । एवमेतच्छब्दस्य ब्रह्म परत्व एव एतद्गच्छतीवेत्यन्वादेशपाठस्योपपत्ति ब्रह्मण एव प्रागु पात्तत्वादित्याशय ॥ विद्युतो द्योतननिमेषाविव मनसोऽपि गमनतद् भावौ नचैनदिति भाष्यनिर्दिष्टे पाठ एव स्पष्टौ भवत । सर्वत्र नचेत्यस्य स्थाने अनेनचेत्येव पाठ । क्वचिद्‌ नेवचेति पाठ । अनेन चेति पाठे, अनेन मनोगमनेन सङ्कल्परूपज्ञानमभीक्ष्णमुपस्मरतीत्यर्थ । मनोगमनाभावे च न स्मरतीति इवेत्यत एव सिद्धम् । एवमुपपादक वाक्यस्यार्थमुक्त्वा उपपाद्यार्थेन सह प्रकृत निगमयति ततश्चेति । एवं ब्रह्मण प्रादुर्भूतस्यापि सम्यक्प्रत्यक्षवेद्यत्व न भवतीति दर्शितम् अत्र मनोगमनाभावसिद्धवत्कारात् सिद्धमाह अतेति ॥

४ ६ तद्वनमिति समस्त नामधेय शाङ्करे । तस्य प्राणि जातस्य वननीयमिति । प्रकृतपरामर्शिनस्तच्छब्दस्य नामधेयमध्य

उपनिषदं भो ब्रूहीति॥ उक्ता त उपनिषत् । ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ७ ॥ तस्यै तपो दमः कर्मेति प्रतिष्ठाः

---

४. ७-८ एवम् आत्मना विन्दते वीर्यमित्यर्थे स्थिते सति, वीर्यावाप्तिहेतुभूतभगवदनुग्रहसाधनप्रतिपादिकामुपनिषदं पृच्छति **उपनिषदं भो ब्रूहीति** । इतर आह **उक्ता....**। ब्रह्मप्रतिपादिकां प्रधानोपनिषदमवोचाम । अतः प्रधानोपनिषदुक्तैव । साधनप्रतिपादिकाञ्चोपनिषदं वक्ष्यामि, यदि शुश्रूषसे इति भावः । **तस्यै...प्रतिष्ठा** । तस्यै उक्तायै उपनिषदे । साधनभूतानि कायशोषणलक्षणं तपः, इन्द्रियनिग्रहरूप उपशमः, अग्निहोत्रादिलक्षणं कर्म चोपनिषच्छब्दिताया ब्रह्मविद्यायाः

---

निवेशोऽनौचित्यात् वनमित्येव नामोक्तमिह । तद्धेत्यत्र तत्पदमेतादृशमहिमविशिष्टमित्यर्थकम्, एतादृशमहिमविशिष्टत्वादित्यर्थकं वा ।

४. ७. इतर आहेति । अयं भावः—किम् आख्यायिकां फलार्थवनत्वोपासनञ्च श्रुत्वा, 'ईदृशं नापेक्षितम्, किंतु मोक्षार्थब्रह्मविद्योपदेश एव' इत्याशयेन उपनिषदं ब्रूहीति पृच्छ्यते, किं वा ब्रह्मविद्यासाधनोपनिषज्जिज्ञासया? नाद्यः, आरम्भ एव श्रोत्रस्य श्रोत्रमिति मन्त्रेण ब्रह्मोपासनविशेषस्योक्तत्वात्, उपपादितत्वाच्च । अन्त्ये पुनः उच्यते, श्रूयताम्—केवलश्रवणादिमात्रं न कार्यकरम्, किन्तु अधीतस्वाध्यायाधीनतपःपर्यन्तसाध्यविद्याविशेष इति ।

४. ७-८. एवमाख्यायिकादिकथनं यदर्थम्, तदेतावता प्रदर्शितम् । एवं भगवदनुग्रहस्यैव मुख्यत्वेऽपि सर्वेषु तदनुग्रहादर्शनात् तत्कारणमन्यावश्यकमिति शिष्य एवं पप्रच्छ । साधनभूतानामस्य वेदादि सत्यान्तेष्वन्वयः । 'दमशम' इत्युभयनिर्देशे दमशब्दार्थसंकोचेऽपि अत्र शमोऽपि इन्द्रियनिग्रहत्वेन रूपेण दमशब्दार्थ इत्याशयेनाऽऽह उपशम इति । साधनमध्ये तपआदीनां प्रतिष्ठात्वम् ।

वेदाः सर्वाङ्गानि सत्यमायतनम् ॥ ८ ॥ यो वा एतामेवं वेद, अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥९॥

इति चतुर्थः खण्डः

**इति सामवेदीयतलवकारोपनिषत् ।**

---

प्रतिष्ठा दार्ढ्यहेतु । वेदा· आयतनम्—षडङ्गसहिताश्च वेदाः सत्यवदनञ्च ब्रह्मविद्योत्पत्तिकारणमित्यर्थः ॥

४. ९. यो वा एतामेव वेद—एतां ब्रह्मविद्यामुक्तविध-प्रतिष्ठायतनोपेतां यो वेद, अपहत्य प्रतितिष्ठति-स सर्वाणि पापानि विधूय कालपरिच्छेदशून्ये ज्येये ज्यायसि ज्येष्ठे सर्वोत्तरे स्वर्गे लोके वैकुण्ठे लोके प्रतिष्ठितो भवतीत्यर्थः । अनन्तज्येयपदसमभिव्याहारात् स्वर्गलोकशब्दो भगवल्लोकपर ॥

क्षेमाय य. करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदार· ।
वामागमाध्वगवदावदतूलवातो रामानुजस्स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमत्तातयार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिपादसेवासमधिगत पारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु केनोपनिषद्भाष्यम् ।

---

वेदादीनाञ्चाऽऽयतनत्वं विद्योत्पादकत्वरूपम् । तथाच सत्यादिरूपे ब्रह्मचर्यनियमे स्थित्वा अङ्गान्यधीत्य व्युत्पत्तिं संपाद्य कर्मब्रह्मरूप-वेदार्थं निश्चित्य निष्कामकर्मानुतिष्ठन् इन्द्रियाणि नियम्य तपश्चरणेन दर्शनसमानाकारब्रह्मविद्यां निष्पादयेदिति भावः । अत्रोत्तरोत्तर-भाविन· पूर्वं पूर्वं निर्देशः तप इत्यादिना ।

४. ९. अमृता भवन्तीति प्रागुक्त फलमेव विवृणोति यो वा इति ॥

इतिश्रीवात्स्यवीरराघवाचार्यकृतिषु केनोपनिषद्भाष्यपरिष्कारः ॥

शुभमस्तु

## केनोपनिषदर्थसंग्रहः ।

१. पूर्णोपास्यात् परोऽनन्तो वागादीनामगोचरः ।
देवस्तेषां नियन्तेति ब्रह्म विज्ञाय मुच्यते ॥
२. कार्त्स्न्येनावेद्यमप्येतद्विदित्वेह यथायथम् ।
तत्प्रसादात्सशक्तिस्सन् विद्यया विन्दतेऽमृतम् ॥
३. अग्निवाय्विन्द्रमुख्यैस्तैरपि त्रैलोक्यदैवतैः ।
अवेद्यमखिलेशानमनुग्रहपरं सताम् ॥
४. विद्युद्वत् क्षणभानं तद्वनं स्थैर्येण वेदितुम् ।
शिष्यन्ते सत्यमङ्गानि वेदाः कर्म दमस्तपः ॥
५. इत्थं तलवकारोपनिषत्खण्डचतुष्टये ।
वशीचिकीर्षुर्वागादि मुमुक्षुः प्रतिबोधितः ॥

## सभाष्यटिप्पण केनोपनिषद्विषयसूचि ।

## केनोपनिषद्भाष्यप्रमाणाकरः

| | | | | |
|---|---|---|---|---|
| ६ | १४ | यतो वाच विरुद्ध्येत | श्रीभाष्यजिज्ञासा-श्रुतिघट्ट | |
| ,, | ,, | यतोवाचोनिवर्तन्ते | तैत्तिरीय-आनन्दवल्ली | ९ |
| ,, | १८ | ब्रह्मविदाप्नोतिपरम् | ,, ,, | १ |
| ,, | १९ | तमेवविदित्वा | श्वेताश्व उ | ३ |
| ७ | ९ | सनोदेव | तै नारायण— | १०-१९ |
| ,, | १४ | असन्नेव स | तै आनन्द्व— | ६ |

## केनोपनिषन्मन्त्रसूची



अपूर्वपदानि—अतिमुच्य १-२ अधि १-४ अनिरोध २-४
यक्षम् ३-२ वनम् ४ ६

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः।

श्रीनिवासपरब्रह्मणे नमः

वात्स्य वीरराघवाचार्य कृतः

# कठोपनिषद्भाष्यपरिष्कारः

भावप्रकाशिकायां श्रुतिवचसां शाङ्करार्थमनुभाष्य।
संप्रति भाष्ये बहुशस्साधून्यर्थान्तराणि दर्शयति॥

नाचिकेतोपाख्यानमेतदेव तैत्तिरीयब्राह्मणे, महाभारते (अनुशासन ११६) च दृश्यते। इत्थं हि तत्र श्रूयते—"उशन् ह वै वाजश्रवसस्सर्ववेदसं ददौ। तस्य ह नचिकेता नाम पुत्र आस। तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धा विवेश। स होवाच। तत कस्मै मां दास्यसीति। द्वितीयं तृतीयम्। तं ह परीत उवाच। मृत्यवे त्वा ददामीति। तं ह स्मोत्थितं वागभिवदति। गौतम कुमारमिति। स होवाच। परेहि मृत्योर्गृहान्। मृत्यवे त्वाऽदामिति। तं वै प्रवसन्तं गन्तासीति होवाच। तस्य स्म तिस्रो रात्रीरनाश्वान् गृहे वसतात्। स यदि त्वा पृच्छेत्। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रतिब्रूतात्। किं प्रथमां रात्रिमाश्ना इति। प्रजां त इति। किं द्वितीयामिति। पशूंस्त इति। किं तृतीयामिति। साधुकृत्यां त इति। तं वै प्रवसन्तं जगाम। तस्य ह तिस्रो रात्रीरनाश्वान् गृह उवास। तमागत्य पप्रच्छ। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रत्युवाच। किं प्रथमां रात्रिमाश्ना इति। प्रजां त इति। किं द्वितीयामिति। पशूंस्त इति। किं तृतीयामिति। साधुकृत्यां त इति। नमस्ते अस्तु भगव इति होवाच। वरं वृणीष्वेति। पितरमेव जीवन्नयानीति। द्वितीयं वृणीष्वेति। इष्टापूर्त-

योर्मेऽक्षितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै तस्येष्टापूर्ते नाक्षीयेते । नास्येष्टापूर्ते क्षीयेते योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । तृतीयं वृणीष्वेति । पुनर्मृत्योर्मेऽपजितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै सोऽप पुनर्मृत्युमजयत्" (तै. ब्रा. ३-११-८) इति । तत्र भाष्ये तस्यान्यादृशत्वेऽपि अन्यद्द्वयमेकीकर्तुं शक्यम् ।

कुपितेन पित्रा मृत्यवे नचिकेतसः प्रदानपर्यन्तकथा, मृत्युसदने तिस्रो रात्रीरुपोषुषा नचिकेतसा वरत्रयलाभश्चोभयत्राविशिष्टौ । तत्र मध्ये अशरीरिण्या वाचा किञ्चिद्वचनम्, अपेक्षितकार्यसिद्धये मृत्युगृहे त्रिरात्रमुपवासः कर्तव्य इति निश्चित्य मृत्युप्रत्यागमसमयनिरीक्षणेन तत्र नचिकेतोगमनञ्चाधिकम् । एवं समयनिरीक्षणेन गन्तव्यमिति पित्रोपदिष्टमिति वाक्यस्वारस्यदर्शिनी भट्टभास्करव्याख्या । अशरीरिवाचोपदिष्टमिति श्रुतिनिर्वाहपरं माधवार्यव्याख्यानम् । भास्करीयानुसरणे शान्तक्रोधेन पित्रा नचिकेतसः पुनःप्रतिनिवृत्तये एवमुपायोपदेश इति स्पष्टम् । अत्रापि, 'अनुपश्य यथा पूर्वे' इति मन्त्रभाष्यावतरणदर्शने पुत्रगमनवार्त्या निर्विण्णः पितेति ज्ञायत एव । माधवीयानुसारेऽपि पुत्रं शप्त्वा निर्विण्णे पितरि वाक्स्वनामभीष्टसिद्धिञ्च कथयितुमशरीरिणी वाक् प्रादुर्बभूवेति सुवचम् । ननु उपरि वीतमन्युत्वादिवरणात् क्रोधो न शान्त इति ज्ञायत इति अनुपश्येति मन्त्रस्यान्यथागतिरस्तु, मृत्युसदनं गन्तुमनिच्छन्तं पुत्रं प्रति पितुर्वचनमिदमिति वा अशरीरिवाग्वचनमिति वेति चेन्न—पितुरनुमाद्गुण्यपरस्य पितरमनृताद्रक्षितुमेवोद्युक्तस्य पुत्रस्य पितृवचनमश्रवणनिर्बन्धकरणस्यानुचितत्वात् । अतोऽस्य पुत्रं प्रति कथनरूपत्वं न युक्तमिति अशरीरिवाचो वा पुत्रस्य वा वचनमिदमित्येव वक्तव्यम् । तत्र पुत्रकर्तृकं वचनमित्युक्तौ मन्त्रोत्साहः आत्मजिज्ञासोपयुक्तगुणवत्त्वं च सिद्ध्यतीति भाष्यदशा

॥ श्रीः ॥

श्री श्रीनिवासपरब्रह्मणे नमः

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

---

सर्पिरेव ज्यायसी । एवंच पितुः स्वयमेव वीतमन्युत्वेपि पुनर्वीतमन्युत्ववरणम्, मुमुक्षुरप्ययं पुत्रः कदाचित् परकृतक्षोभवशात् यमसदनमप्राप्य निवृत्तः स्यादिति स्वत्यागस्यान्यथापत्त्यादिशङ्कया पितुस्सहसा मन्युसंभावनया कृतमिति सुवचम् ॥

तथाचायं कथासारः—वाजश्रवसेन सर्वस्वदक्षिणयज्ञकरणम्, जरद्गवीप्रदस्य पितुः क्रतोस्साद्गुण्याय पुत्रेण स्वात्मनोपि प्रदाननिर्बन्धनम्, पित्रा मृत्यवे त्वा ददामीति वचनम्, अशरीरिवागाविर्भावः, पितृनिर्वेदसमाधानम्, पुत्रप्रतिनिवृत्त्यौपयिकगमनप्रकारोपदेशः, तथा गमनम्, मृत्युना त्रिरात्रोपवासिने वरत्रयदानम्, पितृसौमनस्य-नाचिकेताग्नि-मोक्षतत्त्वरूपवरत्रयवरणमिति ॥ अत्र ब्रह्मविद्याग्रहणेन शाश्वतगुरुशिष्यभावसंबन्धसंपादनात् पुनरागतेपि पुत्रे मृत्योस्तं प्रति स्वामित्वं न लोपितमिति न दत्तापहार इति ध्येयम् ॥

महाभारते तु कथैवम्—औद्दालकिना दीक्षासमाप्तौ स्वपुत्रं नाचिकेतं (न तु नचिकेतसं) प्रति नदीतीरात् स्वनिक्षिप्तदर्भेध्मकुम्भाद्यानयनकथनम्, नाचिकेतेन, 'तत्र तत्र पश्यामि' इत्युक्तिः, क्षुत्पिपासोपहतेन पित्रा यमं पश्येति शापः, नाचिकेतस्य साञ्जलिबन्धं गतप्राणस्य भुवि पतनम्, पितृरोदनम्, पुत्रेण यमलोके यमदर्शनम्, पित्रा पश्येत्येवोक्तत्वात् दर्शनस्य निष्पन्नतया यमेन पुत्रनिवर्तनम्, तदा नाचिकेतं प्रति तत्प्रार्थनया गोप्रदायिजनभोगस्थानादिप्रदर्शनेन गोदानप्रभाववर्णनम्, सुप्तप्रबुद्धेनेव समुत्थितेन पुत्रेण पितृसमाधानपूर्वं स्वानुभूतविभववर्णनमिति ॥ अत्र ब्राह्मणैकरस्यप्रदर्शनार्थेन पद्यमस्यामप्यस्यामुपनिषदि ब्राह्मणवाक्यैरुपक्रम आश्रित इति ॥

श्री

# कठोपनिषत्

[शान्तिपाठ –सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ओंशान्तिश्शान्तिश्शान्तिः ॥ ]

हरिः ओम्— उशन् ह वै वाजश्रवसस्सर्ववेदसं ददौ ।

---

## श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम्

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
व्याख्यास्ये विदुषां प्रीत्यै कठश्रीर्य(र्ही य)थामति ॥

उशन् ह वै वाजश्रवसस्सर्ववेदसं ददौ । उशन् कामयमानः । 'वश कान्तौ' इत्यस्मात् शतरि ग्रहिज्येत्यादिना सम्प्रसारणम् । ह वै इति वृत्तार्थस्मरणार्थौ निपातौ । फलमिति शेषः । वाजश्रवसः वाजेन

---

1 उशन्निति वाजश्रवसस्य नामधेयम्, श्रुतिषु तत्तन्नाम तत्तत्कुलपूर्वपुरुषनामोभयनिर्देशेन तत्तत्कीर्तिस्सर्वत्र सर्वत्र दर्शनादिति यद्यपि सुवचम् । भट्टभास्करभाष्यमप्यत्रानुकूलमिव — अथापि शान्तत्वादस्य नामन्यासासम्भवात्, यौगिकत्वे, क्रियमाणस्य कर्मणः काम्यत्वसिद्ध्या नचिकेतसः प्रत्युताद्गुण्यनैर्भर्यमुचितमिति घोरस्य इति च यथाशास्त्रमेव व्याख्यातम् ॥ 'औद्दालकिरारुणिः ' इत्युपरि नामान्तरदर्शनात् वाजश्रवा इति यौगिकमित्यभिप्रायेण व्युत्पादयति वाजेनेति । 'रूढिर्वा वाजश्रवस्य इति' इति पाठो दृश्यते । शाङ्करे तु वाजश्रवा इति रूढिः, तत्पुत्रो वाजश्रवस इति । 'एतद्ध स्म वै

तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥ तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश । सोऽमन्यत (?) ॥ २ ॥

अन्नेन दानादिकर्मभूतेन श्रवः-कीर्तिः यस्य स वाजश्रवाः । तस्यापत्यं वाजश्रवसः । रूढिर्वा वाजश्रवसः(वाः?) इति । स किल ऋषिः विश्वजिता सर्वस्वदक्षिणेन यजमानः तस्मिन् क्रतौ सर्ववेदसं सर्वस्वं ददौ दत्तवानित्यर्थः। उशन्नित्यनेन कर्मणः काम्यत्वात् दक्षिणासाद्गुण्यमावश्यकमिति सूच्यते ॥

तस्य ह....पुत्र आस । आस बभूव । 'छन्दस्युभयथा'इति लिटः सार्वधातुकत्वात् 'स्वस्तये ताक्ष्यम्' इत्यादिवत् अस्तेर्भूभावाभावः । तं ....श्रद्धाऽऽविवेश । तं नचिकेतसं कुमारं सन्तं बालमेव सन्तम्, ऋत्विग्भ्यो दक्षिणासु गोषु नीयमानासु सतीषु श्रद्धा आस्तिक्यबुद्धिः पितुर्हितकामप्रयुक्ता आविवेश आविष्टवती ॥

(दक्षिणास्विति वचनविचारः)

यद्यपि यत् आनतिकरं द्रव्यम्, तद् 'दक्षिणेत्युच्यते । एका चासौ क्रतावानतिरिति तदुपाधिको दक्षिणाशब्दः एकवचनान्ततामेव

---

तद्विद्वांसो वाजश्रवसा गौतमाः' (तै. ब्रा. ३-११-८) इति बहूनां वाजश्रवसत्वकथनाच्च वाजश्रवस्पदं रूढम्, किन्तु वाजश्रवःपदमित्येवौचित्यसिद्धमपि । तस्माद्रूढिर्वा वाजश्रवा इतीति पाठः स्यात् । अन्यथा पुनः—रूढत्वे कल्प्ये वाजश्रवस इत्यस्यैव वर्णसमुदायस्य रूढत्वे को दोषः? एवं च तत्पितुः उद्दालक इति वक्ष्यमाणं नाम भविष्यति । वाजश्रवसा इति बहुवचनं तु वाजश्रवसगोत्रजानामपि वाजश्रवसत्वादित्याशयो वर्णनीयः । सर्वं वेदो धनं सर्ववेदसम् । 'अनसन्तान्नपुंसकाच्छन्दसि' इति तत्पुरुषात् टच् ।

**पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रिया ।**
**अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥ ३ ॥**

लभते। अत एव भूनामकैकाहक्रतौ, 'तस्य धेनुर्दक्षिणा' इत्यत्र कृत्स्नस्य गवाश्वादेः प्राकृतस्य दाक्षिण्यस्य निवृत्तिरिति 'तस्य धेनुरिति गवाम्' इति दाशमिकाधिकरणे(10-3-19) स्थितम्— तथापि दक्षिणाशब्दोऽयं भृतिवचनः । स च कर्मापेक्षयापि प्रवर्तते, अस्मिन् कर्मणीयं भृतिरिति। कर्तुरपेक्षयापि प्रवर्तते, अस्मिन् कर्मणि अस्य पुरुषस्येयं भृतिरिति। ततश्च ऋत्विग्बहुत्वापेक्षया दक्षिणाबहुत्वसंभवात् **दक्षिणास्विति** बहुवचनमुपपद्यते। अत एव ऋतपेये 'औदुम्बरस्सोमचमसो दक्षिणा, स प्रियाय सगोत्राय ब्रह्मणे देयः' इत्यत्र एकवाक्यतापक्षे ब्रह्मभागमात्रेपि दक्षिणाशब्दस्यावयवलक्षणामन्तरेण मुख्यत्वोपपत्तेः मात्रबाध इत्युक्तं दशमे, 'यदि तु ब्रह्मणस्तदून तद्विकारस्स्यात्' इत्यधिकरणे(10-3-20)। ततश्च क्रत्वपेक्षया दक्षिणैक्येपि ऋत्विगपेक्षया दक्षिणाभेदसंभवात् **दक्षिणास्विति** बहुवचनस्य नानुपपत्तिरिति द्रष्टव्यम् ॥

श्रद्धाप्रकारमेव दर्शयति [सोऽमन्यत'] **पीतोदका जग्धतृणाः . ता ददत्** ॥ पीतमुदकं याभिस्ताः **पीतोदकाः**, जग्धं भक्षितं तृणं याभिस्ताः **जग्धतृणाः**, दुग्धः दोहः क्षीराख्यो यासु (भि) ताः **दुग्धदोहाः**, **निरिन्द्रियाः** अप्रजननसमर्थाः, जीर्णाः निष्फला इति यावत् । या एवंभूता गावः, ता ऋत्विग्भ्यो दक्षिणाबुद्ध्या ददत्

३. पीतोदका इत्यादौ क्तप्रत्ययेन भूतकालवाचिना इदानीं पानादि न कुर्वन्तीति ज्ञापनादत्यन्तजरठत्वाशक्तत्वलाभः । इमा गाव इत्यध्याहार्यम्। ता इत्यत्र गा इति पाठः स्याद्वेति विमृश्यम्।

**स होवाच पितरम्, तत कस्मै मा दास्यसीति। द्वितीय तृतीयम्। ते होवाच मृत्यवे त्वा ददामीति॥ ४॥ बहूनामेमि प्रथमो बहूनामेमि मध्यम । किं स्वित् यमस्य कर्तव्य यन्मयाऽद्य करिष्यति ॥ ५॥**

प्रयच्छन्—अनन्दाः अमुखा ते शास्त्रसिद्धा लोकाः सन्ति, नाम खलु—तान् स यजमानो गच्छति। एवममन्यतेत्यर्थ ॥ ३ ॥

**स होवाच पितर...तृतीयम्** । दीयमानदक्षिणानैगुण्य मन्यमान नचिकेता स्वात्मदानेनापि पितु क्रतुसाद्गुण्यमिच्छन् आस्तिकाग्रेसर पितरमुपगम्योवाच, तत हे तात! कस्मै ऋत्विजे दक्षिणार्थं मा दास्यसीति। स एवमुक्तेनापि पित्रा उपेक्ष्यमाणोऽपि द्वितीय तृतीय मपि पर्याय कस्मै मा दास्यसीत्युवाच। **तं होवाच...**। एव बहु (मुहु) निर्बध्यमान पिता कुपित त पुत्रम्, मृत्यवे त्वा ददामीत्युक्तवान्॥

एवमुक्तोपि पुत्र विगतसाध्वसशोक पितरमुवाच **बहूनामेमि** । *सर्वेषा मृत्युसदनगन्तॄणा पुरतो मध्ये वा गच्छामि, न तु मन्थर* पश्चात्। मृत्युसदनगमने न कोपि मम विचार इति भाव। किं तर्हीत्यत आह **किंस्वित् करिष्यति** । *मृत्युर्यदद्य मया करिष्यति* तत्तादृश यमस्य

५ प्रथम एमि, मध्यम एमीत्यत्र मुख्यया शिष्यवृत्त्या मध्य मया वा पितृसविधे गच्छामि, न त्वधमया। तादृश मा नून क्रोधाविष्ट एवमुक्तवानिति शाकर क्लिष्टार्थवर्णनमुपपक्ष्य, यमसन्न प्रति प्रथमो मध्यमो वा गच्छामीति उत्साहसूचकमृजुमर्थमाह एवमुक्त इत्यादिना। विवेकिना हि दासेन स्वामिनिदेशमप्रतीक्ष्य तदभि मतमभ्यूह्य किंकरेण भाव्यम् । अत इहैव मनसि विचारयति किं स्विदित्यादि।

अनुपश्य यथा पूर्वे प्रतिपश्य तथा(ऽ)परे। सस्यमिव मर्त्यः पच्यते सस्यमिवाऽऽजायते पुनः ॥ ६॥ वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्। तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७॥

---

कर्तव्यं किं वा? पूर्णकामस्य मृत्योः मादृशेन बालिशेन किं प्रयोजनं स्यात्? येन ऋत्विग्भ्य इव तस्मै मदर्पणं सफलं स्यात्। अत एतदेवानुशोचामीति भावः ॥ ५ ॥

साध्वसरोषावेशहीनमीदृशं पुत्रवाक्यं श्रुत्वा, 'क्रोधावेशात् मया मृत्यवे त्वा ददामीत्युक्तम्। नेदृशं पुत्रं मृत्यवे दातुमुत्सहे' इति पश्चात्तप्तहृदयं पितरमालोक्योवाच अनुपश्य....तथाऽपरे। पितामहादयः यथा मृषावादं विनैव स्थिताः, यथा चापरे साधवोऽद्यापि तिष्ठन्ति, तान् अन्वीक्ष्य तथा वर्तितव्यमिति भावः। सस्यमिव....पुनः। मर्त्यः सस्यमिवाल्पेनापि कालेन जीर्यति। जीर्णश्च मृत्वा सस्यमिव पुनराजायते। एवमनित्ये जीवलोके किं मृषाकरणेन? पालय सत्यम् प्रेषय मां मृत्यव इति भावः ॥ ६ ॥

एवमुक्त्वा प्रेषितः प्रोषितस्य मृत्योर्द्वारि तिस्रो रात्रीरनश्नन् उवास। ततः प्रोष्य आगतं यमं द्वास्था वृद्धा ऊचुः, वैश्वानरः....वैवस्वतोदकम्॥ साक्षादग्निरेव अतिथिर्ब्राह्मणः सन् गृहान् प्रविशति। तस्याग्नेरेतां पाद्यासनदानादिलक्षणां शान्तिं कुर्वन्ति सन्तः, 'तदपचारेण दग्धा मा भूम'

---

६. अत्र वक्तव्यं टिप्पण्युपक्रम एवोक्तम्।

७. 'एवमुक्त्वा प्रेषित' इत्यत्र उक्तिप्रेषणयोः समानकर्तृकत्वाभावात् एवमुक्त्वा प्रेषित इति पाठः स्यादित्यालोचितम्। न्यायरत्नामणावपि ईदृशवाक्यस्यैव दर्शनात् उक्त्वेत्यस्यैव अनश्नन्नुवासे-

आशाप्रतीक्षे सङ्गतं सूनृताञ्च इष्टापूर्ते पुत्रपशूंश्च सर्वान्। एतद्
वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥ ८ ॥
तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः । नमस्ते-

---

इति । अत हे वैवस्वत ! नचिकेतसे पाद्यार्थमुदकं हर आहरेत्यर्थ ॥७

अकरणे प्रत्यवाय च दर्शयन्ति स्म **आशाप्रतीक्षे सङ्गतं**
**....गृहे** ॥ यस्य अल्पमेधसः अल्पप्रज्ञस्य पुरुषस्य गृहे अनश्नन्
अभुञ्जान अतिथिर्वसति, तस्य आशाप्रतीक्षे कामसङ्कल्पौ । यद्वा
अनुत्पन्नवस्तुविषयेच्छा आशा ; उत्पन्नवस्तुप्राप्तीच्छा प्रतीक्षा ।
**सङ्गतम्** सत्सङ्गमम् । **सूनृताम्** सत्यप्रियवाचम् । इष्टापूर्ते-इष्टं
यागादि, पूर्तं खातादि । पुत्रान् पशूंश्च, एतत् अनशनरूप पापं
वृङ्क्ते वर्जयति नाशयतीत्यर्थ । वृजी वर्जने । रुधादित्वात् श्नम् ।
वृजि वर्जने इत्यस्माद्धातोर्वा इदितो नुम् । अदादित्वात् शपो लुक् ॥८

एव पृष्टैरुक्तो मृत्यु नचिकेतसमुवाच **तिस्रो रात्रीर्यदवा-**
**त्सीर्गृहे मेऽनश्नन् ब्रह्मन् अतिथिर्नमस्यः** । मे गृहे यस्मादेतो हे
ब्रह्मन् ! नमस्कारार्होऽतिथिस्त्व तिस्रो रात्रीरभुञ्जान एव अवात्सीरित्यर्थ ।

---

स्वतान्वयेन निर्वाहो भाव्यः। अनश्नन्नित्यनेन, मृत्युप्रवासकाले तदि-
तरैः प्रार्थितोऽपि नाश्नां आशेति ध्वन्यते। हरेत्यस्य अपहरेति नार्थ इति
ज्ञापनाय आहरेत्युक्तम्। नयेति वा आनयेति वाऽर्थ इति भाव ।
८ वृजि इति । व्यत्ययेनात्मनेपदनिर्वाहे हेतुत्वात् अदादि-
धातुर्गृहीतः । तस्य ईदित्त्ववत् इदित्त्वमप्यनुमतमिति इदन्ततया
ग्रहणम् । तदादरणफलं दर्शयति इदितो नुमिति ॥

ऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्व ॥ ९ ॥

'नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु' । स्पष्टोऽर्थः । तस्मात् प्रति त्रीन् वरान् वृणीष्व । तस्माद्धेतो —मह्यं स्वस्ति यथा स्यादित्येवमर्थं त्रीन् वरान् प्रति उद्दिश्य वृणीष्व-प्रार्थयस्व । तव लिप्साभावेऽपि मदनुग्र-

९. अत्र, प्रति-उद्दिश्य वृणीष्व-प्रार्थयस्व इत्येव तालपत्रपाठः, न तु प्रार्थयेति, न वा, प्रति तानुद्दिश्येति पूनामुद्रितवत् । अत्र वरान् वृणीष्वेति श्रुत्यनुसारात्, उपरि निष्कृष्टार्थवर्णनानुरोधाच्च वरानित्यस्य वृणीष्वेत्यनेनैवान्वयः । प्रति इत्यस्य प्रतिनिधितयेत्यर्थं पूर्वं 'वृणीष्व' इत्युक्तवर्जनप्रतिनिधितयेत्यर्थः । प्रत्यनीकतयेत्यर्थे त्वति-थ्यनिमन्त्रणदोषपरिहारार्थमिति यावत् । त्वतिथ्यपापादितानिष्टत्रय-परिहारप्रत्युपकारभूतान् वरानिति वाऽर्थः । 'तत्प्रति-विधानप्रवृत्त' इति श्रीभाष्यानुसारात् त्वतिथ्योपशमनप्रतिकार-भूतान् वरानिति वाऽर्थः । सर्वाभिप्रायेण प्रति उद्दिश्येति सामान्यत उक्तम्—उपवासरात्रित्रित्वमुद्दिश्य, आशाप्रतीक्षादिवर्जनाभाव-मुद्दिश्य, स्वस्तिभावमुद्दिश्येत्येवं कोऽप्यर्थो भविष्यतीति । अत्र प्रयुक्तः रूपणात् प्रति इतिवत् 'तस्मात् प्रति' इत्यस्य उपवासविशिष्टवासप्रति-निधिभूतानित्यर्थे वराणां तत्स्थानापन्नत्वरूपतत्प्रतिनिधित्वं दुरुप-पादम् । वराणां तदापादितानिष्टपरिहारफलतया तत्प्रतिकारभूतत्वात् । वरवरणमाशाप्रतीक्षादिवर्जनप्रतिनिधितया कर्तव्यमित्यर्थ इति चेत्-तर्हि तस्मादित्यस्य वर्जनार्थकत्वे, पूर्वम् अवात्सीरिति यत्, तस्मादिति यच्छब्दप्रतिनिर्देशता तस्मादित्यस्य न स्यात् । यत् इत्यस्य यादृशा-वर्जनाद्धेतोरित्यर्थवर्णनं क्लिष्टम्, तस्य नचिकेतउद्दिष्टमुख्यफलत्वा-भावात् । इष्टफलस्यैव यत्तच्छब्दाभ्यां हेतुत्वेन कथनं युक्तम् । एवं यस्माद्धेतोरेवं वासः कृतः तस्माद्धेतोरित्यस्य, वासस्यैवं कृतत्वाद्धेतो-

शान्तसङ्कल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माऽभि मृत्यो।
त्वत्प्रसृष्टं माऽभिवदेत् प्रतीत एतत् त्रयाणां प्रथमं वरं वृणे ॥ १० ॥
यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः (एम्)। सुखं

हार्थमनशनरात्रिसमसंख्याकान् त्रीन् वरान् वृणीष्वेति भावः (त्यर्थः)॥

एवं प्रार्थितो नचिकेतास्त्वाह—**शान्तसङ्कल्पस्सुमना यथा स्याद्वीतमन्युर्गौतमो माऽभि मृत्यो** । हे मृत्यो! मत्पुत्रो यमं प्राप्य किं करिष्यतीति मद्विषयचिन्तारहितः प्रसन्नमनाः माऽभि—मां प्रति मम पिता गौतमः वीतमन्युः वीतरोषश्च यथा स्यादित्यर्थः । किञ्च **त्वत्प्रसृष्टं माऽभिवदेत् प्रतीतः** । त्वया गृहाय प्रेषितं **मा अभि-मां** प्रति **प्रतीतः** यथापूर्वं प्रीतस्सन् वदेत् । यद्वा **अभिवदेत्** आशिषं प्रयुञ्ज्यात् । 'अभिवदति नाभिवादयते' इति स्मृतिषु अभिवदनस्य आशीर्वादे प्रयोगात् । **एतत् त्रयाणां प्रथमं वरं वृणे**-स्पष्टोऽर्थः ॥

एवमुक्तो मृत्युः प्रत्युवाच-**यथा पुरस्ताद्भविता प्रतीतः** । यथापूर्वं त्वयि हृष्टो भविता । **औद्दालकिरारुणिर्मत्प्रसृष्टः(एम्)** । उद्दालक

रित्यत्रैव पर्यवसानमित्यपि सुवचम् । एवमेव बहुलं प्रयोगदर्शनात् । अतः प्रतिशब्दयोगे पञ्चमीत्यनङ्गीकृत्य हेतुपञ्चमी आदृतेति भाति ।

१०. 'नायं यमसदनमगत्वा वा यमेनाननुज्ञातो वा निवृत्तः । किन्तु तत्प्रसृष्ट एव समागत इति प्रत्ययाधीनो हर्षः प्रतीतपदेन गम्यते । 'ख्याते हृष्टे प्रतीतः' इत्यमरः । अत्र 'यथा पुरस्ताद्भविता प्रतीत' इत्युत्तरमन्त्रे प्रीत इत्यर्थ एव स्वरस इति इहापि तथेति सूचयितुं यथापूर्वमिति, यथा पुरस्तादिति पदार्थोक्तिः ।

११. 'उद्दालक आरुणिः' इति तत्तत्र (छा. ५. वृ. ५-७; ८-३.) दर्शनात् अरुणगोत्रापत्ये च आरुणेय इति प्रयोगस्य श्वेतकेतौ

रात्रीश्शयिता वीतमन्युस्त्वां(?) ददृशिवान् मृत्युमुखात् प्रमुक्तम् ॥११
स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति ।

---

एव औद्दालकिः । अरुणस्य अपत्यं आरुणिः । द्व्यामुष्यायणो वा । उद्दालकस्यापत्यम् अरुणस्य गोत्रापत्यमिति वार्थः । **मत्प्रसृष्टः** मदनुज्ञातः मदनुगृहीतस्सन् । मदनुग्रहादित्यर्थः । **सुखं रात्रीश्शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम्**—त्वयि विगतमन्युस्सन् उत्तराः अपि रात्रीस्सुखं शयिता । द्रष्टा । सुखनिद्रां प्राप्स्यतीति यावत् । **ददृशिवान्** (?) दृष्टवान् सन्नित्यर्थः । क्वसन्तोऽयं शब्दः । 'दृशेश्चेति वक्तव्यम्' इति कमोरिट् । छान्दसो द्विवचनाभावः । **मत्प्रसृष्टम्** इति द्वितीयान्तपाठे मत्प्रेषितं त्वामिति योजना ॥ ११ ॥

नचिकेता वरं द्वितीयं प्रार्थयते—'स्वर्गे लोके' इत्यादिना मन्त्रद्वयेन । **स्वर्गे लोके न भयं किञ्चनास्ति** । अत्र स्वर्गशब्दो मोक्षस्थानपरः । यथा चैतत् तथोत्तरत्र वक्ष्यते । **न तत्र त्वम् , न जरया बिभेति** । हे मृत्यो ! त्वं तत्र न प्रभवसि । जरायुक्तस्तत्र

---

दर्शनात् उद्दालकपुत्र इत्यर्थमभिप्रयन् आह—उद्दालक एवेति । द्व्यामुष्यायण इति । अमुष्य प्रख्यातस्यापत्यमामुष्यायणः । स एव पुत्रिकापुत्रन्यायादिना द्वयोस्सम्बन्धी चेत् , द्व्यामुष्यायणः ॥ 'छन्दसीरः' (८-२-१५) इति सूत्रात् मतोर्मस्य वः । रात्रीरिति ददृशिवानित्यस्य ददृशिवा-नित्यर्थवर्णने रात्रीरिति द्वितीया न स्यादित्यन्यथा व्याख्यातुं रात्रीरित्य-र्थः ॥ ददृशिवानिति माध्वसांकल्पयोः । ददृशिवानिति नारायणे ।

१२. अग्निं परीप्समानः नचिकेता स्वाभिमते स्वर्गे प्रापण-स्याभिप्रायवर्णयति स्वर्गे इति मन्त्रेण। वदने। १०. मन्त्रे पितृपरितोषणम् ।

उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ १२ ॥
स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्ते एतद् द्वितीयेन वृणे वरेण ॥ १३ ॥
प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेत प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥ १४ ॥

---

बिभेति । जरातो न बिभेति । तत्र वर्तमान पुरुष इति शेष । **उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके ।** **अशनाया**—बुभुक्षा । अत्रापि स्वर्गशब्दो मोक्षस्थानपर ॥ १२ ॥

**स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो ।** पुराणादिप्रसिद्ध-सार्वज्ञ्यस्त्वं स्वर्गप्रयोजनकमग्निं जानासि । 'स्वर्गादिभ्यो यद्वक्तव्य' इति प्रयोजनमित्यर्थे यत् । स्थण्डिलरूपाग्ने स्वर्गप्रयोजनकत्वं च उपासनाद्वारेति उत्तरत्र स्फुटम् । **प्रब्रूहि तं श्रद्दधानाय मह्यम् ।** **श्रद्दधानाय** मोक्षश्रद्धायते । स्वर्गलोकेन तव किं सिद्ध्यतीत्यत्राह— **स्वर्गलोका अमृतत्वं भजन्ते ।** स्वर्गो लोको येषा ते । परमपदं प्राप्ता इत्यर्थं । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकत्वात् स्वरूपाविर्भावलक्षणमोक्षशब्दितामृत-त्वस्येति भाव । **एतद्द्वितीयेन वृणे वरेण ।** स्पष्टम् ॥ १३ ॥

एवमुक्तो मृत्युराह, **प्र ते ब्रवीमि तदु मे निबोध ।** प्रार्थितवते तुभ्य प्रब्रवीमि । 'व्यवहिताश्च' इति व्यवहितप्रयोग । **मे** मम उपदेशाज्जानीहीत्यर्थ । ज्ञानस्य फलं दर्शयति **स्वर्ग्यमग्निं नचिकेतः प्रजानन् अनन्तलोकाप्तिमथो प्रतिष्ठाम् ।** अनन्तस्य विष्णो लोक ; तत्प्राप्तिम् । 'तद्विष्णो परमं पदम्' इत्युत्तरत्र वक्ष्यमाण

लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।
स चापि तत् प्रत्यवदत् यथोक्तमथास्य मृत्युः पुनराह [1]तुष्टः ॥ १५ ॥

---

त्वात् । **अथो**—तत्प्राप्त्यनन्तरं **प्रतिष्ठाम्**—अपुनरावृत्तिं च । लभन इति शेषः । तद्ज्ञानस्यैतादृशसामर्थ्यं कथं संभवतीति मन्यमानं प्रत्याह—**विद्धि त्वमेतन्निहितं गुहायाम्** । ब्रह्मोपासनाङ्गतया एतद्ज्ञानस्य मोक्षहेतुत्वलक्षणमेतत्स्वरूपं गुहायां निहितमन्ये न जानन्ति । त्वं जानीहीति भावः । यद्वा ज्ञानार्थकस्य विदेर्लाभार्थकत्वसंभवात् अग्निं प्रजानन् त्वमनन्तलोकाप्तिं प्रतिष्ठां लभस्वेत्युक्ते हेतुहेतुमद्भावस्सिद्धो भवति । **प्रजानन्** । 'लक्षणहेत्वोः—' इति शतृप्रत्ययः ॥ १४ ॥

अनन्तरं श्रुतिवाक्यम्–**लोकादिमग्निं तमुवाच तस्मै** । लोकस्य **आदिं** हेतुम्; स्वर्ग्यमिति यावत् । तमग्निमुवाच । **या इष्टका यावतीर्वा यथा वा** । यल्लक्षणा इष्टकाश्चेतव्याः, यत्संख्याकाः, येन प्रकारेण चेतव्याः, तत् सर्वमुक्तवानित्यर्थः । यावतीरिति पूर्वसवर्णश्छान्दसः । **स चापि तत् प्रत्यवदत् यथोक्तम्** । स च नचिकेताः तत् उक्तं (श्रुतं) सर्वं तथैवानूदितवानित्यर्थः । **अथास्य मृत्युः पुनराह तुष्टः** । शिष्यस्य ग्रहणसामर्थ्यदर्शनेन संतुष्टस्सन् मृत्युः पुनरप्युक्तवानित्यर्थः ॥ १५ ॥

---

१४. लाभार्थेति । विद्धि अनुभवेत्युक्तौ लाभ एवोक्तो भवतीति । लभन इत्यध्याहारे गौरवादेतत्पक्षावलम्बनम् । एवञ्च एतद्विति पदच्छेदमकृत्वा एतमिति कृत्वा गुहानिहितनदात्मरूपमग्निं प्रजानन्नित्यन्वयोऽपि काममस्तु । प्रजानञ्चोपासनं स्यात् ॥
१५. यावतीरिति यावत्य इत्यर्थः । वाकारस्समुच्चये । [1] पुनरेवाहेति शां

तमब्रवीत् प्रीयमाणो महात्मा वरं तवेहाद्य ददानि[1] (मि) भूयः।
तवैव नाम्ना भविताऽयमग्निः [2]सृङ्कां चेमामनेकरूपां गृहाण ॥ १६ ॥
त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत् तरति जन्ममृत्यू । ब्रह्मजज्ञं

---

**तमब्रवीत् प्रीयमाणो महात्मा ।** सन्तुष्यन् महामना मृत्युः नचिकेतसमब्रवीत् । **वरं तवेहाद्य ददानि(मि) भूयः ।** पुनश्चतुर्थं वरं ददानि = प्रयच्छानीति (वरं प्रयच्छामीति) । किं तत्? तत्राह **तवैव नाम्ना भविताऽयमग्निः ।** मयोच्यमानोऽग्निस्तवैव नाम्ना 'नाचिकेतः' इति प्रसिद्धो भविता । किञ्च **सृङ्कां चेमामनेकरूपां गृहाण**—विचित्रां सृङ्कां शब्दवतीं रत्नमालां स्वीकुर्वित्यर्थः ॥ १६ ॥

पुनरपि कर्म स्तौति—**त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत् तरति जन्ममृत्यू । त्रिणाचिकेतः**—'अयं वाव यः पवते' इत्याद्यनुवाकत्रयाध्यायी । **त्रिकर्मकृत्**—यजनाध्ययनदानकृत् पाक-

---

१६. १. ददानीति भाष्येऽपि । २. सृङ्काशब्दनिष्पत्तिर्विचार्या। सृकिधातोर्गत्यर्थात् सृङ्केति रूपं निष्पद्यते । अत्र शाङ्करे गत्यर्थो-प्युक्तः । एतद्भाष्येऽपि २-३. मन्त्रे वक्ष्यते । शाङ्करे अत्र मन्त्रे अकुत्सितेति, तत्र च कुत्सितेति गतिविशेषणमौचित्यात् स्वयं पूरितम् । न तु सृङ्काशब्दार्थः । मिथो विरोधप्रसङ्गात् । ब्रह्मविद्या-भरणे सृटेति क्वचिन्मुद्रितम् । रत्नमालारूपार्थे सृडित्यनुकरणशब्द-ग्रहणेन सृडिति कायति शब्दं करोतीति सृङ्केति कथञ्चित् व्युत्पत्त्या स्याद्वा, अन्यथा वेति विमृश्यम् । गत्यर्थकत्वपक्षेऽपि आर्द्रस्निग्ध (शैवलित) देशाऽऽपतितन्यस्यमानपदाकर्षणं सृडित्यनुकारार्हमिति तादृशी गतिः सृङ्का (சறுக்கல்) स्यात्; 'सुपु' इत्यनुकरणमूलक सुपुम्नापदवत् । एवमनुकरणविधयेव रत्नमालापक्षे शब्दवतीति विशेषणमपि दत्तं भाष्ये ।

देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥ १७ ॥

यज्ञहविर्यज्ञसोमयजकृद्वा त्रिभिः अग्निभिः [1]त्रिरनुष्ठितैरग्निभिः [हेतुभिः?] सन्धिम्-परमात्मोपासनेन सम्बन्धम् एत्य प्राप्य जन्ममृत्यू तरतीत्यर्थः, 'करोति तत् येन पुनर्न जायते' इत्यनेनैकार्थ्यात्। एवमेव ह्ययं मन्त्रः 'त्रयाणामेव चैवम्' (1-4 6) इति सूत्रे व्यासार्यैर्विवृतः। त्रिभिरेत्य सन्धिमिति निर्दिष्टमङ्गिभूतं परमात्मोपासनमाह—ब्रह्मजज्ञं देवमीड्यं विदित्वा। अयं मन्त्रखण्डः, 'विशेषणाच्च' (1 2 12) इति सूत्रभाष्ये, "ब्रह्मजज्ञ-जीवः। ब्रह्मणो जातत्वात् ज्ञत्वाच्च। स देवमीड्यं विदित्वा = जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः" इति विवृतः। देवशब्दस्य परमात्मवाचितया जीवपरयोरैक्यासम्भवादत्रत्यदेवशब्दस्य परमात्मात्मकत्वपर्यन्तोऽर्थ इति भाष्याभिप्रायः। निचाय्येमां शान्तिमत्यन्तमेति। निचाय्य ब्रह्मात्मकं स्वात्मानं साक्षात्कृत्य। इमां—

1 त्रिरिति न व्यासार्योक्तम्। अग्निशब्दस्य स्थण्डिलपरतया त्रिरध्ययनस्य कार्यतयैवम्।

१७ त्रयाध्यायीति। अयं भावः—त्रिणाचिकेतपदस्य त्रिर्नाचिकेताग्निचयनकर्तृत्यर्थस्वीकारे उत्तरमन्त्रे य एवं विद्वांश्चिनुते इति त्रिणाचिकेतपदेन सह प्रयोगोऽनुपपन्नः। त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते चिनुते, स त्रिणाचिकेतो मोदते इत्युत्तरार्धान्वये क्लेशः। अतः, 'त्रिसुपर्णं पठन्ति' इत्यत्रेवानुवाकपरतया 'अयं वाव' इत्यनुवाकत्रयाध्यायीत्यर्थ उक्तः। यद्यपि षष्ठप्रभृत्यनुवाकत्रयात्मकोऽपि भागो नाचिकेतविषयकः, मन्त्राणां पाठात्। अत एव कृत्स्नप्रपाठकः नाचिकेताग्निप्रतिपादकः अथापि नाचिकेतब्राह्मणं त्रयोऽनुवाका इति भट्टभास्करोक्तत्वात् तत्प्राधान्यविवक्षा युज्यते। अस्तु वा उशन्नित्यनुवाकस्य वाजश्रवसानां दक्षिणातत्त्वविवेकित्वमात्रपरतया

त्रिणाचिकेतस्त्रयमेतत् विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतम् ।
स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥

---

'त्रिकर्मकृत्तरती'ति [1]पूर्वमन्त्रनिर्दिष्टं संसाररूपानर्थशान्तिमेतीत्यर्थः॥ १७

त्रिणाचिकेतस्त्रयमेतद्विदित्वा । त्रिणाचिकेतः ; उक्तोऽर्थः । **त्रयमेतत् [विदित्वा]** 'ब्रह्मजज्ञं देवमीड्यम्' इति मन्त्रनिर्दिष्ट ब्रह्मस्वरूपं तदात्मकत्वात्मस्वरूपं 'त्रिभिरेत्य संधि'मिति निर्दिष्टमग्निस्वरूप च **विदित्वा**—गुरूपदेशेन शास्त्रतो वा ज्ञात्वा । **य एवं विद्वांश्चिनुते नाचिकेतम्** । एतादृशार्थत्रयानुसंधानपूर्वकं नाचिकेतमग्निं यश्चिनुते । **स मृत्युपाशान् पुरतः प्रणोद्य** । सः मृत्युपाशान्-रागद्वेषादिलक्षणान् । **पुरतः**—शरीरपातात्पूर्वमेव । **प्रणोद्य**-तिर-

---

नाचिकेताग्निविषयविधिविशेषरहितत्वादनुवाकत्रयमेवोपयोग्युपासनपरमिति तावन्मात्रविवक्षेति । न च कृत्स्नाध्ययनं विनाऽनुष्ठानाप्रसक्तेरनुवाकत्रयाध्ययनं किमिति वक्तव्यमिति वाच्यम् ; तथा सति, 'न ह्यविद्वानधिकृतोऽस्ति' इति न्यायेन वैदुष्यस्याप्यर्थसिद्धतया 'त्रयमेतद्विदित्वा, य एवं विद्वान्' इत्यस्यापि व्यर्थत्वात् । त्रिकर्मकृदित्यस्यापि स्वतस्सिद्धतया वैयर्थ्याच्च । सनियमसम्पादितार्थज्ञानादौ आदरप्रदर्शनाय तत्तदिति चेत्—तादृशाध्ययने तत्प्रदर्शनार्थमप्यस्तु । अत उपासनादिविशेषविधायकानुवाकत्रयमत्र विशिष्योक्तमिति ॥ मृत्युमित्यनुक्त्वा जन्ममृत्यू इति कथनात्, 'अप पुनर्मृत्युं जयति, योऽग्निं नाचिकेतं चिनुते' इति पुनर्मृत्युनास्तिरुक्तिः पुनर्जन्माभावादेवेति ज्ञायते । तथाचावतारहस्यचिन्तनादिव इतोऽप्यस्मिन् जन्मन्येव मुक्तिरिति स्यात् । अत एव येयं प्रेत इति ईदृशप्रश्नाधिकारिप्रायणमभिमतमित्यत्रैव स्वरसम् ॥

1 पूर्वमन्त्रेति । पूर्वं मन्त्रस्य पूर्वमन्त्रः । मन्त्रपूर्वार्धेत्यर्थः । पूर्वमन्त्रेति पाठः स्याद्वा ।

[19]यो वा ए(ष्ये)ता ब्रह्मजज्ञात्मभूता चितिं विदित्वा चिनुते नाचिकेतम्
स एव भूत्वा ब्रह्मजज्ञात्मभूत करोति तद् येन पुनर्न जायते ॥१९॥
एष तेऽग्निर्नचिकेत स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण । एतमग्नि

स्कृत्य । जीवद्दशायामेव रागादिरहितस्सन्नित्यर्थः । शोकातिगो मोदते स्वर्गलोके । पूर्वमेव व्याख्यातम् ॥ १८ ॥

यो वा ए(ष्ये)ता येन पुनर्न जायते । य एता चितिं ब्रह्मजज्ञात्मभूतां विदित्वा—ब्रह्मात्मकत्वस्वरूपतया ऽनुसधाय नाचिकेतमग्निं चिनुते, ॥ एव ब्रह्मात्मकत्वात्मानुसन्धानशाली सन् अपुनर्भवहेतुभूत यद्भगवदुपासनम्, तदनुतिष्ठति । ततश्चाग्नौ भगवदात्मकत्वात्मत्वा (त्वात्मा)नुसन्धानपूर्वकमेव चयन 'त्रिभिरेत्य सन्धि त्रिकर्मकृत् तरति जन्ममृत्यू' इति पूर्वमन्त्रे भगवदुपासनद्वारा मोक्षसाधनतया निर्दिष्टम्, नान्यदिति भाव । अय च मन्त्र केषुचित्कोशेषु न दृष्ट, कैश्चिद्व्याकृतश्च । अथापि प्रत्ययिततमैर्व्यासार्यादिभिरेव व्याख्यातत्वान्न प्रक्षेपशङ्का कार्या ॥ १९ ॥

एष तेऽग्निर्नचिकेतः स्वर्ग्यः । उपदिष्ट इति शेष । यमवृणीथा द्वितीयेन वरेण । स्पष्टोऽर्थः । किञ्च एतमग्निं तवैव

१९ यो वा एतामिति श्रुतप्रकाशिकापाठ । तत्र वै इति छेद । ब्रह्मात्मकत्वस्वरूपतयेति । अत्र श्रुतप्रकाशिका (१ ४ ६ सू) "यो वा एताम् न जायत इति वाक्येन ब्रह्मात्मकचेतनदृष्ट्या वा तादृशदेवताधिष्ठितत्वेन वाऽनुसधानपूर्वकमग्नि चिन्वानस्य अपुनर्भवहेतुभूतब्रह्मोपासनद्वारमोक्षप्राप्तिरुक्ता' इति । व्यासार्यादिभिरित्यादिपदादन्येऽप्येत स्वीकृत्य व्याकृतवन्त इति ज्ञायते ॥ तत्र योवापीति पाठस्स्यात् । मन्त्रोऽय न माध्यन्दिनशाकयो ।

तथैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥ २० ॥

**प्रवक्ष्यन्ति जनासः ।** जनास्तवैव नाम्ना एतमग्निं प्रवक्ष्यन्तीत्यर्थः । **तृतीयं वरं नचिकेतो वृणीष्व ।** स्पष्टोऽर्थः ।

(स्वर्गपदमिह मोक्षपरमिति निरूपणम्)

नन्वेतत्प्रकरणगतानां स्वर्गशब्दानां मोक्षपरत्वे किं प्रमाणमिति चेत्—उच्यते । भगवतैव **भाष्यकृता** 'स्वर्ग्यममिम्' इति मन्त्रं प्रस्तुत्य, "स्वर्गशब्देनात्र परमपुरुषार्थलक्षणमोक्षोऽभिधीयते । 'स्वर्गलोका अमृतत्वं भजन्ते' इति तत्रस्थस्य जननमरणाभावश्रवणात् । 'त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत् तरति जन्ममृत्यू' इति च प्रतिवचनात् । तृतीयवरप्रश्ने नचिकेतसा क्षयिफलानां निन्दिष्यमाणतया क्षयिफलविमुखेन नचिकेतसा क्षयिष्णुस्वर्गफलसाधनस्य प्रार्थ्यमानत्वानुपपत्तेश्च । स्वर्गशब्दस्य प्रकृष्टसुखवचनतया निरवधिकानन्दरूपमोक्षस्य स्वर्गशब्दवाच्यत्वसंभवात्" इति कण्ठतस्तात्पर्यतश्च प्रतिपादितत्वान्न शङ्कावकाशः ।

(मुख्यार्थत्यागायोग इति दीक्षित पूर्वपक्षः)

ननु 'स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति । उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥' इति द्वितीयवरप्रश्नमन्त्रद्वये चतुरभ्यस्तस्य स्वर्गशब्दस्य मोक्षपरत्वं किं मुख्यया वृत्त्या? उत अमुख्यया!

२०. तथैव प्रवक्ष्यन्ति जनासः इत्यस्य त्वन्नामकत्वेनाध्यापयिष्यन्ति मनुष्या इत्यर्थे न पौनरुक्त्यगन्धोऽपि ।

नाद्य., 'स्वर्गापवर्गमार्गाभ्याम्', 'स्वर्गापवर्गयोरेकम्,' 'न स्वर्गं नापुनर्भवम्', 'स स्वर्गस्स्यात् सर्वान् प्रत्यविशिष्टत्वात्' इत्यादि-प्रयोगेष्वपवर्गप्रतिद्वन्द्विवाचितया लोकवेदप्रसिद्धस्य स्वर्गशब्दस्य मोक्ष-वाचित्वाभावात्। "ध्रुवसूर्यान्तरं यत्तु नियुतानि चतुर्दश। स्वर्गलोकस्स कथितो लोकसंस्थानचिन्तकैः" इति पुराणवचनानुसारेण सूर्यध्रुवा-न्तर्वर्तिलोकविशेषस्यैव स्वर्गशब्दवाच्यतया तत्रैव लौकिकवैदिकव्यवहार-दर्शनेन मोक्षस्थानत्वात्तथात्वात्।

नापि अमुख्ययेति द्वितीयः पक्षः, मुख्यार्थे बाधकाभावात्। किमत्र प्रश्नवाक्यगतं जरामरणराहित्य–अमृतत्वभाक्त्वादिकं बाधकम्? उत प्रतिवचनगतजरामृत्युलक्षणादि? [उत] क्षयिष्णुस्वर्गस्य सर्वकाम-विमुखनचिकेतः प्रार्थ्यमानत्वानुपपत्तिर्वा?

(पूर्वपक्षिणा बाधकत्रयनिरासः)

नाद्यः, स्वर्गलोकवासिनां जरामरणक्षुत्पिपासाशोकादिराहित्यस्य अमृतपानादमृतत्वप्राप्तेश्च पुराणेषु स्वर्गस्वरूपकथनप्रकरणेषु दर्शनात्, 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति स्मरणात्, अत्रैव 'अजीर्यताममृतानामुपेत्य' इति(१)मृत्या[1]प्यमृतशब्दप्रयोगदर्शनाच्च, स्वर्गलोकवासिनामेव ब्रह्मोपासनद्वारा 'ते ब्रह्मलोके तु परान्तकाले' इति श्रुत्युक्तरीत्या अमृतत्वप्राप्तिसम्भवेन 'स्वर्गलोका अमृतत्वं भजन्ते' इत्यस्योपपत्तेश्च आपेक्षिकामृतत्वपरतया लोकवेदनिरूढोपसद्दारिकामृत-

१. मृत्यावपीति। अमृतानामुपेत्येत्यस्य भवादृशान् अमृतान् उपेत्येत्यर्थकतया मृत्युरनित्योऽप्यमृतशब्दनिर्दिष्ट इति भावः।

शब्दानुसारेण प्रक्रमस्याभ्यस्तानन्यथासिद्धविदोप्यवाचिस्वर्गशब्दस्यान्यथानयनासम्भवात् । न हि देवदत्तोऽभिरूप इत्युक्ते अभिरूपपदस्वारस्यानुसारेण देवदत्तपदस्यात्यन्ताभिरूपयज्ञदत्तपरत्वमाश्रीयते ॥

न द्वितीय ; 'त्रिणाचिकेतस्त्रिभि' इति मन्त्रस्य स्वर्गसाधनस्यैवाग्नेस्त्रिरभ्यासे जन्ममृत्युतरणहेतुभूतब्रह्मविद्याहेतुत्वमस्तीत्येतदर्थकतया स्वर्गशब्दस्य मुख्यार्थपरत्वाबाधकत्वात् । अत एव तत्तुल्यार्थस्य 'करोति तयेन पुनर्न जायते' इत्यस्यापि न स्वर्गशब्दमुख्यार्थबाधकत्वम् ॥

नापि क्षयिष्णो स्वर्गस्य फलान्तरविमुखनचिकेत प्रार्थ्यमानत्वानुपपत्तिरिति तृतीय पक्ष । स्वर्गसाधनाग्निप्रश्ने प्रतिश्रवना हितैषिणा मृत्युना अपृष्टेऽपि मोक्षस्वरूपे, 'अनन्तलोकाप्तिमथो प्रतिष्ठाम्', 'त्रिणाचिकेतस्त्रिभिरेत्य सधिं त्रिकर्मकृत् तरति जन्ममृत्यू' इत्यादिनोपक्षिप्ते उत्पन्ना मुमुक्षा 'अन्य वरं नचिकेतो वृणीष्व' इति प्रतिषेधेन दृढीकृता। तस्या च दशाया क्रियमाणा क्षयिष्णुफलनिन्दा प्राचीनस्वर्गप्रार्थनाया कथ बाधिका स्यात् । किञ्च 'श्वोऽभावा मर्त्यस्य' इत्यादौ मर्त्यभोग(ग्य) निन्दाया एव दर्शनेन स्वर्गनिन्दाया अदर्शनात्, स्वर्गशब्दस्य मोक्षपरत्वे तस्य ज्ञानैकसाध्यतया तत्प्रयोजनकत्वस्याभावभावात् (वेन) उपक्रमोपसहारमध्याभ्यस्तस्वर्गशब्दपीडाप्रसङ्गाच्च। सन्तु वा प्रतिवचने बाधकानि, अथाप्युपक्रमाधिकरणन्यायेन प्रक्रमस्य प्रश्नवाक्यस्थस्वर्गशब्दस्यैव प्रबलत्वात् । न च 'भूयसा स्यात् सधर्मत्वम्' इति न्यायात् भूयोनुग्रहार्थमल्पस्योपक्रमस्य बाध्यत्वमस्त्विति वाच्यम् , 'मुख्य वा—

इति (12-2-28) सूत्रे औपसंहारिकन्ह्येक्षयाऽपि मुख्यस्यैव प्राबल्योक्तेः। तस्मात् स्वर्गशब्दस्य मुख्यार्थपरित्यागे न किञ्चित् कारणमिति ॥

(मोक्षपरत्वसिद्धान्तः)

अत्रोच्यते-स्वर्गशब्दस्य मुख्यैव वृत्त्या मोक्षवाचित्वम् । स्वर्गकामाधिकरणे, 'नागृहीतविशेषणान्यायेन (1-8-10) स्वर्गशब्दस्य प्रीतिवचनत्वमेव, न प्रीतिविशिष्टद्रव्यवाचिता' इत्युक्त्वा--'ननु स्वर्गशब्दस्य नागृहीतविशेषणान्यायेन प्रीतिवचनत्वे सिद्धेऽपि देहान्तरदेशान्तरभोग्यप्रीतिवाचिता न सिद्ध्येत् । न च 'यस्मिन्नोष्णम्' इति वाक्यशेषात् विशुद्देशस्थस्वर्गशब्दस्य प्रीतिविशेषवाचितानिश्चय इति वाच्यम् ; प्रीतिमात्रवाचित्वेन निर्णीतशक्तिकतया सन्देहाभावेन 'सन्दिग्धेषु वाक्यशेषात्' इति (1-4-29) न्यायस्यानवतारात्' इति परिचोद्य-'यद्यपि लोक एव स्वर्गशब्दस्य निर्णीतार्थता, तथापि लोकावगतसातिशयसुखवाचित्वे तत्साधनत्वं ज्योतिष्टोमादीनां स्यात् । तथाच [1]अल्पधननरायाससाध्ये लौकिके तदुपायान्तरे संभवति न बहुधननरायाससाध्ये बह्वन्तराये ज्योतिष्टोमादौ प्रेक्षावान् प्रवर्तेत इति प्रवर्तकत्वं ज्योतिष्टोमादिविधेर्न स्यात् । अत वाक्यशेषावगते निरतिशयप्रीतिविशेषे स्वर्गशब्दस्य शक्तौ निश्चितायां वाक्यशेषाभावस्थलेऽपि यववराहादिष्विव स एवार्थः । लौकिके सातिशयप्रीतिमरिति गुणयोगादेव वृत्तेरुपपत्तेर्न शक्त्यन्तर-

१. अल्पधननरायासेत्यत्र निरायासेति पाठः स्यात् । यद्वा अल्पधन-अल्पसंख्याकनर-अल्पायाससाध्यमिदम् । बहुधनबहुनरबह्वायाससाध्यं तु वैदिकमित्यर्थः ॥

कल्पना । न च प्रीतिमात्रवचनस्यैव स्वर्गशब्दस्य वेदे निरतिशयप्रीति-वाचित्वमस्त्विति वाच्यम् । निरतिशयत्वांशस्यान्यतोऽनवगतत्वेन तत्रापि शक्त्यवश्यम्भावेन स्वर्गशब्दस्य लोकवेदयोरनेकार्थता[हि!] स्यात् (!) । यदा तु वैदिकप्रयोगावगतनिरतिशयप्रीतिवाचिता, तदा सातिशये लौकिके प्रीतित्वसामान्ययोगाद्गौणी वृत्तिः'—इति मीमांसकैर्निरतिशय-सुखवाचित्वस्यैव (6 1) समर्थिततया मोक्षस्य स्वर्गशब्दवाच्यत्वे विवादा-योगात् ; पार्थशब्दस्यार्जुन इव तदितरपृथापुत्रेषु प्रचुरप्रयोगाभावेऽपि पार्थशब्दमुख्यार्थत्वानपायवत् स्वर्गशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकगतसुख-विशेष इव अन्यत्र प्रचुरप्रयोगाभावेऽपि वाच्यत्वानपायात् । 'बर्हि-राज्यादिशब्दानामसंस्कृततृणघृतादिष्वार्यैरप्रयुज्यमानानामपि अस्त्येव तद्वाचित्वम् । केषांचित् अप्रयोगमात्रस्य शक्त्यभावासाधकत्वात् । अतस्तृणत्वादिजातिवचना एव बर्हिरादिशब्दाः' इति बर्हिराज्याधिकरणे (1.1.10) स्थितत्वात् । तदुक्तं वार्तिके (तन्त्र 1-4-10) 'एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः । तदत्यागान्न तस्यास्ति निमित्तान्तर-गामिता ॥' इति । ततश्च स्वर्गशब्दो मोक्षसाधारण एव ॥

(बर्हिरादिवैषम्यशंका)

ननु बर्हिराज्यादिशब्देषु असंस्कृततृणघृतादौ आर्यप्रयोगा-भावेपि अनार्यप्रयोगसत्त्वात् असंस्कृतवाचिताऽस्तु नाम । स्वर्गशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकसुखविशेषातिरिक्तस्थले नियमेनाप्रयोगात् तद्व्यावृत्तैव शक्तिरभ्युपगन्तव्या । अत एव प्रोद्गात्रधिकरणे (3.5.7) उद्गातृशब्दस्य

१. अत एवेति । अस्य ग्रहणमित्यनेनान्वयः । अत एव उद्गात्रधिकरणे

ऋत्विग्विशेषे इतरव्यावृत्तप्रयोगविशेषेण रूढत्वात् तस्य चोद्गातुरेकत्वेन, 'प्रैतु होतुश्चमस प्रोद्गातॄणाम्' इति बहुवचनार्थबहुत्वासंभवात् तदन्वयार्थं रूढिपूर्वकलक्षणया अपसुब्रह्मण्यानामेकस्तोत्रसम्बन्धिना त्रयाणां वा, सुब्रह्मण्याना चतुर्णां वा उद्गात्रादीनां छन्दोगानां ग्रहणमिति। एतद्विरुध्येत। तथा अहीनाधिकरणे (३ ३ 8) 'तिस्र एव साह्नस्योपसदः द्वादशाहीनस्य' इत्यत्रत्याहीनशब्दस्य 'अह्न ख क्रतौ' इति व्याकरणस्मृत्या खप्रत्ययान्ततया अहर्गणसामान्यवाचितया व्युत्पादितस्यपि, अहीनशब्दस्य नियमेन सत्रे अप्रयोगादहर्गणविशेषरूढिमङ्गीकृत्य, ज्योतिष्टोमस्याहर्गणविशेषत्वाभावात्, न हीन इति योगस्य रूढिपराहतत्वेन योगेन ज्योतिष्टोमे वृत्त्यसंभवात् ज्योतिष्टोमप्रकरणाधीताया अपि द्वादशाहीनस्येति द्वादशोपसत्ताया अहर्गणविशेषे उत्कर्ष इत्युक्तम्। तथा 'पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु' इति व्याकरणस्मृत्या सामिधेनीमात्रवाचितया व्युत्पादितस्यापि धाय्याशब्दस्य न सामिधेनीमात्रवचनत्वम्, नापि धीयमानत्वरूपयोगार्थवशेन धीयमानमात्रवचनत्वम्, स्तुतशस्त्रार्थतया धीयमानासु ऋक्षु सामिधेनीमात्रे च धाय्याशब्दाप्रयोगात्, अपितु 'पृथुपाजवत्यौ धाय्ये भवतः' इत्यादिवैदिकप्रयोगविषयेषु पृथुपाजवत्यादिष्वेव धाय्याशब्दस्य शक्तिरिति 'समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युः' इति पाञ्चमिकाधिकरणे (5 3 4) स्थितम्। एवमादिकं सर्वं विरुध्येत। सर्गशब्दे त्वदुक्तरीत्या प्रयो

---

लयश्च वारो वा गृहीता इत्यर्थः। ग्रहणमित्युक्तमिति पाठः स्याद्वा? अहीनशब्दस्य या रूढिः, तामत्रत्याहीनशब्दस्याङ्गीकृत्येति योजना॥

गाभावेऽपि शक्तिसंभवे उद्गात्रादिशब्दानां ऋत्विग्विशेषादिषु रूढेः अकल्पनीयत्वादिति चेत्—

(तत्परिहारः)

सत्यम् । यदि सर्वात्मना तदतिरिक्ते स्वर्गशब्दप्रयोगो न स्यात्, तदा तद्व्यावृत्ता रूढिरभ्युपगन्तव्या स्यात् । अस्ति हि तत्रापि प्रयोगः । (तै. आ. 1 27-115) 'तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषा वृतः ; 'यो वै तां ब्रह्मणो वेद', 'तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः', 'अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति' इति तैत्तिरीयक-बृहदारण्यक-तलवकारादिषु अध्यात्मशास्त्रेषु प्रयोगदर्शनात् पौराणिकपरिकल्पितस्वर्गशब्दरूढेः सांख्यपरिकल्पिताव्यक्तशब्दरूढिवत् अनादरणीयत्वात् । अस्मिन्नेव प्रकरणे, 'त्रिणाचिकेतस्त्रयमेतत् विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम् स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके' इति मन्त्रे कर्मज्ञानसमुच्चयसाध्यवाचकतया श्रूयमाणस्य स्वर्गलोकशब्दस्य सूर्यभुवान्तर्वर्तिलोकव्यतिरिक्तवैराजपदवाचकतया परैरपि व्याख्यातत्वाच्च । ननु सूर्यलोकोर्ध्ववर्तिलोकत्वस्यैव प्रवृत्तिनिमित्ततया तस्य च वैराजपदेऽपि सत्त्वात् नामुख्यार्थत्वमिति चेत्—तर्हि भगवल्लोकेऽपि ऊर्ध्ववर्तित्वाविशेषेण मुख्यार्थत्वानपायात् । 'स्वर्गापवर्गमार्गाभ्याम्' इत्यादिव्यवहारस्य ब्राह्मणपरिव्राजकन्यायेनोपपत्तेश्च ।

अस्तु वा अमुख्यार्थत्वम् । मुख्यार्थे बाधकसत्त्वात् । किमत्र बाधकमिति चेत्—श्रूयतामवधानेन । 'स्वर्गे लोके न भयं किंचनास्ति' इति

प्रथम(मे) प्रश्नमन्त्रे 'न भयं किंचनास्ति इति अपहतपाप्मत्वं प्रतिपाद्यते । [कथम्॥¹] 'स्वर्गेऽपि पातभीतस्य' इत्युक्तरीत्या केन पापेन कदा पतिष्यामीति भीत्यभाव प्रतिपाद्यते ; स ह्यपहतपाप्मन एव संभवति । 'न तत्र त्वं न जरया बिभेति' इत्यनेन विजरत्वविमृत्युत्वे प्रतिपाद्येते । 'उभे तीर्त्वा अशनायापिपासे' इत्यनेन विजिघत्सत्वापिपासत्वे प्रतिपाद्येते । 'शोकातिग.' इत्यनेन विशोकत्वम् । 'मोदते स्वर्गलोके' इत्यनेन 'स यदि पितृलोककामो भवति, सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति । तेन पितृलोकेन संपन्नो महीयते' इति श्रुतिसन्दर्भप्रतिपाद्ये सत्यकामत्वसत्यसङ्कल्पत्वे प्रतिपाद्येते । ततश्चाध्यात्मशास्त्रसिद्धस्यापहतपाप्मत्वादिगुणाष्टकाविर्भावस्येह प्रतीयमानतया तस्यैवेह ग्रहणसंभवे पौराणिकस्वर्गलोकगतापेक्षिकजरामरणाद्यभावस्वीकारस्यानुचितत्वात् ।

अत एव सप्तमे विध्यन्ताधिकरणे (7-4 1) अनुपदिष्टेतिकर्तव्यताकासु सौर्यादिविकृतिभावनासु इतिकर्तव्यताकाङ्क्षायां वैतानिककर्माधिकारप्रवृत्तत्रयीविहितत्वसामान्यात् वैदिक्येव दार्शपौर्णमासी इतिकर्तव्यता उपतिष्ठत इत्युक्तम् । उक्तं च शास्त्रदीपिकायाम्—

> 'वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते ।
> लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता ॥' इति ।

न च—'यद्येकं यूपमुपस्पृशेत्, एष ते वायविति ब्रूयात्' इति विहितस्य 'एष ते वायौ' इति वचनस्य वैदिकत्वसामान्येन विहितवैदिकयूपस्पर्शनिमित्तकत्वमेव स्यात् । न चेष्टापत्तिः । 'लौकिके दोषसंयोगात्' इति (9-3-9) नावमिकाधिकरणविरोधप्रसङ्गात् इति वाच्यम् ;

'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते तस्मात् यूपो नोपस्पृश्यः' इति प्रतिषिध्य, 'यद्येकं यूपमुपस्पृशेत् एष ते वायाविति ब्रूयात्' इति अनन्तरमेव विहितस्य प्रतिषिद्ध-प्रायश्चित्तसाकांक्ष लौकिकस्पर्शविषयत्वावश्यम्भावेन वैदिकविषयत्वासंभवेऽपि असति बाधके वैदिकविषयत्वस्य युक्तत्वात्।

अत एव, 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान्निर्वपेत्' (3-4-34) इति विहितेष्टेर्वैदिक एवाश्वदाने, न तु 'न केसरिणो ददाति' इति निषिद्धे प्रायश्चित्तसापेक्षे सुहृदादिभ्यः स्नेहादिना क्रियमाणे इति निर्णीतं तृतीये। तथा 'योगिनः प्रति स्मर्येते स्मार्ते चैते' (4-2-20) इति सूत्रे स्मार्तस्य वेदान्ते न प्रत्यभिज्ञानमित्युक्तं परैः। ततश्च 'स्वर्गे लोके' इति मन्त्रे अध्यात्मशास्त्रसिद्धस्यापहतपाप्मत्वादि-ब्राह्मगुणाष्टकस्यैव ग्रहणमुचितम्। 'स्वर्गलोका अमृतत्वं भजन्ते' इति द्वितीयप्रश्नमन्त्रे अमृतत्वभाक्त्वश्रवणात्; अमृतत्वशब्दस्याध्यात्मशास्त्रे मोक्ष एव प्रयोगात्। 'अजीर्यताममृतानाम्' इत्यत्र अमृतशब्दस्यापि मुक्तपरत्वेनापेक्षिकामृतत्वपरत्वाभावात्। उत्तरत्र 'ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्', 'अभयं तितीर्षतां पारं नाचिकेतं शकेमहि' इति परस्यैव ब्रह्मणो नाचिकेताग्निप्राप्यत्वकथनेन स्वर्गशब्दस्य प्रसिद्धस्वर्गपरत्वासंभवात्। 'नान्यं तस्मान्नचिकेता वृणीते' इति ब्रह्मेतरविमुखतया प्रतिपादितस्य नचिकेतसः क्षयिष्णुस्वर्गप्रार्थनानुपपत्तेश्च। 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (12 2 23) इत्यत्र-'समसंख्या-

प्रतिगृह्णीयादितीदं ण्यर्थगर्भम्। ततो दद्यादित्यर्थ इति तत्रैव स्थितम्। प्रतिमुञ्चेत्यादाविव प्रत्यनीकपरतया वा दद्यादित्यर्थोऽस्तु॥

येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।
एतद् विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ २१ ॥

कयोः परस्परविरोध एव मुख्यस्य प्राबल्यम् । न ह्यल्पवैगुण्ये सम्भवति बहुवैगुण्य प्रयोगवचनं क्षमते । अत यत्र जघन्याना भूयस्त्वम्, तत्र 'भूयसा स्यात् सधर्मत्वम्' इति न्याय एव प्रवर्तते' इत्येवं मीमांसकैः स्थिरीकृत्य सिद्धान्तितत्वात्, प्रतर्दनविद्यायाम्, 'एष ह्येव साधु कर्म कारयति', 'एष लोकाधिपतिरेष लोकपाल –आनन्दोऽजरोऽमृत ' इत्यौपसंहारिकपरमात्मधर्मबाहुल्येन प्रकमश्रुतजीवलिङ्गबाधस्य (1 । 29) 'प्राणस्तथानुगमात्' इत्यत्र प्रतिपादितत्वादित्यलमतिचर्चया । प्रकृतमनुसराम ॥

नचिकेता आह—येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः । 'अत्ता चराचरग्रहणात्' (1 । 9) इत्यधिकरणे इमं मन्त्रमनुत्थेत्थं हि भगवता भाष्यकृता– 'अत्र परमपुरुषार्थरूपत्रमप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासन-परावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते । एवञ्च 'येयं प्रेते' इति न शरीरवियोगमात्राभिप्रायम्, अपितु सर्वबन्धविनिर्मोक्षाभिप्रायम् । यथा 'न प्रेत्य संज्ञाऽस्ति' इति । अयमर्थः—मोक्षाधिकृते मनुष्ये प्रेते—सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ता अस्तिनास्त्यात्मिका येयं विचिकित्सा, तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्याम्–जानीयामिति । तथा हि बहुधा विप्रतिपद्यन्ते—केचित् वित्तिमात्रस्याऽऽत्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते । अन्ये वित्तिमात्रस्यैव

सतोऽविद्यास्तमयम् । परे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षण कैवल्यरूपम् । अपरे अपहतपाप्मान परमात्मानमभ्युपगच्छन्त तस्यैवोपाधिससर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षण मोक्षमातिष्ठन्ते । त्रय्यन्तनिष्णातास्तु निखिलजगदेककारणस्याशेषहेय प्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येय कल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मण शरीरतया प्रकारभूतस्य अनुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्य अनादिकर्मरूपाविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते । तत्र मोक्षस्वरूप तत्साधन च त्वत्प्रसादात् विद्यामिति नचिकेतसा पृष्टो मृत्यु "—इति भाषितम् ॥ तथा 'त्रयाणामेव चैवम् ' (1 4 4) इति सूत्रे 'तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेय स्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूप च पृष्टम् ' इति च भाषितम् । श्रुतप्रकाशिकाया च, "येयमित्यादिप्रश्नवाक्ये मोक्षस्वरूप प्रश्न कण्ठोक्त । प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्ध । निर्विशेषतावस्थिर्मोक्षश्चेत्, वाक्यार्थज्ञानस्योपायता स्यात् । उभयलिङ्गक प्राप्य चेत्, तथात्वेनोपासनमुपाय स्यात् । अत मोक्षस्वरूपज्ञाने तदनुबन्धिज्ञानापेक्षम्" इति वर्णितम् ।

अत 'येय प्रेत' इत्यस्य मुक्तस्वरूपप्रश्नपरत्वमेव, न देहातिरिक्त पारलौकिककर्मानुष्ठानोपयोगिकर्तृभोक्तात्मकजीवस्वरूपमात्रपरत्वम् । अन्यथा तस्यार्थस्य दुरधिगमत्वप्रदर्शन-विविधभोगनिरण-प्रलोभनपरीक्षाया असभवादिति द्रष्टव्यम् । नचिकेतसो ह्ययमभिप्राय –हितैषिवचनादात्मा

परित्यक्तचरमदेह [1]आविर्भूतापहतपाप्मत्वादिगुणाष्टको भवतीत्युपश्रुत्य, 'स्वर्गे लोके न भयं किंचनास्ति' इत्यादिना मन्त्रद्वयेन मोक्षसाधनभूताग्निमप्राक्षम्। अधुना तु वादिविप्रतिपत्त्या तद्विषये सन्देहो जायते। अथ 'स्वर्गे लोके न भयं किंचनास्ति' इत्यादिना मयोपन्यस्तापहतपाप्मत्वादिविशिष्टरूप आत्मा अस्तीत्येके, नास्तीत्यपरे, त्वया उपदिष्ट एतज्जानीयामिति। अत एव प्रतिवचने, 'एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य। स मोदते मोदनीयं हि लब्ध्वा' इति एतत्प्रश्नानुगुण्यमेव दृश्यते। अतो यथोक्त एवार्थः।

केचित्तु—'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति सूत्रे तिरोहितमिति निष्ठान्तपदे उपसर्जनतया निर्दिष्टस्य तिरोधानस्य 'देहयोगाद्वा सोऽपि' (3 2 ६) इति तदुत्तरसूत्रे, 'सोऽपि तिरोधानभावोऽपि' इति पुल्लिङ्गतच्छब्देन परामर्शदर्शनात्, 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इत्यत्रापि प्रविष्टाविति उपसर्जनतया निर्दिष्टस्य प्रवेशस्य तद्दर्शनादिति तच्छब्देन परामर्शदर्शनात्, "सर्वनाम्नाऽनुसन्धिर्वृत्तिच्छन्नस्य" इति वामनसूत्रे कृत्तद्धितादिवृत्तिन्यग्भूतस्यापि सर्वनाम्ना परामर्श-

---

1 प्रेतशब्दस्य सामान्यतो मृतमात्रवाचित्वेऽपि मुक्तपरत्वलाभः, स्वर्गादिगामिमृतपुरुषविषयेऽस्य संदेहप्रसक्त्यभावादित्यनुक्तमेव। किञ्च व्यक्तिवचनाना संनिहितव्यक्तिवचनत्वमिति नियमात् चरमशरीरवियोगवत एवेह प्रकृतत्वात् तद्ग्रहणमेव। कथं तस्य प्रकृतत्वमिति चेत्—'त्रिणाचिकेत —तरति जन्ममृत्यू' इति तीर्णजन्ममृत्युर्हि प्राक् तेनोक्तः। तद्विषय एव वादिविप्रतिपत्तिप्रदर्शनेन विचारारम्भ इति।

देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयमणुरेष धर्मः ।

स्वाङ्गीकृतत्वात्, 'येयं प्रेत' इति निष्ठान्तप्रेतशब्दे उपसर्जनतया निर्दिष्टस्यापि प्रायणशब्दितमोक्षस्य ['देहयोगाद्वा सोपि' इतिवत्] 'नायमस्तीति चैके' इत्यत्र अयमिति पदेन परामर्शोऽस्तु । न चैवं मुक्तवत्यस्मिन् भोजनमस्ति वा न वेति वाक्यवत्, 'मुक्तेऽस्मिन् मोक्षोऽस्ति न वा' इति सन्देहकथनं व्याहतार्थमिति वाच्यम्; मोक्ष-सामान्यमभ्युपेत्य मोक्षविशेषसन्देहस्योपपादयितुं शक्यत्वात् । अय-मित्यनेन विशेषपरामर्शसंभवात् । ननु न प्रायणशब्दस्य मोक्षवाचि त्वं क्वचिद्दृष्टम् । शरीरवियोगवाचित्वात् । श्रुतप्रकाशिकायां शरीर-वियोगवाचित्वमभ्युपेत्यैव चरमशरीरवियोगपरतया व्याख्यातत्वादिति चेत्—अस्त्वेवम् । तथापि अयमित्यनेन चरमशरीरवियोगपरामर्श-संभवात् तद्विषयिण्येव विचिकित्सा अस्तु । ननु तस्य निश्चितत्वात् तद्विषयिणी विचिकित्सा नोपपद्यत इति चेत्—सत्यम् । अयं चरम-शरीरवियोगः प्राप्तस्वरूपाविर्भावपूर्वभावित्वेन रूपेणास्ति न वेति विचि कित्सायाः सूपपादत्वात् इति वदन्ति ॥ २१ ॥

एवं मुक्तस्वरूपं पृष्टो मृत्युः उपदिश्यमानार्थस्यातिगहनतया पारं प्राप्तुमप्रभवते मध्ये पतयालवे नोपदेष्टव्यमिति मत्वाऽऽह देवैरत्रापि विचिकित्सितं पुरा । बहुदर्शिभिरपि देवैरस्मिन् मुक्तात्मस्वरूपे विचिकित्सितम्—संशयितम् । न हि सुज्ञेयमणुरेष धर्मः ।

२२. देवैरप्यत्रेति योजना । हेतुपर्दहितरान्दार्थं दर्शयन्नाह इति सूक्ष्म इति । धर्म इत्युपायवाचिपदप्रयोगात् प्रेतस्य जीवस्य निर्वि-

अन्य वर नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥ २२ ॥
देवैरत्रापि विचिकित्सित किल त्वञ्च मृत्यो यन्न सुज्ञेयमात्थ ।
वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥
शतायुष पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् ।

---

आत्मतत्त्व न सुज्ञानमिति सूक्ष्म एष धर्म । सामान्यतो धर्म एव दुर्ज्ञान । तत्राप्ययं दुर्ज्ञान इति भाव । अन्य वर नचिकेतो वृणीष्व । स्पष्टोऽर्थ । मा मोपरोत्सीरति मा सृजैनम् । मामा इति निषेधे वीप्साया द्विर्वचनम् । उपरोध मा कार्षी । एनं मा—माम् अतिसृज मुञ्च ॥ २२ ॥

एवमुक्तो नचिकेता आह—देवैरत्रापि विचिकित्सित किल । स्पष्टोऽर्थ । त्व च मृत्यो यन्न सुज्ञेयमात्थ । त्व च मृत्यो 'न सुज्ञेयम्' इति यदात्मस्वरूपमुक्तवान् । वक्ता चास्य त्वादृगन्यो न लभ्य: नान्यो वरस्तुल्य एतस्य कश्चित् । त्वादृक्—त्वादृश इत्यर्थ । अन्यत् स्पष्टम् ॥ २३ ॥

एव नचिकेतसोक्तो मृत्यु विषयस्य दुरधिगमतया मध्ये न त्यक्ष्यतीति निश्चित्य, सत्यपि ग्रहणसामर्थ्ये विषयान्तरासक्तचेतसे एतादृश मुक्तात्मतत्त्व नोपदेशार्हमिति मत्वा मुमुक्षास्थैर्यानु(नि)श्चयार्थं

---

कारस्थितिरूपसत्ताहेतु कश्चिदुपायोपि प्राक्पृष्ट इति सिद्ध्यति । मामेत्यादे –मा मा बाधस्व, एन वर मा प्रति मुञ्च, मा न पृच्छेत्यर्थो भावप्रकाशिकायाम् । चतुर्थपादस्य–मोपरोत्सीरिति मा भूत् । एन वर मा त्यज गृहाणेत्यर्थोपि ध्वन्यत इव । तेन द्वित्साध्यञ्जनम् ।

२४ निश्चित्येति । यमेन उपेक्षार्थमुक्त दुरधिगमत्वादिकमेव हेतूकृत्य उपदेशप्रार्थनात् अपनयालुब्ध निश्चित्येत्यर्थ ।

भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥ २४
एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ।
महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥ २५

प्रलोभयन् उवाच-शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्ति हिरण्यमश्वान् । स्पष्टोऽर्थः । भूमेर्महदायतनं वृणीष्व । पृथिव्या विस्तीर्णम् आयतनं मण्डलं राज्यं वृणीष्व । अथवा भूमेस्सम्बन्धि महदायतनं विचित्रशालाप्रासादादियुक्तं गृहं वृणीष्व । स्वयं च जीव शरदो यावदिच्छसि । [यावत्-?] यावद्वर्षाणि जीवितुमिच्छसि, तावज्जीवेत्यर्थः ॥ २४ ॥

एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च । उक्तेन वरेण सदृशमन्यदपि वरं मन्यसे चेत्, तदपि वृणीष्व प्रभूतं हिरण्यरत्नादिकं चिरजीवनं चेत्यर्थः । महाभूमौ नचिकेतस्त्वमेधि । एधि-भव । राजेति शेषः । अस्तेर्लोण्मध्यमपुरुषैकवचनम् । कामानां त्वा कामभाजं करोमि । कामानाम्—काम्यमानानामप्सरःप्रभृतिविषयाणाम् । कामभाजम्—कामः=कामना । तां विषयतया भजतीति कामभाक्, तम् । काम्यमानाप्सरःप्रभृतीनामपि कामनाविषयं करोमीत्यर्थः ॥ २५ ॥

---

२५ अन्यदपीति 'एतत् त्रयाणां प्रथमं वरं वृणे' इतिवत् क्षीरनिदर्शः । वरं मन्यसे-वरत्वेन मन्यसे । एवञ्च तदपीत्यपि युक्तम् । ननु नान्यो वरस्तुल्य एतस्य कश्चिदित्युक्तत्वात् कथमुक्तेन वरेण सदृशमन्यदपीति प्रलोभ्यत इति चेत्-उक्तेन वरेणेत्यस्य २४ श्लोकोक्तेन वरणीयेनेत्यर्थः । यद्वा यमेन प्रलोभनाय तुल्यत्वारोपः कृतस्स्यात् ॥

येये कामा दुर्लभा मर्त्यलोके सर्वान् कामाꣳश्छन्दतः प्रार्थयस्व ।
इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः ।
आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं माऽनु प्राक्षीः ॥ २६
श्वोऽभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः ।

---

**ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामाꣳश्छन्दतः प्रार्थयस्व ।** छन्दतः—यथेच्छमित्यर्थः । **इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः ।** रथवादित्रसहिता मया दीयमानाः स्त्रियो मनुष्याणां दुर्लभा इत्यर्थः । **आभिर्मत्प्रत्ताभिः परिचारयस्व ।** आभिः मया दत्ताभिः परिचारिकाभिः पादसंवाहनादिशुश्रूषां कारयेत्यर्थः । **नचिकेतो मरणं माऽनुप्राक्षीः ।** मरणमनु मरणात् मुक्तेः पश्चात्, मुक्तात्मस्वरूपमिति यावत् । मरणशब्दस्य देहवियोगसामान्यवाचिनोऽपि प्रकरणवशेन विशेषवाचित्वं न दोषायेति द्रष्टव्यम् ॥ २६ ॥

एवं प्रलोभ्यमानोऽपि नचिकेता अक्षुभितहृदय आह—
**श्वोऽभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः ।**
हे अन्तक ! त्वदुपन्यस्ता ये मर्त्यस्य कामा ते श्वोऽभावाः—श्वः अभावः येषां ते तथोक्ताः । दिनद्वयस्थायिनो न भवन्तीत्यर्थः ।

---

२६. ईदृशा इति रामाविशेषणं छान्दसम् । न हीदृशाः कामा लम्भनीया इति नहीत्यादेः पृथग्वाक्यत्वे रामा इत्यत्र प्रदीयन्त इत्यध्याहारस्स्यात् । प्रार्थयस्वेत्यत्रान्वयो वा । इमाः रामाः ईदृशाः कामाश्च न लम्भनीया इत्यन्वयो वा । मरणं मा प्राक्षीरिति मोक्षे मरणपदप्रयोगः अतिहेयत्वज्ञापनाय, जीवन् भोग्यं विहाय को नु मरणं चिन्तयेदिति ।   २७. यन्मर्त्यस्य एतत्सर्वेन्द्रियाणां तेजः श्वोऽभावाः कामा जरयन्तीत्यन्वयः ॥

अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥ २७ ॥
न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत् त्वा ।
जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥ २८

सर्वेन्द्रियाणां यदेतत् तेजः, तत् क्षपयन्ति । अप्सरःप्रभृतिभोगा हि सर्वेन्द्रियदौर्बल्यावहा इति भावः । अपि सर्वं जीवितमल्पमेव । ब्रह्मणोपि जीवितं स्वल्पम्, किमुतास्मदादिजीवितम् । अतश्चिरजीविकापि न वरणार्हेति भावः । तवैव वाहास्तव नृत्यगीते । वाहाः रथादयः । तिष्ठन्त्विति शेषः ॥ २७ ॥

न वित्तेन तर्पणीयो मनुष्यः । न हि वित्तेन लब्धेन कस्यचित् तृप्तिः दृष्टचरी । 'न जातु कामःकामानामुपभोगेन शाम्यति' इति न्यायादिति भावः। किञ्च, लप्स्यामहे वित्तमद्राक्ष्म चेत् त्वा। त्वां वयं दृष्टवन्तश्चेत्, वित्तं प्राप्स्यामहे(?) (प्राप्स्यामः?)(लप्स्यामहे?)।त्वद्दर्शनमस्ति चेत्, वित्तलाभे को भार इति भावः । तर्हि चिरजीविका प्रार्थनीयेत्यत्राह—जीविष्यामो यावदीशिष्यसि त्वम् । यावत्कालं याम्ये पदे त्वमीश्वरतया वर्तसे— व्यत्ययेन परस्मैपदम्—तावत्पर्यन्तमस्माकमपि जीवनं सिद्धमेव । न हि त्वदाज्ञातिलङ्घनेन अस्मज्जीवितान्तकरः कश्चिदस्ति । वरलाभालाभयोरपि तावदेव जीवनमिति भावः । वरस्तु मे वरणीयः स एव । अतः 'येयं प्रेते' इति प्राक्प्रस्तुतो वर एव वरणीय इत्यर्थः ॥ २८ ॥

२८. ईशावदाचरिष्यसि ईशिष्यसीत्युक्तौ निन्दाधिक्यसूर्त्या तदुपेक्षया व्यत्ययपक्ष एवाऽऽदृतः ।

अजीर्यताममृतानामुपेत्य जीर्यन् मर्त्यः क्व तदास्थः(कधःस्थः)प्रजानन्।
अभिध्यायन् वर्णरतिप्रमोदान् अनतिदीर्घे जीविते को रमेत ॥ २९ ॥
यस्मिन्निदं विचिकित्सन्ति मृत्यो [यत्] सांपराये महति ब्रूहि नस्तत्।

---

**अजीर्यताममृतानामुपेत्य** । जरामरणशून्यानां मुक्तानां स्वरूप ज्ञात्वा । **जीर्यन् मर्त्यः क्व तदास्थः प्रजानन्** । **प्रजानन्** विवेकी जरामरणोपप्लुतोऽयं जन **तदास्थः** जरामरणाद्युपप्लुताप्सरःप्रभृति-विषयविषयकास्थावान्, **क्व**—कथं भवेदित्यर्थः । कधस्स्थ इति (इति पाठे !) अधोदेशभूतभूमिष्ठ इत्यर्थ । **अभिध्यायन् वर्णरतिप्रमोदान्** । तत्त्यान् वर्णरतिप्रमोदान् । **वर्णाः** आदित्यवर्णत्वादिरूप-विशेषाः; **रतिप्रमोदाः** ब्रह्मभोगादिजनितानन्दविशेषाः; तान् सर्वान् **अभिध्यायन्** निपुणतया निरूपयन् । **अनतिदीर्घे जीविते को रमेत** । अत्यल्पे ऐहिके चिरजीविते कः प्रीतिमान् स्यादित्यर्थः ॥ २९

**यस्मिन्निदं विचिकित्सन्ति मृत्यो [यत्] सांपराये महति ब्रूहि नस्तत्** । महति पारलौकिके यस्मिन् मुक्तात्मस्वरूपे संदेरते, तदेव मे

---

२९. भूमिष्ठो जीर्यन्मर्त्यः जरामरणदूरदेवसकाशमेत्य देव-लोकभूलोकगतवर्णरतिप्रमोदवैलक्षण्यं भूमावनतिदीर्घं जीविते च विदितवान् कथमत्रापेक्षां कुर्यात् । उत्कृष्टभोगभाग्भिर्भवादृशैः देवैरपि विचिकित्सितमपेक्षितमुपेक्ष्य भवाद्दत्तभोगतोऽपि जुगुप्सितमधोलोकभोगं कथमहमिच्छेयमित्यर्थोऽपि न बाधितः । अथापि मोक्षस्य, मोक्षे जक्षत्क्रीडन्नित्यादिविशेषणाञ्च द्वितीयवचनबलेन युक्तत्वात् तत्र विशेषतोऽभिरुचिः शिष्यस्य प्रदर्शिता भवति । अमृतादिपदञ्च मुख्यं स्वाभिमतयोजनायामिति तथाऽत्र व्याख्यातम् ॥

योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ ३० ॥

॥ इति प्रथमा वल्ली ॥ (१)

॥ अथ द्वितीयवल्ली ॥ २.

हरिः ओम्। अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः।
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थात् य उ प्रेयो वृणीते ॥

---

ब्रूहि। योऽयं व.........नचिकेता वृणीते। गूढमात्मतत्त्वमनुप्रविष्टः योऽयं वरः, तस्मादन्यं नचिकेता न वृणीते स इति श्रुतेर्वचनम् ॥३०॥

॥ इति प्रथमवल्लीप्रकाशिका ॥

एवं शिष्यं परीक्ष्य तस्य मुमुक्षास्थैर्यं निश्चित्य तस्योपदेशयोग्यतां मन्वानः मुमुक्षां स्तौति—अन्यच्छ्रेयोऽन्यदुतैव प्रेयः। अतिप्रशस्तं मोक्षवर्माप्यन्यत्; प्रियत्वास्पदं भोगवर्माप्यन्यत्। ते उभे नानार्थे पुरुषं सिनीतः। ते—श्रेयःप्रेयसी परस्परविलक्षणप्रयोजने सती पुरुषं सिनीतः—बध्नीतः। पुरुषं स्ववशतामापादयत इत्यर्थः। तयोः श्रेय आददानस्य साधु भवति। तयोर्मध्ये श्रेय आददानस्य—मोक्षाय

---

३०. योऽयमित्यर्धमपि नचिकेतोवाक्यमेव भवितुमर्हति, नाहं वृणे इत्यनुक्त्वा, न नचिकेता वृणीते इत्युक्तिर्वरे स्वस्याऽऽग्रहप्रदर्शनाय, उक्तवरत्यागे नाहं नचिकेताः स्यामिति। 'अयं रामस्य रामत्वम्' इतिवत्। उपर्यपि विद्याभीप्सितं त्वां मन्ये इति वक्तव्ये विद्याभीप्सितं नचिकेतसं मन्ये इति वक्ष्यते। अन्यथा अस्य श्रुतिवाक्यत्वे योऽयमिति पदास्वारस्यम्, वृणीत इति वर्तमानकालबाधात् स्मेत्यध्याहारप्रसङ्गश्च। अथाप्यात्मविकत्थनदोषशङ्कायाः अप्रसङ्गाय यथाश्रुतमेव व्याख्याय स्मेत्यध्याहारोऽपि कृत इव ॥

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥
स त्वं प्रियान् प्रियरूपांश्च कामान् अभिध्यायन् नचिकेतोऽत्यस्राक्षीः ।
नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥

---

श्रेयआददानस्य साधु—भद्रं भवति । हीयतेऽर्थात् य उ प्रेयो वृणीते । यस्तु प्रेयो वृणीते स पुरुषार्थाद्भ्रष्टो भवति । उ इत्यवधारणे ॥ १ ॥

श्रेयश्च प्रेयश्च मनुष्यमेतः । श्रेयश्च प्रेयश्च मनुष्यं प्राप्नुतः । तौ संपरीत्य विविनक्ति धीरः । तौ श्रेयप्रेयपदार्थौ सम्यगालोच्य नीरक्षीरे हंस इव पृथक्करोति । श्रेयो हि धीरोऽभि प्रेयसो वृणीते । धिया रमते इति धीरः प्रज्ञाशाली प्रेयोपेक्षया अभि—अभ्यर्हितं श्रेय एव वृणीते । प्रेयो मन्दो योगक्षेमाद्वृणीते । मन्दमतिः योगक्षेमार्थं प्रेयो वृणीते । शरीरस्योपचयो योगः ; क्षेमः परिपालनम् ॥

स त्वं प्रियान्प्रियरूपांश्च कामान् । तादृशस्त्वं सतो रूपतश्च प्रियान् काम्यमानान् स्त्र्यादीनित्यर्थः । अभिध्यायन् नचिकेतोऽत्यस्राक्षीः । दुःखोदर्कत्वादनित्यत्वादिदोषयुक्ततया निरूपयन् त्यक्तवानसीत्यर्थः । नैतां सृङ्कां वित्तमयीमवाप्तः । वित्तमयीं

---

३. सृङ्कामिति । पूर्वं गृहीता सृङ्का अन्या । सा रत्नमाला प्राशस्त्यविकल्पात् गृहीता ; न तु अनुबुभूषया । इयं सृङ्का तदन्येति ज्ञापनार्थमेव, एतां वित्तमयीमिति विशेषणम् । दत्तपूर्वमेवाधुना प्रतिज्ञातेति कल्पनमनपेक्षितम् । तदा, यस्यां मज्जन्ति बहवो मनुष्या इति च न संगतम् ।

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिनं(नं) नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥

---

धनप्रायां सृङ्कां—कुत्सितगतिं मूढजनसेवितामेतां नावाप्तवानसि । यस्यां मज्जन्ति बहवो मनुष्याः । स्पष्टोऽर्थः ॥ ३ ॥

**दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।** या अविद्येति ज्ञाता कामकर्मात्मिका, या च विद्येति ज्ञाता वैराग्यतत्त्वज्ञानमयी, एते दूरम् अत्यन्तं विषूची विषूच्यौ—भिन्नगती; परस्परविरुद्धे च । **विद्याभीप्सिनं नचिकेतसं मन्ये ।** विद्याभीप्सिनं विद्यार्थिनम् । विद्याभीप्सितमिति पाठे आहिताग्न्यादित्वात् निष्ठान्तस्य परनिपातः । छान्दसत्वाद्वा । **न त्वा कामा बहवोऽलोलुपन्त ।** कामा बहवोऽपि त्वा नालोलुपन्त—श्रेयोमार्गाद्विच्छेदं न कृतवन्तः । विषयवशगो न भवसीत्यर्थः । 'लुपसद' इति यङन्ताल्लङ् । छान्दसो यलोपः । यङ्लुगन्ताद्वा छान्दसमात्मनेपदम्, अडभावश्च ॥ ४ ॥

---

४. या विषूची अविद्या इत्येवमुत्तरत्रान्वये एकवचनमपि घटते—अथापि तदर्थस्यापि विधेयत्वलाभाय विषूच्यावित्युक्तम् । एते इति श्रेयःप्रेयोग्रहणे तु विषूची इति क्लीबद्विवचनं स्वरसमेव । अन्यथा सामान्ये नपुंसकम् । परनिपात इति । उपलक्षणमिदम् । विद्ययाऽभीप्सितमिति विग्रहः । विद्या नाचिकेतसमाप्तुमिच्छतीति मन्ये इत्यर्थं मन्येपदाध्याहारस्यात् । अर्थपुष्टिश्च । अयं पाठ एव श्रेयान् । नन्यन्तादेशापवादस्य अदादेशस्य प्रवृत्त्या अलोलुपतेति बहुवचने रूपं स्यात् न तु अलोलुपन्तेति । अतः अडभावोऽपि छान्दस इत्युक्तम् ॥ अत्र लोलुपन्तेति विद्याभीप्सितमिति च माध्वपाठः ।

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥
न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।

'अविद्या या च विद्येति ज्ञाता' इत्युपात्तमार्गद्वये अविद्यामार्गं निन्दति— **अविद्यायामन्तरे वर्तमानाः** । काम्य(म)कर्मादिलक्षणायामविद्याया मध्ये, घनीभूत इव तमसि वर्तमानाः । **स्वयं धीराः पण्डितंमन्यमानाः** । स्वयमेव प्रज्ञाशालिनः शास्त्रकुशलाश्चेति मन्यमानाः । **दन्द्रम्यमाणाः परियन्ति मूढाः अन्धेनैव नीयमाना यथाऽन्धाः** । दन्द्रम्यमाणाः जरारोगादिदुःखपीडिताः अविवेकिनः परिभ्रमन्ति । अन्यत् स्पष्टार्थम् । केचित्तु **दन्द्रम्यमाणा** इति पाठमाश्रित्य विषयकामाग्निना द्रुतचित्ता इत्यर्थं वर्णयन्ति ॥ ५ ॥

**न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्** । परलोकसाधनव्यापारः अविवेकिनं प्रति न प्रकाशते । **प्रमाद्यन्तम्** अनवहितमनस्कम् । **वित्तमोहेन मूढम्**-विषयाशावशीकृत

५ अयं मन्त्रो मुण्डकेऽपि (२ ८)। दन्द्रम्यमाणा इत्यत्र जङ्घन्यमाना इति भेदः । पण्डितमिति पृथक्पदम् । स्वस्य पण्डितं मन्यमाना इत्यर्थः । पण्डितम्मन्याना मानोऽहङ्कारो येषां ते इति विग्रहे ऐकपद्येऽपि शब्दः साधुरेव ॥

६ साम्पराय इति । 'साम्परायं तर्तव्याभावात् ' इति सूत्रम् । मुक्तो हि न परेतः किंतु संपरेतः । ननु नास्तिकाभिमतो भूलोको दूरस्थितेन मृत्युना अयमिति कथं गृह्यते॥ नैवम् । धीस्थतया तथा ग्रहणात् । यद्वा अयमिति कृत्स्नः प्राकृतलोकः, पर इतिव्यावृत्त उच्यते ।

अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥
श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।

मनोरथम् । **अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे** । अयमेव लोकोऽस्ति, परलोको नास्तीति मन्यमानः मत्क्रिय-(त्कार्य)माणयातनाविषयो भवतीत्यर्थः । [1]व्यासार्यैः, 'संयमने त्वनुभूय' इति सूत्रे 'अयं लोको नास्ति पर उत(?)मानी' इति पाठानुसारेण, अयं च लोकः परश्च लोको नास्तीत्यर्थो वर्णितः । तत्र पक्षे तस्येति शेषः पूरणीयः। इतिश्च (उतश ?)ब्दः चार्थे.(?) (चशब्दश्चाध्याहार्यः) । शिष्टपरिग्रहाभावात्, 'अयं लोको नास्ति' इत्यस्योपपत्तिर्द्रष्टव्या । मानी त्यस्य दुर्मानीत्यर्थः। दुर्मानी पुनःपुनर्वशमापद्यत इति उत्तरत्र संबध्यते ॥

**श्रवणायापि बहुभिर्यो न लभ्यः** । यः प्रसिद्धः परमात्मा सः(?) अनेकैःपुरुषैः श्रोतुमपि न लभ्य इत्यर्थः । श्रवणलाभोऽपि महासुकृतफलमिति भावः । **शृण्वन्तोऽपि बहवो यं न विद्युः** । न हि श्रोतॄणां सर्वेषां परमात्मप्रतिपत्तिः सुलभेति भावः ।

1 व्यासार्यैरिति। संप्रति तत्र टीकायाम्, 'अयं लोको नास्ति न पर इति मानी' इति नञ्द्वयघटितपाठो लक्ष्यते। न स भाष्यप्रकाशिकासंमतः। उतेति पाठश्च तत्र न दृश्यते। इतीत्यस्य इतिहेतोरित्यर्थवर्णनसंभवात् अनन्वयो नास्ति। उपनिषदि पाठभेदकल्पनं विनैव टीकानिर्वाहोऽपि भवति। तत्र टिप्पणे भाष्यार्थदर्पणे च शेषं द्रष्टव्यम्।

७. अत्र मन्त्रे, "आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद् वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित्" इति गीताश्लोकोऽनुसंधेयः ।

आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥
न नरेणावरेण प्रोक्त एष [1]सुविज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते [2]गतिरत्र नास्ति अणीयान् ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥

**आश्चर्यो वक्ता कुशलोऽस्य लब्धा ।** अस्य कुशलो वक्ता कुशलः प्राप्ता च दुर्लभ इत्यर्थः । **आश्चर्यो ज्ञाता कुशलानुशिष्टः ।** कुशलेनाऽऽचार्येणानुशिष्टो ज्ञाताऽप्याश्चर्यः । 'मनुष्याणां सहस्रेषु कश्चित् यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इत्युक्तेरिति भावः ॥ ७ ॥

**न नरेणाऽवरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।** **अवरेण** अश्रेष्ठेन प्राकृतेन पाण्डित्यमात्रप्रयोजनवेदान्तश्रवणेन **नरेण**—देहात्माभिमानिना एष आत्मा सुविज्ञेयो न भवति । कुतो हेतोः ? **बहुधा चिन्त्यमानः ।** वादिभिरिति शेषः । **अनन्यप्रोक्ते गतिरत्र नास्ति ।** अनन्येन-उच्यमानादात्मनोऽनन्येन तदेकान्तिना ब्रह्मात्मसाक्षात्कारिणा प्रोक्ते अत्र आत्मनि यादृशी अवगतिः, सा आत्मावगतिरवरेण प्रोक्ते नास्तीत्यर्थः । यद्वा अत्र संसारे **गतिः** चङ्क्रमणं नास्तीत्यर्थः । यद्वा **अनन्यप्रोक्ते**[अन्याप्रोक्ते] स्वयमवगते **गतिः** आत्मावगतिः नास्तीत्यर्थः । **अन्यप्रोक्त** इति पाठे अवरनरप्रोक्ते सति आत्मनि अवगतिर्नास्तीत्यर्थः । ननु येन केनचिदुपदिष्टेऽप्यूहापोहशालिनः स्यादेवेत्यत आह—**अणीयान् ह्यतर्क्यमणुप्रमाणात् ।** यतो अणोरप्यणीयान् आत्मा, अतः तत्स्वरूपं तर्कागोचरम् ॥ ८ ॥

1 सुज्ञेय इति भाष्यपाठः । 2 अन्यप्रोक्ते पा०

*नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।*
*यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥*
*जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।*
*ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १०*

---

तदेवाह—**नैषा तर्केण मतिरापनेया ।** एषा आत्मविषयिणी मतिः तर्केण प्रापणीया नेत्यर्थः । अतः तर्ककुशलेनापि स्वयं ज्ञातुं न शक्येत्यर्थः । **प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।** हे प्रेष्ठ ! प्रियतम, स्वस्मादन्येनैव [गुणोत्कृष्टेन] गुरुणा उपदिष्टैव मतिः मोक्षसाधनज्ञानाय भवति । का पुनः सा मतिरित्यत्राह—**यां त्वमापः सत्यधृतिर्बताऽसि** इति । यां मतिं त्वमापः[1]—आप्तवान् सिसाधयिषिततया निश्चितवानित्यर्थः । **सत्यधृतिरसि ।** सत्या अप्रकम्प्या धृतिर्यस्य स तथोक्तः । बतेत्यनुकम्पायाम् । **त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ।** त्वादृशशिष्यः अस्माकं भूयादित्यर्थः ॥ ९ ॥

पुनरपि तुष्ट आह **जानाम्यहंशेवधिरित्यनित्यम् ।** शेवधिः निधिः, कुबेराद्यैश्वर्यम् । एवञ्जातीयकं कर्मफललक्षणमनित्यमिति जानामि । **न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।** ध्रुवं तत्—आत्मतत्त्वम् । [2]अध्रुवैः–अनित्यफलसाधनभूतैः अनित्यद्रव्यसाध्यैर्वा कर्मभि-

---

९. आपनीयेत्यत्र आपनेयेति छान्दसम् । अपनेतव्या हन्तव्येति प्रकारान्तरमपि शाङ्करे ॥ 1. आप इति प्रयोगः सद्गुरुप्राप्त्या मतेः सिद्धप्रायत्वाद्वा । १०. शेवधिरित्येवंभूतमर्थमनित्यं जानामीति योजना । 2 अध्रुवैरिति । कर्मणां सात्त्विकत्यागपूर्वकमनुष्ठानं ध्रुवं शाश्वतम् स्वाभाविकम्, तत्प्रधानगर्भत्वात् । अन्यथा अध्रुवत्वम् ।

कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् ।
स्तोमं [1]महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥

---

रित्यर्थः । ततो मया नाचिकेतश्चितोऽग्निः अनित्यैर्द्रव्यैः प्राप्तवानस्मि [2]नित्यम् । एवं ज्ञातवता मया ब्रह्मप्राप्तिसाधनज्ञानोद्देशेन अनित्यैरिष्टकादिद्रव्यैर्नाचिकेतोऽग्निश्चितः । तस्माद्धेतोर्नित्यफलसाधनं ज्ञानं प्राप्तवानस्मीत्यर्थः । अतः ब्रह्मप्राप्तेर्ज्ञानैकसाध्यत्वस्य न विरोधः ॥

'त्वादृङ्नो भूयान्नचिकेतः प्रष्टा' इति पूर्वमन्त्रोक्तं नचिकेतसः श्रवणाधिकारं विवृणोति— **कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् । स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः** । **क्रतोः**–कर्मणः **प्रतिष्ठाम्**–फलभूताम्, **जगतः कामस्याप्तिम्**—चतुर्मुखस्थानपर्यन्तसर्वलोकसंबन्धिरूप्यादिविषयात्मककामप्राप्तिं च दृष्ट्वा । मोक्षस्वरूपमाह **आनन्त्यमभयस्य पारमित्यादिना** । अविनाशित्वमत्यन्तनिर्भयत्वमपहतपाप्मत्वसत्यसङ्कल्पत्वादिमहागुणगणरूपस्तोमं उरुकीर्तिं स्थैर्यं च मोक्षगतं दृष्ट्वा लौकिकान् कामान् प्रज्ञाशालित्वात् (प्रज्ञाशाली त्वं)त्यक्तवानसीत्यर्थः । यद्वा[3] मोक्षरूपपरमात्मस्वरूप एव सर्वकामावाप्तिः तत्रैव सकलजगदाधारत्वं क्रतोरनन्तफलरूपताश्चेत्येवं सर्वं परमात्मविषयतया योजनीयम् (११)

---

1. स्तोममहदिति शाङ्करभाष्यपा 2 नित्यमिति । ज्ञानस्य नित्यत्वाभावेऽपि नित्यानुवर्त्यमानत्वादपि नित्यत्वम् । 3 यद्वेत्यादि । इदम् आनन्त्यादिरूपां प्रतिष्ठां दृष्ट्वा कामाप्तिरूपां प्रतिष्ठामत्यस्राक्षीरिति योजनान्तरस्याप्युपलक्षणम् ॥

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥
एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य ।

---

तृतीय प्रश्ने प्रतिवक्ति—तं दुर्दर्शमित्यादिना मन्त्रद्वयेन । **दुर्दर्शं**—'श्रवणायापि बहुभिर्यो न लभ्य.' इत्युक्तरीत्या द्रष्टुमशक्यम्, **गूढ**-तिरोधायककर्मरूपाविद्यातिरोहितम्, सर्वभूतानुप्रविष्टम्, **गुहाहितं** हृदयगुहावर्तिनम्, **गह्वरेष्ठम्**—आत्मान्तर्यामिणम्, **पुराणम्**—अनादिम् **अध्यात्मयोगाधिगमेन**—विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानमध्यात्मयोगः, 'यच्छेद्वाङ्मनसी प्राज्ञः', 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह' इत्यादिना वक्ष्यमाणः । तेन योऽयमधिगमः जीवात्मज्ञानम्, तेन हेतुना **देवं** परमात्मानं **मत्वा**—ध्यात्वेत्यर्थः । जीवात्मज्ञानस्य परमात्मज्ञानहेतुत्वादिति भावः । **हर्षशोकौ**—विषयलाभालाभप्रयुक्तहर्षशोकौ जहातीत्यर्थः ॥ १२ ॥

**एतच्छ्रुत्वा संपरिगृह्य मर्त्यः । एतत्**—आत्मतत्त्वं श्रुत्वा, **संपरिगृह्य**—मननादिकं कृत्वेत्यर्थः । **प्रवृह्य धर्म्यम्**—कर्मसाध्यं शरीरादि **प्रवृह्य**—पृथक्कृत्य परित्यज्येत्यर्थ. । **अणुमेतमाप्य । एतम्**--स्वात्मभूतम् । [1]**अणुम्** सूक्ष्मतया चक्षुराद्यगोचरस्य 'अणीयान् ह्यतर्क्यम्' इति निर्दिष्टं परमात्मानं देशविशेषे प्राप्य । स मोदते

---

१३. प्रवृह्य । वृहू उद्यमने । ननु नचिकेतसं ब्रह्मप्रवेशार्हविवृतसद्मत्वेन मन्य इत्यर्थः कुतो नेत्यत्र, स्वीकरोती संगादं दर्शयति तस्यैव इति ॥

1 अणुमेतं जीवात्मानम् आप्य—यथावत् अवलोक्य परमपदे

स मोदते मोदनीयँ हि लब्ध्वा विवृतँ सद्म नचिकेतसं मन्ये ॥ १३ ॥
अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।

---

**मोदनीयं हि लब्ध्वा, सः** विद्वान् **मोदनीयं** प्रीतिविषयमपहतपाप्मत्वादिगुणाष्टकविशिष्टं स्वस्वरूपं लब्ध्वा **मोदते**— आनन्दी भवतीत्यर्थः । 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स तत्र पर्येति जक्षत् क्रीडन् रममाणः' इति श्रुत्यर्थोऽत्रानुसन्धेयः । एवं प्रश्नस्योत्तरमुक्त्वा नचिकेतसं मोक्षार्हत्वेन स्तौति— **विवृतं सद्म नचिकेतसं मन्ये** । नचिकेतसं प्रति ब्रह्मरूपं सद्म धाम विवृतद्वारं प्रवेशार्हं मन्ये इत्यर्थः । 'तस्यैष आत्मा विशते(ति) ब्रह्मधाम' इति श्रुतेः ।

ननु 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इति श्रुत्यैकार्थ्याय 'अध्यात्मयोगाधिगमेन देवं मत्वा' इत्यत्रापि परमात्मात्मकजीव एव प्रतिपाद्यताम् । ततश्च, 'तं दुर्दर्शम्' इति पूर्वखण्डोऽपि जीवपर एवास्तु । ततश्च 'श्रवणायापि बहुभिर्यो न लभ्यः' इति पूर्वसन्दर्भोऽपि परिशुद्धजीवस्वरूपपर एवास्तु । ततश्च 'आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित्' इति परिशुद्धात्मविषयगीतावचनैकार्थ्यमप्युपपद्यत इति

---

मोदनीयम् "प्रहर्षयिष्यामि सनाथजीवितः" इत्युक्तरीत्या शेषेण स्वेन कैङ्कर्येण प्रीणनीयं परमात्मानं लब्ध्वा मोदयित्वा मोदते– अप्रधानमानन्दं स्वयमपि लभते । 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति तदानन्दनस्यैवोद्देश्यत्वादित्यप्यर्थः स्यात् ।

अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद ॥ १४ ॥

चेत्—न ; ब्रह्मजज्ञमिति मन्त्रे ब्रह्मजत्वरूपमक्रमश्रुतजीवलिङ्गत्वेन चरमश्रुतदेवशब्दस्य देवात्मकत्वरूपार्थाश्रयणेऽपि 'तं दुर्दर्शम्' इति मन्त्रे तादृशजीवलिङ्गाभावेन देवमित्यस्य देवात्मकमित्यर्थाश्रयणायोगात् । एतदेवाभिप्रेत्य भगवता भाष्यकृता, 'गुहां प्रविष्टौ....' इति सूत्रे, "परमात्मनस्तावत् 'तं दुर्दर्शं गूढमनुप्रविष्टम्' इति गुहाप्रवेशो दृश्यते" इत्युक्तम् । तथैवायं मन्त्रः परमात्मपरतया व्यासार्यैरपि विवृतः । गह्वरेष्ठमिति पदेन तु परमात्मनः गह्वरशब्दितदुर्विज्ञेयपरिशुद्धात्मस्वरूपशरीरकत्वमप्युक्तम् । इयांस्तु विशेषः—ब्रह्मजज्ञमिति मन्त्रे परमात्मात्मकपरिशुद्धजीवस्वरूपं प्रतिपाद्यते ; 'तं दुर्दर्शम्' इति मन्त्रे तु जीवशरीरकपरमात्मस्वरूपं प्रतिपाद्यते। इति न तयोरैकार्थ्यहानिः॥१३

'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्', 'एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । स मोदते मोदनीयं हि लब्ध्वा', 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति प्रदेशेषु धर्मफलविलक्षणतया ज्ञानसाध्यतया प्राप्यतया च निर्दिष्टस्य प्राप्यस्य स्वरूपं च, उक्तप्रदेशेष्वेव धर्मविलक्षणतया 'मत्वा' इति प्रतिपन्नस्योपायस्य स्वरूपं च, 'धीरो हर्षशोकौ जहाति' इत्यत्र धीर इति प्रतिपन्नस्य प्राप्तुश्च (!) स्वरूपं च शोधयितुं पृच्छति—अन्यत्र धर्मादन्यत्राधर्मात् अन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद ॥

ननु भाष्ये "देवं मत्वा' इत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य

देवस्य, अध्यात्मयोगाधिगमेनेति वेदितव्यतया निर्दिष्टस्य प्राप्तु प्रत्यगात्मनश्च, 'मत्वा धीरो हर्षशोकौ जहाति'[1] इति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपशोधनाय पुनः पप्रच्छ, अन्यत्र धर्मादिति" इत्युक्ते· कथं तद्विरुद्धतया 'धीर' इति निर्दिष्टस्य प्राप्तुरित्युच्यत इति चेत्—मैवं वोच—'अध्यात्मयोगाधिगमेन' इति वेदितव्यतया निर्दिष्टमात्मशब्दवाच्यं प्रजापतिविद्याप्रतिपन्नमुपास्य प्राप्यभूतं परिशुद्धस्वस्वरूपमेव । अतस्तस्यापि प्राप्यनिर्देशकत्वमेव । वस्तुगत्या तस्य प्राप्तभिन्नत्वात् 'प्राप्तु प्रत्यगात्मनश्च' इति भाष्यं न विरोत्स्यते । अत एव "प्रथमं तावत् प्राप्तुः प्रत्यगात्मनः स्वरूपमाह 'न जायते म्रियते वा विपश्चित्' इति" इत्युत्तरभाष्यमपि न विरोत्स्यते । न हि 'न जायते म्रियते वा विपश्चित्' इति मन्त्रप्रतिपाद्यस्य विपश्चिच्छब्दितपरिशुद्धस्वरूपस्य प्राप्तृरूपत्वोपपत्तिः । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः', 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति मन्त्रप्रतिपाद्यस्यैव प्राप्तृरूपत्वात् । तथैव 'विशेषणाच्च' इति सूत्रभाष्ये प्रतिपादितत्वात् । अत एव प्राप्यप्राप्त्रैकाधिकरण्यनिर्देशपरे गुहामन्त्रे छायातपावित्यज्ञत्ववाचिना छायाशब्देन निर्देशो दृष्टः, न तु विपश्चिच्छब्देन । अतः यथोक्त एवार्थः ।

अथ मन्त्रं व्याचष्टे त्रयाणामिति सूत्रे विवृतः । "धर्मः उपायः । *धर्मादन्यत्र—प्रसिद्धोपायविलक्षण उपाय इत्यर्थः । अधर्मः*–धर्मेतरः उपेयः । **अधर्मादन्यत्र**—प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः ।

अस्मादिति बुद्धिस्थः तत्साधको विवक्षितः । स एवोपेता । स हि प्रसिद्धोपेतृ (साधक) विलक्षणः, साधकावस्थायामितरफलविरक्तत्वात्, फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च । कृताकृतादिति धर्मादीनां विशेषणम् । कृताकृतात् धर्मादेर्विलक्षणं भूताच्च भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः" इत्येकां व्याख्यां कृत्वा, तस्मिन् पक्षे तु कृताकृतात् भूताद्भव्याच्च धर्मादन्यत्र, तादृशादधर्मादन्यत्र, तादृशादस्माचान्यत्र इत्यन्यत्रशब्दत्रयेणैवोपपत्तौ, अन्यत्र भूताद्भव्याच्चेत्यन्यत्रशब्दवैयर्थ्यम्, उपायस्य कालत्रयपरिच्छिन्नतया तत्र कालत्रयपरिच्छिन्नवैलक्षण्यानन्वयं च पर्यालोच्य यद्वेत्यादिना अपरा व्याख्या कृता । तदुच्यते—"यद्वा धर्मादधर्माचान्यत्र यदिति उपासनप्रश्नः ; पुण्यपापरूपसाधनविलक्षणत्वादुपासनस्य । कृताकृतात् भूताच्च भव्याचान्यत्र यदिति कालापरिच्छिन्नमुपेयं पृष्टम् । उपेतुरपि चेतनस्य नित्यत्वात् प्राप्यान्तर्भावाच्च तत एव तस्यापि तन्त्रेण प्रश्नः । 'तदन्तर्गतं च प्राप्तुः स्वरूपम्" इति हि वक्ष्यते । तत्र,(स्य इति । !) यत्तच्छब्दौ त्रितयपराविति भावः' इति ॥

नन्वस्मिन्नपि पक्षे प्रष्टव्यद्वयपरत्वाश्रयणमपि क्लिष्टमेव, अन्यत्र धर्मादन्यत्राधर्मादिति प्रक्रमस्थान्यत्रशब्दद्वयसामानाधिकरण्यवत् अन्यत्रास्मात्कृताकृतात् अन्यत्र भूतादित्युपरितनान्यत्रशब्दद्वयस्यापि सामानाधिकरण्यस्यैव प्रतीतेः । यदि तत्र धर्माधर्मविलक्षणं यच्च, कालत्रय[परिच्छिन्न !]विलक्षणं यच्चेति चशब्दद्वयमध्योष्यत, तदा अन्यत्रशब्दयुगद्वयस्य स्वरसतः प्रतीतं सामानाधिकरण्यं पर्यत्यक्ष्यत । अतः

प्रक्रमरीत्यनुसारिप्रतीतसमानाधिकरण्यभङ्गे कारणाभावात् अन्यत्र धर्मादन्यत्राधर्मादित्ययमप्यंश प्राप्यब्रह्मपर एवाऽस्तु। ननु 'नायमात्मा प्रवचनेन लभ्यो न मेधया' इत्युपायविशेषप्रतिवचनदर्शनेनोपाय-विशेषप्रश्नस्याप्यत्रैवा-तर्भाव्यतया चशब्दाभावेऽप्य-यत्रशब्दयुगद्वयस्य सामानाधिकरण्य भङ्गनीयमिति चेन्न, प्रतिवचनेऽपि 'नायमात्मा प्रवचनेन लभ्य' इति प्रीतिरूपापन्नज्ञानैकलभ्यत्वलक्षणप्राप्यधर्मविशेषो-पदेशस्यैव दर्शनेनोपायप्रधानप्रतिवचनादर्शनात्। 'नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्', 'यस्त्वविज्ञानवान् भवति अमनस्कः सदाऽशुचि। न स तत्पदमाप्नोति' इति प्रतिवचनदर्शनादधर्मा-दन्यत्रेति प्रसिद्धोपायविरोधिविलक्षणविरोधिप्रश्न इत्यपि किं न स्यात्। प्राप्यस्य प्रीतिरूपापन्नज्ञानैकोपायकत्वकथनेन उपाये प्रीतिरूपापन्न-त्वरूपविशेष फलिष्यतीति चेत्, फलतु नाम। नैतावतोपायस्य प्रश्नप्रतिवचनप्रधानविषयत्व वक्तव्यमित्यस्ति। न हि, 'किं देवदत्त-भवनम्' इति प्रश्नस्य वा 'बहुचम्पकालङ्कृतनिष्कुटं द्वारोपान्त-लिखितशङ्खचक्रपद्म(शङ्खपद्म)क देवदत्तभवनम्' इति तत्प्रश्नप्रतिवचनस्य वा निष्कुटद्वारोपान्तप्रधानकत्व कश्चिदभ्युपैति। अतो अन्यत्रधर्मा दन्यत्राधर्मादित्यपि अन्यत्रशब्दचतुष्टयसामानाधिकरण्यलिप्सया धर्मा-धर्मसाध्यविलक्षणब्रह्मविषय एवायमिति चेत्—

अत्रोच्यते—'असौ देवदत्तादुत्पन्नो न भवति, अपितु यज्ञदत्तात्' इति वाक्य श्रुत्वा 'देवदत्तादन्य यं पश्यसि तं मे ब्रूहि' इति प्रवृत्तस्य प्रति (प्रश्न?) वचनस्य देवदत्तान्ययज्ञदत्तपरत्ववत् लक्षणया

यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदँ सङ्ग्रहेण ब्रवीमि ओमित्येतत्॥

सारेण 'ईशानो भूतभव्यस्य' इति मन्त्रस्यापि तत्रैव शुद्धात्मस्वरूपे सङ्गतार्थत्वात्, भेदप्रसक्तिमति प्रत्यगात्मस्वरूप एव 'नेह नाना' इति निषेधस्यापि सङ्गतार्थत्वात्, 'अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः' इति स्मृ(तिप्र)त्यभिज्ञापकस्य 'वायुर्यथैको भुवनं प्रविष्टः' इति मन्त्रस्यापि परिशुद्धस्वरूपपरत्वसंभवात्, 'सर्वतः पाणिपादं तत्' इति गीताभाष्ये, 'ब्रह्मणा परमसाम्यमापन्ने परिशुद्धात्मस्वरूपे सर्वतःपाणिपादादिकार्यकर्तृत्वं संभवति' इति उपपादितत्वात्, 'एकं बीजं बहुधा यः करोति' इति मन्त्रस्यापि परिशुद्धपरत्वेऽनुपपत्त्यभावात्, 'न तत्र सूर्यो भाति' इति मन्त्रस्यापि 'न तद्भासयते सूर्यः' 'ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते' इति गीतावचनेन परिशुद्धात्मस्वरूपपरत्वस्य युक्तत्वात्, 'तं स्वाच्छरीरात्प्रवृहेत्' इति औपसंहारिकमन्त्रस्य परिशुद्धात्मपरत्व एव स्वारस्यात् कृत्स्नाया अप्युपनिषदः प्रजापतिवाक्यवत् प्रत्यगात्मस्वरूपमात्रपरत्वोपपत्तौ प्रत्यगात्मपरमात्मस्वरूपयाथात्म्यद्वयपरत्वक्लेशाश्रयणं वृथा'—

इति शङ्का प्रत्युक्ता। सर्ववेदप्रतिपाद्यस्यैव 'तत्ते पदं सङ्ग्रहेण ब्रवीमि' इति वक्तव्यत्वेन प्रतिज्ञानात् परमात्मस्वरूपप्रतिपादकवेदभागप्रतिपाद्यत्वस्य शुद्धस्वरूपे असंभवात्, शुद्धस्वरूपस्याप्यन्तर्यामिणः परमात्मस्वरूपस्य शुद्धस्वरूपप्रतिपादकभागेनापि प्रतिपाद्यत्वसंभवादिति द्रष्टव्यम्।

**तपांसि सर्वाणि च यद्वदन्ति।** तपांसि—तपःप्रधाना उपरितनभागा इति व्यासार्यैर्व्याख्यातम्। **यदिच्छन्तो ब्रह्मचर्यं चरन्ति।** ब्रह्मचर्यं—गुरुकुलवासस्त्रीसङ्गराहित्यादिलक्षणं यदिच्छन्तो-

एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥

ऽनुतिष्ठन्ति । तत्ते पदं सङ्ग्रहेण ब्रवीमि । सङ्गृह्यतेऽनेनेति सङ्ग्रहः शब्दः । प्राप्यवक्तव्यत्वप्रतिज्ञापरे अस्मिन् मन्त्रे अर्थात् प्रणवप्रशंसाया लाभात् 'प्रणवं प्रशंस्य' इति भाष्यस्य च, 'सर्वे वेदाः' इत्यादिपादत्रयोक्तब्रह्मप्रतिपादकतया प्रशस्येत्यर्थः ' इति श्रुतप्रकाशिकावचनस्य च नानुपपत्तिरिति द्रष्टव्यम् । सङ्क्षेपेण तत्प्रतिपादकं किमित्यत आह– ओमित्येतदिति[1] । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः' इति प्रणवस्य ब्रह्मवाचकत्वात् प्रणवावयवयोरकारमकारयोः परजीववाचितया उपायोपेत्रोरप्युपदिष्टत्व[2]मस्तीति द्रष्टव्यम् ॥ १५ ॥

एवं वाचकं प्रणवं द्वाभ्यां स्तौति— **एतद्ध्येवाक्षरं ब्रह्म** । 'ओमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत' इति ब्रह्मप्राप्तिसाधनध्यानालम्बनत्वादिदमेवाक्षरम्, ब्रह्मप्राप्तिसाधनत्वात् ब्रह्म । **एतद्ध्येवाक्षरं परम्** । जप्येषु ध्येयेषु च श्रेष्ठमित्यर्थः । **एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्** । एतदक्षरमुपास्य, अनेनोपासनेन इदं फलं मे भूयादिति [यो ?] यत् कामयते, [3]तस्य तद्भवतीत्यर्थः ॥ १६ ॥

---

1 ओमित्येतदिति । एतत् पदशब्दोक्तं परमात्मतत्त्वम्, ओमिति–ओंरूपसंग्रहशब्दोक्तमित्यर्थः स्यात् ।

2 उपदिष्टत्वमिति । तथाचोपायोपेतृसंग्राहकेणेति सङ्ग्रहशब्दार्थः । प्रापकप्राप्तृसङ्ग्राहकेण प्रधानप्रतिपाद्यं प्राप्यं ब्रवीमीति श्रुत्यर्थ इति भावः ॥ 3 मूले ज्ञात्वेत्यस्य इच्छतीत्यत्रान्वयः ।

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥
न जायते म्रियते [1]वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।

**एतदालम्बनं श्रेष्ठम्**—एतदोंकाररूपमालम्बनं श्रेष्ठम्—ध्यानादेरिति शेषः । अत एव **एतदालम्बनं परम्**—एतदालम्बनकं ध्यानादि सर्वोत्कृष्टमित्यर्थः । **एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते** । स्पष्टोऽर्थः ॥ १७ ॥

प्रथमं तावत् प्रत्यगात्मस्वरूपमाह—**न जायते म्रियते चेत्यादि**ना मन्त्रद्वयेन । इदं च प्रस्तुत्य व्यासार्यैरित्थं ह्युक्तम्—"इदं मन्त्रद्वयं तावत् एकविषयम्, 'न हन्यते हन्यमाने शरीरे' इत्येतद्विवरणरूपत्वात् द्वितीयमन्त्रस्य । हन्ता चेदिति मन्त्रश्च जीवविषय एव; लोकस्य परमात्मनि हन्तृहन्तव्यभावप्रतिपत्त्यभावात् । परमात्मा हि प्रत्यक्षागोचरः । कथं तस्मिन् वध्यताद्यभिमतिप्रतिपत्तिः? अहमेनं हन्मि, अयं मां हन्तुमागच्छतीति वध्यघातुकभावाभिमानो हि देहिनां जीवविषय एव । ननु 'नास्य जरयैतज्जीर्यति' इतिवत् परमात्मनोपि हननप्रतिषेध उपपद्यते ॥ सत्यम्, तत्र दहराकाशस्य देहान्तःस्थित्या शङ्कितविकारनिषेध उपपद्यते । इह तु लोकसिद्धा भ्रान्तिरनूद्य निरस्यते । न हि परमात्मनि वध्यघातुकभावभ्रान्तिः कस्याप्यस्ति । अतः अनुवादनिषेधावनुपपन्नौ । 'न जायते' इति मन्त्रश्च तेनैकार्थः । अतः मन्त्रद्वयमपि जीवविषयकमेव" इति । अक्षरार्थस्तु—**न जायते म्रियते वा विपश्चित्**[1]—विपश्चित्त्वार्होऽय

1 विपश्चित्पदं जननाद्यसंभवोपपादकम् । विविधं पश्यतीति त्वो

अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ १८ ॥
हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।

---

मिदानीमपि जननमरणशून्य इत्यर्थः । **नायं कुतश्चित्**—उत्पादकशून्यः । **न बभूव कश्चित्**—पूर्वमपि मनुष्यादिरूपेण जननशून्यः । न जायत इत्यत्र हेतुमाह—**अज** इति । न म्रियत इत्यत्र हेतुमाह—**नित्य** इति । न कुतश्चिदित्यत्र हेतुमाह—**शाश्वत** इति । पूर्वं न बभूवेत्यत्र हेतुमाह—**पुराण** इति । ननु कथमस्य नित्यत्वम्, शरीरान्तर्वर्तिनः शरीरविनाशानुविनाशित्वावश्यंभावादित्यत आह–**न हन्यते हन्यमाने शरीरे** । स्पष्टोऽर्थः ॥ १८ ॥

तदेवोपपादयति—**हन्ता चेन्मन्यते हन्तुम्**—अहमेन

---

ह्ययम् । इदं हेयम् इदमुपादेयम् इदमुपेक्ष्यमिति हानोपादानोपेक्षाबुद्धयो हि पुंसः इष्टसाधनत्वानिष्टसाधनत्वानुभयरूपत्वस्मरणवशाद् भवन्ति । तत्स्मरणञ्च पूर्वानुभवात् । अनुभवश्च पूर्वजन्मनि इति रीत्या पूर्वपूर्वजन्मसिद्धौ हि न जीवस्योत्पत्तिसंभवः । अतो जीवस्य देहसंबन्धरूपमेव जन्म, नोत्पत्तिरूपम् ।

द्वितीयपादस्य 'नायं भूत्वा भविता वा न भूयः' इत्येतद्गीताभाष्यानुसारेण, 'कश्चिदात्मा कल्पादिकाले कुतश्चिद्भूत्वा कल्पान्ते म्रियत इति न' इत्यर्थवर्णने भूत्वेत्यध्याहारः, बभूवेति भूतकालायोगश्च विमृश्य स्वरसार्थ एव दर्शितः । अत एवैकरूपार्थवर्णननिर्बन्धाभावात् उत्तरार्धवितारणादिकमपि किञ्चिदन्यथैव । अन्ततस्तात्पर्यमेकमेवेति ध्येयम् ।

१९ कर्त्रधिकरणे (२–३–५) "हन्तारमारमान जानन्" इति भाष्यव्याख्याने श्रुतप्रकाशिका "हन्तुमिति पदम् उदन्तकिनीयान्तम् । सेतुं जन्तुमितिवत् । हन्तारमित्यर्थः" इति ॥

उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

हनिष्यामीति देहात्मदृष्ट्या मन्यते चेदित्यर्थः । **हतश्चेन्मन्यते हतम्**-छिन्नदेहावयवः देहात्मदृष्ट्या आत्मानम्, हतोऽहमिति मन्यते चेदित्यर्थः । **उभौ तौ न विजानीतः** । आत्मस्वरूपमिति शेषः । **नायं हन्ति** । आत्मानमिति शेषः । **न हन्यते**—आत्मस्वरूपमिति शेषः । न च वेदान्तवेद्यपरिशुद्धात्मस्वरूपे कथं हननादिप्रसक्तितत्पूर्वकनिषेधाविति वाच्यम्; तस्यैव क्षेत्रज्ञतया (क्षेत्रीभूततया) तत्प्रयुक्ततत्संभवादिति द्रष्टव्यम् ।

(आत्मनित्यत्वाधिकरणम्)

इमौ मन्त्रौ प्रस्तुत्य वियत्पादे चिन्तितम् । तत्र हि 'वायुश्चान्तरिक्षं चैतदमृतम्' इति वाय्वन्तरिक्षयोर्नित्यत्वश्रवणेऽपि 'आत्मन आकाशः संभूत आकाशाद्वायुः' इति तयोरुत्पत्तिश्रवणात्, एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं सर्वस्य वस्तुनो ब्रह्मविकारत्वस्यावश्याश्रयणीयत्वाच्च यथोत्पत्तिरङ्गीक्रियते, एवं जीवानां नित्यत्वश्रवणेऽपि 'तोयेन जीवान् व्यससर्ज भूम्याम्', 'प्रजापतिः प्रजा असृजत' इति जीवानामपि सृष्टिश्रवणात् एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थञ्च जीवस्यापि सृष्टिरभ्युपगन्तव्येति पूर्वपक्षे प्राप्ते-'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इति सूत्रेण सिद्धान्तितम् । आत्मा नोत्पद्यते; 'न जायते म्रियते वा विपश्चित्', 'ज्ञाज्ञौ द्वावजौ' इत्युत्पत्तिनिषेधश्रुतेः । ताभ्य एव श्रुतिभ्यः नित्यत्वावगमाच्च । न चोत्पत्तिश्रुतिसर्वविज्ञानप्रतिज्ञाविरोधः शङ्क्यः । स्वरूपस्य नित्यत्वेऽपि ज्ञानसङ्कोचविकासलक्षणान्यथाभावरूपावस्थान्तरापत्तिसत्त्वेन उत्पत्तिश्रुतेः

सर्वविज्ञानप्रतिज्ञायाश्चोपपत्ते । उत्पत्तिनिषेधश्रुतेश्च स्वरूपान्यथाभावलक्षणोत्पत्त्यभावपरतया अविरोधात् । इयांस्तु विशेष —चिदचिदीश्वराणां त्रयाणामपि अवस्थान्तरापत्तिलक्षणोत्पत्तिरूपो विकारोऽस्त्येव । तथाप्यचेतनानां स्वरूपान्यथाभावलक्षणा उत्पत्ति । जीवानां तु सा नास्ति । अपितु ज्ञानसङ्कोचविकासलक्षणस्वभावान्यथाभावरूपा उत्पत्ति । ईश्वरस्य तु तत्तन्नियन्तृत्वाद्यवस्थासत्त्वेपि उक्तलक्षणानिष्टविकारद्वयाभावात् 'नित्यो नित्यानाम्' [1] इति परमात्मन इतरविलक्षणनित्यत्वोक्तिरिति द्रष्टव्यम् । वर्णितश्च सूत्रार्थ ।

(उत्पत्त्यसंभवाधिकरणम्)

ननु 'न जायते म्रियते वा' इति श्रुतिप्रतिषिद्धां जीवोत्पत्तिम्, 'वासुदेवात् सङ्कर्षणो नाम जीवो जायते' इति प्रतिपादयत पाञ्चरात्रस्य कथं प्रामाण्यमिति चेत्–अस्या शङ्कायास्तर्कपादे निराकृतत्वात् । तथाहि—'वासुदेवात् सङ्कर्षणो नाम जीवो जायते' इति जीवोत्पत्ति [पाञ्चरात्रे] प्रतिपाद्यते । सा च जीवे न संभवति । तथा 'सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते' इति कर्तुर्जीवात् करणस्य मनस उत्पत्ति श्रूयमाणाऽपि न संभवति । कर्तुर्जीवात्करणोत्पत्ते, 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति मनसो ब्रह्मोत्पत्तिप्रतिपादकश्रुतिविरुद्धत्वादिति, 'उत्पत्त्यसंभवात्', 'न च कर्तु करणम्' इति द्वाभ्यां सूत्राभ्यां पूर्वपक्षं कृत्वा, 'विज्ञानादिभावे वा तदप्रतिषेध', 'विप्रति-

1 इदमुदाहरणं नित्यानां मध्ये नित्य इत्यर्थाभिप्रायेण । भाष्ये अन्यथाऽर्थवर्णनात् सत्यस्य सत्यमित्युदाहर्तव्यम् ।

षेधाच्च' इति द्वाभ्यां सूत्राभ्यां सिद्धान्तितम् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । विज्ञानं च तदादि च विज्ञानादि । ननु [च] 'वयस्तो घुः' इति आदिशब्दस्य नित्यपुल्लिङ्गत्वात् कथमेतदिति चेत्— नायं घुः, अपि तु 'अद भक्षणे' इत्यस्मादावश्यकार्थे णिनिप्रत्यये 'आदि' इति रूपं सिद्ध्यति । तेन च [1]निखिलजगत्संहर्तृत्वमुखेन कारणत्वं प्रतिपाद्यत इति द्रष्टव्यम् । आदि विज्ञानं परमात्मेत्यर्थः । 'सङ्कर्षणो नाम जीवो जायते' इति श्रुतस्य जीवशब्दार्थस्य तदभिमानिपरमात्मभावे सति शास्त्रप्रामाण्याप्रतिषेधस्सिद्ध्यति । परमात्मनश्च जननं नाम स्वेच्छाधीनशरीरपरिग्रहः । तस्मिन्नेव पाञ्चरात्रतन्त्रे, 'स चानादिरनन्तश्च' इति जीवोत्पत्तेर्विशेषेण प्रतिषिद्धतया तद्विरुद्धाभिधानासंभवात् 'सङ्कर्षणो नाम जीवो जायते' इत्यनेन जीवाभिमानिसङ्कर्षणस्य इच्छाधीनशरीरपरिग्रहरूपोत्पत्तिः प्रतिपाद्यत इति न पाञ्चरात्राप्रामाण्यमिति सूत्रयोरर्थः ।

ननु सांख्यपाशुपताद्यधिकरणवत् इदमप्यधिकरणं पाञ्चरात्रप्रामाण्यप्रतिषेधकं किं न स्यादिति चेत्— वेदोपबृंहणाय भारतसंहितां कुर्वता बादरायणेन—

"इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमथ्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥

---

1 अनेन वासुदेवावतारभूतः संकर्षणव्यूहः षाड्गुण्ये विज्ञानबलरूपगुणसंपन्नः सर्वजगत्संहारव्यापाराधिकृत इति पञ्चरात्रोक्तस्यार्थस्य ज्ञापनात् तस्य जीवत्वनिषेधात् जीवोत्पत्तिप्रतिषेधः कृतो भवति । कारणत्वमिति सामान्योक्तिः प्रद्युम्नादेर्ग्रहणाय ।

नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
आरण्यकं च वेदेभ्य ओषधीभ्यो यथाऽमृतम् ॥
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम् ॥" (भा शा 348)
"इदं श्रेयः इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥
भविष्यति प्रमाणं वै एतदेवानुशासनम् ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ॥
अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ।
सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः ॥" (मा शा 335)
"अस्मात्प्रवक्ष्यते धर्मान् मनुस्स्वायम्भुवस्तथा ॥"(भा शा 348)
इत्यादिभिर्वचनैः बहुषु स्थलेषु पाञ्चरात्रप्रामाण्यं प्रतिष्ठापितवता शारीरकशास्त्रे तत्प्रामाण्यं निराक्रियत इत्यस्यासङ्गतत्वात् । नन्वेवम्—
"एवं तत्त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम् ।
यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः ॥
यस्मिन्न विभ्रमाः केचित् दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला ॥"
इति कपिलमतस्य भारते भ्रमादिदोषाभावप्रतिपादनात्, "सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागमं यथान्यायं निष्ठा नारायणः प्रभुः" इति सांख्ययोगपाशुपतादीनामपि नारायणनिष्ठत्वं प्रतिपादनात्, 'तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः' इति तच्छा

**अणोरणीयान् महतो महीयान् आत्माऽस्य जन्तोर्निहितो गुहायाम् ।**
**तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः ॥ २० ॥**

स्वकर्तॄणामपि नारायणप्रतिपादकत्वस्य प्रतिपादनात्, 'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः' इति सर्वेषामप्यात्मप्रमाणत्वप्रतिपादनाच्च, 'सर्वं प्रमाणं हि तथा यथैतच्छास्त्रमुत्तमम्' इति पाञ्चरात्रदृष्टान्तेन इतरशास्त्राणामपि प्रामाण्यप्रतिपादनाच्च तत्पादे सांख्यपाशुपताद्यागमानामपि प्रामाण्यं न निराक्रियत इति चेत्—सत्यम् । भ्रमविप्रलिप्सादिराहित्यं शास्त्रकर्तॄणाम्, परमतात्पर्यं च नारायण एवेति समानम् । तथापि अबहुश्रुततया तद्वक्तॄणां हृदयमजानन्तः आपातप्रतिपन्नमेवार्थं तात्त्विकं मन्यमाना ये प्रत्यवतिष्ठन्ते, तान् प्रति सांख्याद्यागमानामापातप्रतिपन्नार्थमात्रपरत्वमन्वारुह्य सूत्रकृता तन्निरसनं कृतम् । पाञ्चरात्रशास्त्रे तु परतत्त्वहितपुरुषार्थानामेवाऽऽपाततोऽपि प्रतीतेः वेदविरुद्धनिमित्तोपादानभेदाद्यप्रतीतेश्च कृत्स्नं पञ्चरात्रं प्रमाणमेवेति नैकदेशेऽप्यप्रामाण्यशङ्कावकाश इति द्रष्टव्यम् । एवमेव व्यासार्यैरुक्तम् । प्रकृतमनुसरामः ॥

एवं मन्त्रद्वयेन प्रत्यगात्मस्वरूपं विशोध्य तदात्मभूतपरमात्मस्वरूपमाह—**अणोरणीयान् महतो महीयान्** । अणोः—सर्वाचेतनापेक्षया सूक्ष्माच्चेतनात् अणुतरः ततोऽपि सूक्ष्मः [1]तदन्तःप्रवेश-

२०. तैत्तिरीये (१०) श्वेताश्वतरे (३) चायं मन्त्रः पठ्यते; उत्तरार्धे भेदः। अत्रापीदं पाठान्तरमिव भाष्ये निर्दिष्टम् । । तदन्तःप्रवेशेत्यनेन, तदन्तरस्थसर्वस्येति याम्यं स्मार्यते । अणुना प्रतिहन्यमानत्वाभावः अण्वाक्रान्तदेशेऽपि अप्रतिघातेन वर्तमानत्वम् अण्व-

योग्य इत्यर्थः । **महतः** आकाशादेरपि महत्तरः । [2]व्याप्यवस्तुरहित इत्यर्थः । **आत्माऽस्य जन्तोर्निहितो गुहायाम्** । अस्य जन्तोः—'न जायते म्रियते वा' इति मन्त्रद्वयनिर्दिष्टस्य चेतनस्य **आत्मा**—अन्तः प्रविश्य नियन्तेत्यर्थः । अतश्च पूर्वमन्त्रद्वयनिर्दिष्टात् प्रत्यगात्मस्वरूपात्, अणोरणीयानिति मन्त्रसन्दर्भप्रतिपाद्योऽन्य एवेति सिद्धम् । न च अस्यजन्तोरित्यस्य हृदयगुहावाचिना सम्बन्ध(न्धि?)-सापेक्षेण गुहायामित्यनेनैवान्वितत्वेन न आत्मेत्यनेनान्वय इति शङ्क्यम्, आत्मशब्दान्वितस्यैव काकाक्षिन्यायेनोभयत्रान्वये दोषाभावात् । 'मूलतः शाखां परिवास्योपवेषं करोति' इत्यत्र शाखां मूलतः परिवास्य मूलतः उपवेषं करोतीति परिवासनान्वितस्यापि मूलत इत्यस्य उपवेषं करोतीत्यनेनापि अन्वयस्याङ्गीकृतत्वात् । जीवहृदयगुहावर्तित्वप्रतिपादनेऽपि जीवभेदसिद्धेश्च । न हि जीवस्यैव जीवगुहावर्तित्वप्रतिपादने प्रयोजनमस्ति ।

ननु 'न जायते' इत्युपन्यस्तस्याऽऽत्मनः जायमानवाचिजन्तुशब्देन परामर्शस्यानुपपन्नतया, अस्य जन्तोरित्यस्य प्रत्यक्षादिसन्निधापितदेह-

---

पेक्षयाऽणीयस्त्वमित्युक्तं भवति । योग्यपदेनान्तः प्रदेशाभावात् प्रवेशो नास्तीति ज्ञाप्यते । अणुपदस्याल्पपरिमाणवदर्थकत्वे अणीयस्त्वमल्पतरपरिमाणवत्त्वमिति वक्तव्यम् । तत् महत्यसिश्च घटते । अतः अणोरणीयानित्यस्य दुर्ग्रहात् दुर्ग्रहतर इत्येवार्थः । महत्पदेनात्यन्तमहद्भिग्रहणवत् अणुपदेनात्यन्ताणुभिग्रहणे तु तदन्तःप्रदेशोऽपि सुवचः । अविशेषेण सर्वाणुमहद्ग्रहणे तु तरवर्थोऽतिशयश्रुतप्रकाशिकोक्तरीत्या नियन्तृत्वशक्तिवैशिष्ट्यमादायैव वक्तव्यः । अणुशब्दस्य अन्तः प्रवेशयोग्य इत्यर्थोऽपि लक्षणयैव हि भवति ।

परताया एव वक्तव्यत्वेन तद्गुहाहित आत्मा प्रागुपन्यस्तो जीव एवास्तु । न च कर्तृत्वभोक्तृत्वादिविशिष्टतया सदा अहमिति भासमाने जीवे, 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति', 'क इत्था वेद यत्र सः' इति उत्तरसन्दर्भप्रतिपाद्यं दुर्विज्ञानत्वं कथमन्वेत्रि(ती)ति वाच्यम्—जीवस्य कर्तृत्वादिविशिष्टतया सर्वलोकविदितत्वेऽपि मुक्तप्राप्यत्र(प्रा?)स्वरूप-विशिष्ट तया दुर्विज्ञानत्वसंभवादिति चेत्—न; 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः' इति जन्तुशब्दस्य चेतनपर्यायतया प्रकृतजीववाचित्वसंभवात् । अस्येति शब्दस्य च पूर्वसन्दर्भोपस्थापितप्रत्यगात्मविषयत्वसंभवे प्रत्यक्षाद्युपस्थापितदेहविषयत्वाश्रयणस्यायुक्तत्वात् । अत्यन्ताणुत्वमहत्त्वयोः, 'एष म आत्माऽन्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा, एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः' इत्यादिषु परमात्मधर्मतया सिद्धत्वेन अणोरणीयानिति मन्त्रप्रतिपाद्यस्य जीवत्वशङ्काया असंभवात् ।

ननु 'नेतरोऽनुपपत्तेः' इति सूत्रे 'सह ब्रह्मणा विपश्चिता' इति वाक्यश्रुतविपश्चित्त्वस्य ब्रह्मासाधारणलिङ्गत्वस्य भाष्ये प्रतिपादितत्वात् तद्बलात् 'न जायते म्रियते वा विपश्चित्' इति मन्त्रस्यापि पररीत्या परमात्मपरत्वमेवास्तु । एवं सति 'अन्यत्र धर्मात्' इति प्रश्नस्य प्राप्यद्वयपरत्वं प्रतिवचनस्य[च?]प्राप्यद्वयपरत्वमाश्रित्य, 'न जायते' इत्यादि-मन्त्रद्वयस्य प्राप्यजीवस्वरूपपरत्वम्, अणोरणीयानिति सन्दर्भस्य च परमात्मपरत्वमित्यादिपरिकल्पनक्लेशो नाऽऽश्रयणीय इति चेत्—न ।

हननादिप्रतिषेधाद्यनुपपत्त्या विपश्चिच्छब्दे मुख्यार्थत्यागस्यावश्यकत्वेन तन्मन्त्रद्वयस्य अणोरणीयानित्यादिमन्त्रसन्दर्भस्य च एकविषयत्वासंभवात् । शिष्टमुत्तरत्र स्पष्टयिष्यते ।

**तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः ।** **तम्** तादृशं परमात्मानम् **अक्रतुः** काम्य(म) कर्मादिरहितस्सन् **धातोः** धारकस्य परमात्मनः **प्रसादात्** **आत्मनः** **महिमानं** महत्त्वसंपादकं सत्यसार्वज्ञ्यादिगुणाविर्भावहेतुभूतं परमात्मानं यदा पश्यति, तदा वीतशोको भवतीत्यर्थः । (यद्वा ?) द्युभ्वाद्यधिकरणे 'जुष्टं यदा पश्यत्यन्यमीशम्' इति मन्त्रखण्डं प्रस्तुत्य 'अथ यदा स्वस्मादन्यं सर्वस्येशं प्रीयमाणम्, अस्येश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति, तदा वीतशोको भवति'' इति भगवता भाष्यकृता व्याख्यातत्वात् तदनुसारेणेहापि परमात्मनः निखिलजगन्नियमनरूपं महिमानं च यः पश्यति, स वीतशोको भवतीत्यर्थः । धातुप्रसादाद्वीतशोको भवतीति वाऽन्वयः । 'प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षयः' इति स्मृतेरिति द्रष्टव्यम् ; 'अक्रतुं पश्यति—धातुः प्रसादान्महिमानमीशम्' इति पाठे अक्रतुं—कर्मकृतोत्कर्षापकर्षशून्यमित्यर्थः । धातुः—भगवतः ॥ २० ॥

---

२०. मुण्डके यदाशब्दश्रवणात् तदाशब्दस्याध्याहार्यतया तदा वीतशोको भवतीति पृथक्करणेऽपि, अत्र अस्तु धातुप्रसादात् वीतशोकः आत्मनो महिमानं तं पश्यतीति एकीकारो युक्तः । महिमशब्दः गुणपरश्चेत्, चकाराध्याहारः । भूमशब्दवत् धर्मिपरश्चेत्, न ।

आसीनो दूरं [1]व्रजति शयानो याति सर्वतः।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥

---

धातुप्रसादशब्दितभगवदनुग्रहशून्यस्य परमात्मतत्त्वमत्यन्तालौकिकत्वात् दुरधिगममिति दर्शयति—**आसीनो दूरं व्रजति शयानो याति सर्वतः** । परमात्मनः सर्वात्मग(क)त्वेन इतरत्र विरुद्धतया प्रतीयमाना अप्यासीनत्वदूरगन्तृत्वादिधर्मा जीवद्वारा तत्र सन्तीति भावः । **कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति** । हर्षाहर्षविरुद्धधर्ममध्यस्थं तं परमात्मप्रसादानुगृहीतमादृशजनादन्यः को वा ज्ञातेत्यर्थः ॥

---

२१. "तद्धावतोऽन्यानत्येति तिष्ठत्" इतीशावास्यवाक्य इव च अत्रार्थो वक्तुं शक्यते । तथा च तत्तत्क्रियासाध्यं तत्तद्देशसंबन्धं तत्तत्क्रियां विनैव लभते ; व्यापीति यावत् । झटिति दूरस्थसंबन्धक्षम इति १. २. १९ टीका । यद्वा तस्मिन् न्यस्तचेतसामपि स तदातदा दुर्ग्रहो भवति । तेन तेषामपि हर्षं शोकञ्च ददाति । अतस्तत्प्रसादोऽधिकोऽपेक्षित इति भावः । 'तद्दूरे तद्वन्तिके' इति ईशावास्यवाक्य इव वाऽर्थः ।

धर्ममध्यस्थमित्यत्र धर्माध्यस्तमिति वा । धर्माध्यक्षमिति वा स्यात् । सुखदुःखनिर्वाहकमित्युक्तं भवति । मदन्य इति । पश्यतामपि दुर्ग्रह इति अहं जान इति भावः । मदन्य इत्यस्य मदनार्हः मदनकदनशिक्षित इत्यप्यर्थोऽपि भवेत् । त्वदन्यः को मर्त्यः–मत्–मत्तः ज्ञातुमर्हतीत्यर्थे च मत् अन्य इति पदच्छेदः आवश्यकः ॥ भाष्ये ज्ञातेति लुडन्तम् । यद्वा तृजन्तम् । अतः तमिति द्वितीयोपपत्तिः । 'को वा ज्ञातुमर्हति, न कश्चित् तत्त्वतो ज्ञातेत्यर्थः' इत्येतावद्वा वाक्यं स्थितं स्यात् ।

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ २३

**अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।** कर्मकृतशरीर-रहितम्, अनवस्थेषु अस्थिरेषु, शरीरेषु नित्यत्वेन तत्र (?) स्थितम् । **महान्तं विभुमात्मानं मत्वा धीरो न शोचति ।** महान्तं विभुं महावैभवशालिनम् । शिष्टं स्पष्टम् ॥ २२ ॥

ईदृशात्मप्राप्त्युपायं दर्शयति--**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।** अत्र प्रवचनशब्देन प्रवचनसाधनं मननं लक्ष्यते । उत्तरत्र, 'न मेधया न बहुना श्रुतेन' इति वक्ष्यमाण-ध्यानश्रवणसमभिव्याहारबलेन प्रवचनशब्देन मननस्यैव ग्रहीतुमुचित-त्वात्, अध्यापनरूपस्य प्रवचनस्य हेतुत्वाप्रसक्तेश्च, तथैव व्यासार्यै-र्विवृतत्वाच्च [प्रवचनं मननम्] । **यमेवैष वृणुते तेन लभ्यः ।** एषः परमात्मा यं साधकं प्रार्थयते, तेन लभ्यः प्रार्थनीयपुंसा लभ्य इत्यर्थः । तत्प्रार्थनीयत्वं च तत्प्रियतमस्यैव पुंसः । तत्प्रियतमत्वं च तत्प्रीतिमत एव । ततश्च भगवद्विषयिणी उपासकस्य प्रीतिः भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवतीत्यर्थः । **तस्यैष आत्मा**

२२ उपायमन्तरा प्रसादो न भवतीति अनुष्ठेयः उपाय उच्यते अशरीरमिति मन्त्रेण ।
२३ तमुपायं विशेषणान्तरेण विशिनष्टि नायमिति मन्त्रेण ।
२३ मन्त्रोऽयं मुण्डकेऽपि (६) । लभ्य इत्यन्तेन भक्तिरूपा

*नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।*
*नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥*

---

**विवृणुते तनूं स्वाम्**-तस्य उपासकस्य एष आत्मा परमात्मा स्वरूपं प्रकाशयति, स्वात्मानं प्रयच्छतीत्यर्थः । वृणुते इति पाठेऽपि स एवार्थः ॥

परमात्मप्राप्तिहेतुभूतोपासनाङ्गतया कांश्चिद्धर्मान् उपदिशति—

**नाविरतो दुश्चरितान्नाशान्तो प्रज्ञानेनैनमाप्नुयात् ।** परदारपरद्रव्यापहारादनिवृत्तः अनुपशान्तकामक्रोधवेगः नानाविधव्यापारविक्षिप्ततयाऽनवहितचित्तः अनिगृहीतमनाश्च एनं—परमात्मानं प्रज्ञानेन नाप्नुयादित्यर्थः । पुरुषार्थस्यैवानृतवदननिषेधस्य दर्शपूर्णमास

---

पतनस्योपायत्वमुच्यते । एतन्मन्त्रार्थो न केवलं श्रीभाष्यम्, किन्तु गीताभाष्य (८.१४) मप्यनुसृत्य निष्कर्षणीयः । यद्यपि श्रुतादीनामचेतनानां चेतनमीश्वरमन्तरा फलहेतुत्वं नास्तीत्येतन्मन्त्रार्थः स्यात् । तदा धातुः प्रसादादिति प्रसादस्थापनम् । प्रसादार्थमेव भक्तिरिति सिध्यति—अथापि वरणे सत्येव लभ्य इति तत्रैवकारं विना यमेवेति अधिकारिवाचकपदोपरि एवकारसत्त्वात् यमधिकारिणमेव वृणुत इति क्वचिदधिकारिणि अन्यव्यावृत्तिविशेषस्य चैतद्रूपत्वं मन्त्रस्येत्यधिकारिगतभक्तिगुणपरतया योजितम् । प्रसादद्वारा फलसिद्धे (२०) प्रागेवोक्तत्वादर्थान्तरविवक्षैव युक्ता । पराधिकरणे भाषितमनन्योपायत्वं श्रुतप्रकाशिकया विवृतम्, 'तस्यैव इति चतुर्थपादेन प्रापकत्वं प्राप्यत्वं चैकस्यैवेति गम्यते' इति । अनन्योपायत्वं हि अनन्यं प्रति उपायत्वम्, स्व प्रत्येव स्वस्योपायत्वमिति । अन्योपायरहितत्वमित्यर्थो न । अतोपायत्वं फलप्रदानसंकल्पाश्रयत्वरूपं चेतननिष्ठं वक्तव्यम् । (28)

यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥

प्रकरणे कृत्वङ्गतया, 'नानृतं वदेत्' इति निषेधवत्, पुरुषार्थस्यापि दुश्चरितनिरत्यादेरुपासनाङ्गतया विधानमुपपद्यते । ततश्च, यस्तु पुरुषार्थमपि दुश्चरितनिषेधमतिलङ्घ्य परमात्मोपासनमधिगुणं चिकीर्षति, तस्य दुश्चरितनिषेधरूपाङ्गवैगुण्यादुपासनसाद्गुण्यं न सिद्ध्यतीति भावः ॥

यस्य ब्रह्म च क्षत्रं च ... क इत्था वेद यत्र सः॥ ब्रह्म च क्षत्रं च—ब्रह्मक्षत्रशब्दवर्णद्वयोपलक्षितं कृत्स्नचराचरात्मकमिदं जगत् । यस्य ओदनो भवति—यस्य विनाश्यो भवतीत्यर्थः । यस्य मृत्युः [उपसेचनम्—] स्वयमद्यमानत्वे सति अन्यस्यादन हेतुर्भवति, सः—निखिलचराचरसंहर्ता परमात्मा यत्र—यस्मिन् प्रकारे स्थितः, यत्प्रकारविशिष्टः, तं प्रकारम् इत्थमिति को वेदेत्यर्थः ।

ननु ब्रह्मक्षत्रपदेन कृत्स्नचराचरग्रहणे किं बीजमिति चेत्—उच्यते—ब्रह्म च क्षत्रं च ओदन इत्युक्ते ब्राह्मणक्षत्रियवर्णयोः किंचित् (कंचित् ?) प्रति ओदनशब्दमुख्यार्थासत्त्वासंभवात् ओदनशब्देन भोज्यत्वं वा भोग्यत्वं वा विनाश्यत्वं वा लक्षणीयम् । न हि ब्रह्मक्षत्रमात्रभोक्ता तन्मात्रसंहर्ता वा कश्चिज्जीवो वा परमात्मा वाऽस्ति । न च अन्तरादित्यविद्यायां 'ये चामुष्मात्पराञ्चो लोका स्तेषाञ्चेष्टे' इति सर्वलोकेश्वरे परमात्मनि उपासनार्थं लोकविशेषे

२५ प्रकारस्य धर्मिणा सदैव क्षयत्वात् एतदित्यनुरूपा इत्थमित्युक्तम् ॥ इत्था, अद्धा इत्यादिकं सत्यपर्यायतया निघण्टौ पठ्यते ।

शितृत्वश्रवणवत् सर्वसंहर्तर्यपि परमात्मनि ब्रह्मक्षत्रसंहरणमुपासनार्थ-मुपदिश्यतामिति वाच्यम् ; तद्वदस्योपासनाप्रकरणत्वासंभवात् (त्वाभावात्)[1] । अतः ब्रह्मक्षत्रग्रहणस्य चराचरमात्रोपलक्षणत्वं युक्तम् । उक्तं च सूत्रकृता, 'अत्ता चराचरग्रहणात्' इति ।

(जीवपरत्वशंका)

नन्वेवमपि ओदनशब्देन किमिति विनाश्यत्वं लक्ष्यते । गौणत्वमपि शब्दस्य साधारणगुणमपहाय असाधारणगुणेनैव निर्वाह्यम् । न हि अग्निर्माणवक इत्यत्र अग्निशब्देन पैङ्गल्यादेरिव द्रव्यत्वादेरुपस्थितिरस्ति । अत एव "मैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य" इत्यध्वर्युप्रैषे उद्गातृशब्दस्य बहुवचनानुरोधेन बहुषु वृत्तौ वक्तव्यायां षोडशर्त्विक्साधारणाकारं विहाय विशेषाकारेण उद्गातृगणमात्रलक्षणा पूर्वतन्त्रे (8.5.7.) वर्णिता । तद्वदिहापि ब्रह्मक्षत्रयोरोदनशब्दमुख्यार्थत्वासंभवेपि भोज्यत्वभोग्यत्वरूपान्तरङ्गाकारस्यैव लक्षणयाऽपि ग्रहणं युक्तम् । न त्वत्यन्तबहिरङ्गस्य विनाश्यत्वाकारस्य, येन निखिलचराचरसंहर्ता परमात्माऽत्र वाक्ये प्रतीयेतेति चेत्—

(तत्परिहारः)

उच्यते । यद्यपि विनाश्यत्वं साधारणाकारः, तथापि, 'मृत्युर्यस्योपसेचनम्' इति वाक्यशेषानुरोधात् साधारणोऽपि गौण्या वृत्त्या लक्षयितुमुचितः । ननु उपसेचनशब्दापेक्षया ओदनशब्दस्य

---

1. असंभवादिति । यस्योदनो भवत इति यच्छब्देनानुवादत्वावगमात् विधेयोपासनान्वयाभावादिति भावः ।

मुख्यत्वात् ओदनशब्दस्वारस्यानुरोधेन असाधारणाकाररूपभोग्यत्वे लक्षिते जघन्यमुपसेचनपदमबाधकत्वाभिप्रायेण कथंचिन्नीयताम् । अत्र (तत्र)ब्रह्मक्षत्रभोक्ता य, यस्य च मृत्युरबाधक, सोऽस्मिन् मन्त्रे प्रतिपाद्य । भोक्तृत्व च जीवस्यैवेति स एवास्मिन् मन्त्रे प्रतिपाद्यतामिति चेत्—उच्यते । उपसेचनत्वेन रूपितस्य मृत्यो ओदनस्थानीयेन ब्रह्मक्षत्रशब्दितेन दध्यन्नवत् प्रतीत[स्य]सम्बन्धस्य सर्वात्मना बाधप्रसङ्गात् । न हि यस्य ब्रह्म क्षत्र च भोग्यम्, यस्य च मृत्युरबाधक इत्युक्ते मृत्यो ब्रह्मक्षत्रस्य च सम्बन्ध प्रतीयते । अत उपसेचनशब्दस्य ओदनशब्दापेक्षया जघन्यत्वेऽपि अबाधकत्वरूपसाधारणगुण विहाय स्वयमद्यमानत्वे सति अन्यादनहेतुत्वरूपासाधारणाकार एव ग्राह्य । ततश्च एकवाक्यान्तर्गतचरमश्रुतोपसेचनपदानुसारेण ओदनशब्देनापि विनाश्यत्वमेव लक्षणीयम् । स्वतुद्बुद्धस्यापनीयविशेषाकाररूपगुणग्रहणादपि एकवाक्यतापन्नपदान्तरोपस्थापितगुणग्रहणस्यैव बुद्धिलाघवेन एकवाक्यतासामर्थ्यानुरोधेन च न्याय्यत्वादित्यस्यार्थस्य अत्रधिकरणे निर्णीतत्वादित्यल[1] पल्लवितेन (परिष्कृतेन) ॥ २५ ॥

॥ इति द्वितीयवल्लीप्रकाशिका ॥

---

1 अलमित्यनेन पूर्वपक्षस्य प्रकारान्तरेणापि परिहार सूच्यते । ब्रह्मक्षत्रमात्रभोक्त्रेत्युक्तावपि कोऽसौ ? । तादृशराक्षसविशेषादे कथञ्चिदन्वेषणे अत्र तदुक्त कि फलम् । सामान्यतो जीवस्य, विशेषत परमात्मनो वा वचनमेव हि सदर्भानुगुणमिति ।

॥ इति द्वितीयवल्ली ॥

## ॥ अथ तृतीयवल्ली ॥ ३.

हरिः ओम् । ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥

---

'क इत्था वेद यत्र सः' इति अस्य दुर्ज्ञानत्वे, 'अत्र इत्थमास्ते' इति अस्यार्थस्य दुर्बोधत्वेन न वयं तदुपासने शक्ताः इति मन्यमानं प्रति उपास्योपासकयोरेकगुहानुप्रवेशेन परमात्मनः सूपासत्वात् वयमप्युपासितुं शक्ता इति द्वाभ्यां मन्त्राभ्यां दर्शयति । **ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये ।** सत्यवत् अवश्यम्भावि(सत्यपदवाच्यावश्यम्भावि)कर्मफलमनुभवन्तौ सुकृतसाध्ये **लोके** अस्मिन्नेव लोके वर्तमानौ हृदयकुहरं प्रविष्टौ तत्रापि **परमाकाशे परार्ध्ये**—परार्ध-सङ्ख्याया उत्तरावधिः ; तदर्हतीति परार्ध्यम् । उत्कृष्ट(ष्टम्?) इत्यर्थः—तादृशे हार्दाकाशे वर्तमानौ । **छायातपौ ब्रह्मविदो वदन्ति । छायातप**शब्दाभ्यां ज्ञाज्ञौ लक्ष्येते । ब्रह्मशब्देन जीवनिर्देशस्य चायमभिप्रायः—'उपास्योपा-

---

१. परार्ध्ये । परमुत्कृष्टमर्धं स्थानमर्हतीति परार्ध्यमुत्कृष्टमित्यपि वदन्ति । प्रश्नोपनिषदि च स्थलार्थकोऽर्धशब्दः प्रयुक्तः, 'दिवः परेऽर्धे पुरीषिणम्' (१-११) इति । अथापि परमाकाशस्योत्कृष्टस्थानार्हत्वापेक्षया परार्धसंख्यार्हत्वं सूपपादम्, तावत्संख्यस्तवार्हत्वादिति इहेयमेव व्युत्पत्तिरादृता ॥ परार्धे शाङ्-माध्य-। पृथक्करणेन वर्तमानौ इत्यध्याहारकल्पनां विहाय परमपरार्ध्ययोर्लोकविशेषणत्वे सुकृतसाध्यत्वाल्लोकस्य परमत्वं नानाविधोत्कृष्टस्थान-
[illegible] ।

सक्योरेकगुहावर्तित्वे तयोरेव प्राप्यप्राप्तृतया वक्तव्यतया प्राप्यस्य च तत्प्राप्तिसाधनरथत्वेन रूपिते शरीरेऽवस्थानमयुक्तम् । न हि रथेन प्राप्तव्योऽर्थः रथस्थो भवतीति शङ्का न कार्या । प्राप्यस्य परमात्मन तत्रावस्थितत्वेऽपि, जीवस्य, 'परामिध्यानात्तु तिरोहितम्' इत्युक्तरीत्या परमात्मसङ्कल्पमूलकर्मरूपाविद्यावेष्टिततया तदनुभवलक्षणतत्प्राप्तेरभावेन प्राप्तृप्राप्ययोर्जीवपरयो रथत्वकल्पितशरीरान्तर्वर्त्येकगुहावर्तित्वकथने नानुपपत्ति ' इति । पञ्चाग्नयो ये च त्रिणाचिकेताः । पञ्चाग्नयः पञ्चाग्निशुश्रूषापरिशुद्धान्तःकरणा । त्रिणाचिकेता'-उक्तोऽर्थः । एवंभूता ब्रह्मविदो वदन्तीत्यर्थः । केवलपञ्चाग्नित्रिणाचिकेतानामीदृशपरमात्म प्रतिपादनासामर्थ्यात् ब्रह्मविदामेव पञ्चाग्नित्वत्रिणाचिकेतत्वे विशेषणे ।

अस्य मन्त्रस्य जीवपरमात्मपरत्वं सूत्रितम्—'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति । ननु कर्मफलभोगशून्ये परमात्मनि ऋतं पिबन्ताविति निर्दिष्टकर्मफलभोक्तृत्वासंभवात्, सुकृतसाध्यलोकवर्तित्व गुहावच्छिन्नत्वयो सर्वगते परस्मिन् ब्रह्मण्यसंभवात्, छायातपनिर्दिष्टप्रकाशत्वप्रकाशत्वयोरपि जीवपरमात्मपरत्वे असंभावात्, बुद्धिजीवपरत्वे तु तस्य सर्वस्याप्युपपत्ते, कर्मफलभोगकरणे कर्तृत्वोपचारेण पिबन्ताविति निर्देशस्याप्युपपत्ते बुद्धिजीवपरत्वमेवास्य मन्त्रस्य युज्यत इति चेत्–एवमेव हि 'गुहां प्रविष्टौ' इति सूत्र आशङ्क्य, 'सङ्ख्याश्रवणे सति एकस्मिन् सप्रतिपन्ने द्वितीयाकाङ्क्षाया प्रतिपन्नजातिमुपजीव्य व्यक्ति विशेषपरिग्रहे बुद्धिलाघवात् विजातीयपरिग्रहे जातिव्यक्तिबुद्धिद्वयापेक्षया गौरवात् सप्रतिपन्नजातीयपरिग्रहो युक्त । लोकेऽपि 'अस्य

गोर्द्वितीयोऽन्वेष्टव्यः' इत्यादौ तथा दर्शनात्; तथा च ऋतपान-लिङ्गावगतस्य जीवस्य द्वितीयः चेतनत्वेन तत्सजातीयः परमात्मैव ग्राह्यः; परमात्मनः [1]प्रयोजककर्तृतया पिबन्ताविति निर्देशस्यापि संभवात्। अन्तःकरणे स्वतन्त्रकर्तृत्व-प्रयोजककर्तृत्वयोरभावेन पिबन्ताविति निर्देशस्य सर्वथाऽप्यसंभवात्, सर्वगते ब्रह्मणि सुकृतसाध्यलोकवर्ति-त्वस्यापि संभवात्, अस्मिन्नेव प्रकरणे 'गुहाहितं गह्वरेष्ठम्' इति परमात्मनो गुहाप्रवेशश्रवणेन गुहाप्रविष्टावित्यस्याप्युपपत्तेः, [2]छाया-तपशब्दाभ्यां किञ्चिद्ज्ञसर्वज्ञयोः प्रतिपादनसंभवात् जीवपरमात्मपर एवायं मन्त्र इति समर्थितत्वात् न त्वदुक्तशङ्कावकाशः।

"तयोरन्यःपिप्पलं स्वाद्वत्तीति सत्त्वम्" इति पैङ्गिरहस्यब्राह्मणानुसारेण 'द्वा सुपर्णा' इति मन्त्रस्य बुद्धिजीवपरत्वात्, 'इयदामननात्' इत्यधिकरणे, ऋतं पिबन्ताविति मन्त्रस्य 'द्वा सुपर्णा' इति मन्त्रैकार्थ्यस्य प्रतिपादितत्वात् अयमपि मन्त्रः बुद्धिजीवपरः" इत्यस्याः शङ्कायाः 'गुहां प्रविष्टावात्मानौ' इति सूत्रकृतैव निराकृतत्वात्[3] नास्माभिस्सन्नह्यते।

किञ्च जीवे गुहाप्रवेशस्य बुद्ध्युपाधिकतया, स्वतःप्रवेशवत्याः बुद्ध्या सह जीवस्य गुहांप्रविष्टाविति गुहाप्रवेशवर्णनं न सङ्गच्छते।

---

1 प्रयोजकेति। एकस्तु पिबते इति श्रुत्यनुसारेण लीलारस-पानविवक्षायां साक्षादपि कर्तृत्वम्। 2 बुद्धिजीवपरत्वेऽपि छायातपशब्दयोर्लक्षणैव कार्या। अत उचितार्थे लक्षणा युक्तेति। 3 पैङ्गिरहस्यब्राह्मणमपि जीवपरमात्मपरमेवेति द्युभ्वाद्यधिकरण-

[1]यस्सेतुरीजानानामक्षरं ब्रह्म यत् परम् ।

उपष्टम्भकाधीनगुरुत्वशालिनि सुवर्णे गुरु सुवर्णमिति व्यवहारसम्भवेऽपि, 'उपष्टम्भकसुवर्णे गुरुणी इति व्यवहारस्यादर्शनात् । अत एव परपक्षे सूत्रानुसारेण अस्य मन्त्रस्य जीवपरमात्मपरतया कृतं योजनान्तरमप्यनुपपन्नम् । 'अनेन जीवेनात्मनाऽनुप्रविश्य' इति श्रुत्यनुसारेण परमात्मनो जीवभावेनानुप्रवेशोऽपि परमात्मरूपेणानुप्रवेशाभावात् जीवपरमात्मानौ गुहां प्रविष्टाविति निर्देशानुपपत्तेः । जीवभावेन ब्रह्मणः संसारमभिप्रेत्य, ब्रह्म संसरतीति व्यवहारसत्त्वेऽपि, 'जीवब्रह्मणी संसरतः' इति व्यवहारासंभवात् । 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति । कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' (नृ. ता ९.) इति वचनानुसारेण परिगृहीते अविद्याया वा अन्तःकरणस्य वा जीवोपाधित्वमिति पक्षद्वयेऽपि नाविद्यान्तःकरणयोः प्रतिबिम्बोपाधित्वं युज्यते । स्वच्छद्रव्यप्रतिहतिपरावृत्तनायनरश्मिगृह्यमाणस्यैव प्रतिबिम्बशब्दार्थतया अचाक्षुषस्य चैतन्यस्य प्रतिबिम्बत्वासम्भवेन अविद्याप्रतिबिम्बोऽन्तःकरणप्रतिबिम्बो वा जीव इत्याश्रयणायोगात् । अतोऽविद्यावच्छिन्नं अन्तःकरणावच्छिन्नो वा जीव इति पक्षद्वयमेव परिशिष्यते । तत्र च हृदयगुहायामविद्यान्तःकरणाभ्यामवच्छिन्नत्वेन अनवच्छिन्नपरमात्मनो गुहाप्रवेशवर्णनश्रुतेर्वा अन्तर्यामिब्राह्मणस्य वा नाञ्जस्यमित्यलमतिचर्चया । प्रकृतमनुसराम ॥ १ ॥

यस्सेतुरीजानानाम् । यजतां यः सेतुः—आधारभूतः ;

---

1 ऋतं पिबन्ताविस्यस्य विवरणं यस्सेतुरीजानानामिति ।

अभयं तितीर्षतां पारं नाचिकेतं शकेमहि(सि) ॥ २ ॥
[1]आत्मानं रथिनं विद्धि शरीरं रथमेव च(तु) ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥
इन्द्रियाणि हयान् आहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥

---

कर्मफलप्रद इत्यर्थः । ईजानानामिति कानजन्तः शब्दः । अक्षरं ब्रह्म यत् परम्—यन्निर्विकारं परं ब्रह्म । अभयं तितीर्षतां पारम्—संसारसागरं तितीर्षतां निर्भयं दृढं तीरम् । नाचिकेतं शकेमहि—(इदन्तोमसि (पा. ७-१-४६) नाचिकेतं शकेमसीति ।) नाचिकेताग्निप्राप्यमुपासितुं शक्ताः स्म इत्यर्थः । शकेर्व्यत्ययेन शप् । नाचिकेतं शकेमहीत्यस्य मन्त्रखण्डस्य तथैव भाष्यकृता व्याख्यातत्वात् । अतः दुरुपासत्वबुद्ध्या न भेतव्यमिति भावः ॥ २ ॥

'आत्मानं रथिनं विद्धि' इत्यादिना 'सोऽध्वनः पारमाप्नोति' इत्यन्तेन संसाराध्वपारभूतवैष्णवपरमपदप्राप्तौ परिकरमुपदिशन् प्राप्तृरूपमुपदिशति—आत्मानं रथिनं विद्धि । शरीराधिष्ठातारं रथिनं विद्धि । शरीरं रथमेव च । शरीरमेव च रथं विद्धीत्यर्थः । बुद्धिं तु सारथिं विद्धि । बुद्धिशब्दिताध्यवसायाधीनत्वात् देहप्रवृत्तेः तस्याः सारथित्वमिति भावः । मनः प्रग्रहमेव च । प्रग्रहः— रशना ॥३॥

इन्द्रियाणि हयान् आहुः-स्पष्टोऽर्थः । विषयांस्तेषु गोच-

---

फलप्रदत्वमेव हि पानप्रयोजककर्तृत्वम् । सेतुः प्राप्यप्रापकः ।

1 कथं शकेमहीत्यत्र विवृणोति आत्मानमित्यादिना ।

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा(ह) ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सह(दा) ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥
यस्त्वविज्ञानवान् भवत्यमनस्कस्सदाऽशुचिः ।
न स तत् पदमाप्नोति संसारं चाधिगच्छति ॥ ७ ॥

रान्—तेषु इन्द्रियेषु हयत्वेन रूपितेषु गोचरान् मार्गान् शब्दादिविषयान् विद्धी(आहुरि [1])त्यर्थः । रथसारथिहयप्रग्रहत्वेन (रथहयप्रग्रहसारथित्वेन [2]) रूपितानां शरीरेन्द्रियमनोबुद्धीनामभावे रथित्वेन रूपितस्योदासीनस्यात्मनो गमनरूपलौकिकवैदिकक्रियाकर्तृत्वमेव नास्तीत्येतत् सुप्रसिद्धत्वेन दर्शयति **आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः** । आत्मशब्दो देहपरः । मनश्शब्दस्तत्कार्यबुद्धेरप्युपलक्षकः, पूर्वमन्त्रे बुद्धेरपि सारथित्वेन निर्दिष्टत्वात् । **भोक्ता** कर्तृत्वभोक्तृत्वादिमानित्यर्थः । न हि केवलस्यात्मनः कर्तृत्वं भोक्तृत्वं वाऽस्तीति भावः ॥ ४ ॥

शरीरादेः रथत्वादिरूपणस्य प्रयोजनमाह [यस्त्वविज्ञानवानित्यादिना मन्त्रद्वयेन ।] **यस्त्वविज्ञानवान् ... सदश्वा इव सारथेः** ॥ लोके हि समीचीनसारथिप्रग्रहवता अश्वा वशीकृता भवन्ति, एवं सारथिप्रग्रहत्वेन रूपितयोर्विज्ञानमनसोस्सामीचीन्ये अश्वत्वेन रूपितानि इन्द्रियाणि वश्यानि भवन्ति, नान्यथेत्यर्थः ॥ ५ ॥ ६ ॥

हयत्वेन रूपितानामिन्द्रियाणां वशीकरणतदभावयोः [1] प्रयोजनं

1 वशीकरणाभावप्रयोजनं पूर्वमन्त्रेण, वशीकरणप्रयोजनमुत्तरेण ।

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत् पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥

---

दर्शयति मन्त्रद्वयेन–**यस्त्वविज्ञानवान्....यस्माद्भूयो न जायते** ॥ **अमनस्कः**—अनिगृहीतमनाः । अत एवाशुचिः ; सर्वदा विपरीतचिन्ताप्रवणत्वादित्यर्थः । न केवलं जिगमिषितप्राप्त्यभावमात्रम्, प्रत्युत गहनं संसारकान्तारमेव प्रापयती(प्राप्नोती ?)त्यर्थः ॥ ७ ॥ ८ ॥

किं तत् पदमित्याकांक्षायां तत् पदं दर्शयन्नुपसंहरति **विज्ञानसारथिर्यस्तु...तद्विष्णोः परमं पदम्** । समीचीनविज्ञानमनश्शाली संसाराध्वपारभूतं परमात्मस्वरूप [1]माप्नोतीत्यर्थः ॥ ९ ॥

वशीकार्यत्वाय रथादिरूपितेषु शरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्ते—**इन्द्रियेभ्यः परा ह्यर्था अर्थे-**

---

1 परमात्मस्वरूपमिति । परमं पदमिति नित्यविभूतिग्रहणेऽपि न दोषः । अथापि अनेन शरीररूपरथेन सह तत्र गमनाभावात् अत्र भवन् परमात्मानुभव एव विवक्ष्यते । ननु सूक्ष्मशरीरेण विरजापर्यन्तगमनात् तद्ग्रहणमस्तु ; एतादृशशंकापरिहारार्थमेव सूक्ष्मं तु तदर्हत्वादिति सूत्रमस्तु इति चेत्-सूक्ष्मग्रहणं यादवप्रकाशोक्तमेव । परंतु उपासकेन स्वकार्योपयोगिनः स्थूलशरीरस्यैव वशीकार्यतया तस्य शरीरपदेनाव्यक्तपदेन चावश्यग्राह्यत्वात् कथं सूत्रेण सूक्ष्मग्रहणमुच्येत । एतच्च स्थूलशरीरप्राप्यं विष्णुपदमुपासनविषयभूतं परमात्मस्वरूपमेव । गमनञ्च लौकिकवैदिकक्रियाकर्तृत्वरूपम् ।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १० ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ ११ ॥

---

**भ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥** अस्य मन्त्रद्वयस्यार्थो भगवता भाष्यकृता आनुमानिकाधिकरणे (1.4.1) उक्त । इत्थं हि तत्र भाष्यकृता-"तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतया प्रधानानि तान्युच्यन्ते, 'इन्द्रियेभ्य. पराः' इत्यादिना । तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषया वशीकार्यत्वे परा. , वश्येन्द्रियस्यापि विषयसन्निधाविन्द्रियाणां दुर्निग्रहत्वात् । तेभ्योऽपि पर प्रग्रहरूपितं मनः ; मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिंचित्करत्वात् । तस्मादपि सारथित्वरूपिता बुद्धि परा ; अध्यवसायाभावे मनसोऽप्यकिंचित्करत्वात् । तस्या अपि रथित्वेन रूपित आत्मा कर्तृत्वेन प्राधान्यात् पर । सर्वस्यात्मेच्छायत्तत्वात् आत्मैव **महानिति** च विशेष्यते । तस्मादपि रथरूपित शरीर परम् , तदायत्तत्वाज्जीवस्य सकलपुरुषार्थसाधनप्रवृत्तीनाम् । तस्मादपि पर सर्वान्तरात्मभूतोऽन्तर्यामी अध्वन पारभूत. परमपुरुष , यथोक्तस्य आत्मपर्यन्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात् । स खल्वन्तर्यामितया उपासनस्यापि निर्वर्तक. । 'परात्तु तच्छ्रुते.' इति हि जीवात्मन. कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते ।

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥

वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव। तदिदमुच्यते, 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' इति। तथा अन्तर्यामिब्राह्मणे, 'य आत्मनि तिष्ठन्' इत्यादिभिः सर्वं साक्षात्कुर्वन् सर्वं नियमतीत्युक्त्वा, 'नान्योऽतोऽस्ति द्रष्टा' इति नियन्त्रन्तरं निषिध्यते। भगवद्गीतासु च, 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्' इति। दैवमत्र पुरुषोत्तम एव। 'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' इति वचनात्। तस्य च वशीकरणं तच्छरणागतिरेव। यथाऽऽह, 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥ तमेव शरणं गच्छ' इति। तदेवम् 'आत्मानं रथिनं विद्धि' इत्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादयः 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते, न रथरूपितं शरीरमिति परिशेषात् तत् अव्यक्तशब्देनोच्यते" इति भाषितम् ॥ १० ॥ ११ ॥

**एष सर्वेषु भूतेषु** [1]**गूढोत्मा न प्रकाशते।** सर्वेषु भूतेषु आत्मतया वर्तमानोऽसौ गुणत्रय(मय?)मायातिरोहितत्वेन अजितबाह्याभ्यन्तरकरणानां न यथावत् प्रकाशते। **दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः।** अग्र्यया-ऐकाग्र्ययुक्तया बाह्याभ्यन्तरव्यापाररहितया सूक्ष्मार्थविवेचनशक्तया सूक्ष्मदर्शनशीलैर्दृश्यत इत्यर्थः ॥

1. गूढात्मेति न पाठः; किंतु गूढोत्मा इत्येव। छान्दसः संधिः। गूढ आत्मेति भाष्यम्। आत्मा–परमात्मा।

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञान आत्मनि ।
ज्ञानमात्मनि महति [1]नियच्छेत् तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥

---

बाह्याभ्यन्तरकरणव्यापाररहितप्रकारम् 'अध्यात्मयोगाधिगमेन' इति निर्दिष्टजीवस्वरूपज्ञानप्रकारञ्च दर्शयति यच्छेद्वाङ्मनसीत्यादिना । इम मन्त्र मस्तुत्येत्थ हि भाष्यकृता, "हयादिरूपितानामिन्द्रियादीना वशीकरणप्रकारोऽयमुच्यते । **यच्छेद्वाङ्मनसी**—वाच मनसि नियच्छेत् । वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थ । वाक्छब्दे द्वितीयाया, 'सुपा सुलुक्' इत्यादिना लुक् । मनसी इति सप्तम्याश्छान्दसो दीर्घ । **तद्यच्छेत् ज्ञान आत्मनि ।** तत् मन बुद्धौ नियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते । **ज्ञान आत्मनीति** व्यधिकरणे सप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थ । **ज्ञानमात्मनि महति नियच्छेत्**—बुद्धि कर्तरि महति आत्मनि नियच्छेत् । **तद्यच्छेच्छान्त आत्मनि**—तं कर्तार परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत् । व्यत्ययेन तदिति नपुस कलिङ्गता । एवम्भूतेन रथिना वैष्णव पद गन्तव्यमित्यर्थ" इति भावितम् । विवृतञ्च **श्रुतप्रकाशिकायाम्**—'वाचो मनसि नियमन मनोननुगुणप्रवृत्तिवैमुख्यापादनम् । मनस बुद्धौ नियमनम् अध्यवसायानुगुणप्रवृत्तितापादनम् । बुद्धिश्चार्थेषु हेयत्वाध्य(ताध्य)वसायरूपा । तस्या बुद्धेरात्मनि नियमन नाम स एवोपादेयतया साक्षा-

---

1 जीवात्मनो महत्त्व न परिमाणविशेष , अणुत्वेन विरोधात् । रथित्वेन प्राधान्यान्महत्त्वम् । अतो नियच्छेदिति माध्वे नास्ति ।

त्कार्य इत्येतदर्थविषयत्वापादनम् । शान्ते— स्वत ऊर्मिषट्कप्रतिभटे । शान्त आत्मनि महत आत्मनो जीवस्य नियमनं नाम तच्छेषतापत्तिर्पत्तिः' इति । आत्मशब्दस्य पुल्लिङ्गत्वात् पुल्लिङ्गतच्छब्देन निर्देष्टव्ये छान्दसत्वाल्लिङ्गव्यत्ययः ।

ननु भाष्ये, "ज्ञान आत्मनीति व्यधिकरणे सप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः" इत्युक्तिरयुक्ता ; अव्यावर्तकत्वादात्मनि वर्तमान इति विशेषणस्य । आत्मन्यवर्तमानज्ञानस्यैवाभावात् । न च- 'तद्यच्छेत् ज्ञाने' इत्येतावत्युक्ते आत्मरूपज्ञानभ्रान्तिः स्यात् । अतः ज्ञान आत्मनीत्युक्तमिति वक्तु शक्यम् ; तथा सति तस्या एव भ्रान्तेः सामानाधिकरण्ययोजनया दृढीकरणप्रसङ्गात् । न हि आत्मनीत्यनेन आत्मभ्रान्तिर्व्युदस्यते । न च-आत्मनि वर्तमान इति भाष्यस्य आत्मनि विषयविषयिभावलक्षणसम्बन्धेन वर्तमान इत्यर्थः । आत्मविषयज्ञान इति यावत् । अतो व्यावर्तकतया न वैयर्थ्यदोषः- इति वाच्यम् ; तथा सति 'ज्ञानमात्मनि महति नियच्छेत्' इत्यस्य वैयर्थ्यापातात् । तदर्थस्य अनेनैव सिद्धेरिति चेत्—

उच्यते । अयमभिप्रायो भाष्यकारस्य-'तद्यच्छेत् ज्ञान आत्मनि' इत्यत्र आत्मनीति विषयसप्तमी । तच्चात्मविषयकज्ञानम्, 'आत्मा उपादेयः तदतिरिक्ता अर्था हेयाः' इत्येवंरूपम् । तच्च 'अर्थेषु हेयता-व्यवसायरूपा बुद्धिः' इति श्रुतप्रकाशिकायां व्यक्तम् । अस्य चात्मानात्मविषयकाहेयहेयताध्यवसायरूपस्य ज्ञानस्य महत्यात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनमिति तत्रैव

**उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत ।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति ॥ १४**
**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।**

---

श्रुतप्रकाशिकायामुक्तत्वात् वाक्यद्वयस्यापि सप्रयोजनतया त्वदुक्त-वैयर्थ्यशङ्कानवकाश इति ॥ १३ ॥

एवं वशीकरणप्रकारमुपदिश्य अधिकारिपुरुषान् अभिमुखी करोति **उत्तिष्ठत जाग्रत** । आत्मज्ञानाभिमुखा भवत ; अज्ञाननिद्रायाः क्षयं कुरुत । **प्राप्य वरान्निबोधत** । वरान् श्रेष्ठान् आचार्यान् उप गम्याऽऽत्मतत्त्वं निबोधत । यद्वा उपासितात् भगवतो वा ब्रह्मविद्भ्यो वा, 'देवतापारमार्थ्यं च यथावत् वेत्स्यते भवान्' इत्येवंरूपान् वरान् प्राप्य ज्ञेयमात्मतत्त्वं निबोधत ; नोदासितव्यमिति भावः । **क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति** । ज्ञानिनः **तत्** आत्मतत्त्वं दुर्गमं पन्थानं वर्णयन्ति । तत् कस्य हेतोः ? यतः आत्मतत्त्वं क्षुरस्य आयुधविशेषस्य धारा अग्रम्, ***निशिता*** तीक्ष्णा, **दुरत्यया** अनतिक्रमणीया । तीक्ष्णे क्षुराग्रे सञ्चरतः पुंसो यथा कियत्यप्यनवधाने आत्मनाशो भवति, एवमिहाऽऽत्मस्वरूपावगतिदशायां स्वल्पेऽप्यनवधानापराधे आत्मनाशो भवतीति भावः ॥ १४ ॥

उपसंहरति [1]**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्य**

---

१५. उपरि फलश्रुतिप्रवृत्त्याऽत्रोपसंहारं दर्शयति—उप-संहरतीति । तथा च प्रकृतप्रथमाध्यायार्थसंग्रहपरं श्रीभाष्यम्, (१-४-७), "अशब्दमस्पर्शमित्यादिनोपसंहृतम्" इति ।

1 सशब्दव्योमादिवैलक्षण्यकथनं तद्वत् अचेतनतया तत्स-लक्षणे अव्यक्ते एव युक्तमिति इति न मन्तव्यम् । निचाय्येत्युक्तार्था-

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ १५ ॥
नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ।
उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥

---

मगन्धवच्च यत् । अत्र नित्यमित्येतत् अशब्दमित्यादौ प्रत्येकमभि सम्बध्यते । अशब्दत्वादिवत्त्वादेव कालवत् **अव्ययम्** । अवयवापचय शून्यमित्यर्थः । **अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते** । महत इत्यनेन 'आत्मनि महति नियच्छेत्' इति पूर्वमन्त्रनिर्दिष्टो जीवो गृह्यते । ध्रुवं—स्थिरम् । **निचाय्य**—दृष्ट्वा । दर्शनसमानाकारोपासनेन विषयीकृत्येत्यर्थः । **मृत्युमुखादिति** । भीषणात् संसारादित्यर्थः ॥ १५ ॥

[उपसंहरति]–**नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम्** । नचिकेतसा प्राप्तं नाचिकेतम् । **मृत्युप्रोक्तं** मृत्योः प्रवक्तृत्वमेव, न स्वतन्त्रवक्तृत्वम् । अत्र सनातनम् अपौरुषेयत्वात् प्रवाहरूपेण नित्य मित्यर्थः । **उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते** । स्पष्टोऽर्थः ॥

---

नन्वयात् । अतश्चिदचिद्विलक्षणतया ब्रह्मैवोच्यते । नित्यमशब्दम्— कदापि साक्षात् शब्दगुणानास्पदम् । एवमुपर्यपि । अशब्दत्वादे र्नित्यत्वकथनात् प्रकृतिव्यावृत्तिः ।

१६ नाचिकेतकथाया अत्र निरूपणाद्यमुपाख्यानाख्याय । मृत्यु प्रोक्तमिति । मृत्युप्रोक्तत्वादिविषयकमित्यर्थः । न हि नचिकेतस – कथा मृत्युप्रोक्ता । यद्वा मृत्युर्नचिकेतसेऽर्थमुपदिश्य, अस्मत्संवादोऽ यमनाद्यौ वेदेऽप्यस्तीत्याख्याय ज्ञापितवानिति उपाख्यानस्य मृत्युप्रोक्त त्वम् । तत् दर्शितं सनातनमिति । फलश्रुतिरियं प्रकृताध्यायमात्रस्य ॥

य इदं परमं गुह्यं श्रावयेत् ब्रह्मसंसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते ॥ तदानन्त्याय कल्पत इति ॥

॥ इति तृतीयवल्ली ॥ इति प्रथमोऽध्यायः ॥

॥ अथ द्वितीयोऽध्यायः ॥ आदितश्चतुर्थवल्ली ।

हरिः ओम् ।
पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ्पश्यन्ति(ति)नान्तरात्मन् ।
कश्चित् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

य इदं परमं गुह्यं श्रावयेद् ब्रह्मसंसदि । ब्रह्मसंसदि—ब्राह्मणसमाजे । प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पते ॥ प्रयतः शुद्धः ॥ १७ ॥

॥ इति तृतीयवल्लीप्रकाशिका । इति प्रथमाध्यायभाष्यम् ॥

वल्ली ४–१.

'उत्तिष्ठत जाग्रत' इति मोक्साह्वनेऽप्यात्मस्वरूपविमुखान् पश्यन्, शोचति पराञ्चि खानि व्यतृणत् स्वयंभूः । खानि इन्द्रियाणि । पराञ्चि—परान् अञ्चन्तीति पराञ्चि, परप्रकाशकानि, न स्वात्मप्रकाशकानि । तत्र हेतुं वदन् शोचति—व्यतृणत् स्वयंभूः—स्वतन्त्र ईश्वरः इमानि खानि हिंसितवान् । 'तृदृहिंसायाम्' इति

---

१. परान् अञ्चन्तीति । पराक् इतिवत् अन्याक् इत्याद्यप्रयोगात् प्रत्यक्छब्दे प्रति इतिवत् पराक्छब्दे परा इति उपसर्ग इति निरूपणसंभवे, भाष्यमिदमर्थानुवादमात्रं स्यात् । प्रत्यगात्मेति जीववचनं योगेन तदीक्षणस्य प्राथम्यात् । यद्वा साक्षाद्वा अपर्यवसानवृत्त्या वा परमात्मैव प्रत्यगात्मा । वक्ष्यते चेदम् । तृह हिंसायामिति पाठग्रहणे अतृणेद् इत्येव रूपं सिध्येत्, न तु अतृणदिति । अतः तृद् हिंसायामिति

**पराचः कामान् अनुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्।**
**अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥**

धातु॰ । यद्वा धातूनामनेकार्थत्वात् परार्थ(परागर्थ?) प्रकाशकानि इन्द्रियाणि सृष्टवानित्यर्थः । **तस्मात् पराङ्पश्यन्ति नान्तरात्मन् । पराङ्** । पराच इति यावत् । परागूपान् अनात्मभूतान् **पश्यन्ति** उपलभन्ते । अन्तरात्मानं नेत्यर्थः । यद्वा—पराङ् पराङ्मुखानि भूत्वा विषयानेव पश्यन्तीत्यर्थ । **पराङ्पश्यतीति** पाठे लोकाभिप्रायमेकवचनम् । ईदृशेऽपि लोकस्वभावे नद्याः प्रतिस्रोतःप्रवृत्त इव कश्चित् पुरुषधौरेयः प्रत्यगात्मप्रवणोऽप्यस्तीत्याह—**कश्चिद्धीरः प्रत्यगात्मानमैक्षत्** । प्रत्यञ्चमात्मानं पश्यतीत्यर्थः । छान्दसं परस्मैपदम् । अत एव वर्तमानार्थे लङ्पपत्तिश्च । **आवृत्तचक्षुरमृतत्वमिच्छन्** । चक्षुश्शब्द इन्द्रियमात्रपरः । स्वस्वविषयव्यावृत्तेन्द्रियो मुमुक्षुरित्यर्थः ॥ १ ॥

**पराचः कामान् अनुयन्ति बालाः।** अल्पप्रज्ञा बाह्यान् काम्यमानान् विषयानेवावगच्छन्ति । **ते मृत्योर्यन्ति विततस्य पाशम्** । ते विस्तीर्णस्य संसारस्य बन्धनं यान्तीत्यर्थः। यद्वा **विततस्य** सर्वत्राप्रतिहताज्ञस्य मृत्योर्मम पाशं यान्तीत्यर्थः । **अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते** । अथशब्दः प्रकृतविषयार्था-(यादर्था?)न्तरपरिग्रहे । धीमन्तः प्रत्यगात्मन्येव ध्रुवममृतत्वं विदित्वा इह संसारमण्डले अध्रुवेषु पदार्थेषु कमपि न प्रार्थयन्ते । प्रत्यकृतत्व-

पाठो ग्राह्यः । उर्तृदिर् हिंसानादरयोरिति धातुग्रहणे तद्रूपसिद्धेः। व्यतृणादिति माध्वे । तणु कालकरणे इति तत्र व्याख्या । पराक् पश्यतीति माध्वे । २. अप्रतिहताज्ञस्य । आज्ञापदमत्र ।

**येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।**
**एतेनैव विजानाति किमत्र परिशिष्यते ॥ एतद्वै तत् ॥ ३ ॥**
**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।**

---

ज्ञस्य सर्वं जिज्ञासितमिति भावः । परमात्मनस्सर्वजीवगताहन्तास्पदत्वेन [2]मुख्याहमर्थत्वात् प्रत्यक्त्वमस्तीति द्रष्टव्यम् ॥ २ ॥

**येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।** मैथुनान्-मिथुननिमित्तकसुखविशेषानित्यर्थः । **एतेनैव विजानाति ।** निश्शेषं येन एतेनैव साधनेन जानातीत्यर्थः । 'तं देवा ज्योतिषां ज्योतिः' इति रूपादिप्रकाशकानामिन्द्रियाणां तदनुगृहीतानामेव कार्यारम्भ-कत्वादिति भावः । **किमत्र परिशिष्यते**—किं तदप्रकाश्यमिति भावः । **एतद्वै तत्**—यत् पूर्वं प्राप्यतया निर्दिष्टं विष्णोः परमं पदम् एतद्वै एतदेव । एतन्मन्त्रप्रतिपाद्यप्रत्यगात्मस्वरूपमेवेत्यर्थः ॥ ३ ॥

**स्वप्नान्तं जागरितान्तश्चोभौ येनानुपश्यति ।** सकलं स्वा-प्नप्रपञ्चं जाग्रत्प्रपञ्चं च मनआदीन्द्रियभावमापन्नेन येन परमात्मना लोकः पश्यतीत्यर्थः । **महान्तं विभुमात्मानं मत्वा धीरो न शोचति ।**

---

1 परमात्मन इत्यादिवाक्यं पूर्वमन्त्रे स्थितं चेन्, युक्ततरम् । एतदर्थं श्वेताश्वतरप्रकाशिकायां द्वितीयाध्यायव्याख्याने विशदमनुसन्धेयं ॥

2 मुख्याहमर्थेति । अविशेषेण सर्वैरप्यहमिति स्वान्तर्यामितया ग्राह्येत्यर्थः । अतः प्रत्यक्त्वमपौष्कल्यम् ।

3 खानि व्यतृणत् स्वयम्भूरित्युक्तं विवृणोति येनेत्यादिना । स्पर्शां-श्चेत्यन्तेन ज्ञानेन्द्रियप्रदर्शनम् मैथुनानीति कर्मेन्द्रियोपलक्षणम् ।

4 पूर्वोक्तं ऐन्द्रियकानुभवं अवस्थाद्वये इत्युच्यत इह ।

महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥
य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ॥ ५ ॥
यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।

---

तमिति शेषः । उक्तोऽर्थः ॥ ४ ॥

य इद मध्वद वेद आत्मानं जीवमन्तिकात् । ईशान भूतभव्यस्य न ततो विजुगुप्सते । इदमिति लिङ्गव्यत्ययश्छान्दसः । इमम् मध्वदम्—'ऋतं पिबन्तौ' इति निर्दिष्ट कर्मफलभोक्तारं जीवात्मानं 'गुहां प्रविष्टौ' इत्युक्तरीत्या तस्यान्तिके कालत्रयवर्ति-चिदचिदीश्वरं च यो वेद, तं दुष्कृतकारिणमपि न निन्देदित्यर्थः । 'गुप्तिज्किद्भ्यस्सन्' इत्यत्र जुगुप्साशब्द निन्दार्थक उक्त । 'जुगुप्सा विरामप्रमादार्थानाम्—' इति पञ्चमी । एतद्वै तदिति पूर्ववत् ॥ ५ ॥

यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठन्त यद् भूतेभिर्व्यपश्यत । "अप एव ससर्जादौ तासु वीर्य-मपासृजत् । तदण्डमभवद्धैम सहस्रांशुसमप्रभम् ॥ तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामह ॥" इति स्मृत्युक्तरीत्या अद्भ्य अपादानेभ्य (उपादानेभ्य ) व्यष्टिसृष्टे पूर्वं य अजायत, तं तपसः-सङ्कल्पमात्रा

---

5 लिङ्गव्यत्यय इति पृथक्पदविभागदर्शनानुसारेण । अन्यथा तु-इदंमध्वदमित्येकं पदम् ; इदमिति मधुविशेषणम्, पूर्वोक्तमधु भोक्तारमित्यर्थः स्यात् । उत्तरार्धे चकारोऽर्थसिद्ध । अन्यथा तु जीवमित्यस्य जीवान्तर्यामिणमित्यर्थ. । ब्रह्मजज्ञं देवमितिवत् ।

गुहां प्रविश्य तिष्ठन्तं यो (यद्) भूतेभिर्व्यपश्यत ॥ एतद्वै तत् ॥ ६ ॥
या प्राणेन संभवत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥ एतद्वै तत् ॥ ७ ॥

देवं पूर्वं जातम्-'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानम्' इति श्रुत्युक्तरीत्या प्रथमं जातम्, **गुहां प्रविश्य तिष्ठन्तम्**—हृदयगुहां प्रविश्य वर्तमानम्, **भूतेभिः** भूतैः देहेन्द्रियान्तःकरणादिभिरुपेतं चतुर्मुखम्, 'अथ सकलजगत्स्रष्टा स्यात्' इति कटाक्षेणैक्षतेत्यर्थः । **एतद्वै तत्**-उक्तोऽर्थः ॥ ६ ॥

**या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ।** अयं च मन्त्रः, 'गुहां प्रविष्टौ' इति सूत्रे भगवता भाष्यकृता व्याख्यातः । इत्थं हि भाष्यकृता, 'कर्मफलानि अत्तीति अदितिः जीव उच्यते । **प्राणेन संभवति**—प्राणेन सह वर्तते । **देवतामयी**—इन्द्रियाधीनभोगा । **गुहां प्रविश्य तिष्ठन्ती**—हृदयपुण्डरीककुहरवर्तिनी । **भूतेभिर्व्यजायत**-पृथिव्यादिभिः

---

६ प्रथमयच्छन्दोऽपि परमात्मपरो भवितुमर्हति, यः परमात्मा अद्भ्यः पूर्वमनिरुद्धरूपेणाजायतेति । तदा उत्तरमन्त्र इव यच्छन्दद्वयमेकार्थकम् । यद्यपि यच्छन्दद्वयमपि चतुर्मुखपरं भवेत्—यो ब्रह्मा व्यष्टिसृष्टेः पूर्वमद्भ्योऽजायत, यः स्वस्मात्पूर्वमेव महत्तत्त्वादाविर्भूतं स्वहृदयगुहां प्रविश्य तिष्ठन्तं व्यूहरूपं भगवन्तं भूतैरुपेतो व्यपश्यदिति—अथापि यद्भूतेभिरिति द्वितीययच्छन्दपाठस्याप्यनुसारेण, उत्तरमन्त्रे गुहाप्रवेशस्य जीवे कथनात् तदैकरूप्यमादृत्य चेत्थमुक्तम् । एतदित्यस्य स्फुटं यच्छन्दप्रतिसंबन्धित्वात् । व्यपश्यतीति माध्वपाठः । ७ प्राणेन संविदन्तीति माध्वपाठः ।

अरण्योर्निहितो जातवेदा गर्भ इवेत् सुभृतो गर्भिणीभिः ।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ एतद्वै तत् ॥ ८

---

भूतैः सहिता देवादिरूपेण विविधा जायते' इति भाषितम् । **एतद्वै तत्** । तत् तदात्मकमित्यर्थः । [1]अत्रैव प्रकरणे, 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इत्यत्र देवमित्यस्य परमात्मात्मकमिति व्याख्यातत्वात्, 'क्षेत्रज्ञं चापि मां विद्धि'इति एतदुपबृंहणगीतावचनेऽपि **मां** मदात्मकमिति भाष्यकृतैव व्याख्यातत्वात् अपृथक्सिद्धविशेषणवाचिशब्दस्य विशेष्य इव अपृथक्सिद्धविशेष्यवाचिशब्दस्यापि विशेषणे निरूढत्वात् तत् तदात्मकमित्यर्थो युक्त इति द्रष्टव्यम् ॥ ७ ॥

**अरण्योर्निहितो जातवेदाः** । **अरण्योः** अधरोत्तरारण्योः स्थितोऽग्निः । **गर्भ इवेत् सुभृतो गर्भिणीभिः** । गर्भिणीभिः पानभोजनादिना सुभृतो गर्भ इव । निहित इति पूर्वेणान्वयः । इदित्य-

---

1 ननु एतद्वै तदित्यस्य तत् ब्रह्म एतत् एतदन्तर्यामीत्यर्थे वक्तव्ये एतत् वस्तु तत्-ब्रह्मात्मकमित्यर्थः कथं वर्ण्यत इत्याशङ्कायाम्, भाष्ये ईदृशरीतेरपि दर्शनात् तस्याश्च प्रमाणविरुद्धपरमतादृतं सामानाधिकरण्यनिर्वाहप्रकारमपेक्ष्य रीतिरियमपि श्रेयसीत्यभिप्रायकत्वाद्व्याख्यानादर इत्याशयेनाह "अत्रैव प्रकरणे" इत्यादि । अत्र वक्तव्यविस्तरोऽस्मत्कृते ईशोपनिषदाचार्यभाष्यतात्पर्ये १६ मन्त्रे द्रष्टव्यः । वस्तुतः फलितकथनमेतत् ।

८. 'गर्भ इव सुभृत' इत्येव प्रायः पाठः । माध्वशांकरादृतश्च । अत्र भाष्ये 'उदित्यवधारणे' इति प्रायिकपाठानुकूलं मूले गर्भ इवोत्सुभृत इति क्वचित्पठितम् । भावप्रकाशिकायां (१-४-६) 'गर्भ

यतश्चोदेति सूर्यो अस्तं यत्र च गच्छति ।
तं देवास्सर्वे अर्पितास्तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ ९ ॥
यदेवेह तदमुत्र यदमुत्र तदन्विह ।

---

वधारणे । **दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ।** **दिवेदिवे**—अहन्यहनि, **जागृवद्भिः**—जागरणशीलै अप्रमत्तैः **हविष्मद्भिः**—आज्यादिहवि प्रदानप्रवृत्तै ऋत्विग्भि स्तुत्य, **अग्निः** अग्रनेता अरण्योर्निहित इति योजना । **एतद्वै तत्**—एतत् अग्नि· स्वरूप **तत्**—पूर्वोक्तब्रह्मात्मकमित्यर्थ ॥ ८ ॥

**यतश्चोदेति सूर्यो अस्त यत्र च गच्छति** । यस्मात् ब्रह्मण· सकाशात्(?) सूर्य उदेति, यत्र च लयमेति । **त देवाः सर्वे अर्पिताः**– देवा सर्वे तस्मिन् आत्मनि प्रतिष्ठिता इत्यर्थ । **तदु नात्येति कश्चन** **तत्** सर्वात्मकं ब्रह्म कोऽपि नातिक्रामति । छायावत् अन्तर्यामिणो दुर्लङ्घत्वादिति भाव । **एतद्वै तत्**—उक्तोऽर्थ. ॥ ९ ॥

ननु परमात्मन सर्वात्मत्व न संभवति । अहमित्यहन्ताश्रय-त्वेनानुसधीयमानो ह्यात्मा । स च, अहमिहैवासमीति देशान्तरव्या-वृत्ततयाऽनुसन्धीयते । तस्य सर्वदेशकालवर्तिसर्वपदार्थात्मभूतत्वं कथ-

---

इवेत्सुभृत इति पठितमस्ति । तत्र श्रुतप्रकाशिकानिर्वाहाय किञ्चि-च्छाङ्करानुसारी मन्त्रार्थवर्णनप्रकार एवान्यः । तत्र इदित्यस्य समु-च्चयार्थकत्वमभिमतं स्यात् । इह [illegible] कृत्स्नस्याग्निपरतयैव योजनात् इदिति अवधारणे इष्टं स्यादिति विमृष्टमासीत् । अथ च गर्भ इवेत्सुभृत इति पठित्वा इदित्यवधारणे इत्येव भाष्यपाठ· प्राच्ये अमुद्रितकोशे स्पष्टमुपलब्धः । उ इति, इत् इति च अवधारणे प्रसिद्धम्, न पुनः उत् इति । (८)

मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥
मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।

मित्याशङ्कयाऽऽह—**यदेवेह तदमुत्र यदमुत्र तदन्विह ।** यदेव परमात्मतत्त्वम् इह अत्र लोके अहमित्यनुसन्धीयमानतया आत्मभूतम्, तदेव लोकान्तरस्थानामपि आत्मभूतमित्यर्थः । ततश्च आत्मभेदो नास्तीत्यर्थ. । अयमभिप्रायः—किं परमात्मतत्त्वविदाम् अहमिहैवेति प्रतीतिः सर्वदेशकालवर्तिपदार्थात्मत्वबाधकतयोपन्यस्यते, उत तद्रहितानाम् । नाद्यः, तेषाम् अहमिहैवेत्यादिप्रतीतेरेवाभावात् । प्रत्युत 'अहं मनुरभवं सूर्यश्च' इति सर्ववस्तुवर्तितयैवानुभवात् । न द्वितीयः; अतत्त्वविदामहंप्रतीतेर्जीवमात्रविषयत्वेन तत्र देशान्तरव्यावृत्तत्व प्रतीतेः तदानीमप्रतीतपरमात्मनि सर्वदेशवर्तिपदार्थात्मत्वविरोधित्वाभावादिति । **मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ।** इह—परमात्मनि भेदमिव यः पश्यति, स तु संसारात् संसारं प्राप्नोतीत्यर्थः ॥ १० ॥

ननु सर्वात्मभूतं परमात्मतत्त्वं कुतो नोपलभ्यत इत्यत्राह **मनसैवेदमाप्तव्यम् ।** इदमात्मस्वरूपं विशुद्धमनोग्राह्यमित्यर्थः ।

10 चतुर्मुखादिसर्वानुग्राहकः मनुष्येड्यो [देवाराध्यश्च परमात्मेत्युक्तम् । अथ देशभेदेन कालभेदेन भिन्नः स्यादीश्वर इति मतिमपाकरोति यदेवेति । अनेकं ब्रह्म न भवतीत्यस्यैवेतदर्थत्वे स्पष्टे किमिति जगन्मिथ्यात्वपरतया व्याख्याय सर्वप्रमाणविरोधसंपादनम्, एवं यथा परमपदे वर्तते तथैवावतारेष्वपि अजहत्स्वभाव इत्ययमर्थोऽप्यत्र सुवचः । तेनावतारेऽप्युपास्यत्वसिद्धिः ।

मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥
अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ॥ १२ ॥

---

उक्तमेवार्थं दृढीकरणायाभ्यस्यति-**नेह नानास्ति किञ्चन । मृत्योस्स ........पश्यति ।** स्पष्टोऽर्थः ॥ ११ ॥

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य ।** कालत्रयवर्तिनिखिलचेतनाचेतनेश्वरः पुरुषः, **मध्य आत्मनि**-उपासकशरीरे मध्ये अङ्गुष्ठपरिमाणस्सन् आस्ते । **न ततो विजुगुप्सते**-ततः-भूतभव्येशानत्वादेव वात्सल्यातिशयात् देहगतानपि दोषान् भोग्यतया पश्यतीत्यर्थः ।

---

११. विग्रहरूपेण दृश्यमानस्य ब्रह्मणो नानात्वे प्रत्यक्षे सति कथमेकत्वमिति शंकायाम्, विग्रहातिरिक्तं सर्वव्यापि मनोमात्रग्राह्यं तत् आत्मतत्त्वमित्याह मनसैवेति । मन्त्रोऽयं बृहदारण्यकेऽपि (४-४-१९) । मनसैवानुद्रष्टव्यमिति तु भेदः । अस्मदीय परमार्थप्रकाशिकादौ एतदर्थविस्तरः ।

१२. एवम्भूतस्योपास्याकारं दर्शयति अङ्गुष्ठेति । अङ्गुष्ठस्येव मात्रा-परिमाणं यस्य सः अङ्गुष्ठमात्रः । भव्यपदं भवत्पदसमानार्थकम् । भवद्भविष्यदुभयार्थकं वा । तत इत्यस्य व्याख्यानं भूतभव्येशानत्वादेवेति । ईशानं भूतभव्यस्येति पञ्चममन्त्र इवात्र तत इत्यस्य तमित्यर्थे पर्यवसानं दुष्करम् । तस्य जीवपरतया तत्र चतुर्थपादे तदनुगुणोऽर्थ उक्तः । अत्र तु परमात्मविषये निन्दाप्रसक्त्यभावादेवम् ।

भोग्यतयेति । जीवोद्देशेन कर्मफलभोगार्थमल्पसानां जीवबुद्ध्या

[1]ननु, 'प्राणाधिपस्संचरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः', 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इत्यादिश्रुतिस्मृतिषु अङ्गुष्ठमात्रत्वेन प्रतिपादितस्य जीवस्यैवास्मिन् मन्त्रे प्रतिपादनं किं न स्यात्। न च तस्य भूतभव्येशानत्वानुपपत्तिरिति वाच्यम्—प्रथमश्रुतजीवलिङ्गानुरोधेन चरमश्रुतभूतभव्येशानत्वस्य आपेक्षिकतया योजयितुं शक्यत्वादिति चेन्न —'शब्दादेव प्रमितः' इत्यधिकरणे एवमेव पूर्वपक्षं कृत्वा, 'हृदयावच्छेदनिबन्धनाङ्गुष्ठपरिमाणस्य परमात्मन्यपि संभवात्, 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' इति तैत्तिरीयके, 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इति श्वेताश्वतरे च अङ्गुष्ठमात्रत्वस्य परमात्मन्यपि श्रवणात् असङ्कुचितभूतभव्येशितृत्वस्य अन्यथासिद्धब्रह्मलिङ्गत्वादयं मन्त्रः परमात्मपर एव' इति सिद्धान्तितत्वात्।

यत्त्वत्र कैश्चिदुच्यते—अङ्गुष्ठमात्रत्वं जीवलिङ्गमेव। अथापि 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति पूर्वार्धेन जीवमनूद्य, 'ईशानो भूतभव्यस्य' इत्यनेन परमात्मभावो विधीयत-इति-तदसमञ्जसम्। तथा हि सति परमात्मन्यङ्गुष्ठमात्रत्वसंभावना(संभव ?)प्रदर्शकस्य 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति सूत्रस्यासङ्गतिप्रसङ्गात्। ननु,

---

दोषत्वेऽपि स्पष्टुरिष्टत्वादनुकूलत्वमेव हि। विग्रहरूपेण तत्तत्दुष्टांशास्पर्शस्याऽऽवश्यकत्वाभावेपि जीवात्मगताभिमानवशात् तत् मृष्यत इति च तदिष्टत्वमेव तद्भोग्यत्वमिति।

1 ननु दुष्टमपि स्वदेहं जीवो भोग्यत्वेन मन्यत इति स पश्चात प्रतिपाद्यः स्यादिति शंकते नन्विति।

'नास्मिन् मन्त्रे जीवानुवादेन ब्रह्मभावो विधीयते, आराग्रमात्रतया प्रतिपन्नस्य जीवस्य अङ्गुष्ठमात्रत्वे प्रमाणाभावात्' इति तटस्थशङ्का-परिहारार्थं जीवस्याङ्गुष्ठमात्रत्वसाधनाय प्रवृत्तमिदं सूत्रमिति चेत्— तथाऽऽश्रयणस्य क्लिष्टत्वात् ।

ननु 'ईश्वरश्शर्व ईशान' इति निघण्टुपाठेन ईशानशब्दस्य देवता-विशेषे रूढत्वात्, 'शब्दादेव प्रमित' इति सूत्रे, "ईशानो भूतभव्यस्य' इति शब्दादेव । न च भूतभव्यस्य सर्वस्येशितृत्वं कर्मवश्यस्य जीवस्योप-पद्यते" इति भाष्यं व्याकुर्वद्भिर्व्यासार्यैः, "ईशानशब्दस्यैव शब्दशब्देन विवक्षितत्वात् ।...नात्र लिङ्गान्निर्णय. । किन्त्वीश्वरवाचिशब्दादेवे-त्येवकाराभिप्राय" इति व्याख्यातत्वात् ईशानशब्दस्य श्रुतित्वाभ्युप-गमात् तथैव चेशानशब्दश्रुत्या जीवव्यावृत्तिवदेव (जीववदेव ?) नारायणस्यापि व्यावर्तितत्वेन रुद्रपरत्वमेव स्यादिति चेन्न—योगरूढि-मतः पदस्य सन्निधौ अवयवार्थविशेषकपदान्तरसन्निधाने रूढ्यनुन्मेषस्य, 'पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखै' इत्यादिषु दर्श-नात् । तत्र हि सरोरुहपदावयवार्थसरोविशेषकाग्रपदोपादानेन सरो-रुहपदरूढिभङ्गस्य दर्शनात् । इतरथा पद्मानीति पदानुपादानापत्तेः । अत ईशानशब्दस्य न श्रुतित्वम् । एतदक्षरसादेव व्यासार्यैरपि यथा-श्रुतभाष्यानुगुण्येन [1]यद्वेति पक्षान्तरस्य आश्रितत्वादित्यलमतिचर्चया ।

---

1 यद्वेति पक्षान्तरस्येति । अयं भावः—ईशानपदस्यात्र यौगिक-त्वाद्रूढ्यभावान्न श्रुतित्वमित्याशयेनैव पूर्वं फलफलिभावावसरे ईशानत्वं लिङ्गमित्युक्तत्वात् अत्र तदविरोधाय, ईशानशब्देन

[1]अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत् ॥ १३ ॥
यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक्पश्यंस्तानेवानु विधावति ॥ १४ ॥

---

मङ्कृतमनुसरामः । एतद्वै तत् । उक्तोऽर्थः ॥ १२ ॥

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।** शुष्केन्धनानलवत् प्रकाशमान इत्यर्थः । **ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ।** अद्यतनपदार्थजातं श्वस्तनपदार्थजातं कालत्रयवर्तिपदार्थजातमपि तदात्मकमित्यर्थः । **एतद्वै तत् ।** पूर्ववत् ॥ १३ ॥

**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।** पर्वतमूर्ध्नि वृष्टं प्रत्यन्त पर्वतेषु नानाभूततया पतित्वा पतित्वा धावति । **एवं धर्मान् पृथक्**

---

देहेन्द्रियाद्यपेक्षेशानत्वरूपसंकुचितार्थं विहाय असंकोचेन सर्वेशानत्वस्यैवोक्ततया शब्दस्वरसप्रतीतालिङ्गात् परमात्मसिद्धिरिति लिङ्गपरतयैवेदं श्रुतप्रकाशिकावाक्यं योजनीयम् । तथाच यौगिकशब्दस्याश्रुतित्वेऽपि लिङ्गान्निर्णयस्वीकारेऽप्येवकारोपपादनार्थं यद्वेत्यारम्भः । शब्दादेव-शब्दश्रवणजन्यस्वरसप्रतीतिवशादेवेति । शिष्टमन्यत्र ।

१३ अविजुगुप्समानस्य दोषप्रत्यनीकत्वं वदन् भूतभव्यस्येत्येतद् विवृणोति अंगुष्ठेति ।

१४. तानिति । पूर्वोक्तधर्मानित्यर्थः । जीवः सृष्टिदुर्गे पतितः देवमनुष्यादिशरीरभेदान् पुनः पुनर्भजते वस्तुतस्तत्तदन्तर्यामित्वाश्रयतदेकवस्तुविज्ञानविरहात् तदेकाधीनानेव जीवतद्देहधर्मान् तदनधीनानेव यतः पश्यतीति तात्पर्यार्थः ॥

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥

॥ इति द्वितीये प्रथमा वल्ली ॥

॥ अथ द्वितीये द्वितीया वल्ली ॥

हरिः ओम् । पुरमेकादशद्वारमजस्यावक्रचेतसः ।

---

**पश्यन् तानेवानु विधावति** । एवं परमात्मगतदेवान्तर्यामित्व-मनुष्यान्तर्यामित्वादिधर्मान् पृथगधिकरणनिष्ठान् पश्यन् पर्वतनिर्झर-पातमनुकृत्य संसारकुहरे पतनीत्यर्थः ॥ १४ ॥

सर्वैकात्मकत्वज्ञानस्य फलमाह—**यथोदकं शुद्धे शुद्धमा-सिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ।** यथा शुद्धजले शुद्धजलं योजितं तत्सदृशमेव भवति, न कथ-ञ्चिदपि विसदृशम् । **एवम्**–इत्थं विजानन् **मुनेः** मननशीलस्य आत्माऽपि परमात्मज्ञानेन विशुद्धस्सन् विशुद्धेन परमात्मना समानो भवतीत्यर्थः । **गौतमेति** मात्रयैवमं सूचयन् सहर्षं सम्बोधयति ॥ १५ ॥

॥ इति चतुर्थवल्लीभाष्यम् ॥

**पुरमेकादशद्वारमजस्यावक्रचेतसः** । जननादिविक्रियारहितस्य ऋजुबुद्धेर्विवेकिन आत्मनः एकादशेन्द्रियलक्षणबहिर्निर्गमद्वारोपेतं शरीराख्यं पुरं भवति । पुरस्वामिनः यथा पुरं विविक्तं भवति, तथा शरीरमपि स्वात्मनो विविच्य ज्ञातं भवति । अविवेकिनस्तु देह आ-

---

१५. अशुद्धेन जीवेन स्पृश्यमानमपि परतत्त्वमशुद्धं न भवती-त्युक्तम् । अस्यैव जीवस्य शुद्धौ तत्साधर्म्यमाह यथेति ।

अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते ॥ एतद्वै तत् ॥ १ ॥
हंसश्शुचिषत् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषत् वरसत् ऋतसत् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥

सैव भवतीति भावः । [1] अनुष्ठाय न शोचति—विविच्य जानन् देहानुबंधिभिः दुःखैः कामादिभिश्च विमुक्तो भवतीत्यर्थः । विमुक्तश्च विमुच्यते-जीवद्दशायामाध्यात्मिकादिदुःखरागद्वेषादिविमुक्त एव सन्, 'भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते' इति न्यायेन प्रारब्धकर्मावसाने अर्चिरादिना विरजां प्राप्य प्रकृतिसम्बन्धविमुक्तो भवतीत्यर्थः । एतद्वै तत्—एतन्मन्त्रप्रतिपाद्यमुक्तस्वरूपमपि परमात्मात्मकमेवेत्यर्थः॥ १ ॥

पुनरप्यस्य सर्वात्मतामेव द्रढयति हंसश्शुचिषत् वसुरन्तरिक्षसत् होता वेदिषत् अतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । हंसः—सूर्यः. शुचौ ग्रीष्मर्तौ सीदति वर्तत इति शुचिषत् । तेजस्वीति यावत् । वासयतीति वसुः वायुः । अन्तरिक्षसत्—अन्तरिक्षगतो वायुः । होता वेदिषत्—वेद्यां वर्तमानः ऋत्विग्विशेषः ; अग्निर्वा । अतिथिर्दुरोणसत्—दुरोणं-गृहम्, गृहागतोऽतिथिः । नृषत्—नृत्वात्मतया वर्तमानम्, वरसत्—वरेषु=देवेषु च तथा वर्तमानम्, ऋते सत्यलोके सीदतीति ऋतसत्, व्योमसत्—व्योम्नि परमपदे वर्तमानं च प्रत्यक्तत्त्वम् ; अब्जाः-जलजाः, गोजाः-भूजाः ऋतजाः-

---

1 अनुष्ठाय—नाहमिदम्, ममेदं पुण्यमिति पुरुत्वबुद्धिमनुस्थित्वा स्वपुरुत्वेनोपयोज्य ; उपायमनुष्ठायेत्यर्थः ।

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥

यज्ञोत्पन्नाः कर्मफलभूताश्च स्वर्गादयः [इति यावत्] । यद्वा चिरकाल स्थायितया ऋतशब्दिताकाशजा इत्यर्थः । अद्रिजाः—पर्वतजाः, एतत् सर्वं बृहत् ऋतम्—अपरिच्छिन्नसत्यरूपब्रह्मात्मकमित्यर्थः ॥ २ ॥

ऊर्ध्वं प्राणमुन्नयति । सर्वेषां हृदयगतः परमात्मा प्राण-वायुमूर्ध्वमुखमुन्नमयति । अपानं प्रत्यक् अस्यति । अपानवायुमधोमुखं क्षिपति । मध्ये वामनमासीनम् । हृदयपुण्डरीकमध्ये आसीनं वामनम्—वननीयम्, भजनीयम् । अथवा हृदयपुण्डरीकपरिमित-तया ह्रस्वपरिमाणमित्यर्थः । विश्वे देवा उपासते । [देवाः] सत्त्व-प्रकृतयः [विश्वे] सर्वेऽपि उपासत इत्यर्थः ॥ ३ ॥

एवं परमात्मानमुपासीनस्य, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति श्रुत्युक्तरीत्या शरीरपात एवान्तरायः, न किंचित् कर्तव्यं

२. अब्जा गोजा ऋतजा अद्रिजा इति पदानि हंस इत्यादिमन्त्रानुसारेण प्रथमैकवचनान्तानि । "जनसनखनक्रमगमो विट्" (पा ३-२-६७) इति छन्दसि विड्विधानात् । नूनमिदमेवाभिप्रेत्य शाङ्करे 'अप्सु शङ्खशुक्तिमकरादिरूपेण जायते' इत्यादिना एकवचनेनैव विवरणम् । अत इहापि भाष्ये एकवचनान्तपाठः समुचितः । पाठो निरीक्ष्यः । यद्वा एकवचनव्युत्पत्तेः प्रामाणिकत्वेऽपि तदादरेण जात्येकवचनत्वसमर्थनापेक्षया सर्वस्य ब्रह्मात्मकताया वाच्यत्वाद् बहुवचनव्युत्पत्तिरेव युक्ततरेत्याशयः स्यात् ॥

३. शरीरे वायोरूर्ध्वं गच्छतः प्राण इति संज्ञा, अधोगच्छत-स्यापान इति । एवं जीवननिर्वाहकत्वमुक्तम् । उपरि मरणप्रस्तावः ।

अस्य विस्रसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य [1]किमत्र परिशिष्यते ॥ एतद्वै तत् ॥ ४ ॥
न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥
हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।

---

परिशिष्यत इत्याह—अस्य विस्रसमानस्य शरीरस्थस्य देहिनः । देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । अस्य—उपासकस्य देहिनः, शरीरस्थस्य—शरीरप्रतिष्ठितस्य, दृढशरीरस्येति यावत् । एवम्भूतस्य वा, विस्रसमानस्य—शिथिलीभवदात्मस्य वा, देहाद्विमुच्यमानस्य—म्रियमाणस्य वा किमत्र परिशिष्यते ? कृतकृत्यत्वात् कर्तव्यं किमपि नावशिष्यत इति भावः । एतद्वै तत्—पूर्ववत् ॥४॥

तस्य[2] सर्वप्राणिप्राणनहेतुत्वरूपं महिमानमाह न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति । स्पष्टोऽर्थः । केनेतरेण जीवन्तीत्यत्राह —यस्मिन्नेतावुपाश्रितौ । यदधीनं प्राणापानयोरपि जीवनम्, तदधीनमेव सर्वेषां जीवनमिति भावः[3] ॥ ५ ॥

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । गुह्यम्—

---

1 किमत्र परिशिष्यते । इतः उपादेयं किमपि नास्तीत्यर्थः । सर्वमिदं चरमदेहवद्विषये स्वरसम् अन्येषां मृतानां पिण्डोपजीवित्वात् जन्मान्तरापेक्षणाच्च ।

2 तस्येति । परमात्मन इत्यर्थः । 3 भाव इति । अनेन मन्त्रे बृहदारण्यके उपस्तकहोलप्रश्नगतं ॥ प्राणेन प्राणितीति वाक्यं व्याख्यातं भवति, यः शरीरे प्राणं निक्षिप्य तत् जीवनवत् करोतीति ।

यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥

---

अनिरहस्यं सनातनं ब्रह्म ते पुनरपि प्रवक्ष्यामि । हन्तेति स्वगतम् आश्चर्ये । **यथा च मरणं प्राप्य आत्मा भवति गौतम** । हे गौतम ! आत्मा मरणं–मोक्षं प्राप्य यथा—यत्प्रकारविशिष्टो भवति, तथा पुनरपि मुमुक्षवे रागाद्यनुपहताय उपदेशयोग्याय तुभ्यं वक्ष्यामीत्यर्थः ॥६

अधिकारिविशेषनिर्देशपरेण, "हन्त ते" इत्यनेन सूचितमर्थं विवृणोति **योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्** । अन्ये—परमात्मतत्त्वश्रवणविमुखाः

---

६. ननु ब्रह्मण एव निरूप्यमाणतया मध्ये, 'हन्त त इदं प्रवक्ष्यामि' इति केन विशेषेणोच्यत इति चेत्-उच्यते-केचित् संपादितमपि ब्रह्मज्ञानं संसारकुहरपरिभ्रमणार्थमेवोपयोजयन्ति। तत् विहाय मोक्षयत्नः कार्य इत्युपदेश एव विशेष इति । अत्रेदमपि किञ्चित्प्रतीयत इव-एतावदुपदिष्टं यद्ब्रह्म, तत् कीदृशदेवतास्वरूपमिति विवेकुमिदमारभ्यत इति। तथा च केचित् योनि–कारणं ब्रह्माणं ब्रह्मेति मन्यन्ते। अन्ये स्थाणुं—शिवम् । यः पुनः बाह्यप्रपञ्चविलक्षणस्य स्वात्मप्रपञ्चस्यापि सृष्टिस्थितिसंहारहेतुः, "उकारः स्वयं विष्णुदेवत्यः" इत्यथर्वशिखोक्तः, स विष्णुरेव परं ब्रह्मेति स एव बाह्यमवेलोकस्यापि नियन्ता । अत एवोक्तं प्राक्, सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति' इति ज्ञाप्यते। किञ्च येयं प्रेते इति पृष्टमन्तं प्रति मुक्तौ जीवपरिस्थितिः स्पष्टमावेदनीया ।जीवादन्य एव परमात्मा, तत्साम्यमेव मुक्तौ, नत्वैक्यमिति अत्र वल्ल्यां विशदं भवति ।

य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ ८ ॥

---

स्वद्विसदृशाः शरीरपरिग्रहाय ब्राह्मणादियोनिं प्रपद्यन्ते, अन्ये स्थावरभावमनुगच्छन्ति स्वानुष्ठितयज्ञादिकर्मोपासनानतिक्रमेण, "रमणीयचरणाः", "तं विद्याकर्मणी समन्वारभेते" इत्यादिश्रुत्यनुरोधादिति भावः ॥ ७ ॥

एवं शिष्यं प्ररोचनया अभिमुखीकृत्य प्रकृतमनुसरति—य

एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः । सर्वेषु सुप्तेषु जीवेषु कामंकामम्—णमुलन्तमिदम् । सङ्कल्प्य सङ्कल्प्येत्यर्थः । न तु "सर्वान् कामान् छन्दतः प्रार्थयस्व" इति प्रकृताः पुत्रादयः कामशब्देन निर्दिश्यन्ते । अयं चार्थः सन्ध्याधिकरण (3-2-1) भाष्यश्रुतप्रकाशिकयोः स्पष्टः—सङ्कल्प्य संकल्प्य स्वच्छन्दानुरोधेन निर्मिमाणः पुरुषो योऽस्तीत्यर्थः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन । एतद्वै तत् । तदेव शुक्रं-प्रकाशकम् तदेवानन्याधीनममृतमुच्यत इत्यर्थः । शिष्टं स्पष्टम् । नित्यमुक्तानाममृतत्वसत्त्वेऽपि निरुपाधिकामृतत्वाभावात् तदेवामृतमित्यवधारणस्य नानुपपत्तिरिति द्रष्टव्यम् । एतेन अमृतान्तरनिषेधात् मुक्तपरमात्मनोरभेदप्रत्याशा प्रत्युक्ता ; अत्रत्यामृतशब्दस्य निरुपाधिकामृतवाचित्वात् ॥ ८ ॥

एक एवाऽऽत्मा सर्वेषामहमर्थतया आस्ते इत्यस्यार्थस्य दुर्बोध-

[1]अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥ ९ ॥
वायुर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥ १० ॥
सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥

---

त्वात् तद्दृढीकरणाय पुनरप्युपदिशति—**अग्निर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव** । यथा एकस्तेजोधातुः त्रिवृत्करणकृतव्याप्त्या अण्डान्तर्गतलोके प्रविष्टस्सन्, **रूपरूपं**-रूपेरूपे यावद्भौतिकव्यक्ति—वीप्सायां द्विर्वचनम्—**प्रतिरूपः**—प्रत्युतं रूपं यस्य स तथोक्तः । सर्वासु भौतिकव्यक्तिषु तेजोधातोर्मिलितत्वेन प्रतिसङ्क्रान्तरूपत्वमस्तीति द्रष्टव्यम् । **एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च** । तथा एक एव सन् परमात्मा प्रतिवस्तु सङ्क्रान्तान्तर्यामिविग्रहो बहिश्च व्याप्नोतीत्यर्थः ॥ ९ ॥

उदाहरणान्तरमाह—**वायुर्यथैको भुवनं....बहिश्च** । पूर्ववत् ॥

आत्मत्वाविशेषेऽपि जीवात्मवत् दोषाः परमात्मनि न भवन्तीत्येतत् सदृष्टान्तमाह—**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः** । 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः', 'आदित्यश्चक्षुर्भू-

---

1 अग्निवाय्वादित्याः भूम्यन्तरिक्षस्वर्गलोकदेवताः तेषु भगवत्साम्यं तदनुग्राहकत्वं दर्शयति त्रिभिः ।

एको वशी सर्वभूतान्तरात्मा एकं बीजं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥१२॥
नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥१३

खाऽक्षिणी प्राविशत्' इति श्रुत्यनुसारेण यथा सूर्यः चक्षुरधिष्ठातृतया तदन्तर्गतोऽपि बहिर्निर्गतैश्चक्षुर्मलादिभिर्न स्पृश्यते, तथा परमात्मा सर्वभूतेष्वात्मतया वर्तमानोऽपि तद्गतैर्दोषैर्न स्पृश्यते। तस्य स्वाभाविकापहतपाप्मत्वादिगुणयुक्ततया स्वेतरसमस्तबाह्यत्वात्-विलक्षणत्वादित्यर्थ.॥

एको वशी सर्वभूतान्तरात्मा एकं बीजं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्। एकः-समाभ्यधिकरहितः। वशः-इच्छा। सोऽस्यास्तीति वशी। 'जगद्वशेवर्ततेदम' इत्युक्तरीत्या वशवर्तिप्रपञ्चक इत्यर्थः। 'इमौ स्म मुनिशार्दूल किङ्करौ समुपस्थितौ' इत्युक्तरीत्या भक्तवश्य इति वा अर्थः। एकं बीजम् 'तमः परे देव एकीभवति' इति श्रुत्युक्तरीत्या स्वेन एकीभूतनविभागावस्थं तमोलक्षणं बीजं महदादिबहुविधप्रपञ्चरूपेण यः करोति, तम्, 'य आत्मनि तिष्ठन्' इत्युक्तरीत्या स्वान्तर्यामिणं ये पश्यन्ति, तेषामेव मुक्तिरित्यर्थः ॥ १२ ॥

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। नित्यश्चेतन एक एव सन् बहूनां नित्यानां

१२-१३. इमौ मन्त्रौ श्वेताश्वतरीयेऽपि; द्वादशमन्त्रे पूर्वार्धमन्यथा; त्रयोदशमन्त्रे उत्तरार्धमन्यथा॥

तदेतदिति मन्यन्ते निर्देश्यं परमं सुखम् ।
कथन्नु तद् विजानीयां किमु भाति विभाति वा ॥ १४ ॥

---

चेतनानामपेक्षितार्थान् अनायासेन प्रयच्छति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् । श्लोकोऽर्थ ॥१३

एवमुक्त शिष्य आह तदेतदिति मन्यन्ते निर्देश्यं परमं सुखम् । कथन्नु तद्विजानीयां किमु भाति विभाति वा । तत् अलौकिकं परमानन्दरूपं ब्रह्म एतदिति करतलामलकवत् अपरोक्षं भवादृशा निष्पन्नयोगा मन्यन्ते । भवादृशास्साक्षात्कर्तुं शक्नुवन्तीत्यर्थ । कथं रूपादिहीनत्वग्रहणासमर्थमानसोऽहं तत् विजानीयाम् । तत् किं दीप्तिमत्तया भासते । तत्रापि विस्पष्टं प्रकाशते । उत तेजोन्तरसवलनाद्र विस्पष्टं प्रकाशते इति प्रश्न ॥ १४ ॥

परमात्मन योगयुगालम्बनत्वाय, 'आदित्यवर्णं तमस परस्तात्'

---

१४ यद्यपीदमपि गुरुवाक्यतयैव सुयोजम्—तथापि 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति' इत्युक्तवान् मृत्युरेव 'कथन्नु तद्विजानीयाम्' इति कथयतीति अस्य व्याहतवत् प्रतीते तदपेक्षया प्रश्नपरतयैव व्याख्यानमुचितम् । उत्तरमन्त्रस्यैतदुत्तररूपतायाः स्वरसत प्रतीते । मननकर्तारि एतदिति निर्दिश्य कामं मन्यताम्, विज्ञानमुपासनं तु दुष्कर प्रतीयते । किं तत् सूर्याद्युपकरणैर्भाति उत तन्निरपेक्षम् । किं विग्रहरहितं भाति उत विशिष्टमपीत्येव प्रश्न । 'किमु भाति न भाति वे'त्यपि पाठोऽस्ति । अत्र 'विस्पष्टम्' इति, उत्तरत्र 'विभाति' इति च भाष्ये दर्शनात् विभातीति पाठ इष्ट. । वाशब्दः दर्शितकोट्यन्तरं, 'न विस्पष्टम्' इत्यादितोक्तमिति स्यात् ।

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १५ ॥

॥ इति द्वितीयेऽध्याये द्वितीया वल्ली ॥ आदितः पञ्चमी ॥

---

'सदैकरूपरूपाय' इति प्रमाणप्रतिपन्नशुभाश्रयदिव्यमङ्गलविग्रहोऽस्ति; तद्विशिष्टः परमात्मा विभाति सर्वातिशायिदीप्तिमानित्याह न तत्र... ...विभाति। अयं च मन्त्रः, 'ज्योतिर्दर्शनात्' इति सूत्रे, 'सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुभाकं च अङ्गुष्ठमात्रमितस्य ज्योतिर्दृश्यते' इति भाष्येण विवृतः। इदं च भाष्यम्—"न तत्र सूर्य इत्यादिमन्त्रे पूर्वार्धस्यार्थमाह-सर्वतेजसां छादकमिति। उत्तरार्धस्य पूर्वपादार्थमाह-सर्वतेजसां कारणभूतमिति। अनुभानं-पश्चाद्भानम्। तेन कार्यकारणभावः सिद्धः। पौर्वापर्यनियमो हि कार्यकारणभाव इति भावः। चतुर्थपादार्थमाह—अनुभाहकमिति। 'यस्मादित्यो भामुपयुज्य भाति' इत्यादिश्रुतिश्चानुभाहकत्वे प्रमाणम्" इति व्यासार्यैर्विवृतम्। तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वं प्रथमार्धार्थः; तेजोन्तरोत्पत्ती

---

१५. तमेव भान्तमिति। "चक्षोस्सूर्यो अजायत" इत्यादिरीत्या जीवीयचक्षुराद्यधिष्ठातृदेवतादेर्भगवच्चक्षुरादिनिर्गतत्वादधिष्ठानसामर्थ्यम्। अत्रभूपणादिरूपभगवद्विग्रहस्थितनित्यसूर्यतुल्यप्रदादेव च जातानां स्थितिः। "सूर्यस्य तपतो लोकान् अग्नेश्चन्द्रस्य चाप्युत। अशवो यत् प्रकाशन्ते मम ते केशसंज्ञिताः। सर्वज्ञाः केशवं तस्मात् मामाहुर्द्विजसत्तमाः" (म. भा. शां. ३२९. ५८) इति सूर्यादिकिरणानां भगवत्केशत्वमुक्तम्। एवमादिकमत्र भाव्यम्। मन्त्रोऽयं मुण्डके (४) श्वेताश्वतरीये (६) च पठ्यते ॥

तदुपादानद्रव्यानुग्राहकत्वरूपं निमित्तत्वं तृतीयपादार्थः ; चाक्षुषरश्म्यनुग्राहकचन्द्रातपादेरिव उत्पन्नस्यापि तेजसः स्वसम्बन्धेन स्वकार्यकरणसामर्थ्याधायकत्वलक्षणानुग्राहकत्वं चतुर्थपादार्थ इत्यप्यर्थस्तत्रैव द्रष्टव्यः ।

अधिष्ठानब्रह्मरूपभानव्यतिरिक्तभानशून्यत्वमध्यस्तप्रपञ्चस्य तृतीयपादार्थ इति यत् परैरुच्यते, तदयुक्तम् । तथा हि सति भान्तमिति कर्त्रर्थशतृप्रत्ययस्य 'शिष्यज्ञानं प्रकाशते' इतिवदमेदेऽपि कथञ्चित्समवेऽपि अनुभातीत्यस्य शब्दस्यायोगात् । [1]न हि देवदत्तगमनक्रियाव्यतिरिक्तगमनक्रियाशून्ये तिष्ठति यज्ञदत्ते, गच्छन्तं देवदत्तं यज्ञदत्तोऽनुगच्छतीति प्रयोगो दृष्टचरः । ननु वह्निमेव दहन्तम् अयोऽनुदहतीति प्रयोगो दृष्टचर इति चेत् –न, अयसः पृथक् दग्धृत्वाभावं निश्चिन्वतः तत्प्रतिपिपादयिषया तादृशप्रयोगस्य सम्प्रतिपन्नत्वाभावात् ।

ननु तदीयदीप्तिसाक्षात्कारसमये तेजोन्तराणामभिभूतत्वमिति भवदभिमतार्थोऽपि न युज्यते, तदीयदीप्तिसाक्षात्कारवतामपि मुक्तानां तेजोन्तरसाक्षात्कारदर्शनेन सजातीयसन्निधानाधीनाग्रहणलक्षणाभिभवस्याभावादिति चेत् –उच्यते । [2]बद्धविषयमेवैतत् ॥ बद्धानां तत्साक्षात्काराप्रसक्तेरिदं कथमिति चेन्न, बद्धानामेवार्जुनादीनां तत्साक्षात्कारदर्शनात् । यद्वा कालिदासकवौ परिगण्यमाने इतरः कुकविः

1 'न हि देवदत्ते' त्यादि । अत्र शास्त्रम् "यथा ज्वालोल्मुकादि अग्निसंयोगादग्निः दहन्तमनुदहति, न स्वतः, तद्वत्" इति ।

2 बद्धेति । ग्रहणे चक्षुरसापेक्षो यः पुरुषः तद्विषये ह्यभिभव उच्यते । न तु स्वाभाविकग्रहणे इति भावः ।

कविरितिवत् भाति ब्रह्मणि परिगण्यमाने सूर्यादितेजोऽन्तर न भाति, अतस्तदेव ब्रह्म अतिभास्वररूपशालीति पूर्वार्धार्थ । 'तदीयदीप्ति साक्षात्कारसमये तेजोन्तराणामभिभूतत्वम्' इति व्यासार्यवचनस्या प्ययमेवार्थ । इममेवार्थम् इतरतेजसा स्वरूपोत्पत्तौ फलजनने च परमात्मानुग्रहसापेक्षत्वप्रदर्शकेन, तमेव भान्तमित्युत्तरार्धेन द्रढयतीति न दोष इत्यवगन्तव्यम् । यद्वा-पूर्वार्धस्य यथाश्रुत एवार्थ । ननु अतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमाने, न भातीति प्रत्यक्ष विरुद्ध कथमभिधीयत इत्यत्राह तमेव भान्तमनुभातीति । इद च परिदृश्यमान भास्वररूप न स्वाभाविकम्, अपितु परमात्मदत्त तदीयमेव तेज । गीत च भगवता, 'यदादित्यगत तेजो जगत् भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति । विवृत चैतत् भगवता भाष्यकृता—'अखिलस्य जगतो भासकमेतेषामादित्यादीना यत् तेज, त मदीय तेज । तैस्तैराराधितेन मया तेभ्यो दत्तमिति विद्धि' इति । अतो [1]याचितकमण्डितपुरुषतुल्यानामेतेषा भ स्वररूप शालिना न भातीति व्यपदेशो युज्यत इति भाव ॥ १५ ॥

॥ इति पञ्चमवल्लीभाष्यम् ॥

---

1 याचितकमण्डितेति । ये स्वयमाभरणरहिता आभरण धारणरुचय अन्यदीयमाभरण तत्तो याचित्वा गृहीत्वा कञ्चित् कालमात्मान मण्डयन्ता स्वतसिद्धाभरणशालिन इव रान्ते, ते याचितकैर्वस्तुभिर्मण्डिता । तार्किकरक्षायामय प्रयोग ।

॥ अथ द्वितीये तृतीया वल्ली ॥

हरिः ओम् । ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थस्सनातनः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ १ ॥
यदिदं किञ्च जगत् सर्वं प्राण एजति निस्सृतम् ।

---

**ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातनः** । अयं च मन्त्रखण्ड, 'ऊर्ध्वमूलमधश्शाखम्' इति गीताव्याख्यानावसरे भगवता भाष्यकृता व्याख्यातः । इत्थं हि तत्र भाष्यम् — "यं संसाराख्यमश्वत्थमूर्ध्वमूलमधश्शाखम् यम् [1]प्राहुः श्रुतयः, 'ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातनः', 'ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद सम्प्रति' इत्याद्याः । सप्तलोकोपरि निविष्टचतुर्मुखादित्वेन तस्योर्ध्वमूलत्वम् । पृथिवीनिवासिसकलनरपशुमृगक्रिमिकीटपतङ्गस्थावरान्ततया अधश्शाखत्वम्" इति । तद्विलक्षणमेव (तल्लक्षणमेव) ब्रह्मेति दर्शयति — **तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥** पूर्वमेव व्याकृतोऽयं मन्त्रः ॥ १ ॥

**यदिदं किञ्च जगत् सर्वं प्राण एजति निस्सृतम् महद्भयं वज्रमुद्यतम्** — अयं च मन्त्रखण्डः 'कम्पनात्' इति सूत्रे भगवता

---

1 ननु श्रुताविह एष इति प्रकृतपरमात्मग्रहणात् अयमश्वत्थः परमात्मा ; गीतायां तु असंगशस्त्रच्छेद्यः संसार एवाश्वत्थ इति कथमुभयैक्यमिति चेन्न, चन्द्रिकायां तत्र समाहितत्वात् । परमात्मनः [illegible]
सम्यगित्यर्थः ।

महद् भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥

---

भाष्यकृता व्याख्यातः। तत्रामुं मन्त्रं प्रस्तुत्य, "कृत्स्नस्य जगतः अस्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्संजातमहाभयनिमित्तमेजनं—कम्पनं श्रूयते। तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयात् वज्रादिवोद्यतात् कृत्स्नं जगत् कम्पत इत्यर्थः। 'भयादस्याग्निस्तपति' इत्यनेनैकार्थ्यात् **महद्भयं वज्रमुद्यतमिति** पञ्चम्यर्थे प्रथमा" इति भाषितम्। विवृतं चैतत् श्रुतप्रकाशिकायाम्—'प्राण इति सप्तम्यन्तपदसामर्थ्यात् स्थितानामित्यध्याहारः। कुतो निस्सृतानामित्यपेक्षायां प्रकृतस्यैवापादानत्वमाह **ततः** इति।....**एजनं** कम्पनमिति। एजृ कम्पन इति हि धातुः। प्रत्यवायभयात् स्वस्वकार्य(र्येषु) प्रवृत्तिः कम्पनम्। उद्यतवज्रादिव परमपुरुषात् सञ्जातेन भयेन कृत्स्नं जगत् कम्पत इत्यर्थः' इति। अत्र **महद्भयं वज्रमुद्यतमिति** चत्वारि पदानि पञ्चम्यर्थप्रथमान्तानि। आद्यं पञ्चम्यर्थप्रथमान्तपदद्वयं भयवाचि। उत्तरं तु पदद्वयं तद्धेतुभूतप्राणशब्दितपरब्रह्म[1]परमिति द्रष्टव्यम्। केचित्तु, 'बिभेत्यस्मादिति **भयम्**; भयानकमित्यर्थः। महाभयानकोद्यतवज्रवत् स्वस्मान्निस्सृतं सकलं जगत् प्राणशब्दितः [2]परमात्मा कम्पयति। एजि व्यर्थगर्भे'

---

1 परब्रह्मपरमिति। वज्रमुद्यतमित्यस्य उद्यतवज्रतुल्यब्रह्म इत्यर्थः इति। 2 अत्र पक्षे प्राणशब्दः प्रथमान्तः; जगदिति द्वितीयान्तम्; एजति एजयति। पूर्वार्धं पूर्ववदेव व्याख्याय महद्भयमित्यादि द्वितीयान्तं कृत्वा भयानकवज्रत्वेन एतत् ये विदुरित्यर्थोऽपि सुवचः।

भयादस्याग्निस्तपति भयात् तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥
[1]इह चेदशकद् बोद्धुं प्राक् शरीरस्य विस्रसः ।
ततस्सर्गे(ग)षु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥
[2]यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके ।

इत्यमुमप्यर्थं वर्णयन्ति । य एतद्विदुरमृतास्ते भवन्ति-स्पष्टोऽर्थः । 'अत एव प्राणः' (१-१-९) इत्यधिकरणन्यायात् प्राणशब्दस्य परमात्मपरत्वे न विवाद इति द्रष्टव्यम् ॥ २ ॥

**भयादस्याग्निस्तपति ...मृत्युर्धावति पञ्चमः ।** धावतिशब्द इन्द्रादीनां स्वस्वव्यापारप्रवृत्तिपरः । शिष्टं स्पष्टम् ॥ ३ ॥

**इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः ।** शरीरस्य **विस्रसः**—विस्रसनात् पतनात्प्राक् इह लोके ब्रह्म बोद्धुं अशकच्चेत् अशक्नुवंश्चेत्—विकरणव्यत्ययः छान्दसः—**ततस्सर्गेषु लोकेषु शरीरत्वाय कल्पते ।** ततः तस्मात् ज्ञानाभावाद्धेतोः सृज्यमानेषु लोकेषु जन्मजरामरणादिमत्त्वलक्षणशीर्यमाणत्वाय भवतीत्यर्थः । तस्मात् शरीरपातात्प्रागेव आत्मज्ञानाय यतेतेति भावः ॥ ४ ॥

आत्मनो दुर्बोधत्वमेवाह—**यथाऽऽदर्शे तथाऽऽत्मनि ।** यथा

1 एवं सर्वलोकेष्वपि जीवस्य भगवदधीनत्वमेवेत्युक्त्वा, अथैव तस्य जयत्वमप्याह इहेति । सर्गेष्वित्यस्य नानाप्रकारेष्वित्यर्थं सम्भवति । अथापि सर्वेष्विति पाठमपि मनसिकृत्य सृज्यमानसर्वलोकेष्वित्युक्तं स्यात् ॥ (४) ॥ 2 लोकान्तरे तद्ग्रहणं न यथावत्; अतोऽप्यत्रैव मारः इत्याह यथेति ।

यथाऽप्सु परीव दद‍ृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥५
इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥

---

दर्शे चन्द्रिकाया अभावात् न स्पष्ट प्रतिभास, तथा इह लोके आत्मनीत्यर्थ । यद्वा यथा आदर्शे—दर्पणे प्रतीयमान वस्तु साक्षाद्दृष्टवस्तुवत् प्रत्यङ्मुख वादिकल्पितार्थानवरुद्धतया नोपलभ्यते, तथेहात्मविषयिणी प्रतीतिरित्यर्थ । लोकान्तरेऽपि तथेत्याह— **यथा स्वप्ने तथा पितृलोके** । यथा स्वप्नदर्शनस्य जाग्रद्दर्शनवत् सम्यक्तया संशयादिविरोधितया पुनरनुसन्धानयोग्यत्वाभाव, तथा पितृलोक इत्यर्थ । **यथाऽप्सु परीव दद‍ृशे तथा गन्धर्वलोके** । यथा जलान्त स्थ वस्तुनो नेतरवत् स्पष्टप्रकाश, तद्वत् परिदद‍ृश इव । न वस्तुत (यथावत् ?) परितो दृश्यत इत्यर्थ । गन्धर्वलोकेऽप्यापातत प्रतीतिमात्रमित्यर्थ । **छायातपयोरिव ब्रह्मलोके**—यथा छायातपयोर्मिश्रणे शुद्धातपवर्तिपदार्थवत् नोपलम्भ, एवं ब्रह्मलोकेऽपि न सम्यगुपलम्भ । अतो दुरधिगममात्मतत्त्वमिति भाव । यद्वा—ब्रह्मलोके यद्यपि छायातपयोर्विविच्योपलम्भवत् आत्मानात्मस्वरूपयोर्विविच्योपलम्भ संभवति, तथापि नात्मत्यानामात्मतत्त्व सुलभमिति भाव ॥ ५ ॥

**इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् । पृथगु-**

---

६ इन्द्रियाणां यौ उदयास्तमयौ तौ पृथग्भावं च मत्वेति योजनाया तात्पर्यम् ॥ न शोचति । जातस्य हि ध्रुवो मृत्युरिति तद्विनाशाध्रौव्यात् तत्पोषणोपायप्रयासं विना तद्विमुक्तस्वलाभोपायमेव चिन्तयेदिति भाव. ।

इन्द्रियेभ्यः परं मनो मनसस्सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यद् (यं?)ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥

---

**त्पद्यमानानां मत्वा धीरो न शोचति** । पृथग्भूतानामुत्पद्यमानाना-मिन्द्रियाणाम् । इन्द्रियाणामित्येतत् देहादीनामप्युपलक्षणम् । **उद-यास्तमयौ च यत्** । यदित्यव्यय यावित्यर्थे । यौ उत्पादविनाशौ यश्च परस्परवैलक्षण्यलक्षण पृथग्भावश्च(व?)तान् सर्वान् इन्द्रियादिगतान् मत्वा धीरो न शोचतीत्यर्थः । परस्परवैलक्षण्योत्पादविनाशा ज्ञानै-काकारे नित्ये आत्मनि न सन्तीति ज्ञात्वा न शोचतीत्यर्थः ॥ ६ ॥

देहविविक्तप्रत्यगात्मयाथात्म्यज्ञानेऽपि भगवच्छरणागतिरेवोपाय इति पूर्वोक्त शरणवरणमेव प्रतिपादयति—**इन्द्रियेभ्यः परं मनो ....यद् ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति** । इन्द्रियेभ्य इत्ये-तत् अर्थानामप्युपलक्षणम् । 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन' इत्यनेनैकार्थ्यात् । सत्त्वशब्दो बुद्धिपर । 'मनसस्तु परा बुद्धि' इति पूर्वोक्ते । **अलिङ्गः**—लिङ्गागम्य । परत्वं च वशीकार्यतया निव-क्षितम् । परस्य च वशीकरण शरणागतिरेव । शिष्ट स्पष्टम् ॥७॥८॥

---

तमेवोपायं वशीकार्यप्रदर्शनेन सूचयति (७) इन्द्रियेभ्य इति मन्त्रद्वयेन । महान्—इन्द्रियाद्युपकरणापेक्षया उपकरणित्वेन प्रधान-भूतो स्वर्था जीवात्मा । अव्यक्त-शरीरम् । पुरुषः—परमात्मा । प्रागेव विशदं व्याख्यातत्वादत्र संग्रहः ।

**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा मनीषा मनसाऽभिक्लृप्तो य एनं(एतत्)विदुरमृतास्ते भवन्ति ॥**
**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।**

---

**न संदृशे तिष्ठति रूपमस्य ।** अस्य रूपं—स्वरूपं विग्रहो वा व्यापकत्वादेव संदर्शनविषये अभिमुखतया न तिष्ठतीत्यर्थः । अथवा दृश्यं नीलरूपादिकं नास्तीत्यर्थः । अत एव **न चक्षुषा पश्यति कश्चनैनम् ।** स्पष्टोऽर्थः । **हृदा मनीषा मनसाऽभिक्लृप्तः ।** अयमंशः, 'सर्वत्र प्रसिद्धोपदेशात्'(1-2-1)इत्यत्र व्यासार्यैः,"हृदेति भक्तिरुच्यते। मनीषेति धृतिः । 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' इति पूर्वार्धमेकरूपं पठित्वा, 'भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह' इति महाभारते उक्तत्वात् । अभिक्लृप्तः= प्राह्य " इति विवृत । "धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति, साक्षात्करोति प्राप्नोतीत्यर्थः । 'भक्त्या त्वनन्यया शक्य' इत्यनेनैकार्थ्यात्" इति वेदार्थसङ्ग्रहे प्रतिपादितम् ; **य एनं विदुरमृतास्ते भवन्ति ।** स्पष्टोऽर्थः ॥ ९ ॥

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।** ज्ञायते अनेनेति व्युत्पत्त्या ज्ञानानि— इन्द्रियाणीत्यर्थः । "सप्त गते — "इत्य-

---

९. मन्त्रोऽयं तैत्तिरीयेऽपि (नारा. १.) । उत्तरार्धं तत्र "य एनम्" इति पाठः। उत्तरार्धं परं श्वेताश्वतरीये (३)। तत्र पूर्वार्धश्च (४) पृथक् पृथक् तत्र ।

१०. इन्द्रियप्रत्याहारादिकं योगाङ्गमाह यदेति । अवतिष्ठन्ते— विषयेभ्यो निवृत्तिं स्थिरतया भजन्ते । अनेनेतीति । एकवचन-

बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥ १० ॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥

धिकरणे(2. 4. 2.)व्यासार्यैस्तथा व्याख्यातत्वात्। बुद्धिश्च न विचेष्टेत। अध्यवसायोपेतं मन एव बुद्धिशब्देनोच्यते । अत एव तत्र भाष्यम्, 'अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यते' इति । तामाहुः परमां गतिम् । 'शरीरान्तस्सञ्चरणं विहाय मोक्षार्थगमनं परमा गतिः' इति तत्रैव स्पष्टम् ॥ १० ॥

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । तां—पूर्वमन्त्रनिर्दिष्टां बाह्याभ्यन्तरकरणधारणां परमां गतिं योग [1]इति मन्यन्ते । उक्तं च व्यासार्यैः, "परमा गतिर्योग इत्यर्थः" इति । अप्रमत्तस्तदा भवति । इन्द्रियाणां निर्व्यापारत्व एव अवहितचित्तता भवति । चित्तावधाने किमर्थमित्यत्राह—योगो हि प्रभवाप्ययौ । योगस्य प्रतिक्षणापायशालितया अवधानमपेक्षितमिति भावः । यद्वा [2]इष्टप्रभवानिष्टाप्ययलक्षणसर्वपुरुषार्थसाधनत्वात् योगस्य, तत्र अप्रमत्तया भवितव्यमिति भावः ॥ ११ ॥

स्तुवतामपि पश्चात् बहुत्वविवक्षया बहुवचनम् । तानि ज्ञानेन्द्रियाणि पञ्च ।

[1] योग इतीति । योगमिति द्वितीयान्तमानुपूर्व्या तत्पृथक्कारेण इति-एवंप्रकारेण स्थिरां तामिन्द्रियधारणां योगमाहुरित्यन्वयो वा । धारणा वस्त्वन्तरेष्वगमनेन स्थापना । उक्तञ्चेति । तां योगमिति मन्त्रमिममनुसृत्य पूर्वमन्त्रे गतिर्योग इत्युक्तमिति भावः । [2] इष्टस्य प्रभवः, अनिष्टस्याप्ययश्च पुरुषार्थौ ।

नैव [1]वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । स्पष्टोऽर्थः ।
[2]प्राणपादे--"सप्त गतेर्विशेषितत्वाच्च" (2. 4 2.) [इति] इन्द्रियाणि सप्तैव, "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्तसप्त" इति सप्तानामेव परलोकगतिश्रवणात् । "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत" इति योगदशायामिन्द्रियाणां परिगणितत्वाच्च सप्तैवेति प्राप्ते—उच्यते—"हस्तादयस्तु स्थितेऽतो नैवम्" । शरीरे स्थिते आदानादिलक्षणकार्योपयोगित्वात् हस्तादयोऽपि इन्द्रियाण्येव । अतो नैवम् । "दशेमे पुरुषे प्राणा आत्मैकादश"—आत्मशब्देन मनोऽभिधीयते,—"इन्द्रियाणि दशैकं च", "एकादश मनश्चात्र" इति श्रुतिस्मृतिभ्यां [इन्द्रियसङ्ख्या निश्चिता ।] न्यूनसङ्ख्यावादा उपकारविशेषाभिप्रायाः, अधिकसंख्या-

1 प्रायः पदार्थाः, चक्षुषा कतिपयांशानां परोक्षया वाचा अन्येषां केषाञ्चित्, मनसा चान्यांशानां ग्रहणात् पूर्णग्राह्या भवन्ति, न तथा परमात्मेत्यर्थः । परमात्मगतविशेषाणामनन्तत्वाच्च तथा दुर्ग्रहत्वम् ।

2 ननु सप्तेन्द्रियाणि प्रागुक्तानि, इदानीं वागपि । तत् कतीन्द्रियाणीति जिज्ञासायां तन्निर्णायकाधिकरणशरीरं दर्शयति—'प्राणपाद' इति । विशेषितत्वाच्चेतीति इतिशब्दपाठे, इत्यनेनेत्यर्थः प्राप्ते इत्यत्र तदन्वयः । कुण्डलित कोशेष्वदृष्टमप्यौचित्यात् शारीरकशास्त्रार्थदीपिकानुसारेण निवेशयन्ति । अधिकसंख्यावाद.—सप्तसप्तेति चतुर्दशेन्द्रियवादादिः ।

अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥
अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥

---

वादाश्च मनोवृत्तिभेदादिति स्थितम् ॥ [1]अमुमेवार्थमुपपादयति— अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते । अस्तीति ब्रुवतः शब्दादन्यत्रेत्यर्थः । तस्योपनिषदेकगम्यत्वादिति भावः ॥ १२ ॥

[2]अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति । [3]तत्त्वं भावयतीति तत्त्वभावः— अन्तःकरणम् । तेन च परमात्मा अस्तीत्येवोपलब्धव्यः । वेदान्त-

---

1 अमुमेवेति । पूर्वार्धोक्तं वागाद्यग्राह्यत्वमेवेत्यर्थः ।

2 ब्रुवतोन्यत्रेति । चक्षुरगोचरत्वात् मनसा पूर्वमतस्यैन्द्राद्य शब्दमात्रेण ज्ञातव्यः। अनन्यप्रोक्ते गतिरत्र नास्तीति श्रुत्तमिति ज्ञाप्यते। न च नैषवाचेत्येतद्विरोधः, तदर्थस्यान्यथा प्रागुक्तत्वात् ।

3 अत्र यद्यपि–परमात्मा अस्तीत्येव पूर्वमुपलब्धव्यः; अथोभयो-र्जीवपरमात्मनोस्तत्त्वभावेन—'तद्योऽसौ सोऽहम्, योऽहं सोऽसौ' इत्युक्ततद्भावभावनया चोपलब्धव्यः । एवं अस्तीत्येवोपलब्धस्यास्य जीवात्मनः तत्त्वभावना सम्यङ्निष्पद्यते । अध्यात्मयोगाधिगमेन देवं मत्वेति पूर्वमुक्तेः । एवं मत्वेत्यन्तमुपपाद्य, 'हर्षशोकौ जहाति' त्येतदुपपाद्यते उपरितनमन्त्रेणेति सुवचम्–अथापि उभयोरितिपूर्व-मन्त्रप्रस्तुतग्रहणं सरम्यम्। वाङ्मनसाद्यप्राप्यत्वकथनात् द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च कथमयमिति शंकापरिहारश्च कर्तव्योऽस्ति ; अतो विलक्षणयोर्नादिमनसयोरत्र प्रवृत्त्या श्रवणादि सिध्यति। दर्शनं तु न चक्षुरायत्तम्; किन्तु तत्त्वभावरूपान्तःकरण-कार्यमित्यपेक्षितमुच्यते इत्याशयेनान्यथा व्याचष्टे–तत्त्वमित्यादिना ।

वाक्यैरस्तीत्युपलब्धस्य मनसाऽपि अस्तीत्येवं मनननिदिध्यासने कर्तव्ये इत्यर्थः । **उभयोर्हेत्वोः**–उभाभ्यां शब्दमनोरूपाभ्याम् अस्ती त्येवोपलब्धस्य—ज्ञातवतः मुक्ता ब्राह्मणा इतिवदयं निर्देश — **तत्त्वभावः प्रसीदति**–मनः प्रसन्नं भवति । निर्दुष्टं भवतीत्यर्थः ॥१३

---

नन्वयमन्योऽर्थः स्वरसो भवितुमर्हति । प्रतीतिर्हि द्विविधा अस्तीति नास्तीति च । आद्या विधिप्रतीतिः भावप्रतीतिः ; अन्त्या च निषेधप्रतीतिरभावप्रतीतिरिति । तथा च, "असाधारणाकारेण ग्रहणं हि वस्तुनो ग्रहणम् । न च केवलमानन्दादि ग्रहणेऽसाधारणमाकार-मुपस्थापयति । हेयप्रत्यनीको ह्यानन्दादिः ग्रहणेऽसाधारणं रूपम्" इत्यक्षरध्यधिकरण (३-३-१४) भाष्यानुरोधेनेत्थमर्थस्संपद्यते— परमात्मा अस्तीत्येवोपलब्धव्यः। ज्ञानानन्दादिभावरूपेण ग्राह्य।। न तु शशशृङ्गादिवत् केवलनिषेधमात्रेण । एवं तत्त्वभावेन असाधारण-हेय प्रत्यनीकत्वरूपधर्मभावेन चोपलब्धव्यः । उक्तयोरुभयोर्भावाभाव-रूपयोर्मध्ये भावरूपेणोपलब्धस्य परमात्मनोऽसाधारणोऽभावरूप-धर्मोऽपि प्रसीदति ग्राह्यो भवति । "लब्धरूपे क्वचित् किंचित् तादृगेव निषिध्यते" इति न्यायेन अस्थूलमनण्वित्याद्याकारग्रहणात्पूर्वं ज्ञाना-नन्दादिग्रहणमावश्यकम् । तस्मात्, 'अस्तीति ब्रुवतोऽन्यत्र कथं तदु-पलभ्यत इति कथम्, अस्थूलमित्यादि ब्रुवत्यपि तदुपलम्भात्' इति न शङ्कनीयम् । तथा ब्रुवताऽपि अस्तीति पूर्वमुपलब्धव्यत्वादिति चेत्—सत्यम् ; तथापि ब्रुवतोऽन्यत्र नोपलभ्यत इत्युक्तौ मननध्यान-दर्शनानि न सिध्यन्तीति पूर्वमन्त्रपूर्वोत्तरार्धानुरोधिव्याख्यास्वरस-त्वात् तत्परिहारार्थमेवं व्याख्यातम् ।

श्रुतप्रकाशिकायां तु अस्तीत्येवोपलब्धव्य इत्यादिमन्त्रस्य जीव-ब्रह्मणोस्तादात्म्यविषयत्वं परमतं निरस्य प्रसंगात् संग्रहेण जन्मादि-

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥

---

**यदा सर्वे प्रमुच्यन्ते कामा मर्त्योऽमृतो भवति ।** कामाः—दुर्विषयविषयकमनोरथा हृद्गता यदा शान्ता भवन्ति, तदनन्तरमेवायमुपासक **अमृतो भवति**—अत्रैवोपासनवेलायां ब्रह्मानुभवतीत्यर्थः । **अत्र ब्रह्म समश्नुते**—अत्रैवोपासनवेलायां ब्रह्मानुभवतीत्यर्थः । 'समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य' इत्यत्र भाष्यम्–"अनुपोष्य–शरीरेन्द्रियादिसम्बन्धमदग्ध्वैव यत् अमृतत्वम् उत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते, तदुच्यते, 'यदा सर्वे प्रमुच्यन्ते' इत्यादिकया श्रुत्येत्यर्थः । 'अत्र ब्रह्म समश्नुते' इति च उपासनवेलायां यो ब्रह्मानुभवः तद्विषयमित्यभिप्रायः" इति ॥ १४ ॥

---

परभावविकाररहित्यपरत्वमुक्तम् (३-३-२१) ॥ उभयोरित्यस्य जीवपरयोरित्यर्थस्तु न भवति, पूर्वं तदुभयाप्रस्तावात् । तदपेक्षया एवमर्थो युक्तः–परमात्मा अस्तीति सामान्याकारेणैव पूर्वमुपलब्धव्यः । पश्चात् तत्त्वभावेन असाधारणाकारेण चोपलब्धव्यः । उभयोराकारयोर्मध्ये तत्त्वभावः असाधारणाकारः अस्तीति सामान्याकारेणोपलब्धस्यैव भवतीति । यद्वा अस्तीत्येव—सत्यं ज्ञानमित्युक्तसत्यत्वरूपनिरुपाधिकसत्तया विकारान्तररहित्येन उपलब्धव्यः–तत्त्वभावेन च—ज्ञानानन्दत्वसर्वज्ञत्वाद्यखिलासाधारणगुणत्वेन चोपलब्धव्यः उभयोरनयोर्धर्मयोर्मध्ये तत्त्वभावः–असाधारणगुणवत्त्वं सत्यत्वेनोपलब्धस्यानन्तरं प्रसीदति–सम्यक् ज्ञायते इत्यर्थः । अयमेव श्रुतप्रकाशिकेष्टः स्यात् ।

१४ अयं मन्त्रो बृहदारण्यके (६–४)ऽपि ।

यदा सर्वे प्रभिद्यन्ते हृदयस्येह (स्यैव?) ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥
शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिस्सृतैका ।

---

उक्तमेवार्थमादरेणाभ्यसन्, उपदेष्टव्याश्च एतावानेवेत्युप-संहरति—**यदा सर्वे प्रभिद्यन्ते हृदयस्यैव ग्रन्थयः ।** ग्रन्थयः ग्रन्थिवद्दुर्मोचा रागद्वेषादयो यदैव प्रमुच्यन्त इत्यर्थः । **एतावद-नुशासनम्**—अनुशासनीयम् उपासकस्य कर्तव्यत्वेन उपदेष्टव्यमेतावदेव । वक्ष्यमाणमूर्धन्यनाडीनिष्क्रमणार्चिरादिगमनादिकं न साधकस्य कृत्यम्, किन्तु उपासनप्रीतभगवत्कृत्यमिति भावः ॥ १५ ॥

'विमुक्तश्च विमुच्यते' इति पूर्वमुक्तां द्वितीयां परममुक्तिमाह—**शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका ।** हृदयस्य प्रधाननाड्यः शतं चैका च सन्ति । तासां मध्ये एका सुषुम्नाख्या ब्रह्मनाडी मूर्धानमभिनिस्सृता । **तयोर्ध्वमायन् अमृतत्व-मेति ।** तया नाड्या ऊर्ध्वं ब्रह्मलोकं गच्छन् देशविशेषविशिष्टब्रह्म-प्राप्तिपूर्वकस्वस्वरूपाविर्भावलक्षणां मुक्तिं प्राप्नोति । **विष्वङ्ङन्या उत्क्रमणे भवन्ति ।** अन्यास्तु नाड्यः विष्वक् उत्क्रमणे नाना-विधसंसारमार्गोत्क्रमणायोपयुज्यन्ते । विचित्रगतिना नाड्योऽन्या अन्यो-त्क्रमणे उपयुज्यन्त इति व्यासार्यैर्व्याख्यानम् ।

---

१५. पूर्वं जीवद्दशायां कामविमोक्ष उक्तः । इह प्रायणकालिको हृदयग्रन्थिभेद उच्यते इत्येवंप्रकारेण पौनरुक्त्यपरिहारसम्भवेऽपि सर्वं सर्वत्र विवक्षितमस्तु, उत्तरमन्त्रस्योपसंहारप्रधानत्वादित्याशयेनाह—उक्तमेवेति । हृदयस्यैवेति एवकारपाठः क्वाचित्को भाष्यानुकूलः ।

तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ।

---

इदं च वाक्यं भगवता बादरायणेन उत्क्रान्तिपादे चिन्तितम् । तथा हि—मूर्धन्यया शताधिकया नाड्या विदुषो गमनम् अन्याभिरविदुष इति नियमो नोपपद्यते । नाडीनां भूयस्त्वात् अतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात् । 'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमित्येवं पूर्वपक्षे प्राप्ते—'तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया' इति सूत्रेण सिद्धान्तितम् । तस्य चायमर्थः—तदोक =तस्य जीवस्य ओक = स्थानं हृदयम् अग्रज्वलनं = अग्रे ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनम् । तेन अग्रज्वलनेन प्रकाशितद्वारो भवति । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' इति श्रुतेः । एतावत् विद्वदविद्वत्साधारणम् । विद्वांस्तु शताधिकया मूर्धन्ययैव नाड्या उत्क्रामति । न चास्या नाड्या विदुषो दुर्विवेचत्वम् । विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्यात् विद्याशेषभूततया आत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति । तस्मात् नाडीं विजानातीति तया विदुषो गतिरुपपद्यत इति । प्रकृतमनुसरामः ॥ १६ ॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्नि-

तँ स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।
तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥

---

**वि**प्र: । स्पष्टोऽर्थः । तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । यथा देवदत्तः स्वाच्छरीराद्विलक्षणः इत्युक्ते स्वशब्दः समभिव्याहृत देवदत्तसम्बन्धिपरामर्शी, एवं पूर्वनिर्दिष्टान्तरात्मसंबन्धिपरामर्शी स्वशब्दः । ततश्चायमर्थः—तं जनानामन्तरात्मानं तच्छरीरभूतात् जनशब्दिताचेतनात् प्रवृहेत्—विविच्य जानीयात् । 'जुष्टं यदा पश्यत्यन्यमीशम्' इति श्रुत्युक्तरीत्या धारकत्वनियन्तृत्वशेषित्वादिना विलक्षणं जानीयादित्यर्थः । मुञ्जात्—तृणविशेषात् इषीकां—तन्मध्यवर्तिस्थूलतृणविशेषमिव धैर्येण—ज्ञानकौशलेनेति पूर्वेणान्वयः । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति । उक्तोऽर्थः । द्विर्वचनमुपदेशसमाप्त्यर्थम् ॥ १७ ॥

---

१७. पूर्वार्धं श्वेताश्वतरीयेऽपि (३) । संबन्धीति । स्वादिति पदं विशेष्यं कृत्वा तच्छरीरभूतात् स्वात्-स्वात्मन इत्यपि सुवचम् । एवञ्च स्वशब्दस्य प्रधानकर्तृपरत्वेऽपि न दोषः । ननु कारकचक्रमध्ये कर्तृतया कारकान्तरापेक्षया कर्तुः प्राधान्यम्; प्रधानपरामर्शी च स्वशब्द इति कथमत्र देवदत्तदृष्टान्तेन स्वशब्देन स्वकीयवाचिना परमात्मपरामर्शपूर्वकं तत्संबन्धिवचनमिति चेन्न; कर्तुरपि क्रियाङ्गत्वात् सर्वापेक्षया कर्मकारकस्यैव प्रधानत्वात् प्रधानपरामर्शिना स्वशब्देन परमात्मपरामर्श इत्याशयात् । फलभोक्तृतया कर्तुः पुरुषस्यैव सर्वप्राधान्यात् स एव परामृश्य इति चेत्—अस्तु तर्हि स्वात्मनो जीवादिति अनन्तरोक्तः प्रकार इति । प्रवृहेत्-वृह उद्यमने ॥

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् ।
ब्रह्म प्राप्तो विरजोऽभूत् विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥
स ह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।

---

आख्यायिकार्थमुपसंहरति-**मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्म प्राप्तो विरजोऽभूत् विमृत्युः ।** नचिकेताः मृत्युप्रोक्तामात्मविद्याम्, 'यदा पञ्च' इत्यादिना उक्तं योगविधिं च लब्ध्वा—प्राप्य, 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्युक्तरीत्या ब्रह्म प्राप्य आविर्भूतगुणाष्टकोऽभूदित्यर्थः । **अन्योऽप्येवं यो वित् अध्यात्ममेव**—अध्यात्मविद्यां यः अन्योऽपि वेत्ति, सोऽपि **एवमेव** नचिकेता इवैव भवतीत्यर्थः ॥ १८ ॥

शिष्याचार्ययोः शास्त्रीयनियमातिलङ्घनकृतदोषप्रशमनार्था शान्तिरुच्यते । **स ह नाववतु ।** सः विद्याप्रकाशितः परमात्मा । हशब्दः प्रसिद्धौ । **नौ** शिष्याचार्यौ **अवतु**—स्वस्वरूपप्रकाशनेन रक्षतु । **सह नौ भुनक्तु**—विद्याप्रचयद्वारा आवां सहैव परिपालयतु । यद्वा विश्लेषमन्तरेण आवां सहितावेव यथा स्याव, तथा परिपालयत्वित्यर्थः । **सह वीर्यं करवावहै**—सह सनियमकविद्याप्रदानेन विद्याधारसामर्थ्यं निष्पादयावहै । नियमाभावे विद्या निर्वीर्या भवतीति भावः । **तेजस्वि नावधीतमस्तु**—नौ आवयोः यदधीतम्, तत् तेजस्वि अस्तु—

---

१८. अन्योऽपि योऽध्यात्ममेवंवित्, स ब्रह्म प्राप्तो विरजाः विमृत्युर्भवतीति शाङ्करयोजनायां तच्छब्दघटितवाक्यं कृत्स्नमध्याहार्यम् । अतो लाघवादन्योऽपि योऽध्यात्मं वित्, स एवमेव भवतीति योजितम् ॥

तेजस्वि नावधीतमस्तु । मा विद्विषावहै ।

ओं शान्तिः शान्तिः शान्तिः ॥ हरिः ओं ॥

इति द्वितीयाध्याये तृतीयवल्ली, आदितः षष्ठवल्ली ॥

॥ इति कठोपनिषत् ॥

---

वीर्यवत्तरं भवत्वित्यर्थः । मा विद्विषावहै—'यश्चाधर्मेण विब्रूते यश्चाधर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति' इति स्मृत्युक्तरीत्या अधर्माध्ययनाध्यापननिमित्तो द्वेषः आवयोर्मा भूदित्यर्थः । ओं शान्तिश्शान्तिश्शान्तिः । त्रिर्वचनं सर्वदोषशान्त्यर्थम् ॥

इयञ्चोपनिषत् भगवत्परैवेति भगवता बादरायणेन समन्वया- ध्याये त्रिभिरधिकरणैर्निर्णीतम् । तत्र—

(अत्त्रधिकरणम्)

'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति वाक्ये ब्रह्मक्षत्रयोरोदनत्वनि(?)रूपणेन भोज्यत्वस्य वा भोग्यत्वस्य वा प्रतीतेः तत्प्रतिसम्बन्धी, यस्येति षष्ठ्यन्तयच्छब्दनिर्दिष्टो भोक्ता जीव एव स्यात्, परमात्मनो भोक्तृत्वासम्भवादिति पूर्वपक्षं कृत्वा, 'अत्ता चराचरग्रहणात्, प्रकरणाच्च, गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' विशेषणाच्च, इति चतुर्भिः सूत्रैः सिद्धान्तः कृतः । तथा चायमर्थः —'उभे भवत ओदनः' इति ओदनप्रतिसम्बन्धितया प्रतीयमानः अत्ता परमात्मैव । ब्रह्मक्षत्रशब्दगृहीत- निखिलचराचरसंहर्तृत्वस्यात्र मन्त्रे प्रतिपादनात्—अत्र ब्रह्मक्षत्रशब्दयो

निखिलचराचरलक्षकत्वप्रकार, ओदनशब्दस्य विनाश्यत्वलक्षकत्व प्रकारश्च एतन्मन्त्रव्याख्यानावसरे प्रतिपादितस्तत्रैवानुसधेय — 'महान्तं विभुमात्मानम्' इति प्रस्तुतत्वेन तस्य ब्रह्मप्रकरणमध्यगत त्वाच्च । ननु, 'ऋतं पिबन्तौ' इत्युत्तरमन्त्रे कर्मफलभोगान्वयिनोरेव प्रतिपादनात्, परमात्मनश्च जीववत् कर्तृत्वेन वा अन्त करणवत् करणत्वेन वाऽन्वयासंभवात् परमात्मप्रकरणमध्यगतत्वं नास्तीत्याशङ्क्योक्तम्, 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति । गुहां प्रविष्टौ जीवपरमात्मानावेव । तयोरेवास्मिन् प्रकरणे गुहाप्रवेशदर्शनात् । 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्' इति परमात्मनो गुहाप्रवेश श्रूयते । 'या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती' इति जीवस्यापि गुहाप्रवेशो दृश्यते । अतः द्वयोरपि गुहाप्रवेशदर्शनात् तयोरेव पिब(दपिब)तोश्छत्रिन्यायेन 'ऋतं पिबन्तौ' इति निर्देशस्य संभवात्, ऋतं पिबन्ताविति मन्त्रेण न परमात्मप्रकरणविच्छेद शङ्कयशङ्क. । 'विशेषणाच्च' अस्मिन् प्रकरणे 'ब्रह्मजज्ञं देवमीड्य विदित्वा' इति जीव परयोरुपास्यत्वोपासकत्वादिना विशेषितत्वात् तयोरेवोपासनसौकर्याय एकाधिकरणस्थत्वप्रतिपादनार्थत्वात् ऋतं पिबन्ताविति मन्त्रस्य जीवपर-प्रतिपादकत्वमेव । अत, 'यस्य ब्रह्म च क्षत्रं च' इति मन्त्र· पर-मात्मपर एवेति निर्णीतम् ॥

(प्रमिताधिकरणम्)

तथा—'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते' इति मन्त्रे अङ्गुष्ठमात्रतया

निर्दिश्यमानो जीव एव, अङ्गुष्ठमात्रत्वस्य जीवधर्मतया, 'प्राणाधिप सचरति स्वकर्मभि । अङ्गुष्ठमात्रो रवितुल्यरूप', 'अङ्गुष्ठमात्र पुरुष निश्चकर्ष यमो बलात्' इति श्रुतिस्मृतिप्रसिद्धत्वादिति पूर्वपक्ष कृत्वा— 'शब्दादेव प्रमित', 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्', [1]'कम्पनात्', 'ज्योतिर्दर्शनात्' इति चतुर्भिस्सूत्रै सिद्धान्त कृत । तेषाञ्चायमर्थ । अङ्गुष्ठप्रमित परमात्मा, शब्दादेव 'ईशानो भूतभव्यस्य' इति ईश्वरत्ववाचकेशानशब्दादेव । ननु कथ तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह—'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' । हृदि—हृदये परमात्मनो वर्तमानत्वात् तदपेक्षया अङ्गुष्ठमात्रत्वमुपपद्यते । न च खरतुरगादीनामङ्गुष्ठशून्याना हृदयस्याङ्गुष्ठप्रमितत्वाभावात् तदन्तर्वर्तिन परमात्मन कथमङ्गुष्ठमात्रत्वमिति वाच्यम्, उपासनाविधायिशास्त्रस्य मनुष्याधिकारिकत्वात् तेषा चाङ्गुष्ठसभवात् तद्धृदयवर्तिन अङ्गुष्ठसमपरिमाणहृदयावच्छेदनिबन्धनाङ्गुष्ठप्रमितत्वे नानुपपत्ति 'कम्पनात्' । 'यदिद किंच जगत् सर्व प्राण एजति नि सृतम् । महद्भय वज्रमुद्यतम्' इति समस्तप्राणिकम्पनहेतुभयहेतुत्वस्याङ्गुष्ठप्रमिते आम्नानात् तस्य च परमात्मधर्मत्वस्य 'भीषाऽस्माद्वात पवते' इत्यादिश्रुतिप्रतिपन्नत्वात् अङ्गुष्ठप्रमित परमात्मा । 'ज्योतिर्दर्शनात्' । 'न तत्र सूर्यो भाति न चन्द्रतारकम्' इति अङ्गुष्ठप्रमिते सकलतेजस्छादकज्योतिस्सम्बन्धप्रतिपादनात् तादृशज्योतिस्सम्बन्धस्य आथर्वणे ब्रह्मसम्बन्धितया प्रतिपादितत्वाच्च अङ्गुष्ठप्रमित परमात्मेत्यर्थ ॥

---

1 कम्पनादित्यादिसूत्रद्वय प्रमिताधिकरणशेषभूतम् । अन्तरा अधिकरणद्वयानन्तर स्थितम् ।

(आनुमानिकाधिकरणम्)

तथा—'इन्द्रियेभ्य परा ह्यर्था अर्थेभ्यश्च पर मन । मनसस्तु परा बुद्धि बुद्धेरात्मा महान् पर । महत परमव्यक्तमव्यक्तात् पुरुष पर । पुरुषान्न पर किंचित् सा काष्ठा सा परा गति ।' इति वाक्ये साङ्ख्यप्रक्रियाप्रत्यभिज्ञानात् पञ्चविंशातिरिक्तपुरुषनिषेधाच्च साङ्ख्याभिमतमप्रज्ञात्मक प्रधानमेव अव्यक्तशब्देनाभिधीयत इति, *'आनुमानिकमप्येकेषामिति चेत्'* इति सूत्रखण्डेन पूर्वपक्ष कृत्वा—*'शरीररूपकविन्यस्तगृहीतेर्दर्शयति च'*, 'सूक्ष्म तु तदर्हत्वात्', 'तदधीनत्वादर्थवत्', 'ज्ञेयत्वावचनाच्च', 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्', 'त्रयाणामेव चैवमुपन्यास प्रश्नश्च', 'महद्वच्च' इति सप्तभि सूत्रै सिद्धान्त कृत । तेषाञ्चायमर्थ –आनुमानिक नाव्यक्तशब्दाभिलप्यम् । उपासनोपयोगिवशीकरणाय, 'आत्मान रथिन विद्धि शरीर रथमेव च' इति वाक्ये रथिरथादिभावेन रूपितेषु आत्मशरीरबुद्धिमनइन्द्रियविषयेषु रथरूपकात्मना, 'शरीर रथमेव च' इति विन्यस्तस्य शरीरस्यैवाव्यक्तशब्देन ग्रहणसम्भवात् , अस्मिंश्च प्रकरणे इन्द्रियादिवशीकरणप्रकारस्यैव, 'यच्छेद्वाङ्मनसी प्राज्ञ' इत्यादौ दर्शनात् तदनुसारेण अव्यक्तशब्देन शरीरमेव गृह्यते । ननु कथमव्यक्तशब्देन व्यक्तस्य शरीरस्याभिधानम् । तत्राह—'सूक्ष्म तु तदर्हत्वात्' । भूतसूक्ष्ममव्याकृतावस्थाविशेषमापन्न शरीर भवति । ततश्च कारणवाचिना अव्यक्तशब्देन स्थूल शरीरमेवोपचारादुच्यत इत्यर्थ । नन्वव्यक्तशब्दस्य एवार्थोऽस्तु, कुत स्थूलशरीरे लक्षणा अभ्युपगन्तव्येत्यत्राह—तदर्ह-

त्वादिति । स्थूलशरीरस्यैव कार्यार्हत्वात्, तस्यैव वशीकार्यत्वाय प्रतिपादनस्यापेक्षितत्वात् अव्यक्तशब्देन कारणवाचिना स्थूलशरीरलक्षणा उचितेति भावः । ननु यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते, कापिलतन्त्रसिद्धोपादाने कः प्रद्वेष इत्यत्राह— 'तदधीनत्वादर्थवत्' । अस्मन्मते अव्यक्तस्य परमात्माधीनतया तदधिष्ठितत्वेन प्रयोजनवत्त्वमस्ति ; सांख्यमते तदनभ्युपगमात् तस्य निष्प्रयोजनत्वमिति भावः । 'ज्ञेयत्वावचनाच्च' । यदि तन्त्रसिद्धमव्यक्तमेवाविवक्षिष्यत्, तदाऽस्य ज्ञेयत्वमवक्ष्यत् । व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात् । न चास्य ज्ञेयत्वमुच्यते । अतो न तन्त्रसिद्धस्येह ग्रहणम् । 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्' । 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' इत्यव्यक्तस्य ज्ञेयत्वमनन्तरमेव श्रुतिर्वदतीति चेन्न ; 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति प्राज्ञस्य परमात्मनः प्रकरणात् स एव अशब्दमस्पर्शमिति मन्त्रे ज्ञेयत्वेन निर्दिश्यते, न तन्त्रसिद्धमव्यक्तम् । 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' । अस्मिन् प्रकरणे हि उपायोपेयोपेतॄणां त्रयाणामेव ज्ञेयत्वोपन्यासः, 'अन्यत्र धर्मादन्यत्राधर्मात्—' इति प्रश्नश्च दृश्यते, नाव्यक्तादेः । 'महद्वच्च' । यथा 'बुद्धेरात्मा महान् परः' इत्यत्र आत्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते, एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ॥

इत्थं इयमुपनिषत् सर्वाऽपि परमात्मपरेति त्रिभिरधिकरणैर्निर्णीतम् ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदाराम् ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

॥ इति षष्ठवल्लीभाष्यम् ॥

—:*—*—*:—

इति
श्रीमद्वात्स्यार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकाल
मुनिपादसेवासमधिगतपारमहंस्यस्य
श्रीरङ्गरामानुजमुनेः
कृतिषु
**कठोपनिषत्प्रकाशिका ॥**

श्रीरस्तु । शुभमस्तु ।

---

भगवज्जन्मतत्त्वज्ञो जन्म नैतीति युज्यताम् ।
मृत्युं प्राप्तोऽप्यमृत्युर्यन्नचिकेतास्तदद्भुतम् ॥
यः केनोपनिषद्भाष्यपरिष्कारं प्रणीतवान् ।
कठोपनिषदो भाष्यपरिष्कारमयं व्यधात् ॥
इति श्रीवेदान्तरामानुजमुनिमहादेशिकचरणारविन्दचञ्चरीक—
श्रीरङ्गरामानुजमुनिमहादेशिकलब्धसमस्तवेदान्तार्थ—
वात्स्यवीरराघवाचार्यविरचितः कठोपनिषद्भाष्यपरिष्कारः ॥
श्रीमद्धयवदनपरब्रह्मणे नमः
॥ शुभमस्तु ॥

## कठोपनिषत्तद्भाष्यगतप्रमुखार्थविषयाः ।

विस्तरभिया टिप्पण्यर्थे पट्टिका न दत्ता।

## कठोपनिषदकारादि ।

श्रीः

## श्रुत्यन्तरगताः कठोपनिषदंशाः ।

वल्ली १—उशन्नित्यादि विचेशेत्यन्तं तै. ब्रा. ३-१-१८
- ,, २—५ मु. उ. १. २ ख.
- ,, २—२० तै. ना. १०.; श्वे. उ. ३ अ
- ,, २—२३ मु उ. ६. ख.
- ,, ४—११ बृ. ६-४-१९
- ,, ५—२ तै. ना. १०-६; ४७-२
- ,, ५—१२ श्वे. उ. ६. ख.
- ,, ५—१३ पूर्वार्धम् श्वे. उ. ६ ख.
- ,, ५—१५ मु. उ. ४. श्वे. उ. ६.
- ,, ६—९ तै. ना. १-१० श्वे. उ. ३; ४ ख.
- ,, ,,—१४ बृ. ६-४-७.
- ,, ,,—१७ पूर्वार्धम् श्वे. उ. ३ ख.

परन्तु कचित् कचिदानुपूर्व्यामीषद्भेदः परिष्कारतोऽवगन्तव्यः ॥

## महर्षिनाम.

वाजश्रवस औद्दालकिरारुणिर्गौतमः । (१-१, १०, ११)
तस्य पुत्रो नचिकेताः गौतमः (१-१; ४-१५; ५-६.)
मृत्युनामानि–मृत्युः १-४, यमः १-५, वैवस्वतः १-७, अन्तकः १-२६.

## अपूर्वपदानि.

आजायते १–६, प्रसृष्टम् १–१०, अतिसृज १–२२, अत्यस्राक्षीः २–११, सांपरायः १–३०; २–६, सृङ्का १–१६ : २–३, इत्था २–२५, स्वप्नान्तः–जागरितान्तः ४–४, दुरोणम् ५–२, प्रतिरूपः ५–१०, अङ्गुष्ठमात्रः ४–१२ ; ४–१३ ; ६–१७, प्रवृह्य २–१३, प्रवृहेत् ६–१७, त्रिणाचिकेतः १–१७–१८, ब्रह्मजज्ञः १–१७, नाचिकेत १–१९ ; ३-१, दन्द्रम्यमाणः २–५, व्यतृणत् ४–१, अदितिः ४–७, अश्वत्थः ६–१, वामनः ५–३. उशन् १–१.

## कठोपनिषद्भाष्यगताः शारीरकविचाराः ।

१. इन्द्रप्राणाधिकरणसारः (१–१–११)
२. आत्माधिकरण विचारः (२–३–३)
३. उत्पत्त्यसंभवा(थीपाञ्चरात्रा)धिकरणविचारः (२–२–८)
४. गुहां प्रविष्टाविति सूत्रार्थः (१–२–११)
५. प्रमिताधिकरण सूत्रद्वयार्थविचारः (१-३-२३-२४)
६. ज्योतिर्दर्शनादिति सूत्रार्थः (१-३-४१)
७. कम्पनादिति सूत्रार्थः (१-३-४०)
८. तद्वोकोधिकरणविचारः ४-२-८ (१६)

कठोपनिषद्विषयक शारीरकाधिकरणत्रयम् ।

९. अत्त्रधिकरणम् (१-२-२)
१०. प्रमिताधिकरणम् (१-३-६)
११. आनुमानिकाधिकरणम् (१-४-१)

## पूर्वमीमांसाविचाराः ।

1. तस्य धेनुरिति गवाम् (१०-३-५६)
2. यदि तु ब्रह्मणः (१०-३-७२ सू.)
3. स्वर्गकामाधिकरणांशः (६-१-१)
4. संदिग्धेषु (१-४-२९ सू.)
5. बर्हिराज्याधिकरणम् (१-४-१० सू.)
6. प्रोद्दालधिकरणम् (३-५-७)
7. अहीनाधिकरणम् (३-३-८)
8. समिध्यमानवतीं (५-३-४ सू.)
9. धिष्यन्ताधिकरण (७-४-१)
10. लौकिके दोष— (९-३-९ सू.)
11. अश्वप्रतिग्रहेष्टिनिमित्ताधिकरण (३-४-३४)
12. मुख्यं वा—(१२-२-२३ सू.)
13. भूयसां स्यात् (१२-२-२२)
14. मूलतः शाखाम् (४-२-८)

—:-:—:-:—:-:—

टिप्पण्यां प्रमाणवाक्यग्रहणस्थलेषु आकरनिर्देशः तत्रतत्र कृत एवास्ति । यत्र नास्ति, तावन्मात्रमिह—

एतद्ध स्म वै तै. ब्रा. ३-११-८
अनसन्तात् पा ५-४-१०३
त्रिसुपर्णं पठन्ति तै. ना. ४५-१
अप पुनर्मृत्यु जयति तै.ब्रा ३-११
मां मा वाधस्व-भावप्र. १-२-१२
सांपराये ब्र. सू. ३-३-२७
पराधिकरण-ब्र. सू.३-२-६(३०)

उकारः स्मृ. अथर्वशिखार्थानुवादः
चक्षोस्सूर्यः पुरुषसूक्तम्
इह चेदवेदीत् केन २. ख.
तयोऽसौ ऐ. आ. २-२-४-६
लब्धरूपे. ब्रह्मसिद्धिः

## कठोपनिषदर्थसंग्रहः

नचिकेता यमात् प्राप्य सौमनस्यं पितुर्वरम् ।
स्वर्ग्याग्निज्ञानमप्येव वव्रे मुक्तात्मवेदनम् ॥ १ ॥

स तं प्रशस्य प्रोवाच शब्दैकज्ञेयमात्मगम् ।
तात्पर्यं दान्तभक्तैकलभ्यं सूक्ष्मतमं विभुम् ॥ २ ॥

इन्द्रियार्थमनोबुद्धिजीवदेहान् हयादिवत् ।
स्थितान् देवश्च पश्यन् पदं विष्णोर्भजेदिति ॥ ३ ॥

अङ्गुष्ठमात्रमात्मब्रह्मचिदचित्सर्वशक्तिदम् ।
तमिहामुत्र चाप्येकं ध्यात्वा तादृग्भवेदिति ॥ ४ ॥

पुरमेकादशद्वारमनुवृत्तोऽखिलान्तरम् ।
अपार स्वात्मलोकस्याप्यमुं ज्योतिर्भजेदिति ॥ ५ ॥

अद्भुताश्वत्थकर्तारमभयाय चरन् पथि ।
इहैवाक्षजयी पश्यन् मुच्येतो मन्य साधितिति ॥ ६ ॥

इत्थं कृष्णयजुर्वेदकठोपनिषदि स्थिता ।
षड् वल्ल्यो व्यक्तमेवाहुः श्रीविष्णुं पुरुषं परम् ॥ ७ ॥

वल्लीत्रयात्मकाध्यायद्वयरूपा विभज्यते ।
सेयम् अन्यथ नानाऽऽहुः कठवल्लीखिल तुषा ॥ ८ ॥

### प्रमाण-अकारादि

॥ शुभमस्तु ॥

आचार्यतल्लज श्रीमद्वेदान्तदेशिक विरचितमीशावास्योपनिषद्भाष्यम नुसृत्य केनोपनिषदादिभाष्यप्रणेता श्रीरङ्गरामानुजमुनिवरः भगवद्रा मानुजकर्तृ यत्वामिमनकार्यपूरक श्रीभाष्यगुरुपरम्परायां श्रीमद्वेदान्त देशिकाद्दशम , मुनित्रयशाखाया श्रीपष्ठपराङ्कुशस्वामिनस्तुरीय , पञ्चमत भञ्जनश्रीतातयार्यचरणशरण तदुक्तीरेवाऽऽश्रित्य पञ्चमतभञ्जनग्रन्थस्य मथिता तच्छिष्यश्रीवात्स्यानन्तार्यसेवासमधिगतवेदान्त श्रीब्रह्मतन्त्रस्वा मिन पञ्चदशात्(१५) श्रीपरकालमठगुरुपरम्परानिविष्टात् श्रीज्ञानाब्धि ब्रह्मतन्त्रपरकालमुनीश्वरात् प्राप्तपारमहंस्य , अप्पय्यदीक्षितोक्त्यर्थस्वाभि मतग्रहणस्यानभिमतखण्डनस्य च स्वग्रन्थेषु कर्ता, प्रसिद्धमहाचार्यप्रार्थनात्र स्वग्रन्थे उल्लेखिता श्रीकाञ्च्या श्रीदेशिक दीपप्रकाशमन्दिरसमीपे आश्रमे, विरचितवेदान्तप्रवचनग्रन्थनिर्माणो महाविरक्तो विरराजेति वदन्ति । अथ ब्रह्मचर्यादेव विद्याधिगमसमनन्तरप्राप्तसन्न्यास इति केचित् । पूर्वं गृहस्थ एव, श्रीतातार्यकुमार श्रीलक्ष्मीकुमारतातदेशिकभार्या एतत्सुतेत्यन्ये । कदाचित् महाचार्य भाष्यादिसूक्तिसुधारसानुभवनिमग्नमेनमुपेत्य, अहो मकरन्दास्वादमहिमेति श्लाघे इति, श्रीमद्भिर्मक्षिकासु निरस्तासु मकरन्दास्वादे कोऽन्तराय इति एतेन प्रत्युक्तमिति च किं वदन्ती ॥

भारद्वाजकुले काञ्चीवेलामूरग्रहारत ।
कन्यामासोत्तरप्रोष्ठपदाख्योड्वन्यजातरत् ॥
श्रीमद्वरदविष्णवार्यनामा सामगतल्लज ।
रङ्गरामानुजस्वामीत्याख्यायातो यतीश्वर ॥
षष्टिप्रबन्धनिर्माणे प्रसिद्धोऽयं गुरुर्महान् ।
एतत्कृतप्रबन्धानां निदर्शोऽन्यत्र दृश्यते ॥

श्री

# प्रश्नोपनिषत्

अथर्ववेदीयोपनिषच्छान्तिपाठः —

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ओं शान्तिश्शान्तिश्शान्तिः ]

---

श्री

श्री श्रीनिवासपरब्रह्मणे नमः

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

## श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम् ।

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
क्रमात् प्रश्नोपनिषदं व्याकरिष्ये यथामति ।

---

श्री

श्रीनिवासपरब्रह्मणे नमः ।
श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

### उपनिषद्भाष्यपरिष्कारः

परं ब्रह्म बोद्धुं मुनिं पिप्पलादं समेत्योपसेदुः सुकेशादयः षट् ।
कबन्ध्यादिकैस्तैः पृथक्स्वं क्रमेणाप्यपृच्छन् स च प्रत्युवाच ॥

## प्रथमः प्रश्नः

हरिः ओम् । सुकेशा च भारद्वाजः, शैब्यश्च सत्यकामः, सौर्यायणी च गार्ग्यः, कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः, 'एष ह वै तत्

---

सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाऽऽश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः । भरद्वाजस्यापत्यं पुमान् भारद्वाजः, नामतः सुकेशा ; शिबेरपत्यं शैब्यः, नामतः सत्यकामः ; सूर्यायणस्यापत्यं सौर्यायणिः, ईकारश्छान्दसः–गोत्रतो गार्ग्यः ; कौसल्यो नामतः आ(अ?)श्वलस्यापत्यमाश्वलायनः ; भार्गवो गोत्रतः, विदर्भस्यापत्यं वैदर्भिः ; कबन्धी नामतः कात्यायनो गोत्रतः । ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः । ते ह प्रसिद्धाः । एते उक्ताः सुकेशसत्यकामसौर्यायणिकौसल्यभार्गवकबन्धिनः षडृषयः । ब्रह्मपराः वेदपराः ; वेदैकशरणाः इत्यर्थः । ब्रह्मनिष्ठाः वेदार्थतात्पर्यवन्तः । यद्वा ब्रह्मपराः ब्रह्मज्ञानतत्पराः । ब्रह्मनिष्ठाः तपोनिष्ठाः । 'वेदस्तत्त्वं तपो ब्रह्म'इत्युक्तेः । परं ब्रह्म । परम् उत्कृष्टं निरुपचरितम् ब्रह्म स्वरूपतो गुणतश्च बृहद्भूतं वस्तु अन्वेषमाणाः जिज्ञासमाना इत्यर्थः । एष ह वै तत् सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ हशब्दः

---

१. सुकेशादिकबन्ध्यन्ताः षट् प्रथमं निर्दिष्टाः । तेषामेव व्युत्क्रमेण कबन्ध्यादिसुकेशान्तानां षट् प्रश्नाः षट्सु खण्डेषूपक्षिप्य समाधीयन्ते । अत एव प्रश्नेति नाम । सुकेशा इति दीर्घश्छान्दसः ।

सर्वं वक्ष्यति' इति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥

तान् ह स ऋषिरुवाच, 'भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं [स]त्स्यथ। यथाकामं प्रश्नान् पृच्छत(थ)। यदि विज्ञा-

---

प्रसिद्धौ। वैशब्दोऽवधारणे। एषः=अस्मद्बुद्धौ विपरिवर्तमानः परं ब्रह्मवित्त्वेन प्रसिद्धः पिप्पलाद एव सर्वमस्माकं जिज्ञासितान् अर्थान् वक्तुं प्रभवतीति पर्यालोच्य समिद्भाराद्युपायनपाणयः शास्त्रदृष्टेन विधिना पूज्यं पिप्पलादमुपगता इत्यर्थः ॥ १ ॥

तान् ह स ऋषिरुवाच। स्पष्टोऽर्थः। भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं वत्स्यथ। यथाकामं प्रश्नान् पृच्छत। यदि विज्ञास्यामः, सर्वं ह वो वक्ष्याम इति। यद्यपि पूर्वमेव भवन्तस्तपोब्रह्मचर्यादिसंपन्नाः, तथाऽपि ब्रह्मविद्याग्रहणार्थं पुनरपि शरीरशोषणादिलक्षणतपसा योषित्स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसंकल्पाध्यवसायक्रियानिर्वृत्तिलक्षणाष्टविधमैथुनवर्जनरूपब्रह्मचर्येण आस्तिक्यबुद्धिलक्षणया श्रद्धया युक्तास्सन्तः संवत्सरमात्रं(मत्र²) वासं करिष्यथ; वासं कुर्वन्त्विति यावत्। ततः स्वेच्छानुरोधेन प्रष्टव्यान् अर्थान् पृच्छत। यदि तान् अर्थान् वयं ज्ञास्यामः, तदा वञ्चनमन्तरेण सर्वं

---

२. संवत्स्यथ=अत्र संभूय वत्स्यथ। भाष्ये समुपसर्गरहितः पाठः। विधौ भविष्यत्प्रयोगः विधित्सितस्यावश्यमेव भविष्यत्त्वात् ॥ स्मरणेत्यादि। ब्र वै ग ख ४-७३ स्मरणमित्यादिश्लोकः, "स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥" इति।

स्यामः, सर्वं ह वो वक्ष्यामः' इति ॥ २ ॥

अथ कबन्धी कात्यायन उपेत्य पप्रच्छ, 'भगवन्! कुतो ह वा इमाः प्रजाः प्रजायन्ते' इति ॥ ३ ॥

तस्मै स होवाच-प्रजाकामो ह वै प्रजापतिः स तपोऽतप्यत।

---

वक्ष्यामः। यद्यस्मासु ज्ञातृत्वनिश्चयाभावेन संवत्सरब्रह्मचर्यतपआदौ बहुक्लेशसाध्ये प्रवृत्तिर्न युष्मभ्यं रोचते, तदा सुखेन गन्तव्यमिति भाव। ततश्च गुरोर्ज्ञातृत्वपरीक्षामन्तरेणैव शुश्रूषा कार्येत्ययमर्थः शिक्षितो भवति। तथा गुरोरपि शिष्यसंग्रहे नातीवाऽऽदरः कर्तव्य इत्यर्थश्च सूचित.॥२॥

अथ कबन्धी कात्यायन उपेत्य पप्रच्छ। संवत्सरवासानन्तरमन्यैरनुज्ञात. कबन्धी पिप्पलादस्य समीपं यथाविधि उपगम्य पप्रच्छ। किमिति-भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति। स्पष्टोऽर्थः ॥३

तस्मै स होवाच। एवं पृष्टवते कबन्धिने पिप्पलाद उवाच। प्रजाकामो ह वै प्रजापतिः स तपोऽतप्यत। अत्र प्रजापतिशब्दो ब्रह्मपर.। अस्य कारणवाक्यत्वात्। व्यासार्यैः सर्वव्याख्यानाधिकरणेऽन्नत्यप्रजापतिशब्दस्य ब्रह्मपरत्वस्य समर्थितत्वात्। सः प्रसिद्ध प्रजापतिः

---

संवत्सरब्रह्मचर्यतपआदावित्यत्र संवत्सरतपोब्रह्मचर्यादाविति पाठस्स्यात्।

३. कुत इति कारणप्रश्नः। अत्र सृष्टिप्रयोजनमप्यर्थात् पृष्टमन्तव्यम्, उत्तरत्र एतत्प्रश्ने भोगापवर्गरूपप्रयोजनविवरणात्। अचेतनं चेत् अव्यक्तेन स्वयं परिणमेत्, तत्र प्रयोजनं न स्यादपि। इयं तु सृष्टिः प्रजापतिकर्तृकेति तत्स्वामिकानां प्रजानां भोगापवर्गौ फलत्वेन तेन संकल्पिताविति एतत्समाधिसारः ॥

**स तपस्तप्त्वा [स] मिथुनमुत्पादयते रयिं च प्राणं चेति, एतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥**

**आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः। रयिर्वा एतत् सर्वं यन्मूर्तं चामूर्तं च। तस्मान्मूर्तिरेव रयिः ॥ ५ ॥**

---

परमात्मा प्रजासृष्टिकामनया सृष्ट्यालोचनरूपं तपः अतप्यत कृतवान्। **[स] तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राणं चेति।** एवं स्रष्टव्यं पर्यालोच्य रयिप्राणशब्दितप्रकृतिपुरुषाख्यं मिथुनमुत्पादितवानित्यर्थः। केनाभिप्रायेणेत्यत आह—**एतौ मे बहुधा प्रजाः करिष्यत इति।** प्रजाकामस्य ममैतौ रयिप्राणावनेकप्रकारान् प्राणिन उत्पादयिष्यत इत्यभिप्रायेणेत्यर्थः ॥

रयिप्राणशब्दार्थमाह—**आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः।** आदत्त इत्यादित्यः—भोक्ता। स एव प्राण इत्यर्थः। [आदित्यशब्दितभोक्तृवतिद्वन्द्वितया भोग्यवर्गस्य चन्द्रत्वेन निर्देशः।] तस्य प्राणशब्दितत्वे हेतुः समनन्तरमेव वक्ष्यते। रयिरेव चन्द्रमा इत्यस्याभिप्रेतमर्थमाह—**रयिर्वा एतत् सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः।** मूर्तशब्देन पृथिव्यप्तेजांसि उच्यन्ते। अमूर्तशब्देन वाय्वन्तरिक्षे उच्येते। सर्वमपि भूतजातं रयिः अन्नं भोग्यमित्यर्थः। तस्मात् मूर्तिशब्दितं पाञ्चभौतिकं शरीरं सर्वं भोग्यमेवेत्यर्थः ॥

---

५. समनन्तरम् = षष्ठे वाक्ये। "द्वे वाव ब्रह्मणो रूपे" इति बृहदारण्यकानुरोधेनाह—मूर्तशब्देनेत्यादि। शरीरमिति। घटपटकाष्ठपाषाणादि सर्वमप्येकैकचेतनशरीरमेव, यथा अहल्याशिला। अत एव दधिभाण्डमोक्षदानम् ॥

अथाऽऽदित्यः। उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते । यत् दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशः, यत् सर्वं प्रकाशयति, तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते ॥ ६ ॥

---

अथाऽऽदित्यः । रयिनिरूपणानन्तरमादित्यः । वर्ण्यत इति शेष । आदित्यशब्दितस्य भोक्तुः प्राणशब्दितत्वे हेतुरुच्यत इति यावत् । **उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु संनिधत्ते । यद्दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत् सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु संनिधत्ते ॥** अयं जीवः सुषुप्तिस्थानात् प्रबुध्यमान एव सन् प्राचीं दक्षिणां प्रतीचीमुदीचीमधश्चोर्ध्वमन्तरादिशश्च सर्वं प्रकाशयन् तत्तद्दिग्वर्तीन्द्रियाणि धर्मभूतज्ञानाख्यरश्मिद्वारा बिभर्ति । तस्मात् स एव सर्वप्राणशब्दितेन्द्रियनिर्वोढृत्वात् प्राण इत्यर्थः । प्राचीं दिशं प्रविशति प्रकाशयति ; प्राच्यान् पदार्थान् उपलभत इति यावत् । **तेन**

---

भक्त–संवत्सरमासादेरुत्तरायणदक्षिणायनाद्युभयात्मकत्वात् रयिप्राणरूपप्रजापतित्वेन रूपणम् । आदित्यस्य चन्द्रमसश्च प्रत्येकमुभयात्मकत्वाभावात्प्रजापतित्वेन रूपणमुपेक्ष्यैकैकस्य प्राणरयिरूपेणैवोक्तिः। उदयन्नित्यारभ्य उदयत्येष सूर्य इत्यन्तं सूर्यस्यैव निरूपकं भवतु। उदयन्निति आदित्यस्य सर्वदिग्वर्तिप्राणशब्दितजीवसंबन्धकथनात् सर्वेषां देवयानगमनसौलभ्यं प्रदर्शितं भवति। स एष इति सूर्यस्य परमात्मात्मकत्वमुच्यताम् । चन्द्रस्य सूर्यवद्दिगपेक्षानिरूपणमर्चिरादिगतिवर्णन एवेदमर्यादि । प्राकृतभोग्यवर्गस्य चन्द्रत्वेन रूपणमादित्यरूपितभोक्तृप्रतिद्वन्द्वित्वात् । चन्द्रस्य भोग्यतया आनुभ-

तस्माद्धेतो । **प्राच्यान्प्राणान् रश्मिषु सन्निधत्ते** पूर्वदिग्वर्तिपदार्थप्रकाशकान् चक्षुरादीन् प्राणान् धर्मभूतज्ञानाख्यरश्मिमुखेनाधितिष्ठति, प्रेरयति । धर्मभूतज्ञानेन तदधिष्ठातृत्वलक्षणसन्निधानाभावे चक्षुरादिना करणेन रूपाद्युपलम्भो न स्यात् । चेतनानधिष्ठितस्य करणस्य कार्यासमर्थत्वादिति भाव । यद्दक्षिणा यत्प्रतीचीमित्यादौ, 'यद्दक्षिणा प्रविशति तेन दाक्षिणात्यान् प्राणान् रश्मिषु सन्निधत्ते, यत्प्रतीचीं प्रविशति तेन प्रतीच्यान् प्राणान् रश्मिषु सन्निधत्ते' इत्यादिशेष पूरणीय । लाघवार्थं श्रुतिपर्याये तदनुक्ति । अत्र प्रजा सिसृक्षु परमात्मा प्रकृतिं पुरुषं च ससर्जेति वक्तव्ये परोक्षरूपेण रयिप्राणशब्दाभ्या तदभिलाप, रयिप्राणयोश्चन्द्रादित्यशब्दाभ्यामभिलापश्च, 'परोक्षप्रिया इव हि देवा' [ऐत० १ ३] इति रीत्या रहस्यार्थस्य स्फुटतरोपदेशानर्हत्वसूचनार्थ ॥ ६ ॥

---

धिकत्वात् । 'तद्देवानामन्नम् । तं देवा भक्षयन्ति" इति सोमस्य भोग्यत्वश्रुतेश्च । आदित्यस्य प्राणरूपजीवाभेदे वक्ष्यमाणरीत्योपपन्ने सति च, जीवाधीनचैतन्यप्रसरात्मकप्रकाशशालिनोऽचेतनस्य भोग्यवर्गस्याऽऽदित्याधीनप्रकाशचन्द्रमस्सादृश्य युज्यते । रयिशब्दिते श्वर्यप्राप्तिश्चान्द्रमसलोकगामिन, प्राणाख्यात्मनिष्ठस्य आदित्यप्राप्तिश्च समनन्तर वक्ष्यत इति च रयिप्राणयोश्चन्द्रादित्यात्मना रूपणम् । एव रयिप्रापकत्वादेव दक्षिणायनकृष्णपक्षरात्रीणा रयित्वम् , प्राणयाथात्म्यानुभावकत्वाच्चोत्तरायणशुक्लपक्षदिनाना प्राणत्वमिति । एतत्सर्वमपि कश्चिदादित्यप्राणाभेदकल्पने हेतु , यत् आदित्यस्योद्यत सर्वदिक्प्रवेशाच्च रश्मिषु सर्वदिक्प्राणसन्निधानञ्च

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते। तदेतदृचाऽभ्युक्तम् ॥ ७ ॥

---

आदित्यो ह वै प्राण इति प्राणशब्दनिर्दिष्टस्य भोक्तृवर्गस्योदयमानस्य परमात्मात्मकतामाह—**स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते** । यः प्राक्प्रस्तुतः प्रजापतिशब्दितो विश्वेषां नराणां नेतृत्वेन **वैश्वानर**शब्दवाच्यः सर्वशरीरतया **विश्वरूप**शब्दितः अग्रनेतृत्वादिगुणयोगेनाग्निशब्दितः, स एष प्राक्प्रजापतिशब्दनिर्दिष्टः परमात्मा 'आदित्यो ह वै प्राणः' इति प्राणशब्दितभोक्तृरूपः सन् उदयत इत्यर्थः । अयं च मन्त्रो वैश्वानराधिकरणे परमात्मपरतया सिद्धवत्कृत्य **भगवता भाष्यकृता** व्यवहृतः । अत एवं व्याख्यातमिति द्रष्टव्यम् । **तदेतदृचाऽभ्युक्तम्** । तदेतद्ब्रह्माभिमुखीकृत्य ऋङ्मन्त्रेणोक्तम् ॥ ७ ॥

---

च प्रसिद्धम्, तत् भाष्यदर्शितरीत्या जीवस्याप्यस्तीति । एवं च चन्द्रादित्यादिसृष्टिकथनमिहेति प्रकृतवाक्ये आदित्यचन्द्रयोर्निरूपणमेवास्तु, उत्तरश्लोकोक्तदक्षिणायनशुक्लकृष्णपक्षादिदेवयानपितृयाणान्तर्गतनिरूपणवत् । विश्वरूपमिति श्लोकश्च सूर्यविषयकः, यथा संवत्सरविषयकः पञ्चपादमित्युपरितनश्लोकः-इत्येवं यद्यपि सुवचम्-

अथापि परमप्रकृतरयिप्राणयोरेव प्रागनिरूपितत्वादपेक्षिततन्निरूपणपरत्वमेव 'आदित्यो ह वा' इत्यादिवाक्यानां युक्तम् । रयिप्राणशब्दयोश्च चन्द्रादित्यादिमात्रपरतया संकोचो न कर्तव्यः । 'कुत इमाः प्रजा' इति प्रश्नवाक्यगतप्रजाशब्दस्याचेतनविशिष्टचेतनपरतया तद्घटकजन्तुमुखादि चेतनाचेतनरूपसर्ववस्तुपरतायाः प्रतमेऽवगमात् । मार्गमध्ये चन्द्रादित्यप्रातिश्च नवमदशमवाक्याभ्या-

विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥८॥

विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः । विश्वरूपं सर्वशरीरम् । जातानि वेदांसि यस्मात् स जातवेदाः, "प्रज्ञा च तस्मात् प्रसृता पुराणी" इति सर्वज्ञानोत्पादकम् । परायणं परं (परम)प्राप्यम् ज्योतिः सर्वप्रकाशकरीतिमन्तम् । एकम्-अद्वितीयम् । तपन्तम् जाठराग्न्यादिरूपेण तपन्तम् ॥ "संतापयति स्वं देहमापादतलमस्तकम्", "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति श्रुतिस्मृतिभ्याम् । हरिणं हरिमित्यर्थः । हरिशब्दस्य नान्तत्वं छान्दसम् । वर्तमानः अनुवर्तमानः । तद्विधेयतया तच्छरीरभूत इति यावत् । सहस्ररश्मिः नानाविधविषयविषयकज्ञानवान् । प्रजानां स्थावरजङ्गमात्मकानां प्राणानां प्राणः धारकः सूर्यः सूर्यवत्प्रकाशकः । एषः जीवः शतधा देवमनुष्यादिनानाविधदेहात्माभिमानशालितया उदयति-सुषुप्तिस्थानादुदयते, सर्गकाले उदयत इति वाऽर्थः ॥ ८ ॥

मैव सेत्स्यतीति किमादौ तदुक्तवेति विमृश्य आदित्यशब्दस्य अदितिर्देवतामर्यादयैव योगव्युत्पत्त्या भोक्तृपरत्वमुपवर्ण्य प्रसिद्धचन्द्रादित्यप्रस्ताव इह नाऽऽदृत । एवञ्च चन्द्रमशब्दोऽपि 'चदि आह्लादने' इत्येव भोग्यपरो ग्राह्य ॥] सर्वव्याख्यानाधिकरणश्रुतप्रकाशिकाया अप्यत्रैव तात्पर्यमिति भावः ।

संवत्सरो वै प्रजापतिः । तस्यायने दक्षिणं चोत्तरं च । तत् ये ह वै तदिष्टापूर्ते कृतमित्युपासते, ते चान्द्रमसमेव लोकमभिजयन्ते ; त एव पुनरावर्तन्ते । तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाणः ॥ ९ ॥

---

एवं सूक्ष्मप्रकृतिजीवशरीरकस्य प्रजापतेः रयिप्राणशब्दितप्रकृतिपुरुषरूपभोग्यभोक्त्रात्मना विभागमुपवर्ण्य तस्यैव परमात्मनः [अखण्डकालरूपेण स्थितस्य] खण्डकालरूपेण विभागं प्रदर्शयिष्यन् चित्तावतरणाय वा उपासनार्थं वा संवत्सराख्यप्रजापतेर्दक्षिणोत्तरायणात्मकं रयिप्राणरूपं विभागम् , तथा मासाख्यप्रजापतेः रयिप्राणशब्दितं कृष्णशुक्लपक्षात्मकं विभागम् , अहोरात्रात्मककालरूपप्रजापतेः रयिप्राणात्मकं रात्र्यहरात्मकं विभागम् , तत्प्रसङ्गेन रयिशब्दार्थदक्षिणायनकृष्णपक्षरात्र्यपेक्षया प्राणशब्दार्थभूतोत्तरायणशुक्लपक्षदिवसानामुत्कर्षं च वक्तुमारभते — संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च । तस्य संवत्सराख्यकालरूपस्य प्रजापतेर्दक्षिणोत्तरशब्दिते अयने सूर्यगत्याधारभूते द्वे रूपे स्तः । तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते, ते चान्द्रमसमेव लोकमभिजयन्ते त (न्तेऽत) एव पुनरावर्तन्ते ॥ ह वा इति प्रसिद्धौ ; स्मरणे वा । अयमर्थः—तत्—तत्र ये पुरुषाः इष्टापूर्ते दत्तमिति तत् कर्मोपासत इत्यर्थः । 'य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते' इति श्रुत्यन्तरैकार्थ्यात् कृतशब्दो दत्तपरः । इष्टम् यागादि श्रौतम् । पूर्तं=खातादि । इतिशब्दः प्रकारवचनः । यागदानवापीकूपादिकं कर्म येऽनुतिष्ठन्ति, ते चन्द्रमस्संबन्धिनं लोकमभिजयन्ते

अथोत्तरेण, तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्य, आदित्यमभिजयन्ते । एतद्वै प्राणानामायतनम् एतदमृतमभयम्

अभिजयन्ति, प्राप्नुवन्ति । त एव पुनरावर्तन्ते । न त्वात्मोपासका उत्तरमार्गेण गता इत्यर्थः ॥ तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाणः ॥ तस्माद्धेतो एते कर्मठा प्रजास्वर्गादिलक्षणक्षुद्रफलकामा ऋषयः क्षुद्रफलद्रष्टार दक्षिणं पन्थानं पितृयाणशब्दितं प्रतिपद्यन्ते । एष एव पितृयाणः रयिः अन्नप्रधानो वैषयिकभोगात्मक इति यावत् । यद्यपि, 'धूमो रात्रिस्तथा कृष्ण' इत्यादिप्रमाणप्रतिपन्न पुराणेषु दक्षिणमार्गनिर्दिष्टो धूमादिचन्द्रान्त पितृयाणोऽ[प्य]न्य । संवत्सरावयवभूतषण्मासात्मदक्षिणायननिर्दिष्टोऽप्यन्य । तथाऽपि दक्षिणायनशब्देन द्वयोरपि व्यवह्रियमाणत्वात् कालमार्गयोरेकीकृत्य व्यवहार उपपद्यत इति द्रष्टव्यम् ॥ ९

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते । अथशब्दो वाक्यान्तरोपक्रमे । ये तावत् "किं प्रजया करिष्याम" इति विरक्ता ऋषय कायक्लेशादिलक्षणेन तपसा, स्त्रीसङ्गराहित्यलक्षणेन ब्रह्मचर्येण, आस्तिक्यबुद्धिलक्षणया श्रद्धया प्रत्यगात्मविद्यया परमात्मानमुपास्य अर्चिरादिना उत्तरेणायनेन, "आदित्याचन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानव स

१० एष निरोध इत्यस्य 'एतद्वै खलु लोकद्वारं विदुषा प्रपदनं निरोधोऽविदुषाम्' (छा ८ ६ ५) इत्येतदनुसारेणाऽऽदित्यपरत्वसंभवेऽपि, एतद्वै प्राणानामायतनमित्यादेरादित्यापेक्षया पर-

एतत् परायणम् , एतस्मान्न पुनरावर्तन्त इत्येष निरोधः ॥
तदेष श्लोकः ॥ १० ॥—

---

एनान् ब्रह्म गमयति" इत्युक्तप्रकारेण ब्रह्मप्राप्तिद्वारभूतमादित्यमभि-जयन्ते–प्राप्नुवन्तीत्यर्थः । अन्वेष्टव्यतया निर्दिष्टमात्मानं स्तुवन् तेषामपुनरावृत्तिं दर्शयति—**एतद्वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः ।** आयतनशब्दापेक्षयैतदिति नपुंसकलिङ्गनिर्देशः । **प्राणानां** प्राणभृताम् **आयतनम्** आधारभूतम् , "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः" इति परमात्मनः सकलचेतनाधारत्वोक्तेः । एतत् **परायणं** परम (पर) प्राप्य-मित्यर्थः । **एतस्मान्न पुनरावर्तन्ते** । उपासका इति शेषः । उत्तरेण मार्गेण गताः, 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इत्युक्तरीत्या परमात्मानं प्राप्य न निवर्तन्ते इत्यर्थः । **एष निरोधः ।** एषा प्रजा-कामो वै प्रजापतिरिति प्राक्प्रजापतिशब्दनिर्दिष्टः परमात्मा स्व भास्य पुनरावृत्तिनिरोधकारी । अतस्तं परमात्मानं प्रजापतिशब्दितं प्राप्तस्य तदुपासकस्यापुनरावृत्तिरुपपद्यत इति भावः । अत्र, एष इत्येतच्छब्देन प्रजापतिपरामर्शात् आत्मानमन्विष्येत्यात्मशब्दोऽपि प्रजापतिपर एव । अत एवैतत् सर्वमभिप्रेत्य सर्वव्याख्यानाधिकरणे (१ ४ ८) व्याख्यायि , "तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते—

---

मात्मपरत्वेऽधिकस्यारस्यात् पुनरावृत्त्युपस्थापकस्यराश्चैव पुनरा-वृत्तिनिरोधकारी परमात्मेति व्याख्यातम् ।

**पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।**
**अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षडर आहुरर्पितम् इति ॥११॥**

---

एतस्मात् न पुनरावर्तन्ते" इत्यर्चिरादिगत्या अपुनरावृत्तिप्रतिपादनात्, 'प्रजाकामो ह वै प्रजापतिः' इति प्रजापतिशब्दनिर्दिष्टं परं ब्रह्मेति प्रतिपादितमिति द्रष्टव्यम् । [ततश्च प्रजापतिमुपासीनस्यार्चिरादिगत्य-प्रतिपादनात् कथं प्रजापतेः ब्रह्मत्वमिति शङ्का पराकृता]

**तदेष श्लोकः।** तत् तस्मिन् संवत्सरात्मनि प्रजापतौ वक्ष्यमाणः श्लोक इत्यर्थः ॥ १० ॥ **पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम्** ॥ वत्सरसंवत्सरपरिवत्सरेदावत्सरानुवत्सररूपाः पञ्च पादा यस्य स पञ्चपादः; अथवा हेमन्तशिशिरयोरेकीकरणात् षडृतवः पञ्चैव सम्पद्यन्ते । ते पादा यस्य स पञ्चपादः, तम् । **पितरं** सर्वस्य जनकम् । **द्वादशाकृतिं** द्वादशमासाकृतिम् । **दिवः** स्वर्गात् **परे** परस्मिन् **अर्धे** स्थाने । **पुरीषिणम्** । पुरीषशब्देन स्वर्भूमिसंनिहितं

---

११. प्राकृतस्यैव कालकाल्यत्वमिति दर्शयितुमयं श्लोक उपात्तः । वत्सरादिभेदेन अब्दपाञ्चविध्यं विष्णुपुराणे वर्णितम् । पुरीषपदस्य गोळकावरणार्थकत्वं कुत्रापि न दृश्यते । शब्दोऽय-मुदकनामत्वेन निरुक्ते पठितः । शाङ्करेऽपि पुरीषिणमुदकवन्तमिति भाषितम् । तत्र 'आदित्याज्जायते वृष्टिः' इति वृष्ट्युदकस्यान्त-रिक्षगतस्य आनन्दगिरीयोक्तरीत्या ग्रहणे, दिवः परेऽर्धे इत्येतस्यात्वानन्वयमाकलय्य संपूर्णब्रह्माण्डस्य संवत्सरवश्यत्वप्रतिपाद-नाय ब्रह्माण्डावरणोदकग्रहणमत्र विवक्षित्वा भाष्यमिदं प्रवृत्तं

ब्रह्माण्डगोलकावरणमुच्यते । तदस्य स्थानत्वेनास्तीति पुरीषिणमाहुरित्यन्वयः । अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितम् । अथशब्दः पक्षान्तरपरिग्रहे । उशब्दोऽवधारणे । परशब्दः उत्कृष्टवचनः । पूर्वोक्तिभ्योऽन्ये उत्कृष्टाः इमे कालतत्त्वविदः आदित्यादिग्रहसप्तकलक्षणचक्रयुक्ते ऋतुलक्षणारषट्कयुक्ते संवत्सराख्ये रथे जगत् सर्वं विचक्षणं कुशलं निश्चलं यथा भवति तथा अर्पितमित्याहुः ॥ ११ ॥

---

स्याच्चेत्, गोळकावरणमुदकमुच्यत इति पाठः स्यात् । पुरीषशब्दः (सूर्य) मण्डलेपि प्रयुज्यते । पुरीषी इत्यस्य प्रासस्थान इति स्थिरवासी इत्यप्यर्थोऽस्ति । एवञ्च विना क्लेशम्, दिवः परेऽर्धे अवस्थितमित्यप्यर्थः स्यात् । अयं मन्त्रः ऋग्वेदे (मं. २-२२-१६४-१२)पठितः । तत्र सायणभाष्ये, निरुक्तभाष्ये च अर्पितमिति पदं पूर्वार्धेऽप्याकृष्य पुरीषिणं वृष्ट्युदकवन्तं संवत्सरं दिवःपरेऽर्धे—परस्थानगतादित्येऽर्पितमाहुरित्यर्थ उक्तः । शाङ्करेऽपि उ इति पृथक्पदम् । एकपदं कृत्वा [illegible] उपरे उपरतिकारिणि संवत्सरे इति सायणः । निरुक्तभाष्ये तु सप्तेति पृथक्पदं कृत्वा उपरे=उपरिस्थानस्थितास्सप्तर्षय इत्युक्तम् । आदित्येऽर्पितस्संवत्सरः, संवत्सरेऽर्पित आदित्य इति पक्षद्वयभेदस्तत्र ऋगर्थत्वेन दर्शितः । विचक्षणं-विविधद्रष्टारमादित्यमित्यर्थ इति । शाङ्करेऽपि जगत्सर्वमर्पितमाहुरित्येव भाषितम् । ऋग्वेदे एतदुत्तरमन्त्रेपि सर्वजगद्ग्रहणमस्ति, 'पञ्चारे चक्रे परिवर्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा' इति । एवञ्च शाङ्करादिरीत्या पञ्चपादत्वषडरत्वादिकृतः पूर्वोत्तरार्धयोः पक्षभेद इति वक्तव्यम् । उपर इत्यस्यैकपदेऽप्युत्कृष्टा इत्यर्थो घटते इत्यलम् ।

मासो वै प्रजापतिः । तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणः । तस्मादेत ऋषयश्शुक्ल इष्टिं कुर्वन्ति ; इतर इतरस्मिन् ॥ १२ ॥

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति, ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तत्, यत् रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥

---

यथा सवत्सरो रयिप्राणात्मना विभक्तः, एवं मासोऽपि विभक्त इत्युपासनार्थं प्रदर्शयति—**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणः** । स्पष्टोऽर्थः । **तस्मादेते ऋषयः शुक्ल इष्टं कुर्वन्ति ; इतर इतरस्मिन्** ॥ यस्माच्छुक्लः पक्षः प्राणत्वेनोत्कृष्टः, तस्मात् ऋषयः अतीन्द्रियार्थद्रष्टारः सर्वेऽपि शुक्लपक्ष एव शोभनानि कर्माणि कुर्वन्ति । **इतरे** अनृषयोऽज्ञाः पुनः अप्राणतया असारभूते कृष्णपक्षे कुर्वन्तीत्यर्थः ॥ १२ ॥

अमुमेव विभागमहोरात्रेऽप्युपासनाय प्रदर्शयति **अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः** । स्पष्टोऽर्थः । **प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते** । यस्माद्वेतोरहः प्राणरूपत्वम्, अत एव **रत्याः** रत्यर्थम् । प्रयोजनस्य हेतुत्वविवक्षया तृतीया । प्राणभूतेऽह्नि स्त्रीभिर्ये संयुज्यन्ते, त एते प्राणमेव **प्रस्कन्दन्ति** प्रकर्षेण शोषयन्ति । प्राणापचारात् प्राणमेव निघ्नन्तीत्यर्थः । ननु तर्हि स्त्रयोपिद्गमनं गृहस्थैर्न कार्यमित्याशङ्क्य रात्रौ कार्यमित्याह —**ब्रह्मचर्यमेव तत्, यत् रात्रौ रत्या संयुज्यन्ते** । रत्यर्थं रात्रौ स्त्रीसंयोगो ब्रह्मचर्यमेव । मैथुनमेव न भवतीत्यर्थः । तत्र दोषाभावेति यावत् ॥ १३ ॥

अन्नं वै प्रजापतिः । ततो ह वै तद्रेतः । तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥ तद्ये ह तत् (१) प्रजापतिव्रतं चरन्ति, ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोकः ।

येषां तपो ब्रह्मचर्यम्, येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥ तेषामसौ विरजो ब्रह्मलोकः, न येषु जिह्ममनृतं न माया चेति ॥ १६ ॥

इति प्रथमः प्रश्नः ॥

---

ननु प्रकृतिपुरुषकालात्मकं ब्रह्म कथं प्रजानामुपादानमित्युच्यते ; अन्नपरिणाममूतस्य रेतस एव प्रजोपादानत्वदर्शनादित्याशङ्क्याऽऽह—**अन्नं वै प्रजापतिस्ततो ह वै तद्रेतः तस्मादिमाः प्रजाः प्रजायन्त इति** ॥ अन्नावस्थं तदुत्पन्नरेतोवस्थं च यत्, प्रजापतिशब्दितं ब्रह्मैव, अतः प्रकृतिपुरुषसंवत्सरमासादिकालान्नरेतोवस्था-(रूपा)द्ब्रह्मण. सर्वाः प्रजाः प्रजायन्त इति प्रजापतिशब्दितस्य ब्रह्मणः उपादानत्वमुपपद्यत इति भावः ॥ १४ ॥

[1]प्रसङ्गादमुमुक्षुनिन्दापूर्वकं मुमुक्षून् स्तौति— **तद्ये ह वै (१) प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोकः** (वैष लोकः) । तस्मात् ये, अन्नं वै प्रजापतिरिति प्रजापतिशब्दितस्यान्नस्य अन्नं भक्षणं व्रतत्वेनानुतिष्ठन्ति, येऽन्नभक्षणशीला ब्रह्मचर्यरहिता, त एव प्रजा उत्पादयन्ते । एष ब्रह्म लोकः पुत्रपश्वादिलक्षण कार्यभूतब्रह्मरूपो लोक (एष लोकः पुत्रपश्वादिलक्षणो लोकः)

**येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्, तेषामसौ विरजो**

---

1 प्रसंगादिति । उपस्थितस्योपेक्षानर्हत्वं प्रसङ्गः । प्रस्तुतेनान्नेन प्रकृतत्वात् मुमुक्षापूर्वकमेव प्रश्नकरणात् उत्तरं मोक्षे पर्यवसाययतीति भावः ।

ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ येषां कायशोषणाख्यं तप, न भक्षणशीलत्वा, मैथुनवर्जनम् ;–येषु च सत्यवचनं प्रतिष्ठितम्—येषु च 'मनस्यन्यद्वचस्यन्यत् कर्मण्यन्यद्दुरात्मनाम्' इत्युक्तकौटिल्यलक्षणजिह्मत्वं नास्ति ; भूताहितवचनलक्षणमसत्यवचनं नास्ति—तेषामसौ विरजो निर्दोषः ब्रह्मैव लोको ब्रह्मलोकः परब्रह्मरूपं फलमित्यर्थः । तथैव व्यासार्यैः सर्वव्याख्यानाधिकरणे विवृतत्वादिति द्रष्टव्यम् । इतिशब्दः प्रतिवचनसमाप्तौ ॥ १५-१६ ॥

इति प्रश्नोपनिषत्प्रकाशिकायां प्रथमः प्रश्नः ॥ १ ॥

---

१५-१६. शाङ्करे मायाजिह्मानृतानि त्रीणि पृथक्पृथङ्निषिद्धानि । तदा यथा तपस्सत्यब्रह्मचर्याणि त्रीणि परिग्राह्याण्युक्तानि, तथा परिहर्तव्यान्यपि त्रीणीमान्युच्यन्त इत्यौचित्यम् । एवंसति अत्र भाष्ये मायाशब्दव्याख्यानं भ्रष्टं स्यात् । 'अन्यथा आत्मानं प्रकाश्यान्यथैव कार्यं करोति, सा माया मिथ्याचाररूपा' इति शाङ्करम् । यदि तु नञ्द्वयस्यैव श्रवणात् द्वयमेव निषेध्यमभिमतम्, तदा—'मनस्यन्यत्' इत्यादिः 'न माया' इत्यस्य व्याख्या । जिह्ममनृतमिति विशेष्यविशेषणभावापन्नम् । जिह्मपदं भूताहितवचनपरम् । तथा च जिह्मभूतासत्यमात्रनिषेध इति नेतव्यम् । ननु विप्रकृष्टवाचिनः असाविति पदस्य श्रवणादर्चिरादिप्रस्तावाच्च ब्रह्मलोकपदमप्राकृतलोकपरमस्तु, तत्राह–तथैवेति कार्यलोकेऽपि ब्रह्मलोकपदं पूर्ववाक्ये प्रयुक्तम् । तत्रापि ब्रह्मशब्दस्य परब्रह्मपरत्वेन वा चतुर्मुखपरत्वेन वा षष्ठीतत्पुरुषसंभवेऽपि संभवतस्सामानाधिकरण्यस्य त्यागायोगात् ब्रह्मरूपत्वं लोकस्य विवक्ष्यते । असाविति विप्रकृष्टलोकपरामर्शितया विप्रकर्षविवक्षणात् तस्य लोकस्याप्युक्तत्वं सिध्यतीत्याशयः ॥ अत्र प्रथमप्रश्ने 'प्रजाकामो ह वै'

हरिः ओम् । अथ हैनं भार्गवो वैदर्भिः पप्रच्छ, 'भगवन् कत्येव देवाः [1]प्रजां विधारयन्ते ; कतर एतत् प्रकाशयन्ते ; कः पुनरेषां वरिष्ठः इति ॥ १ ॥

तस्मै स होवाच आकाशो ह वा एष देवो वायुरग्निरापः

---

देहेन्द्रियमनःप्राणादिविलक्षणप्रत्यगात्मशोधनाय प्रश्नान् अवतारयति । उक्तं च व्यासार्यैः, "उत्तरेषु खण्डेषु प्रत्यगात्मा विशोध्यते" इति । अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । कबन्धिप्रश्नानन्तरं पिप्पलादं भार्गवो वैदर्भिः पृष्टवान् । किमिति— भगवन् कत्येव देवाः प्रजां विधारयन्ते कतर एतत् प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥ हे भगवन् ! किंसंख्याका देवाः स्थावरजङ्गमात्मिकां प्रजां बिभ्रति । ए[ते]ष्वेव देवेषु कतरे देवा एतच्छरीरं तत्कार्यं (तद्वार्यैः?) प्रकाशयन्ते । कः पुनरेतेषां श्रेष्ठ इति ॥ १

तस्मै स होवाच । स्पष्टोऽर्थः । मुख्यप्राणस्यैव धारकत्व-प्रकाशकत्वश्रेष्ठत्वानि वक्तुमाख्यायिकामाह—आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुःश्रोत्रं च । ह वा इति

---

इत्यादिना प्रजापतेः प्रकृतिपुरुषद्वारा प्रजास्रष्टृत्वमुक्तम्। एवं निमित्त-कारणभूतस्य प्रजापतेरुपादानत्वस्यापि सिद्धये 'स एष वैश्वानर' इत्यादिना जीवस्य तदात्मकत्वमुक्तम् । अथ पुनरावृत्त्यपुनरावृत्ति-विवेचनमारभ्य कालस्यापि परमात्मात्मकत्वमुक्त्वा, ततः पुनरावृत्तौ व्रीह्यादिभावेन स्थित्वा जायमानानां प्रजानामुपादानभूतान्नस्यापि परमात्मकत्ववर्णनेन परमात्मन उपादानत्वं दर्शितम् । एवमत्र पुरुषगतेष्टापूर्तादिकर्मकर्तृत्वमुमुक्षुत्वादिसहकारेण पर-मात्मनस्सर्वविधकारणत्वमिह स्थापितमिति ॥ [1]प्रजाः इति माध्वे ।

**पृथिवी वाङ्मनश्चक्षुः श्रोत्रञ्च । ते प्रकाश्याभिवदन्ति, वयमेतद्[1]-बाणमवष्टभ्य विधारयाम इति ॥ २ ॥**

---

प्रसिद्ध्यतिशये । एषः प्रसिद्ध आकाश । दीव्यति[2] गच्छतीति **देवो** गमनशील । तादृशो वायुश्च । अग्निरापः पृथिवी । स्पष्टोऽर्थः । वाक्छब्देन कर्मेन्द्रियाणि सर्वाण्युपलक्ष्यन्ते, चक्षुःश्रोत्रशब्देन ज्ञानेन्द्रियाणि। **ते प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयाम इति ॥** आकाशादय सर्वे मिलित्वा(ता) पुरोवर्तिशरीर प्रदर्श्य अभित स्थित्वा वदन्ति स्म । किमिति— वय [1]बाणवत्सचारशीलमेतत् पुरोवर्ति शरीरमवलम्ब्य विधारयामः । अवकाशादिविविधकार्यक्षमतया धारयाम इत्यर्थ ॥ २ ॥

---

1 'कायो बाण शरीरञ्च इत्यभिधानात् बाण शरीरम् इति माध्व गीताभाष्ये (२-७-२) । 2 दीव्यति गच्छतीति । ननु वक्ष्यमाणाभिवदनादिकर्तृत्वस्याचेतनेष्वसम्भवादाकाशादिपद तत्तदधिष्ठातृदेवतापरमिति ज्ञापनाय मूले देवपद प्रतिव्यक्त्यन्वयाभिप्रायेण प्रयुक्तमिति सुवचम् । वायोर्गन्तृत्वरूपार्थस्तु वायुपदेनैव लभ्यत इति चेन्न—पूर्वकल्पेव देवा इत्युपक्रमादेव देवतापर्यन्तविवक्षा सर्वत्र स्पष्टेति नात्र तत् वक्तव्यम् । अतो वरिष्ठस्य प्राणस्य 'पिता त्व मातरिश्वन ' इति वक्ष्यमाणरीत्या वायुविकारतया वायौ विशेषगौरव प्रदर्शयितु देव इत्युक्तम् । विशेषगौरव च मातरिश्वपदवाच्यगमनशीलत्वप्रयुक्तमित्यालोच्यैव व्याख्यानात् । ननु 'वाङ्मनश्चक्षु श्रोत्र च । ते प्रीता प्राण स्तुन्वन्ति इति चतुर्णा स्तोतृतयोपादानात् 'या ते तनूर्वाचि (१२)' इत्यादिमन्त्रानुरोधाच्च इन्द्रियान्तराणामाकाशादीना चाभिवदनकर्तृत्वाभावप्रतीतेः कथमाकाशादयस्सर्वे इतीति चेन्न, केनोपनि-

तान् वरिष्ठः प्राण उवाच, 'मा मोहमापद्यथ(थाः) । अहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' इति ॥
तेऽश्रद्दधाना बभूवुः । सोऽभिमानादूर्ध्वमुत्क्र(त्क्रा)मत इव । तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते । तस्मिंश्च (स्मिंस्तु)

---

तान् वरिष्ठः प्राण उवाच । मुख्यः प्राण उवाचेत्यर्थः । किमिति—'मा मोहमापद्यथा । अहमेवैतत् पञ्चधाऽऽत्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामि' इति । 'हे आकाशादयः ईदृशीं विपरीतबुद्धिं मा गच्छत । अहमेव स्वात्मानं प्राणापानव्यानसमानोदानरूपेण पञ्चधा विभज्य धारयामि' इति । एवं वदतो मुख्यप्राणस्यायं भावः—हे आकाशादयः ! भवन्तः अवकाशादिप्रातिस्विककार्यक्षमाः, न तु सर्वकार्यक्षमाः । अहं तु भवतामपि कार्यनिमित्तत्वात् भवत्कार्यक्षमः । मया क्रि(मयाऽक्रि)यमाणे जीवने तु भवत्सु न कोऽपि समर्थः (क्षमः) इति । तेऽश्रद्दधाना बभूवुः । ते तद्वाक्ये विश्वासं न कृतवन्तः ॥ ३ ॥ सोऽभिमानादूर्ध्वमुत्क्रमत इव । ततः स प्राण एषां गर्वमवलोक्य अहंकारावेशादष्टोत्तरशतमर्मस्थानानामुपरि स्वसामर्थ्यं प्रकटयितुं स्वस्थानात् किंचिदुदचलत् । इवशब्दोऽल्पार्थे । साक्षादुत्क्रमणे अप्रति-

---

पदादिदृष्टरीत्या प्राधान्यात् प्रायो वागादिमात्रनिर्देशेऽपीन्द्रियान्तरस्पर्धाया अपि बृहदारण्यका(३-५-२१)दिसिद्धत्वात् । आकाशादीनां शरीराकारपरिणामांशेन बाणमवष्टभ्य विधार्यमाणत्वोपयोगेपि तत्तदधिष्ठातृदेवतानामपीन्द्रियाद्यधिष्ठातृदेवतावत् कलहप्रवृत्त्यस्य संभवेन तस्यात्र विस्पष्टमवगमेन च तत्यागायोगाच्च । स्वासफल्यरूपप्रकाशकत्वं पुनः प्राधान्याद्वागादिमात्रेऽस्तु; 'कतरे' इत्युक्तेः ।

प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते । तद्यथा मक्षिका मधुकरराजा-
नमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते । तस्मिंश्च प्रतिष्ठमाने सर्वा एव
प्रतिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रं च ॥ ते प्रीताः प्राणं स्तुन्वन्ति ॥
एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुः ।

-समाधेः शरीरविनाशः स्यादिति मत्वोत्क्रमणमिव कृतवानिति भावः । तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते । तस्मिन् मुख्यप्राणे उत्क्रामति इतरे सर्वे प्राणा उदक्रामन्-तस्मिंस्तु प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते । शरीरपातभीत्या पुनः प्रतिष्ठां प्राप्नुवति सतीतरेऽपि प्रतिष्ठिता इत्यर्थः । तत्र दृष्टान्तमाह—तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मिंस्तु प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते एवं वाङ्मनश्चक्षुः श्रोत्रं च । यथा मधुकरमक्षिकास्तत्र श्रेष्ठं मक्षिकामुत्क्रामन्तीमनूत्क्रामन्ति, प्रतिष्ठितायां तस्यां स्वयं प्रतिष्ठिता भवन्ति—एवं वागाद्याः प्राणाः मुख्यप्राणानुविधायिनोऽभवन्नित्यर्थः । ते प्रीताः प्राणं स्तुन्वन्ति । मुख्यप्राणमाहात्म्यदर्शनप्रीता वागाद्याः प्राणाः मुख्यप्राणं तुष्टुवुरित्यर्थः । स्तौतेर्न्वित्ययात् स्तनु ॥४॥

स्तुतिमेवाऽऽह— एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो

४ प्रतिष्ठिता इति । ननु प्रतिष्ठमान इति श्रौतपदस्य प्रोपसृष्टतया प्रस्थानमेवार्थस्स्यात्, न तु प्रत्युपसृष्टपदबोध्या प्रतिष्ठेति चेन्-उत्क्रमणप्रतिकोटेरेवात्र वक्तव्यतया प्रोपसृष्टोऽप्ययं धातुः प्रकृते प्रकर्षेण स्थितिरूपां प्रतिष्ठां वदतीति स्वीकार्यत्वात् । यद्वोपरि भूरिप्रयोगानुसारेण प्रातिष्ठमान इति व्याङुपसर्गेणापि घटितः पाठः स्यात्॥ उत्क्रामते प्रतिष्ठन्ते इति दीर्घरहित एव सर्वत्र माध्वपाठः । मधुमक्षिका इति च ।

एष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ ५ ॥
अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।
ऋचो यजूंषि सामानि यज्ञः क्षत्रं [च] ब्रह्म च ॥ ६ ॥
प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।

---

मघवानेष वायुः एष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ एष मुख्यप्राणोऽग्निरूपेण तपति । एष प्राण एव सूर्यः । सर्वेषां प्राणायत्तस्थितिकत्वात्, 'यदधीना यस्य सत्ता तत्तदित्येव भ(ग)ण्यते' इति रीतिमनुसृत्य सामानाधिकरण्येन व्यपदेशो द्रष्टव्यः । रयिर्देवः अन्नभूतो देवः । चन्द्रमा इति यावत् । सदसच्छब्दौ वर्तमाना वर्तमानपरौ वा प्रत्यक्षाप्रत्यक्षपरौ वा स्थूलसूक्ष्मपरौ वा चेतनाचेतनपरौ वा । अमृतशब्दो मोक्षपरः ; तस्यापि तदधीनत्वादिति भावः ॥ ५ ॥

अरा इव [1]रथनाभौ प्राणे सर्वं प्रतिष्ठितम् । चक्रस्य नाभिनेम्योरन्तरालवर्तीनि काष्ठानि अरशब्देनोच्यन्ते चक्रस्य मध्यप्रदेशो नाभिशब्देनोच्यते । यथा अरा नाभावर्पिताः, एवमस्मिन् प्राणे सर्वं प्रतिष्ठितमित्यर्थः । सर्वशब्दार्थं स्पष्टयति—ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥ अत्र ब्रह्मक्षत्रशब्दौ स्थावरजङ्गमात्मकप्राणिमात्रोपलक्षकौ ॥ ६ ॥

एवम् एष इत्यङ्गुल्या निर्दिश्य परम्परं दर्शयित्वा तद्गुणान् संकीर्त्य पश्चात् तमेव मुख्यप्राणमभिमुखीकृत्य स्तुवन्ति—प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे । त्वं प्रजाना रक्षकः सन् प्राणादिवायु-

---

1 भूमविद्यायामेतत्समानाकारके वाक्ये तु प्राणशब्दः प्राणसहचारिजीवपरः ।

तुभ्य प्राण! प्रजास्त्विमा [बलिं हरन्ति] य प्राणैः प्रतितिष्ठसि ॥
देवानामसि वह्नितम पितॄणां प्रथमा स्वधा ।
ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥
इन्द्रस्त्वं प्राण! तेजसा रुद्रोऽसि परिरक्षिता ।

रूपेण गर्भे सञ्चरसि । तथा गर्भोत्पादकतया तत्पालकतया च पितृरूप एव वर्तमान एव त्वमुत्पादकत्वप्रातिलोम्येन पुत्रादिरूपेण जायसे ।

तुभ्य प्राण प्रजास्त्विमाः [बलिं हरन्ति] य प्राणैः प्रतितिष्ठसि ॥ हे प्राण! स्थावरजङ्गमात्मिका इमाः प्रजाः तुभ्य त्वदर्थं त्वच्छेष भूता । [यतो बलिमन्नादिक ते उपहरन्ति ।] यस्त्वं प्राणनादिव्यापारैः सर्वत्र प्राणिषु प्रतिष्ठितोऽसीत्यर्थः ॥ ७ ॥

देवानामसि वह्नितम । वह्नितम हविषां वाहकतम । पितॄणां प्रथमा स्वधा । मुख्य पितृप्रीतिहेतुभूतस्त्वमेवेत्यर्थः । ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ अथर्वाङ्गिरसामृषीणां सत्यमुत्कृष्ट चरितं नित्यनैमित्तिकादिलक्षण कर्म त्वमसीत्यर्थः ॥ ८ ॥

इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता । हे प्राण! त्वमिन्द्रः परमेश्वर इत्यर्थः । इदि परमैश्वर्ये इति हि धातुः । तेजसा सर्वसंहरणसामर्थ्यलक्षणेन तेजसा त्वं रुद्रः रोदनहेतुः, स्थितिकाले

७ बलिं हरन्तीति मूलं तद्व्याख्यानभाष्यं च क्वचिन्न दृश्यते । शाङ्करपाठरीत्या तदावश्यकमेव । अथापि तत्पाठसम्मतौ भाष्ये तुभ्यमित्यस्य त्वामुद्दिश्येत्यर्थो भाषितस्स्यात् न तु त्वदर्था इति । उपरि च यत इत्यध्याहृत्य वाक्यभेदकल्पना न युज्येत । अत तद्रहितपाठ उपलब्धो वास्तवस्स्यात्, यथा माध्वपाठे ।

९ स्व ज्योतिषां पतिरिति स्वपदाधिक्यात् ज्योतिषां पतिरिति

हरिः ओम् । अथ हैनं कौसल्यश्चाऽऽश्वलायनः पप्रच्छ । भगवन्! कुत एष प्राणो जायते । कथमायात्यस्मिन् शरीरे । आत्मानं वा प्रविभज्य कथं प्रतितिष्ठते । केनोत्क्रमते । कथं बाह्यमभिधत्ते । कथमध्यात्ममिति ॥ १ ॥

तस्मै स होवाच-अतिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात् तेऽहं ब्रवीमि ॥ २ ॥

'आत्मन एवैष प्राणो जायते । यथैषा पुरुषे छायैतस्मिन् एतदाततं

---

अथ हैनं कौसल्यश्चाऽऽश्वलायनः पप्रच्छ । स्पष्टोऽर्थः । भगवन् कुत एष प्राणो जायते कथमायात्यस्मिञ्छरीरे । आत्मानं वा प्रविभज्य कथं प्रति(?)तिष्ठते । प्रतितिष्ठते । कथं बाह्यमभिधत्ते कथमध्यात्ममिति ॥ प्रतितिष्ठते प्रतितिष्ठतीत्यर्थः । बाह्यमभिधत्ते बाह्यरूपेण संनिधत्ते इत्यर्थः, बाह्यमित्यस्य संनिधानक्रियाविशेषणत्वात् ॥ १ ॥

तस्मै स होवाच । स्पष्टोऽर्थः । अतिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसि (?) तस्मात् तेऽहं ब्रवीमि ॥ प्रश्नमतिक्रम्य वर्तमानान् प्रश्नयोग्यान् रहस्यान् अर्थान् पृच्छसि । तस्मात् त्वं ब्रह्मिष्ठोऽसि । मायेण ममविदसि । न प्राकृत इति यावत् । अतस्तेऽहं योग्य वाद्ववामीत्यर्थः ॥ २ ॥

प्रथमस्य प्रश्नस्योत्तरमाह — आत्मन एवैष प्राणो जायते । परमात्मन एवैष प्राणो जायत इत्यर्थः । 'एतस्माज्जायते प्राणो मन

१. कौसल्यश्चेति । अत्रैवं चकारश्रवणं नूनं पूर्वप्रश्नस्येवास्यापि प्राणविषयत्वात् समुच्चयविशेषाभिप्रायेण ॥

२. आत्मन एवेति एवकारो न माध्वशांकरयोः ।

मनोकृतेनायात्यस्मिन् शरीरे ॥ ३ ॥

---

सर्वेन्द्रियाणि च" इति श्रुतेरिति द्रष्टव्यम् ।

'कथमायात्यस्मिन् शरीरे' इत्यस्योत्तरमाह—**यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनोकृतेनाऽऽयात्यस्मिञ्छरीरे** । यथा पुरुषे गच्छति छायाऽपि सहैव गच्छति—न हि छायागमने सामग्र्यन्तरमस्ति—एवम् **एतस्मिन्** पुरुषे जीवे, **एतत्** मन । **अकृतेन** अयत्नेन । **कृत**शब्दो यत्नार्थक । यत्नमन्तरेण **आततम्** अविनाभावेन सन्निनम्—एवमेव प्राणोऽप्यकृतेन अयत्नेनास्मिञ्छरीरे आयाति । मन प्राणयो पुरुषच्छायावत् पुरुषाविनाभूतत्वात् पुरुषेण सहैव प्राणस्य सम्बन्ध ।

---

मनोकृतेनेति पाठ एव शाङ्करसम्मतोऽपि । परन्तु 'मन कृतेने'त्यत्र सन्धिरार्षोऽयम् । बुद्धिपूर्वेण्पुण्यादिनेति तदर्थ'इति तत्र । अत्र तु अकृतेनेति सन्ध्यनुगुणच्छेदो दर्शित । एतदाततमित्यस्य प्राणस्य वस्तु आततमित्यर्थ क्लीबनिर्देशात् क्लिष्ट । एवमपि, 'प्राण कथमायात्यस्मिन् शरीरे' इत्येतदुत्तरत्वादस्य वाक्यस्य, 'एष प्राण' इत्यस्य, 'जायते' इत्यत्रेवाऽऽयातीत्यत्राप्यन्वय । यथा छायाया स्वयत्न विनैव गति तथा प्राणस्यापीत्युत्तरमुक्त भवति । ननु मन एव प्राणमस्य प्रेरयतीत्यारेकायां शङ्कानुद्भवाय मनस्साहित्यस्याऽऽगमनलाभाय च एतस्मिन्नेतदाततं मन इति मध्ये उक्तम् । प्राणपुरुषयो पूर्वमुपात्तत्वात् समाहारात् एतस्मिन्नित्यस्य प्राणविशिष्टपुरुषे इत्यर्थ । तदुक्त 'पुरुषे जीव' इति । आयातीति । पुरुषे आयाति सति प्राणोऽप्यायातीत्यर्थ । छाया मनसि प्राणे च दृष्टान्त । अकृतेनेति उभयान्वयि । मनोऽधिकृतेनेति अष्टोत्तरशतोपनिषत्कोशपाठेऽपि मन इति पृथक्पद पूर्वान्वयि । अधि-

यथा सम्राडेवाधिकृतान् विनियुङ्क्ते एतान् ग्रामानेतान्[1] ग्रामान् अधितिष्ठस्वेति, एवमेवैष प्राणः इतरान् प्राणान् पृथक्पृथगेव संनिधत्ते ॥

पायूपस्थे अपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रा(प्रति)तिष्ठते, मध्ये तु समानः। एष ह्येतद्धुतमन्नं समं नयति। तस्माद्

---

अतो न प्राणाऽऽगमने पृथक्कारणमपेक्षितमिति भावः ॥ ३ ॥

'आत्मान प्रविभज्य कथं प्रतितिष्ठते' इति तृतीयप्रश्नोत्तरमाह—

**यथा सम्राडेवाधिकृतान् विनियुङ्क्ते एतान् ग्रामान् एतान् ग्रामानधितिष्ठस्वेति, एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव संनिधत्ते ।** यथा राजा कार्येष्वधिकृतान् स्वसेवकान्, 'इमान् ग्रामान् अधितिष्ठ, इमान् ग्रामानधितिष्ठेति' पृथक्पृथग्विनियुज्य तन्मुखेन तेषु ग्रामेषु यथा(?) संनिधत्ते, एवमेवैष मुख्यप्राणः इतरेषु प्राणेषु ग्रामस्थानीयेषु स्वांशभूतापानव्यानादिमुखेन संनिधत्ते; अधितिष्ठतीति यावत् ॥

**पायूपस्थेऽपानम् चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतितिष्ठते, मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति । तस्मादेताः सप्तार्चिषो भवन्ति ॥** तत्र—पायुश्चोपस्थं च पायूपस्थम्, तस्मिन् । [2]अपानं मूत्रपुरीषापकर्षणं कुर्वंस्तस्मिन् प्रतितिष्ठते प्रतिष्ठितो भवति; तदधिष्ठाता भवतीत्यर्थः । मुखनासिकाभ्यां निर्गतो वायु प्राणरूपस्सन् चक्षुःश्रोत्रे—चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रं

---

कृतेनेत्यादेः प्राणः स्वाधिष्ठानमनःप्रभृतिकरणवर्गेण सह छायावदायातीत्यर्थः । वक्ष्यति चैतत्प्रश्नान्ते मनसा सहाऽऽगमनमिति ॥

1 अधितिष्ठस्वेत्यधिकं भाष्ये । 2. अपानमित्यस्य मूत्रपुरीषापकर्षणमित्यर्थः । अपान इति पाठे कुर्वन्नित्यन्तं तत्कार्यविवरणम् ।

देतास्सप्तार्चिषो भवन्ति ॥ ५ ॥

हृदि ह्येष आत्मा अत्रैतदेकशतं नाडीनाम् । तासां शतं शतमे-कैकस्या (स्यां) द्वासप्तति(तिः) द्वासप्तति (तिः) प्रतिशाखानाडी-

---

तस्मिन् प्राणे निष्ठति प्रतिष्ठितो भवति, तदधिष्ठाता भवतीत्यर्थः । मध्ये तु समानः सन्नवतिष्ठते । एष हि समानो हुतं भुक्तमन्नादिकं **समं नयति** सप्तधातुसाम्यं नयति । सप्तधातुरूपेण विभागं करोतीति यावत् । तस्मात् समानवायोर्हेतो, जाठराग्ने सप्तार्चिषः ज्वालाः काली करालीत्येवमाद्या प्रादुर्भवन्ति ॥ ५ ॥

**हृदि ह्येष आत्मा । अत्रैकशतं नाडीनाम् । तासां शतं शतमेकैकस्या द्वासप्ततिर्द्वा (?) सप्तति प्रतिशाखानाडीसहस्राणि भवन्ति ।** एष जीवात्मा **हृदि** हृदये, यत्र समानरूपेण प्राण आस्ते तत्र, स्वयमपि वर्तते । अत्र हृदये नाडीनामेकाधिकं शतं वर्तते । तासां नाडीनां मध्ये एकैकस्या द्वासप्तति द्वासप्तति प्रभेदा भवन्ति । एकैकं

---

नयतेर्यथाश्रुते द्विकर्मकत्वात् सममित्यस्य साम्यमित्यर्थ उक्तः ।

६. एतदितिपदं भाष्ये न दृश्यते । परन्तु आनन्दगिरीये व्याख्यातम् । अत्र द्वासप्ततिर्द्वासप्ततिरिति प्रथमान्तपाठमादृत्य शाङ्करे व्याख्यातम्—"एकाधिकशते एकैकस्याः शतंशतं शाखानाड्यो भवन्ति । तत्रैकैकस्याः द्वासप्ततिः प्रतिशाखनाडीसहस्राणि भवन्ति" इति । नूनमत्र द्वासप्तति द्वासप्ततिमिति द्वितीयान्तपाठमनुरुध्य प्रतीत्येनत् पृथक्कृत्य तासामेकैकस्याः द्वासप्तति द्वासप्तति प्रति शतशतं शाखा-नाडीसहस्राणि भवन्तीत्येकवाक्यतयैव व्याख्यानम् । पाठश्चायं माध्वसंमतो दृश्यते । परन्तु तत्र व्याख्यानं क्लिष्टम् । 'तासामेकैकस्याः

स्रहस्राणि भवन्ति । आसु व्यानश्चरति ॥ ६ ॥

अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति ; पापेन पापम् ; उभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥

---

द्वासप्ततिप्रभेदं प्रति शाखामूलनाडीसहस्राणि शतंशतं भवन्ति । तासु व्यानश्चरति ॥ तासु नाडीषु व्यानरूपप्राणश्चरतीत्यर्थः ॥ ६ ॥

अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोक नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ अथेति वाक्योपक्रमे । एकया कयाचिन्नाड्योर्ध्वमुख उदान. पुण्येन हेतुना पुण्यं स्वर्गादिलोकम्, पापेन हेतुना पापं नरकादिलोकम्, पुण्यपापाभ्यामेव मनुष्यलोकं नयति ॥

अत्र, 'आत्मानं वा प्रविभज्य कथं प्रतितिष्ठति' इति प्रश्नस्य, 'यथा सम्राडेवे'त्यारभ्य, 'उभाभ्यामेव मनुष्यलोक'मित्येतदन्तं प्रतिवचनम् । तन्मध्ये अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोक नयतीत्यनेन, 'केनोत्क्रमत' इति चतुर्थप्रश्नस्योत्तरमुक्तं भवति ॥ ७ ॥

---

शतंशतं भवन्ति । तत्रैकैकस्याः प्रतिशाखानाडीसहस्राण्यन्तराणि जानीयादिति हि तैः व्याख्यातम् । माध्वमूलोपनिषत्कोशे तु द्वासप्ततिमिति द्वितीयान्तमेव वीप्सारहितं दृश्यते । "शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिस्सृतैका" इति कठाः (६) । हृदयात्पुरीततमभिप्रतिष्ठमानानां हितानामस्नाडीनां द्वासप्ततिसहस्रसंख्याकत्वमुक्तं बृहदारण्यके (४-२) । सुबालोपनिषदि (४) च, "अथेमा दश नाड्यो भवन्ति । तासामेकैकस्यां द्वासप्ततिर्द्वासप्ततिः शाखानाडीसहस्राणि भवन्ति, यस्मिन्नयमात्मा स्वपिति" इति सप्तस्थानभूतनाडीनामपि तत्संख्याकत्वमुक्तम् ॥

आदित्यो ह वै बाह्यः प्राण उदयति एष ह्येनं चाक्षुषं प्राणमनु॰गृह्णानः, पृथिव्यां या देवता, सैषा पुरुषस्यापानमवष्टभ्य । अन्तरा यदाकाशस्स समानः । वायुर्व्यानः ॥ ८ ॥

तेजो ह वा उदानः । तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि

---

'कथं बाह्यमभिधत्ते' इत्यस्योत्तरमाह—**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः ।** चाक्षुषं प्राणं चक्षुर्गोलकवर्तीन्द्रियम् आलोकाख्यसहकारिप्रदानेनानुगृह्णानो बहिः आदित्यरूपेणोदेति । यद्यपि प्राणस्याऽऽदित्यात्मकत्वं न संभवति ; तयोर्भेदात्—तथापि प्राणकलाया सर्वत्र सत्त्वेनाभेदोपचाराद्वा उपासनार्थतया वा बाह्यानामादित्यादीनां प्राणात्मकत्वोक्तिरिति द्रष्टव्यम् । **पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्य ।** पृथिव्या या प्राणकलारूपा देवता, सा पुरुषस्यापानवाय्वधिष्ठितवायूपस्थेन्द्रिये अनुगृह्णाना वर्तत इत्यर्थः । **अन्तरा यदाकाशः स समानः ।** आकाशाधिष्ठातृप्राणकलया आकाशस्यौपचारिकी अभेदोक्तिर्द्रष्टव्या । एवमुत्तरत्रापि । "मध्ये तु समानः । एष ह्येतद्धुतं नयति" इत्यत्रास्य प्राणापानस्थानमध्यवर्तितया हि समानो निर्दिष्टः । बाह्याकाशस्यापि, बाह्यप्राणरूपस्य आदित्यस्य बाह्यापानरूपपृथिव्याश्च मध्यवर्तितया समानत्वं युज्यत इति भावः । **वायुर्व्यानः ।** बाह्यो वायुस्त्वगिन्द्रियाद्यनुगृह्णतो व्यानरूपः ॥८॥

**तेजो ह वा उदानः ।** बाह्यं तेजः उत्क्रमणहेतुत्वादुदानः । तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैर्यच्चित्तस्तेनैष प्राणमायाति । यस्माद्देहो तेजस एवोदानशब्दितोत्क्रमण॰

संपद्यमानैः ॥ ९ ॥ यच्चित्तस्तेनैष प्राणमायाति ।

---

हेतुत्वम्, तस्मादेव—उपशान्ततेजाः अपगतदेहौष्ण्यस्सन् एष मुमूर्षुर्जीवः यच्चित्तः यस्मिंश्चित्तं यस्य स यच्चितः—यत्काम इति यावत्—यादृशमनुष्यदेवादिजन्मकामो भवति, तत्कामनावशेन पुनर्भवशब्दितां पुनरुत्पत्तिं प्राप्तुम्, "वाङ्मनसि संपद्यते", "वाङ्मनसि दर्शनाच्छब्दाच्च" इति श्रुतिसूत्रतद्भाष्योक्तरीत्या मनसा संश्लेषविशेषमापन्नैर्वागादिभिर्दशभिरिन्द्रियैः सहितं प्राणं संमुमूर्षुर्जीव(?) आयाति ।

यद्यपि, "इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इति मुख्यामुख्यप्राणानां जीवोपगम एव श्रूयते ; न तु जीवस्य प्राणोपगमः। सूत्रितं च, "सोऽध्यक्षे तदुपगमादिभ्यः" [४।२।४] इति । तदर्थस्तु तदधिकरणभाष्ये उक्तः । तत्र हि—"यथा वाङ्मनसि संपद्यते मनः प्राणे" इति वचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोः संपत्तिः। तथा, 'प्राणस्तेजसि' इति वचनात् तेजस्येव प्राणः संपद्यत इति प्राप्ते–उच्यते–सोऽध्यक्षे इति । स प्राणः अध्यक्षे–करणाधिपे जीवे संपद्यते । कुतः ? तदुपगमादिभ्यः । प्राणस्य जीवोपगमस्तावच्छ्रूयते । "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति । तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते, "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति ; प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति । प्रतिष्ठा च जीवेन सह श्रूयते "कस्मिन्नुत्क्रान्ते उत्क्रान्तो भविष्यामि । कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि" इति । एवं जीवेन संयुज्य तेन सह तेजस्संपत्तिरिह 'प्राणस्ते·

प्राणस्तेजसा युक्त । स हात्मना यथासङ्कल्पित लोक नयति ॥ १
य एव विद्वान् प्राण वेद, न हास्य प्रजा हीयते, अमृतो भवति । तदेष श्लोक ॥ ११ ॥

---

जसि' इत्युच्यते । ततश्च प्राणो जीवेन सयुज्यैव तेजसि संवध्यते । यथा यमुनाया गङ्गया सयुज्य सागरगमनेऽपि, यमुना सागर गच्छतीति वचो न विरुध्यते, तद्वत् " इति भाषितम्— तथापि अस्य प्रकरणस्य प्राणप्रशमापरत्वाज्जीवस्य प्राणोपगमोक्तिरुपपद्यत इति द्रष्टव्यम् ।

प्राणस्तेजसा युक्त. स हात्मना यथासकल्पित लोक नयति । अनन्तर "प्राणस्तेजसि, तेज परस्या देवतायाम्", इति श्रुत्युक्तरीत्या तेजसा परमात्मना च सयुक्त प्राण तत्तज्जीवात्मसकल्पानुसारेण त त लोक म्रियमाण नयति । ततश्च तेजसा सहितस्यैव प्राणस्योन्नयनहेतुत्वात्तेजसोऽप्युन्नयनहेतुत्वेनोदानत्व युक्तमिति भाव । यद्यपि, प्राणस्तेजसि' इत्यत्र तेजश्शब्देन सर्वाणि भूतान्युच्यन्ते, न तेजोमात्रमिति 'भूतेषु तच्छ्रुते ' [ब्र० सू० ४।२।५] 'नैकस्मिन् दर्शयतो हि' [ब्र० सू० ४।२।६] इति सूत्रभाष्ययो प्रतिपादितम्–तथाऽपि, "भूतान्तरसंसृष्टमेव तेज तेजश्शब्देनाभिधीयते" इति भाष्योक्तेतेजस प्राधान्यात् तदुक्तिरुपपद्यत इति द्रष्टव्यम् ॥ ९ ॥ १० ॥

य एव विद्वान् प्राण वेद न हास्य प्रजा हीयते अमृतो भवति । एवमुत्पत्त्यागमनप्रतिष्ठादिप्रकारेण प्राण य उपास्ते, तस्य पुत्रपौत्रादिलक्षणप्रजाहानिर्न भवति । परिशुद्धप्रत्यगात्मस्वरूपप्रतिपत्तिमुखेन ब्रह्मोपासननिष्पत्तिद्वारा मोक्षहेतुश्च भवतीति द्रष्टव्यम् ॥ तदेष

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा । अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥ १२ ॥

इति तृतीयः प्रश्नः ॥

हरिः ओम् । अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्! एतस्मिन् कानि स्वपन्ति । कान्यस्मिन् जाग्रति । कतर एष देवः स्वप्नान् पश्यति । कस्यैतत् सुखं भवति । कस्मिन्नु सर्वे संप्रतिष्ठिता

---

श्लोकः । तत् प्राणवेदनमधिकृत्य प्रवृत्तोऽयं श्लोक इत्यर्थः ॥ ११ ॥

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा । अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥ उत्पत्तिम्–प्राणस्य परमात्मन उत्पत्तिम् , मनसा सहाऽऽगमनमस्मिन् शरीरे, पायूपस्थादिस्थानेषु स्थितिम् , *'यथा सम्राडेवाधिकृतान्'* इत्युक्त स्वाम्य लक्षणं विभुत्वम् , अध्यात्मं प्राणादिरूपेण पञ्चधा स्थितिम् , चशब्द-समुच्चितमादित्यादिरूपेण पञ्चधा बाह्यमवस्थानं च विज्ञाय अमृतं मोक्षम् अश्नुते प्राप्नोति । द्विर्वचनं प्रतिवचनसमाप्तिद्योतनार्थम् ॥ १२ ॥

इति प्रश्नोपनिषत्प्रकाशिकायां तृतीयः प्रश्नः ॥

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । स्पष्टोऽर्थः । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति । पुरुषे ; सुप्ते सतीति शेषः । शिष्टं स्पष्टम् । कान्यस्मिन् जाग्रति । अत्रापि, सुप्ते सतीति शेषः । कतर एष देवः स्वप्नान् पश्यति । एष द्योतनादिगुणयोगात् देवः जीवः कतरः कीदृशः सन् स्वप्नान् रथादीन् पश्यतीत्यर्थः । कस्यैतत्सुखं भवति । कस्य हेतोः एतद्वैषयिकं सुखमित्यर्थः । कस्मिन्नु सर्वे प्रतिष्ठिता

भवन्तीति ॥ १ ॥

तस्मै स होवाच—यथा गार्ग्य ! मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति, ताः पुनरुदयतः प्रचरन्ति—

---

भवन्तीति । स्पष्टोऽर्थः ॥ १ ॥

**तस्मै स होवाच । स्पष्टोऽर्थः । यथा गार्ग्य ! मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डले एकीभवन्ति, ताः पुनरुदयतः प्रचरन्ति—एवं ह वै तत् सर्वं परे देवे मनस्येकीभवति ।** यथा सायंकालेऽस्तं गच्छतः सूर्यस्य किरणा नानादिक्षु प्रसरणं विना आदित्यमण्डले एकीभवन्ति, पुनश्च उद्यतः सूर्यस्य किरणा नानादिक्षु

---

१ एष देव इति । यद्यपि—परे देवे मनसीति वक्ष्यमाणत्वात् स्वप्ने मनसः प्राधान्याच्च अत्र च पञ्चमवाक्ये च मनो गृह्यते सप्तमवाक्ये, परे आत्मनीति मनसः परो जीवात्मा उच्यते, एष च नवमवाक्यं जीवपरं समन्वितम् । तत्र, परेऽक्षरे आत्मनीति तु परमात्मोच्यते इति सुवचम्; यद्वात्र 'एष हीत्यादिना प्रत्यगात्मा विशोध्यते' इति श्रुतप्रकाशिका, तत्सर्वमित्युक्तं सर्वशब्दार्थं पृथिवीत्यादिना विवृत्य परे आत्मनीत्युक्तजीवस्वरूपशोधनम् एष हीति क्रियत इत्यभिप्रायिका स्यात् । ततश्चात्र, कतर एष इति मनः, कस्येति जीवः, कस्मिन्निति परमात्मा चाभिसंधीयत इत्यपि स्यात्—अथापि, स्वपन्ति जाग्रतीत्यनयोश्चैतन्यकर्तृकत्वेऽपि, पश्यतीत्यस्य चेतनकर्तृकत्वे स्वारस्यात् उपरि, पुरुषो न शृणोतीत्यादिप्रयोगाच्च, एष देव इति जीवपरमेव युक्तमित्याकल्प्यैव व्याख्यातम् । कस्येति । एतत्प्रश्नोत्तरे (६) सुखाश्रयोऽयमित्यनिर्दिश्य सुखनिमित्तस्यैव निर्देशात् प्रश्नवाक्येऽत्र तदनुरोधाय कस्य हेतोरिति भावितम् । उत्तरवाक्यस्य सौषुप्तिकसुखपरं शाङ्करे ।

एवं ह वै तत् सर्वं परे देवे मनस्येकीभवति। तेन तर्ह्येष पुरुषो न शृणोति, न पश्यति, न जिघ्रति, न रसयते, न स्पृशते, नाभिवदते, नादत्ते, नानन्दयते, न विसृजते, नेयायते ; स्वपितीत्याचक्षते ॥ २ ॥

प्राणाग्नय एवैतस्मिन् पुरे जाग्रति। गार्हपत्यो ह वा एषोऽ-

---

प्रसरन्तः प्रकाशका भवन्ति—एवमेतत्सर्वमिन्द्रियजातं परे इतरेभ्य उत्कृष्टे देवे द्योतनादिगुणयुक्ते मनस्येकीभवति । स्वस्वव्यापाराभिमुख्य विरोधिसंश्लेषविशेषयुक्तं भवतीत्यर्थः । तेन तर्ह्येष पुरुषो न शृणोति । तेन-श्रोत्रादीन्द्रियाणामुपरतत्वेनेत्यर्थः । शिष्टं स्पष्टम् । न पश्यति । न जिघ्रति । न रसयति । न स्पृशति ।नाभिवदते। नाऽऽदत्ते। नानन्दयते न विसृजते नेयायते ; स्वपितीत्याचक्षते । आनन्दः उपस्थेन्द्रियकार्यम् । विसर्गस्त्वपायुकार्यम् । नेयायते न गच्छतीत्यर्थः । स्वपितीत्याचक्षत इत्यनेन, 'कानि स्वपन्ती'ति प्रश्नस्य बाह्यज्ञानेन्द्रिय-कर्मेन्द्रियाणि स्वपन्तीत्युत्तरमुक्तं भवति । प्रत्येकमेकत्वाभिप्रायेण स्वपितीत्येकवचनम् । शिष्टं स्पष्टम् ॥ २ ॥

'कान्यस्मिञ्जाग्रति' इत्यस्योत्तरमाह-प्राणाग्नय एवैतस्मिन् पुरे जाग्रति। प्राणापानादिरूपा अग्नय एवैतस्मिन् पुरशब्दनिर्दिष्टे शरीरे जागरं कुर्वन्तीत्यर्थः । स्वापदशायां जाग्रत्सु प्राणादिपञ्चकोच्छ्वासनिश्वास मनोरूपेषु उपासनार्थमग्नित्वसंपत्तिं दिदर्शयिषु-तत्र व्याप्रियमाण

---

२. एयायते इति इण् गतौ यङन्तम् । प्राणनिरूपणे प्रपूर्वण्यन्तनीञधातुप्रयोगः 'केनोपनिषद्यपि (१-९) । ऐतरेयेऽपि, तं देवाः प्राणयन्त । स प्रणीतः (आ. २-७-५) इति ।

*पानः व्यानोऽन्वाहार्यपचनः यत् गार्हपत्यात् प्रणीयते, प्रणयनादाहवनीयः प्राणः* ॥ ३ ॥

यदुच्छ्वासनिश्वासौ, एतावाहुती । सम नयतीति समानः । मनो ह वाव यजमानः । इष्टफलमेवोदानः । स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥

---

मन एव यजमान, अपानो मूलाधारस्थतया गार्हपत्य, तत्संनिहितो व्यानोऽन्वाहार्यपचनशब्दितो दक्षिणाग्नि, अपानवायुमूलक प्राणो गार्हपत्यात्प्रणीयमानाहवनीयतुल्यतयाऽऽहवनीय, तदाधारकौ उच्छ्वासनिश्वासौ 'द्वे आहवनीये' इति निर्दिष्टाहुतिद्वयम्, उच्छ्वासनिश्वासहेतुभूत समानो वायु 'आहुती समं नयति' इति निर्देशयोग्याध्वर्यु, उदानवायुस्तु यजमानस्य लोकान्तरोन्नयनहेतुत्वात् उदान [कर्मफलम्?] इत्यग्निहोत्राहुत्ययवयभूतान् यजमानाग्निवयाहुतिद्वयाध्वर्युकर्मफलभूतान् अष्टापि पदार्थान् प्राणादिपञ्चकोच्छ्वासनिश्वासमनोरूपेष्वष्टसु दर्शयति--
**गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः । यदुच्छ्वासनिश्वासावेतावाहुती । सम नयतीति समानः । मनो ह वाव यजमानः। इष्टफलमेवोदानः । स एनं यजमानमहरहर्ब्रह्म गमयति** ॥ अत्र यद्यपि जीवस्यैव 'एवमेवेमा सर्वा प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोक न विन्दन्ति' [छा० ८।३।२] इति ब्रह्मगमन श्रूयते, न मनस –तथाऽपि मनस पुरीतद्गमनश्रवणात् तद्गतब्रह्मगमयितृत्वोक्तिरुपपद्यत इति द्रष्टव्यम् ॥ ३ ॥ ४ ॥

अत्रैष देवः स्वप्ने महिमानमनुभवति । यद् दृष्टंदृष्टमनुपश्यति, श्रुतंश्रुतमेवार्थमनुशृणोति, देशदिगन्तरैश्च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति, दृष्टं चादृष्टं च श्रुतं चाश्रुतं च अनुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति ; सर्वः पश्यति ॥ ५ ॥

स यदा तेजसाऽभिभूतो भवति, अत्रैष देवः स्वप्नान्न पश्यति ।

---

कतर एष देवः स्वप्नान् पश्यतीत्यस्योत्तरमाह— अत्रैष देवः स्वप्ने महिमानमनुभवति, यद् दृष्टंदृष्टमनुपश्यति, श्रुतं श्रुतमेवार्थमनुशृणोति, देशदिगन्तरैश्च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति, दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति । स यदा तेजसाऽभिभूतो भवति, अत्रैष देवः स्वप्नान्न पश्यति । अत्र अस्मिन्नवसरे एष देवः जीवः स्वप्ने करितुरगादिलक्षणं महिमानमनुभवति पश्यति । जागरे प्राक् यद् दृष्टम् , तमेवार्थमनुपश्यति । अनु-पश्चात् पश्यति-अनुभवति । दृष्टं दृष्टं-भूयो दृष्टमित्यर्थः । श्रुतमेवार्थमनुशृणोति । देशान्तरेषु दिगन्तरेषु प्रत्यहमनुभूतमर्थं पुनः पुनरनुभवति । दृष्टं श्रुतमेवानुभवतीत्ययमपि नियमो नास्ति ; कदाचित् पूर्वाननुभूतमपि स्वशरीरच्छेदनादिकमनुभवति । विद्यमानं चानुभवति ; अविद्यमानं चानुभवति । सर्वः पश्यति सर्वः सन् पश्यति । द्रष्टा श्रोता घ्राता मन्ता वक्ता चेत्यादि-सर्वरूपः सन् पश्यतीत्यर्थः । तदानीं जागरीयबाह्यज्ञानकर्मेन्द्रियाणामुपरतव्यापारत्वेऽपि स्वाप्निकैरीश्वरसृष्टैः शरीरैरिन्द्रियैर्दृष्टृत्वादिमान् सन् अनुभवतीति भावः ॥ ५ ॥ एतस्मिन्नन्तरे, "सता सोम्य तदा संपन्नो

अथ य (त) देतस्मिन् शरीरे [एतत्] सुखं भवति ॥ ६ ॥

स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते—एवं ह वै तत् सर्वं पर आत्मनि संप्रतिष्ठते ॥ ७ ॥

पृथिवी च पृथिवीमात्रा च आपश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा च आकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसनश्च (रसश्च)

---

भवति", "तेजसा हि तदा सम्पन्नो भवति" इति श्रुत्युक्तरीत्या परप्रकाशकतया तेजःशब्दितेन परमात्मना **अभिभूतो भवति** सम्पन्नो भवति=सम्परिष्वक्तो भवतीति यावत्, तदा स्वाप्नान् पदार्थान् पश्यतीत्यर्थः । ततश्च कतर एष देव स्वप्नान् पश्यतीति प्रश्नस्य ब्रह्मसम्पत्तिविरहदशाया मनोमात्रपरिशेषसमये स्वाप्नान् पदार्थान् पश्यतीत्युत्तरमुक्तं भवति ।

'कस्यैतत्सुखं भवती'त्यस्योत्तरमाह-अथ य(त)देतस्मिञ्छरीरे **(एतत्)सुखं भवति** । यत् सुखं भवति, तदेतस्मिञ्छरीरे सत्येव भवतीत्यर्थः । शरीरमेव वैषयिकसुखहेतुरित्युक्तं भवति, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' [छा० ८।१२।१] इति श्रुतेरिति द्रष्टव्यम् ॥६

कस्मिन् सर्वे प्रतिष्ठिता भवन्तीत्यस्योत्तरमाह—**स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते, एवं ह वै तत् सर्वं परे आत्मनि संप्रतिष्ठते** । **वयांसि** पक्षिणः **वासोवृक्षं** निवासवृक्षं प्रति सम्प्रतिष्ठन्ते । स दृष्टान्तो यथा, एवं परमात्मनि सर्वं प्रतिष्ठितं भवतीत्यर्थः ॥ ७ ॥

सर्वशब्दार्थं प्रपञ्चयति—**पृथिवी च पृथिवीमात्रा च** ॥ अत्र पृथिवीमात्राशब्देन पुराणेषु गन्धतन्मात्रशब्दाभिलप्या पृथिवीपूर्वावस्थोच्यते । एवमुत्तरेष्वपि मात्राशब्देषु द्रष्टव्यम् । **आपश्चापोमात्रा च**

अत्रैष देवः स्वप्ने महिमानमनुभवति । यद् दृष्टदृष्टमनुपश्यति, श्रुतश्रुतमेवार्थमनुशृणोति, देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति, दृष्टं चादृष्टं च श्रुतं चाश्रुतं च अनुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति, सर्वः पश्यति ॥ ५ ॥

स यदा तेजसाऽभिभूतो भवति, अत्रैष देवः स्वप्नान्न पश्यति ।

---

कतर एष देवः स्वप्नान् पश्यतीत्यस्योत्तरमाह—**अत्रैष देवः स्वप्ने महिमानमनुभवति, यद् दृष्टंदृष्टमनुपश्यति, श्रुतं श्रुतमेवार्थमनुशृणोति, देशदिगन्तरैश्च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति, दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति । स यदा तेजसाऽभिभूतो भवति, अत्रैष देवः स्वप्नान्न पश्यति ।** अत्र अस्मिन्नवसरे एष देवः जीवः स्वप्ने करितुरगादिलक्षणं महिमानमनुभवति पश्यति । जागरे प्राक् यद् दृष्टम्, तमेवार्थमनुपश्यति । अनु-पश्चात् पश्यति-अनुभवति । दृष्टं दृष्टं-भूयो दृष्टमित्यर्थः । श्रुतमेवार्थमनुशृणोति । देशान्तरेषु दिगन्तरेषु प्रत्यक्षमनुभूतमर्थं पुनः पुनरनुभवति । दृष्टं श्रुतमेवानुभवतीत्ययमपि नियमो नास्ति, कदाचित् पूर्वाननुभूतमपि स्वशरीरच्छेदनादिकमनुभवति । विद्यमानं चानुभवति, अविद्यमानं चानुभवति । **सर्वः पश्यति** सर्वः सन् पश्यति । द्रष्टा श्रोता घ्राता मन्ता वक्ता चेत्यादि-सर्वरूपः सन् पश्यतीत्यर्थः । तदानीं जागरीयबाह्यज्ञानकर्मेन्द्रियाणामुपरतव्यापारत्वेऽपि स्वाप्निकैरीश्वरसृष्टैः शरीरेन्द्रियैर्द्रष्टृत्वादिमान् सन् अनुभवतीति भावः ॥ ५ ॥ एतस्मिन्नन्तरे, "सता सोम्य तदा संपन्नो

अथ य (त) देतस्मिन् शरीरे [एतत्] सुखं भवति ॥ ६ ॥

स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते—एवं ह वै तत् सर्वं पर आत्मनि संप्रतिष्ठते ॥ ७ ॥

पृथिवी च पृथिवीमात्रा च आपश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा च आकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसनश्च (रसश्च)

---

भवति", "तेजसा हि तदा सपन्नो भवति" इति श्रुत्युक्तरीत्या परप्रकाशकतया तेजःशब्दितेन परमात्मना अभिभूतो भवति सपन्नो भवति=सपरिष्वक्तो भवतीति यावत्, तदा स्वाप्नान् पदार्थान्न पश्यतीत्यर्थः। ततश्च कतर एष देवः स्वप्नान् पश्यतीति प्रश्नस्य प्रश्नसपत्तिविरहदशाया मनोमात्रपरिशेषसमये स्वाप्नान् पदार्थान् पश्यतीत्युत्तरमुक्तं भवति।

'कस्यैतत्सुखं भवती'त्यस्योत्तरमाह—अथ य(त)देतस्मिञ्छरीरे (एतत्)सुखं भवति। यत् सुखं भवति, तदेतस्मिञ्छरीरे सत्येव भवतीत्यर्थः। शरीरमेव वैषयिकसुखहेतुरित्युक्तं भवति, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' [छा० ८।१२।१] इति श्रुतेरिति द्रष्टव्यम्॥६

कस्मिन् सर्वे प्रतिष्ठिता भवन्तीत्यस्योत्तरमाह—स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते, एवं ह वै तत् सर्वं परे आत्मनि सम्प्रतिष्ठते। वयांसि पक्षिणः वासोवृक्षं निवासवृक्षं प्रति सम्प्रतिष्ठन्ते। ■ दृष्टान्तो यथा, एवं परमात्मनि सर्वं प्रतिष्ठितं भवतीत्यर्थः ॥ ७ ॥

सर्वशब्दार्थं प्रपञ्चयति—पृथिवी च पृथिवीमात्रा च ॥ अत्र पृथिवीमात्राशब्देन पुराणेषु गन्धतन्मात्रशब्दाभिलप्या पृथिवीपूर्वावस्थोच्यते। एवमुत्तरेष्वपि मात्राशब्देषु द्रष्टव्यम्। आपश्चापोमात्रा च

रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं च हस्तौ चाऽऽदातव्यं च उपस्थश्चाऽऽनन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं च अहङ्कारश्चाहंकर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ ८ ॥

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स परेऽक्षरे आत्मनि संप्रतिष्ठते ॥ ९ ॥

---

तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा च आकाशश्चाऽऽकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसनश्च(रसश्च) रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक्च

.... .... .... .... .... .... .... .... .... ....

नात्मा पुरुषः । स परेऽक्षरे आत्मनि संप्रतिष्ठते । चेतनाचेतनरूपः कर्तृकरणकर्मरूपः सर्वोऽपि प्रपञ्चस्तत्राश्रित इति भावः । अत्र बोद्धा कर्ता विज्ञानात्मेति निर्देशात्, 'आत्मनो ज्ञातृत्वमेव, न ज्ञानरूपत्वमिति वदन्तस्तार्किकाः (श्च) 'ज्ञानत्वमेव न ज्ञातृत्वम्' इति वदन्तो मृषावादिनश्च निरस्ता भवन्ति ॥ ८ ॥ ९ ॥

---

८-९. पृथिवी चेत्यादि पुरुष इत्यन्तं सर्वमिति शब्दस्यार्थप्रपञ्चनम् । तेजश्च विद्योतयितव्यञ्चेत्यत्र तेजश्शब्देन जाठरतेजो ग्राह्यं स्यात् । यद्वा शांकरोक्तमस्तु, 'तेजः त्वगिन्द्रियव्यतिरेकेण प्रकाशविशिष्टा या त्वक् तया निर्भास्यो विषयो विद्योतयितव्यम्' इति । अथवा तेजश्चेननेति माध्वटीका साधिष्ठा । मृषावादिनश्चेति चकारेण कर्तृत्वमात्मनि नेति वदन्तस्सांख्याश्च समुच्चीयन्ते । एवं विलक्षणात्मस्वरूपवचनात् प्रत्यगात्मशोधकमिदं वाक्यमिति ॥

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु (१)सौम्य, स सर्वज्ञस्सर्वो भवति । तदेष श्लोकः ॥ १० ॥

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र ।

---

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सौम्य, स सर्वज्ञः सर्वो भवति ॥ छायाशब्देन ज्ञानसङ्कोचकं कर्मोच्यते । अच्छायमपापमित्यर्थः । अत एवाशरीरम् अलोहितं रूपादिशून्यं शुभ्रं स्वप्रकाशम् अक्षरं क्षरणशून्यं परमात्मानं वेदयते जानाति, स हे सौम्य प्रियदर्शन ! परमेवाक्षरं ब्रह्म वासुदेवं प्रतिपद्य सर्वज्ञो भवति । सर्वो (र्वी) भवति सर्वकामयुक्तो भवति । तदेष श्लोकः । तद् ब्रह्माभिमुखीकृत्यैष श्लोक इत्यर्थः ॥१०॥

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र । शुभ्रमक्षरं वेदयते यस्तु सौम्य स सर्वज्ञः सर्वमेवाऽऽवि

---

१० अच्छायमित्यस्य प्रसिद्धच्छायारहितमित्यर्थोऽपि वर्ण्यते । आत्मस्वरूपस्यामूर्तस्य छायाऽयोगात् दिव्यमङ्गलविग्रहस्यापि निरतिशयज्योतिष्ट्वात् तदसम्भवात् । अतेजसो हि तेजःप्रतिघातिनः छाया भवतीति—अथापि अशरीरमित्यत्र हेतुपरत्वाय अपापमिति व्याख्यातम् ॥ वेदयत इत्यस्य पुनरावृत्त्या, यस्तु वेदयते स सर्वज्ञ इति यच्छब्दद्वयस्य निर्वाह आनन्दगिरीये । अत्र तु यो ह वै तद्वेदयते तादृशस्स तु यः परमेवाक्षरं प्रतिपद्यते स सर्वज्ञ इत्यन्वयो विवक्षित इव । यद्वा यस्तु इत्यत्र प्रतिपद्यत इत्यस्य पुनरावृत्त्या तदादि पृथग्वाक्यम् ।

शुभ्रमक्षरं वेदयते यस्तु (?) सौम्य स सर्वज्ञस्सर्वमेवाऽऽविवेशेति॥
इति चतुर्थः प्रश्नः ॥

हरिः ओम् । अथ हैनं शैब्यस्सत्यकामः पप्रच्छ । स यो ह वै तद्भगवन्! मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत, कतमं वाव स तेन लोकं जयतीति ॥ १ ॥

तस्मै स होवाच—एतद्वै सत्यकाम! परं चापरं च ब्रह्म यदोङ्कारः । तस्माद्विद्वान् एतेनैवायनेनै(वाऽऽयतनेने)कतरमन्वेति ॥२

---

वेशेति ॥ सर्वदेवैः वागादीन्द्रियैः सह मुख्यप्राणाः भूतानि महाभूतानि च जीवात्मा च यत्र प्रतितिष्ठन्ति, तादृशं शुभ्रं सप्रकाशम् अक्षरं निर्विकारं परमात्मानं यो जानाति, स सर्वज्ञः सर्वमपि कामजातम् आविवेश आविशति । 'सर्वेषु लोकेषु कामचारो भवति' इति श्रुत्युक्तरीत्या काम्यमानसर्वलोकसंचारी भवतीत्यर्थः ॥ ११ ॥

इति प्रश्नोपनिषत्प्रकाशिकायां चतुर्थः प्रश्नः ॥ ४ ॥

अथ हैनं शैब्यः सत्यकामः पप्रच्छ । स्पष्टोऽर्थः । स यो ह वै तद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत, कतमं वाव स तेन लोकं जयतीति । ह वै इति प्रसिद्ध्यतिशये । तदित्येतदव्ययम् । स इत्येतदधिकारिसामान्यपरम् । अयमर्थः –हे भगवन् पूजार्ह! योऽधिकारी मनुष्याणां मध्ये मरणान्तमोङ्कारमभिध्यायति, स कतमं लोकं तेनोङ्कारेण प्राप्नोतीत्यर्थः । वावशब्दोऽवधारणे, प्रसिद्धौ वा ॥१

तस्मै स होवाच । स्पष्टोऽर्थः । एतद्वै सत्यकाम परं चापरश्च ब्रह्म यदोङ्कारः । तस्माद् विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति । हे सत्यकाम! एतदेव परं चापरं च ब्रह्म । उभयवाचक

**स यद्येकमात्रमभिध्यायीत, स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते । तमृचो मनुष्यलोकमुपनयन्ते । स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति ॥ ३ ॥**

---

मित्यर्थं । वाच्यवाचकभावनिबन्धनं सामानाधिकरण्यम् । तथैव व्यासार्यैरीक्षतिकर्माधिकरणे व्याख्यातत्वात् । किं तदित्यत्राऽऽह—यदोंकार इति । तस्मादुपासक एतेनैवोंकाररूपेण मार्गेणैकतरं परमपरं वा ब्रह्म अन्वेति उपास्त इत्यर्थः ॥ २ ॥

**स यद्येकमात्रमभिध्यायीत, स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते ।** स उपासकः यद्येकमात्रं ह्रस्वं प्रणवमपरब्रह्मवाचकमभिध्यायीत, अपरब्रह्मवाचकेन ह्रस्वेन प्रणवेन योऽपरं ब्रह्मोपास्ते, स तेनैव —एकमात्रोंकारकरणकापरब्रह्मध्यानेनैव संवेदितः—लब्धसत्त्वाकः जगत्यां भुवि अभिसंपद्यते अभि अभ्यर्हितं श्रेष्ठं संपद्यते । **तमृचो मनुष्यलोकमुपनयन्ते ।** तमृग्मन्त्रा मनुष्यलोकं प्रापयन्ति । **स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति ।** स मनुष्यलोकं नीतः तपसा अनशनादिना, ब्रह्मचर्येण मैथुनवर्जनेन, श्रद्धया आस्तिक्यबुद्ध्या यदि संपन्नो भवति, तदा

---

२ तथैवेति । न तु अवाच्यब्रह्मवादिशाङ्करमत इव ओंकारे ब्रह्मदृष्टिपरतयेति भावः । अन्वेतीत्यस्यान्तिममन्त्र इव प्राप्त्यर्थकत्वमपि सम्भवति । अथापि आदिमफलद्वयानुभवकाले ब्रह्मानुभवाभावात् उपासनपरतया योजनमादृतम् ॥

३ मात्राशब्दः प्रणवघटकाकारादिवर्णेष्वपि माण्डूक्यादौ प्रयुज्यते, अथाप्यत्र चतुर्थार्धमात्राद्यकथनात् कृत्स्ने ओंकारे एकमात्रत्वादिकथनाचार्थशिखोक्तह्रस्वादिमात्राग्रहणम् ॥

अथ यदि द्विमात्रेण मनसि संपद्यते, सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् । स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥४॥

यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये संपन्नः—यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह

---

महिमानं श्रेयस्साधकं ब्रह्मोपासनमनुतिष्ठतीत्यर्थः। न च प्लुतो ह्रस्वाभावात् कथमोंकारस्य ह्रस्वत्वमिति शङ्कनीयम्; न्यूङ्खे ह्रस्वस्य ओंकारस्य दर्शनात्॥

अथ यदि द्विमात्रेण मनसि संपद्यते । द्विमात्रेणापरब्रह्मवाचकेन प्रणवेन यस्य मनसि अपरब्रह्मध्याने संपद्यते—सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् । सः अन्तरिक्षाश्रितं सोमलोकं द्विमात्रोपासकः पुमान् यजुर्मन्त्रैरुन्नीयते । अत्र अन्तरिक्षसोमलोकशब्द ऊर्ध्वमात्रोपलक्षक आमुष्मिकमात्रपरः । अत एव ईक्षतिकर्माधिकरणभाष्ये, "यत् अपरं कार्यं ब्रह्म निर्दिष्टम्, तत् ऐहिकामुष्मिकत्वेन द्विधा विभज्य, एकमात्रं प्रणवमुपासीनानामैहिकं मनुष्यलोकप्राप्तिरूपं फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधाय" इत्युक्तम् । सः सोमलोके विभूतिमनुभूय पुनरावर्तते । अमुष्मिन्नैश्वर्यमनुभूय तत्पुण्यावसाने पुनरावर्तते ॥ ४ ॥

यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत । यस्तु एकमात्रद्विमात्रत्वदशायामर्वाचीनफलसाधनेन एतेनैवाक्षरेण परमात्मानमभिध्यायति आभिमुख्येन ध्यायति—निरन्तरं ध्यायतीत्यर्थः । स तेजसि सूर्ये संपन्नः, यथा पादोदरस्त्वचा

---

न्यूङ्खः ओंकारषोडशकादि। पृष्ठ्यषडहादौ मन्त्रे अनेकार्थीकार-
[illegible]

वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । स विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुक्तः, स सामभिरुन्नीयते ब्रह्मलोकम् । स उपासकः तेजोमण्डले सूर्ये संगतः सन् — उदरमेव पादौ यस्य स पादोदरः; सर्प इति यावत्—यथा सर्पो जीर्णया त्वचा विनिर्मुक्तो भवति, एवं पाप्मना विनिर्मुक्तः सन् भगवल्लोकं वैकुण्ठं सामभिर्गीतिप्रधानैर्मन्त्रैरुन्नीयते । अत्र व्यासार्यैः — स पाप्मना विनिर्मुक्त इति तच्छब्दान्तरश्रवणात् स सामभिरित्येकवचनमाश्रित्य, 'सामगानसहितैरिति वा सान्त्ववचनसहितैः पुरुषैरिति वाऽर्थः' इति ईक्षतिकर्माधिकरणे व्याख्यातम् ॥ स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते । ईक्षतिकर्माधिकरणे, "यस्य हि कर्मनिमित्तं देहित्वम्, स जीवघन इत्युच्यते । चतुर्मुखस्यापि तच्छ्रूयते, "यो ब्रह्माणं विदधाति पूर्वम्" इति भाष्योक्तेः जीवघनशब्देन ससारिमण्डलमुच्यते । "मूर्तौ घनः" इति काठिन्यशब्दितमूर्तौ घनशब्दस्य निपातितत्वात्, देहद्वारत्वादात्मनि काठिन्यस्य, घनशब्दो देहिपर एव । तस्मात् परः परिशुद्धात्मा । तस्मादपि परमं पुरिशयम्— "पूः प्राणिनः सर्व एव गुहाशयस्य" इति सर्वेषु प्राणिष्वन्तरात्मतया शयानम्, "भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने" इति निरुपाधिकपुरुषशब्दवाच्यं भगवन्तं परवासुदेवमीक्षत इत्यर्थः । अत एव, "स सामभिरुन्नीयते ब्रह्मलोकम्" इत्यत्र ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वशङ्का व्युदस्ता, तद्गतानां

५. पूर्वसूत्र इति यजुर्भिरिति च श्रवणादत्रापि सामभिरिति

एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते । तदेतौ श्लोकौ भवतः ॥ ५ ॥

तिस्रो मात्रा मृत्युमन्त्यः प्रयुक्ताः अन्योन्यसक्ता अनविप्रयुक्ताः ।
क्रियासु बाह्या[भ्य]न्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥६

परवासुदेवेक्षणासंभवादिति द्रष्टव्यम् । तदेतौ श्लोकौ भवतः । तत् ओंकारध्यानमधिकृत्य वक्ष्यमाणौ श्लोकौ प्रवृत्तावित्यर्थः ॥ ५ ॥

तिस्रो मात्रा मृत्युमन्त्यः प्रयुक्ताः अन्योन्यसक्ता अनविप्रयुक्ताः। अविप्रयुक्ता न भवन्तीत्यनविप्रयुक्ताः। विप्रयुक्ता इति यावत् । अत्यन्तद्रुतोच्चारणेनान्योन्यसक्ततया, अतिविप्रकृष्टकालतयाऽत्यन्तविप्रयुक्ततया वा प्रयुक्तास्तिस्रो मात्राः मृत्युमन्त्यः मृत्युमदा अनर्थावहा इति यावत् । मृत्युमत्य इति पाठेऽपि स एवार्थः। क्रियासु बाह्यान्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः ॥ यज्ञादिका बाह्याः क्रियाः, आन्तरा मानसक्रियाः, मध्यमा वाचिकजपरूपाः आसु क्रियासु तिसृषु मात्रासु सम्यक् अत्यन्तसंयोगविप्रयोगमन्तरेण प्रयुक्तासु सतीषु ज्ञः तत्तत्प्रयोगाभिज्ञः पुमान् न कम्पते फलात् च्यवत इत्यर्थः ॥ ६ ॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत् कवयो वेदयन्ते । तमोंकारेणैवाऽऽयतनेनान्वेति विद्वान् यत्तच्छान्तमज-

पदविभाग उचितः, अन्तिममन्त्रानुसाराच्च । स इति तु पृथक् । स तेजसि, स पाप्मना इति तच्छन्दद्वयवत् तच्छन्दलयमप्युपपद्यते, अथान्तरक्रियाभेदेन विभिन्नतच्छन्दप्रयोगस्य बहुलं दर्शनादिति भावेनाह सामभिरिति ॥ ऋगादीनां भूर्भुवस्सुवरिति लोकत्रयाभिव्याहृतित्रयजन्यत्वरूपसंबन्धो मनुस्मृ (२-७६)त्युक्तरीत्याऽस्ति । अथाप्यत्र सत्यलोकः परं पदमिति क्षत्रियकर्माधिकरणे व्यक्तम् ।

ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत् कवयो वेदयन्ते । तमोङ्कारेणै-
वाय[न]नेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभय परं चेति ॥७॥

इति पञ्चम· प्रश्नः ।

---

**रममृतमभय पर चेति** ॥ [स विद्वान्] एतं मनुष्यलोकमित्यर्थं । **यत्तत् कवयो वेदयन्ते** । कवयः क्रान्तदर्शिन । 'तद्विष्णो परम पद सदा पश्यन्ति सूरय ' इत्युक्तरीत्या सूरयो यं लोक पश्यन्ति, तम् — ओंकारेणैव मार्गेणान्वेति । गत्वा च शान्तम्–ऊर्मिषट्करहितं अजर-ममृतम्–जरामरणशून्यम् अभयम् अकुतोभय परं सर्वकारणत्वेन सर्वो-त्कृष्ट ब्रह्म च प्राप्नोतीत्यर्थं ॥ ७ ॥

अस्य सदर्भस्य परमात्मपरत्व भगवता बादरायणेन प्रतिपादि-तम् । अत्र हि पृथिव्यन्तरिक्षमाय(क्षब्रह्मलोक) पाठात् ब्रह्मलोकशब्दस्य चतुर्मुखलोकवाचितया तद्गतेनेक्ष्यमाणत्वस्य चतुर्मुख एव सभवाच्चतुर्मुख इति पूर्वपक्षे प्राप्ते, 'ईक्षतिकर्म व्यपदेशात् स ' इति सूत्रेण सिद्धान्तितम् । पुरिशय पुरुषमीक्षत इतीक्षतिकर्मतया व्यपदिश्यमान परमात्मा, शान्तत्वाजरत्वामृतत्वादिपरमात्मासाधारणधर्मव्यपदेशादित्यर्थ इति ॥

इति प्रश्नोपनिषत्प्रकाशिकाया पञ्चम प्रश्न ॥ ५ ॥

---

७ तमिति पूर्वोक्तब्रह्मलोकाभिप्रायेण पुलिङ्गनिर्देश. । यच्छ-ब्दद्वयतच्छब्दद्वयस्य चकारस्य चानुरोधात् पदयोजना क्रमेण निर्देष्टव्याशय । यद्वेदयन्ते = य लोक पश्यन्ति, तम्, शान्तमजर पर यत् तच्चेत्यन्वयः, यत् प्रसिद्ध तच्छान्तादिरूप ब्रह्म चेति वा । *अन्वेतीत्युक्त्वा अनन्तर यत्तच्छान्तमित्याद्युक्ति लोकप्राप्त्यनन्तरभा-वित्वस्य ब्रह्मप्राप्तौ ज्ञापनार्थेति, गत्वा चेत्युक्तम् ।*

हरिः ओम्. अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन्! हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैनं प्रश्नमपृच्छत--षोडशकलं भारद्वाज! पुरुषं वेत्थ इति । तमहं कुमारमब्रुवम्—नाहमिमं वेद; यद्यहमिममवेदिषम्, कथं ते नावक्ष्यमिति । समूलो वा एष परिशुष्यति, योऽनृतमभिवदति । तस्मान्नार्हाम्यनृतं वक्तुम् । स तूर्णीं

---

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । स्पष्टोऽर्थः । भगवन् ! **हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैनं प्रश्नमपृच्छत ॥** हे भगवन् ! हिरण्यनाभनामा कोसलदेशाधिपती राजपुत्रो मत्समीपमागत्य इमं वक्ष्यमाणं प्रश्नं कृतवान् । किमिति--'**षोडशकलं भारद्वाज पुरुषं वेत्थ**' इति । हे भारद्वाजेति मां संबोध्याऽऽह प्राणाद्याः नामान्ताः षोडश कला यस्य स षोडशकलः तं पुरुषं वेत्थ जानासि किमिति इत्यर्थः । **तमहं कुमारमब्रुवम्** '**नाहमिमं वेद; यद्यहमिममवेदिषम्, कथं ते नावक्ष्यम्**' इति । तं राजकुमारमहमेवमुक्तवान्, 'त्वदुक्तं पुरुषमहं न जानामि । यद्यहं जानीयाम्, केन हेतुना राजकुमाराय योग्याय शिष्याय न कथयिष्यामि' इति । **समूलो** [1] **वा एष परिशुष्यति, योऽनृतमभिवदति । तस्मान्नार्हाम्यनृतं वक्तुम् ।**

---

१. नावक्ष्यमितीति इतिशब्दश्रवणात् तावदन्तमेव राजपुत्रं प्रति उक्तम् । समूलइत्यादिकं तु पिप्पलादं प्रतीति युज्यते । तदा त्वयेति भाष्ये पिप्पलादो गृह्यते, 'तं त्वा पृच्छामी'ति वत् । राजपुत्रं प्रति कथन एव तद्वाक्यस्य सम्यगुपयोग इति मन्यते चेत्, त्वयेति राजपुत्रग्रहणम् ॥ २. सोम्येति । सौम्यपदं प्रियदर्शनार्थकं प्रसिद्धम् । सोमात् ट्यण् । तथा सोम्यपदमपि यप्रत्यये तदर्थकं स्यात् (अमरसुधा) ।

रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि, क्वासौ पुरुष इति ॥ १ ॥

तस्मै स होवाच । इहैवान्तःशरीरे सोम्य स पुरुषः, यस्मिन्नेताः षोडश कलाः प्रभवन्तीति ॥ २ ॥

---

योऽनृतं ब्रूते, स मूलेन सह सर्वतः शुष्यति । श्रेयोहेतुभूतं पुण्यं सवासनं नश्यतीत्यर्थः । अतो मदुक्ते त्वयाऽनृतशङ्का न कार्येति भावः । **स तूष्णीं रथमारुह्य प्रवव्राज** । स राजकुमारः प्रश्नस्य प्रयोजनलेशं(?) किमप्यलब्ध्वैव रथमारुह्य प्रवव्राज — प्रकर्षेण गतः । अनेन लज्जा सूचिता । रथेन प्रवव्राजेत्यनेन तस्य प्रभुत्वं सूचितं भवति । **तं त्वा पृच्छामि क्वासौ पुरुष इति** ॥ तमेव षोडशकलं पुरुषं पृच्छामि त्वाम्, क्वासाविति । क प्रदेशे तिष्ठतीत्यर्थः । अत्र आधारभूतदेश-प्रश्नद्वारा जीवो वा परमात्मा वेति निर्णयार्थोऽयं प्रश्न इति द्रष्टव्यम् ॥ १

**तस्मै स होवाच** । स्पष्टोऽर्थः । **इहैवान्तःशरीरे सोम्य स पुरुषः, यस्मिन्नेताः षोडश कलाः प्रभवन्ति** ॥ हे सोम्य प्रियदर्शन ! स पुरुषः इहैवान्तःशरीरे । वर्तत इति शेषः । अनेन परि-

---

२. अत्र वक्ष्यमाणं प्राणादिकलाग्रहणेन षोडशकलत्वं जीवे विवक्षितम् । छान्दोग्ये (४-४) सत्यकामं प्रति षोडशकलब्रह्मविद्या काचिदुपदिष्टाऽस्ति, यत्रान्यादृशं षोडशकलत्वं ब्रह्मण एव । बृहदारण्यके (३-५-१५) चन्द्रवत् पुरुषस्य षोडशकलत्ववर्णनावसरे, 'तस्य वित्तमेव पञ्चदश कलाः, आत्मैवास्य षोडशी कला' इति जीवस्यान्यादृशं षोडशकलत्वमुक्तम् । एकादशेन्द्रियाणि, पञ्च भूतानीत्येवंभूतशरीरविशिष्टतया जीवे षोडशकलत्वकथनमप्यद्वैतमत इवास्मन्मतेऽपि सांप्रदायिकम् भाष्यव्याख्यादौ दृष्टत्वात् ।

**स ईक्षांचक्रे । कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥**

---

छिन्नप्रदेशमात्राधारत्वोक्त्या जीव इत्युत्तरमुक्तं भवति । ननु जीवस्यैव कथं षोडशकलत्वम् षोडशकलाधारत्वतत्स्रष्टृत्वयो जीवापेक्षया परमात्मन्येव पुष्कलत्वादित्याशङ्क्याऽऽह–**यस्मिन्नेताः षोडश कलाः प्रभवन्ति । यस्मिन्** पुरुषे **एताः** वक्ष्यमाणा प्राणाद्या नामान्ता **षोडश कला** स्वसंसर्गप्रयुक्तसुखदुःखादिभोगाख्यमुपकारं कर्तुं **प्रभवन्ति,** समर्था भवन्तीत्यर्थः । ततश्च षोडशकलाभोक्तृत्वमेव षोडशकलत्वम् । तच्च जीवस्यैवेति भावः ॥ २ ॥

ननु षोडशकलासर्गहेतुत्वे जीवपरमात्मनोरविशिष्टे तद्भोक्तृत्वं जीवस्यैव, न परमात्मन इत्यत्र किं नियामकमित्यत्राऽऽह–**स ईक्षांचक्रे–कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामीति ; कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥** "सोऽध्यक्षे तदुपगमादिभ्यः" इति भाष्ये, "प्रतिष्ठा च जीवेन सह श्रूयते कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति" इत्युक्तत्वात् इदं वाक्यं जीवाभिसन्धिप्रकारप्रदर्शनपरम् । मदुत्क्रान्तिप्रतिष्ठासहभूतोत्क्रान्तिप्रतिष्ठः को वेति पर्यालोचितवानित्यर्थः । ततश्च स्वोपकाराभिसन्धिपूर्वकं जीवस्य प्राणादिस्रष्टृत्वात् तद्भोक्तृत्वं समवति । परमात्मनस्तु—"न च मां तानि कर्माणि निबध्नन्ति धनंजय । उदासीनवदासीनमसक्तं तेषु कर्मसु", "न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा" इत्युक्तरीत्या स्वोपकाराभिसन्धिपूर्वकस्रष्टृत्वाभावाच्च तस्य षोडशकलाभोक्तृत्वमिति भावः ॥ ३ ॥

स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम्
मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च ॥ ४ ॥

स यथेमा नद्यस्स्यन्दमानास्समुद्रायणास्समुद्रं प्राप्यास्तं
गच्छन्ति, भिद्यते तासां नामरूपे, समुद्र इत्येव प्रोच्यते—एवमेवास्य

---

**स प्राणमसृजत, प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवी
न्द्रियं मनः अन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकाः लोकेषु
[च] नाम च ॥** सः जीवं एव पर्यालोच्य प्रथमतः स्वोत्क्रान्ति
प्रतिष्ठासहभूतोत्क्रान्तिप्रतिष्ठं मुख्यप्राणं सृष्टवान् । तस्मादूर्ध्वम् आस्ति
क्यबुद्धिम्, पञ्च महाभूतानि, वागादीन्द्रियम्, मनः, व्रीह्यादिरूप
मन्नम्, तदायत्तं शरीरेन्द्रियसामर्थ्यम्, शरीरशोषणादिलक्षणं तपः,
ऋग्यजुःसामादीन् मन्त्रान्, ज्योतिष्टोमादीनि कर्माणि, कर्मफल
भूतान् स्वर्गादीन् लोकान्, तेषु स्वर्गादिलोकेषु नामानि[च॰]
सृष्टवानित्यर्थः । यद्यपि षोडशकलास्रष्टृत्वं परमात्मन एव, तथाऽपि
तद्धेतुभूतादृष्टारम्भककर्मकर्तृत्वेन अयं स्रष्टृत्ववाद इति द्रष्टव्यम् । ततश्च
स्वभोगोपकारिकाः षोडशापि कलास्तद्धेतुभूतादृष्टारम्भककर्माणि कृत्वा
सृष्टवान् । अतस्तद्धोक्तृतया षोडशकलत्वं जीवस्येति यावत् ॥ ४ ॥

षोडशकलत्वं जीवस्योपपाद्य परमात्मन ईदृक्कलाभावादकलत्वम्,
तद्द्वारा मुमुक्षुवेद्यत्वं चोपपादयति—**स यथेमा नद्यः स्यन्दमानाः
समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति ; भिद्येते तासां नाम
रूपे ; समुद्र इत्येव प्रोच्यते ।** यथा प्रसिद्धा गङ्गाद्याः नद्यः समुद्रा
यणाः—अयनशब्देनाऽऽधारत्वमुखेनाऽऽत्मत्वमुच्यते— समुद्रा -

परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते चासां नामरूपे, पुरुष इत्येवं प्रोच्यते । स एषोऽकलोऽमृतो

---

त्मिकाः समुद्रापृथक्स्थितिप्रतिपत्तियोग्या भूत्वा समुद्रं प्राप्य अस्तं गच्छन्ति अदर्शनं यान्ति, न तु समुद्रे वृष्ट्यादिलक्षणं विकारमुत्पादयितुं प्रभवन्ति । तासां च गङ्गायमुनादीनि नामानि यानि, यानि च शुक्लकृष्णादीनि रूपाणि प्राक्तनानि, तानि भिद्यन्ते तत्प्रवेशानन्तरं न भवन्ति । नामान्तरं रूपान्तरञ्च भवतीत्यर्थः । तदेव दर्शयति—समुद्र इत्येवं प्रोच्यत इति । तत्र प्रविष्टं नदीजातं सर्वं समुद्र इत्येवं प्रोच्यते, न तु गङ्गा, यमुनेति । स यथा । स दृष्टान्तो यथेत्यर्थः ।

**एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति ; भिद्येते चाऽऽसां नामरूपे ; पुरुष इत्येवं प्रोच्यते । स एषोऽकलोऽमृतो भवति ।** एवमेव अस्य **परिद्रष्टुः** अनुभवितुर्भोक्तुर्जीवस्य भोगोपकरणभूता इमाः षोडशापि कलाः निरुपाधिकपुरुषशब्दवाच्यं वासुदेवं प्राप्यास्तं गच्छन्ति । यथा शिलातलं प्राप्य क्षुरधाराः कुण्ठीभवन्ति, तथा भोगबाधिका न भवन्तीत्यर्थः । तत्र हेतुमाह—**पुरुषायणा** इति । पुरुषसंकल्पाधीनस्वरूपस्थितिप्रवृत्तिका इत्यर्थः । आसां कलानां जीवविषये भोग्यभोगस्थानभोगोपकरणत्वादिनामरूपभेदवत् परमात्मविषये भोगस्थानत्वादिनामरूपे न स्तः । तदेव दर्शयति **पुरुष इत्येवं प्रोच्यत** इति । पुरुषापृथक्स्थितिप्रतिपत्तिकतया पुरुष इत्येवं प्रोच्यते ; न तु तद्भिन्नत्वादिना तत्कलादित्वेन प्रोच्यते । तस्मात् परमात्मनः कलाभोक्तृत्वाभावात् अकल इत्येवोच्यते । अत एवामृतश्च ; मरणस्य भोक्तृत्व-

भवति। तदेष श्लोक ॥ ५ ॥

अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिता ।
तं वेद्यं पुरुषं वेद मा वो मृत्यु परिव्यथा इति ॥ ६ ॥

तान् होवाच-एतावदेवाहमेतत् पर ब्रह्म वेद, नात परमस्तीति ॥७॥

ते तमर्चयन्त त्व हि न पिता योऽस्माकमविद्याया पर पार तारयसीति ॥

---

रूपकलासम्बन्धाधीनत्वादिति भाव । तदेष श्लोकः । तत् परमात्मस्वरूपमधिकृत्य वक्ष्यमाण श्लोक प्रवृत्त इत्यर्थ ॥ ५ ॥

अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः । यस्मिन् प्रतिष्ठिता =पदात्मिका यदुपादानिका इत्यर्थ । शिष्ट स्पष्टम् । तं वेद्यं पुरुषं वेद । यथावत् तमेव पुरुष मुमुक्षुवेद्यमवगच्छत । ब्रह्मज्ञानस्य फलमाह—मा वो मृत्युः परिव्यथाः । ब्रह्मज्ञान युष्माक परितो व्यथा मृत्युर्मा कार्षीदित्यर्थ ॥ ६ ॥

तान्—होवाच एतावदेवाहमेतत् परं ब्रह्म वेद । नातः परमस्तीति । तान् सुकेशादीन् षडपि शिष्यान् प्रति एतदुवाच—अहमेतावदेव पर ब्रह्म जानामि । परब्रह्मविषये ममैतावदेव ज्ञानम् । इतोऽधिक नास्तीत्यर्थ ॥ ७ ॥

ते तमर्चयन्त, 'त्व हि नः पिता, योऽस्माकमविद्यायाः परं पारं तारयसि इति । ते षडपि त पिप्पलादम्, त्वमस्माक संसाराकूपारतीरप्रापकतया पिताऽसि । तस्मात् त्वत्तो जन्मैव श्रेष्ठ जन्म, "स हि विद्यातस्तं जनयति । तच्छ्रेष्ठं जन्म" इति श्रवणात् इति

---

आदौ षटसु सुकेशादिष्वन्त्ययो कथने परम् ।
चकारो न स्तन, किन्तु चतुर्णामेव, तत् कुत ॥ १ ॥

नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥

॥ इति षष्ठः प्रश्नः ॥

॥ प्रश्नोपनिषत् समाप्ता ॥

॥ शुभमस्तु ॥

---

अर्चयन्तः पूजयन्तो बभूवुः ॥ नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ उत्तरशान्तिस्थाने इदम् । वाक्याभ्यासः उपनिषत्समाप्त्यर्थः ॥

---

नूनं संभूयगामित्वं चतुर्णां तेन गम्यते ।
कबन्धिभार्गवौ स्यातामुपसत्त्यैव संगतौ ॥ २ ॥
प्रसिद्ध्यतिशयं यद्वा चकारो गमयेदिह ।
प्रश्निष्ठता हि कौसल्ये कण्ठोक्ता गुरुणा ततः ॥ ३ ॥
तदूर्ध्वप्रश्नकर्तॄणां सा कैमुत्यनयाद् भवेत् ।
हिरण्यनाभो राट्पुत्रो विशेषार्थबुभुत्सया ॥ ४ ॥
सुकेशसविधं प्राप्त इति षष्ठे तदुक्तितः ।
आदिमो ब्रह्मविद्यायां प्रसिद्ध इति गम्यते ॥ ५ ॥
विज्ञानतारतम्येन षड्विधाः क्रमात् ततः ।
व्युत्क्रमः प्रश्नकाले तु न्यूनत्वे पूर्वशिक्षिते ॥ ६ ॥
अभिमतप्रश्नलभ्यार्थज्ञानं सर्वो भजेदिति ।
उपक्रमावसानाभ्यां सर्वं सर्वार्थमिष्यताम् ॥ ७ ॥
अधीयानोऽपि बुध्येत क्रमेऽत्रैवाखिलं सुखम् ।
अथेदं प्रश्नषट्कार्थसांगत्यं किञ्चिदुच्यते ॥ ८ ॥
अस्ति प्रजापतिः कश्चित् स इच्छति सृजत्यपि ।
प्रजाः ; प्रजा समस्ताऽपि रयिप्राणमयी भवेत् ॥ ९ ॥
मूर्त्यंशो रयिरित्युक्तः परोंशः प्राण उच्यते ।
सप्राणाक्षोपकरणो यद्ध आत्मा स मन्यताम् ॥ १० ॥

न च, 'एतादेवाहं परं ब्रह्म वेद, नातः परमस्ती'ति षोडशकलजीवातिरिक्तपरब्रह्मनिषेध. किं न स्यादिति वाच्यम् । 'अधिकं तु भेदनिर्देशात्' इत्यादिभिर्विरोधप्रसङ्गात् । तथा हि स्मृतिपादे— 'तत्त्वमसि', 'अयमात्मा ब्रह्म' इत्यनेनेतरस्य जीवस्यैव ब्रह्मभावोपदेशात् सार्वज्ञ्यसत्यसंकल्पत्वादियुक्तस्य अनन्तदुःखाकरं स्वानर्थमहं जगत् सृजतो जीवरूपस्य ब्रह्मण· आत्मनो हिताकरणाहितकरणादयो दोषाः प्रादुःष्युरिति, 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति.' इति सूत्रेण पूर्वपक्षं कृत्वा, 'अधिकं तु भेदनिर्देशात्', 'अश्मादिवच्च तदनुपपत्तिः'

---

सृष्टिश्च भुक्तिमुक्त्यर्थां स्रष्टा सर्वात्मकः परः ।
इत्थं प्रजासृष्टिहेतुप्रश्नमाद्यं समादधात् ॥ ११ ॥
सत्त्वलक्षादिपु जीवस्य प्राणशब्देन वेदनम् ।
प्राणश्रैष्ठ्यप्रयुक्तं स्यादिति तत् पृच्छ्यते ततः ॥ १२ ॥
सर्वेषां धारकत्वेऽपि मनोवाक्श्रोत्रचक्षुषाम् ।
प्रकाशकत्वं प्राधान्यं प्राणस्य तु वरिष्ठता ॥ १३ ॥
प्रकाशकत्वं ज्ञानाक्षेप्स्वस्ति यन्मास्तु तत्परम् ।
"प्रकाशयन्ते कतरे" इत्येतत् , नोत्तरे हि तत् ॥ १४ ॥
प्रकाशकत्वं यत् पृष्टं केषु चित् कल्पोक्तितः ।
उत्तरे स्तावकत्वं तु विस्तृतम् , तेन तद् भवेत् ॥ १५ ॥
पैशुन्याद् वाङ्मनश्चक्षुःश्रोत्रवत् प्राणनिष्ठता ।
अन्येषां स्यात् चतुर्णादिस्तावदृक्षद्वये त इत्यतः ॥ १६ ॥
अथ प्राणविभागादिप्रश्नः, तस्योत्तरेण तु ।
'अपानादेर्वरिष्ठस्य स्वरात् प्राणोऽधिकः कथम्' ॥ १७ ॥
इत्याशङ्काऽपनुदेत तत्र प्राणांशतोक्तितः ।
व्यष्टौ नित्यश्लिष्टताञ्च प्राणैर्जीवस्य शंसितुम् ॥ १८ ॥

इति द्वाभ्यां सूत्राभ्यां सिद्धान्तितम् । तुशब्दः पूर्वपक्षं व्यावर्तयति । ब्रह्म प्रत्यगात्मनः अधिकं भिन्नम् । कुतः ? भेदनिर्देशात् । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः', 'पृथगात्मानं प्रेरितारञ्च मत्वा', 'स कारणं करणाधिपाधिपः', 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति,' 'ज्ञाज्ञौ द्वावजावीशनीशौ', 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः', 'प्राज्ञेनात्मनाऽन्वारूढः', 'अस्मान् मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः', 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादिभिर्विविधैर्भेदनिर्देशात् । किञ्च यथा अश्मलोष्टादीनामखिल-

---

उत्पत्त्यायतिचिन्त्वैषामत्र प्राणेषु पञ्चसु ।
चक्षुरादिस्थानभेदात् कार्यभेदः प्रदर्शितः ॥ १९ ॥
आदित्यपृथिवीव्योमवायुतेजस्सु च क्रमात् ।
प्राणापानसमानाख्यव्यानोदानात्मतोक्तिः ॥ २० ॥
'आदित्यादिर्हि बाह्योऽपि चक्षुराद्युपकारकः ।
प्राणश्रैष्ठ्यं कथं तस्मात्' इति शङ्काऽपि शाम्यति ॥ २१ ॥
[पञ्चभूतमयादित्याद्यन्तःस्थस्वांशयोगतः ।
प्राणादिः शक्तिकृत् चक्षुरादेरित्यादि भाव्यताम् ॥ २२ ॥
ऐतरेयेऽपि च प्रोक्ता प्राणस्यादित्यरूपता ।
अन्नशाकेऽवकाशस्य कुक्षावावश्यकत्वतः ॥ २३ ॥
आकाशस्य समानेन संबन्धः ; प्रायणे तु यत् ।
ऊर्ध्वंगामि समावेन तेजो मुख्यम् , तदिष्यते ॥ २४ ॥
तेनोदानस्य संबन्धः, पाते त्वापोऽधिका मताः ।
भूतपञ्चकसंसर्गेऽप्येवमेकस्य मुख्यता ] ॥ २५ ॥
प्रशास्यैवमयो तुर्ये, 'स प्राणो मनसेन्द्रियैः ।
आत्माधारः स आत्मा च पराधार' इति ब्रुवन् ॥ २६ ॥

हेयप्रत्यनीककल्याणैकतानब्रह्मैक्यानुपपत्तिः, एवमखिलहेयास्पदस्य जीवस्य अताद्दशेन ब्रह्मणैक्यानुपपत्तिरिति सूत्रद्वयार्थः । एवम् "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्", "भेदव्यपदेशाच्चान्यः," "सुषुप्त्युत्क्रान्त्योर्भेदेन" "उभयेऽपि हि भेदेनैनमधीयते" इत्यादिन्यायाश्च कुप्येयुरित्यलं प्रपञ्चेन ॥ ८ ॥

क्षेमाय यः करुणया क्षितिनिर्जराणा
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमद्वाताचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिपादसेवासमधिगतपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु प्रश्नोपनिषत्प्रकाशिका ॥

---

देहेन्द्रियमनःप्राणधीभ्योऽन्यं ज्ञानरूपिणम् ।
ज्ञात्मानं प्रजाख्यपरमात्मवशं जगौ ॥ २७ ॥
त्रिमात्रप्रणवाहज्ञ परोपासनमुच्यते ।
पञ्चमे मुक्तये, यस्मादन्यदा फलमन्यथा ॥ २८ ॥
षोडशापि कलाः प्रोच्य षष्ठे जीवञ्च तद्वशम् ।
अकलं पुरुषं ब्रह्म परमाह प्रजासृजम् ॥ २९ ॥
ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
प्रश्नोपनिषदो भाष्यमित्थमारं परिष्कृतम् ॥ ३० ॥
॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

इति श्री वात्स्य वीरराघवाचार्यकृत प्रश्नोपनिषद्भाष्यपरिष्कारः ॥

॥ शुभमस्तु ॥

## प्रश्नोपनिषदर्थसंग्रहकारिकाः

१. सुकेशशैब्यसौर्यायण्याश्वलायनभार्गवाः ।
कबन्धी चेति षट् प्राप्ताः पिप्पलादमृषीश्वरम् ॥

२. तत्तोत्तरोत्तरस्येह प्रश्नस्सह समाधिना ।
पूर्वं पूर्वं निबद्धोऽस्ति षट् प्रश्नाः प्रश्नगास्ततः ॥

३. कुतः प्रजाः प्रजायन्त इति प्रश्ने कबन्धिनः ।
प्रजाकामाद् रयिप्राणस्त्रजो जाताः प्रजापतेः ॥

४. अन्नरूपात् प्रजाः, यासां संसरन्तीन्दुसंगताः ।
शुद्धास्त्वादित्यगा ब्रह्म यान्तीत्याह स तं गुरुः ॥

५. भार्गवं स्वाह देवेषु महाभूतेन्द्रियात्मसु ।
प्रजाधृत्सु वरिष्ठत्वं प्राणस्यैतत्स्तवश्च तैः ॥

६. उत्पत्तिमागतिं देहे स्थानान्येतत्क्रियाभिदाम् ।
आदित्याद्यात्मताश्चाह प्राणस्यैवाश्वलायनम् ॥

७. सुप्तौ स्वपन्ति जाग्रन्ति स्वप्निनं सुखिनं तनौ ।
परात्मनि प्रतिष्ठानं ज्ञातुः सौर्यायणिं जगौ ॥

८. शैब्यं स्वेकद्वित्रिमात्रतारोपास्त्यौ गतिः क्रमात् ।
नृलोकपुनरावर्तिलोकमोक्षपदेष्विति ॥

९. स षोडशकलो यस्मिन् प्रभ्वः प्राणादयः कलाः ।
अस्तं गच्छन्त्यमू पुंसि पर इत्याह चादिमम् ॥

१०. इत्थं प्रश्नोपनिषदः षट्सु प्रश्नेषु वर्णिताः ।
स्रष्टा, प्राणोऽस्य भूमा सुप्रतिष्ठा प्रणव. कलाः ॥

## प्रश्नमन्त्रसूची



## प्रमाणाकरः

## विषयाः



## पुरुषनामानि

१. सुकेशा भारद्वाज
२. शैब्य सत्यकाम
३. सौर्यायणी गार्ग्य
४. कौसल्य आश्वलायन
५. भार्गवो वैदर्भि.
६. कबन्धी कात्यायनः
७. भगवान् पिप्पलादः
८. हिरण्यनाभः कौसल्यो राजपुत्रः

## अपूर्वपदानि



## शारीरकविचारः

सर्वे याख्यानाधिकरणश्रुतप्रकाशिकायाम्—'चन्द्रादित्याग्निसृष्टे रण्डान्तर्वर्तिविषयायाश्चतुर्मुखकर्तृकत्वसंभवेऽपि तदन्तर्यामिपरमपुरुष एव प्रजापतिशब्दवाच्य अपर्यवसानादवयवशक्त्या वा परब्रह्मप्राप्तेरुक्तत्वात् अर्चिरादिगत्या अनावृत्तिप्रतिपादनात् विरजश्शब्देन प्रसिद्धब्रह्मलोकव्याप्तूचे । उत्तरखण्डेषु च प्रत्यगात्मा निशोध्यते ततश्चोपरिष्टात्..... परमपुरुषोपासन तत्प्राप्तिरूपफलञ्च श्रूयते । अत उपक्रमे प्रजापतिशब्दवाच्यो महावाक्यस्वारस्यात् परमपुरुष' इति—

१-११ पञ्चपादम् । तैत्तिरीये इदावत्सरेति श्रवणेऽपि श्रीभागवते (३ ११) इडावत्सर इति पाठो दृश्यते । एव पञ्चस्वेकतमस्य वत्सर इति नामापि तत्र । (एवञ्च तैत्तिरीये 'इद्वत्सरोऽसि वत्सरोऽसि' इत्यत्र इद्वत्सरस्यैव वत्सर इति नामान्तरेण निर्देश इत्याशयो भाव्य ।) वत्सरशब्दस्याब्दसामान्यवाचित्व सर्वसमतम्, भागवतेऽपि तत्रैव समनन्तरमिति तावता तस्य विशेषनामत्वमपि नापैति । विष्णुपुराणेऽपि (२ ८), 'सवत्सरादय पञ्च', सवत्सरस्तु प्रथम ' इति श्लोकद्वय द्रष्टव्यम् । विष्णुचित्तीयादौ च तत्र वत्सरपञ्चके विनियोगसञ्ज्ञानिवेशकारणादिविमर्शेन तदर्थ सुविशद इति ॥ श्री ॥

श्रीः

## मुण्डकोपनिषदि परमधिकपाठाः

श्रीभाष्यादेः सावधानं पठने शांकराद्यादृतपाठापेक्षया अधिका बहवः पाठा लक्ष्येरन् । अत्रोपनिषद्भाष्यं शांकरपाठरीत्यैव यद्यपि प्रवृत्तम्, अथाप्येभिरेवोपनिषद्भाष्यकारैरेतत्पूर्वकृतायां भावप्रकाशिकायामेव पूर्णमुण्डकोपनिषदनुवादस्य कृतत्वात् तत एव श्रीभाष्याद्यादृतपाठानां ग्रहणं सुकरम् । तत्तसदनुसारेणात्र मुद्रणं क्रियते अव्याख्यातमपि व्याख्यायते । अत्र, मुण्डके निवेशितानामधिकपाठानामादरणे प्रमाणभूताः श्रीभाष्य-श्रुतप्रकाशिकासूक्तयस्तावत्—

(1) (१-२-५) "तत्रापरा ऋग्वेदो यजुर्वेद इत्यादिना धर्मशास्त्राणीत्यन्तेन.........साङ्गस्य सेतिहासपुराणस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुत्वात् ।" (श्रीभा. १-२.२३.सू.)

(2) "वेद एव हि ब्रह्मज्ञानहेतुः, धर्मशास्त्रादिकीर्तनं किमर्थम्"

(3) अश्रद्धया अविधिना हुतमासप्तमात्तस्य लोकान् हिनस्तीत्यस्यार्थ उक्तः

(4) "यस्मात् परं नापरमस्तीत्युक्तसमाभ्यधिकराहित्यसूचनार्थः परमशब्दः

(5) "प्रणवो धनुः शरो ह्यात्मा', 'आत्मानमरणिं कृत्वा'इत्यादिनिरुपासनस्य प्रकार उक्त इत्यर्थः"

(6) "पद्मकोशप्रतीकाशं सुषिरञ्चाप्यधोमुखम् । हृदयं तद्विजानीयात् विश्वस्यायतनं महत् इति चतुर्थखण्ड एव तस्योपासनस्य हृदयगुहासंबन्धित्वावगमात्" (श्रु.प्र.)

सर्वं इहोल्लिख्यमाना अधिकपाठाः भावप्रकाशिकादर्शिते मुण्डकोपनिषत्खण्डषट्कपाठे उपलभ्यन्त इति तत्रैवैतदानुपूर्वी यथावस्थिता द्रष्टव्या।

श्रीः

श्रीनिवासपरब्रह्मणे नमः

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

## श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम् ।

—:**:—

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥

व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
मुण्डके विदुषां प्रीत्यै व्याकरिष्ये यथामति ॥ २ ॥

---

श्रीः

श्रीमते श्रीनिवासपरब्रह्मणे नमः ।

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## उपनिषद्भाष्यपरिष्कारः

श्रीभाष्यसंमताः पाठाः मुण्डके शाङ्करेतरे ।
श्रुतप्रकाशिकायां येऽदृश्यत्वाधिक्रियागताः ।
अव्याख्यातैरप्यनेकैरिह तैर्मुण्डकं युतम् ।
भाष्यप्रकाशिकापाठमनुरुध्य प्रकाशये ॥

विद्यास्थानं सर्वमालोड्य लभ्यां विद्यां प्राचीमाह यत्रापरेति ।
भक्तिं तज्ज्ञां मोक्षहेतुं परेति श्रीमानेतन्मुण्डकेऽयं श्रिये नः ॥

श्रीः

# मुण्डकोपनिषत्

[अथर्ववेदीयोपनिषच्छान्तिपाठः—

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षिभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ओं शान्तिश्शान्तिश्शान्तिः]

प्रथमे मुण्डके प्रथमः खण्डः हरिः ओम् ।

ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

---

विद्याप्ररोचनार्था आख्यायिका आरभ्यते— **ब्रह्मा देवानां प्रथमः संबभूव** । चतुर्मुखः इन्द्रादीनां देवानामग्रे उत्पन्न इत्यर्थः । स कीदृश इत्यत्राऽऽह— **विश्वस्य कर्ता भुवनस्य गोप्ता** । विश्वस्य सर्वस्य भुवनस्योत्पादयिता रक्षकश्चेत्यर्थः ।

**स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ।** तादृशो ब्रह्मा सर्वविद्याश्रयभूतां ब्रह्मविद्यामथर्वनाम्ने ज्येष्ठपुत्रायोक्तवानित्यर्थः । ब्रह्मविद्यायाः सर्वविद्याश्रयत्वं च, ज्ञातव्ये ब्रह्मणि कृत्स्नज्ञानस्यान्तर्भूतत्वादिति व्यासार्यैरुपपादितम् (१-२-२३. सू.) ॥१॥

---

१. संबभूवेति । यतस्संबभूव, ततस्स विद्यां प्रापेति प्रसिद्धम् । यथा—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति । तदत्र द्रष्टव्यम् ॥ अन्तर्भूतत्वादिति । अनेन व्यासार्यवचनेन एकविज्ञान-

अथर्वणे यां प्रवदेत ब्रह्मा अथर्वा तां पुरोवाचाङ्गिरे (ङ्गिरसे तत्त्वतो) ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥
शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ—
कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

---

अथर्वणे यां प्रवदेत ब्रह्मा अथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्। अथर्वणे यां ब्रह्मा प्रोवाच । तां ब्रह्मविद्यामथर्वनामा ऋषिः स्वशिष्याय अङ्गी(ङ्गि)र्नाम्ने(अङ्गिरोनाम्ने) ऋषये प्रोवाच । स भारद्वाजाय सत्यवाहाय प्राह । सः अङ्गीर्नाम ऋषिर्भरद्वाजगोत्राय सत्यवाहनाम्ने प्रोक्तवान् । भारद्वाजोऽङ्गिरसे परावराम् । परस्मादवरेण प्राप्तेति परावरा । परावरसर्वविद्याव्याप्तेर्वा परावरा । तामङ्गिरसे प्राहेत्यनुषङ्गः॥

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । महागृहस्थः शुनकपुत्रः समित्पाणित्वादिशास्त्रीयनियमानतिक्रमेणोपगतः सन् पृष्टवान् —कस्मिन्नु भगवो विज्ञाने सर्वमिदं विज्ञातं भवतीति । हे भगवः ! "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इति लक्षणलक्षित ! । भगवन्नित्यस्य, "विभाषा भवद्भगवत्—"इति नकारस्य रुत्वे अवस्य ओत्वा-

---

सर्वविज्ञानयोः, कारणविषयकज्ञानं पूर्वं कार्यविषयकज्ञानं पश्चादित्येवं न कार्यकारणभावः, किंतु अभेद इति सिद्धम् ।

२. परावराम् । अत्र शाङ्करम् 'परस्मात् परस्मादवरेण प्राप्तेति परावरा, परावरसर्वविद्याविषयव्याप्तेर्वा' इति । परा एतदन्या सर्वा अवरा निकृष्टा यतः सा परावरेत्यपि सुवचम् । 'तस्मिन् दृष्टे परावरे' इति मु. २-२ ॥ वक्ष्यते च द्वयी विद्या परा चापरा च ।

भावश्छान्दसः । यथा मृत्पिण्डे विज्ञाते सर्वं मृण्मयं विज्ञातं भवति, एवं कस्मिंश्चिद्वस्तुनि विज्ञाते सर्वं कार्यजातं विज्ञातं भवतीति सामान्यतो भवादृशानां वचनमश्रौषम् । तादृग्वस्तु किमिति प्रश्नार्थः । सर्वनिमित्तोपादानभूतं वस्तु किमितीति यावत् ॥

ननु सर्वमिदमिति शब्देन स्थूलचिदचिच्छरीरविशिष्टं ब्रह्मोच्यते, उत विशेषणमात्रम् ? नाऽऽद्यः ; प्रश्नदशायां शौनकस्याब्रह्मवित्त्वेन ब्रह्मविद इव इदंबुद्धिशब्दयोर्ब्रह्मपर्यन्तत्वाभावात् । "तेनेदं पूर्णं पुरुषेण सर्वम्" इत्युत्तरवाक्ये 'इदं सर्वम्' इत्यस्य विशेषणमात्रे पर्यवसायित्वेन ब्रह्मपर्यन्तत्वादर्शनेन प्रश्नवाक्यगतस्यापि 'इदं सर्वम्' इति शब्दस्य ब्रह्मपर्यन्तत्वाभावात् । न द्वितीयः, विशेषणभूतस्थूलचिदचितोः अक्षर-ब्रह्मभिन्नयोर्वक्ष्यमाणाक्षरब्रह्मोपादानकत्वाभावादिति चेत्—

उच्यते । 'इदं सर्व'मित्यनेन विशेषणमेव निर्दिश्यते, न विशेष्यम् । अथापि विशेषणस्यापि ब्रह्मोपादेयत्वमस्ति । न हि अभिन्नयोरेवोपादानोपादेयभाव इति नियमः । भाविस्थूलावस्थावतः पूर्वभाविसूक्ष्मावस्थायोगि ह्युपादानम् । अवस्थावत्त्वं च चिदचिदीश्वरा-

---

३. विशिष्टब्रह्मज्ञाने विशेषणं सर्वं ज्ञातं भवतीति वा, ब्रह्मज्ञानेन मोक्षे सार्वज्ञ्याविर्भावात् सर्वं ज्ञातं भवतीति वा नार्थः । किंतु सद्विद्याद्यनुरोधादन्यादृश एवेत्यभिप्रेत्याह—यथा मृदिति ।

'इदं सर्व'मित्यस्य विशिष्टार्थपरत्वसिद्धिं वक्ष्येत्यादिना उपरि वक्ष्यन् विशेषणमात्रपरत्वपक्ष एव स्थित्वा, श्रुतप्रकाशिकोक्तप्रपञ्चनप्रज्ञापनीयं समाधानमाह—'उच्यते, इदं सर्वमित्यनेन' इति ।

भाविस्थूलावस्थावत इति । न च घटादिकं प्रति भ्रमणादि-

णां त्रयाणामप्यस्त्येव । इयांस्तु विशेषः — अद्वारकावस्थायोगित्वमचेतनस्य । जीवस्य तद्धर्मभूतज्ञानद्वारा अचेतनशरीरद्वारा च कर्मकृतसंकोचविकासाद्यवस्थाश्रयत्वम् । परमात्मनस्तु चेतनाचेतनद्वारकमवस्थाश्रयत्वम् [अद्वारकनियन्तृत्वावस्थाश्रयत्वं च] । ततश्च महत्त्वाहंकारत्वादिलक्षणभाव्यवस्थायोगित्वस्याचेतनपरमात्मसाधारण्येन परमात्मन इव चेतनाचेतनप्रपञ्चस्यापि भाव्यवस्थाश्रयत्वेन अक्षरं प्रति उपादेयत्वमस्त्येव । ततश्च 'इदं सर्व'मिति विशेषणमात्रनिर्देशेऽपि तस्य वक्ष्यमाणमक्षरमुपादानं भवत्येवेति, कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति विशेषणमात्रे उपादानप्रश्न उपपद्यते ।

अत एव महासिद्धान्ते,—'कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात् तत्प्रत्यनीकनानात्वं निषिध्यते' इति भाष्यव्याख्यानावसरे व्यासार्यैः, "विशिष्टयोरेवोपादानोपादेयभावः । न तु विशेषणीभूतस्य चेतनाचेतनप्रपञ्चस्य ब्रह्मोपादानकत्वम् ।

---

विशिष्टदण्डादेः, पुत्रादिकं प्रति च पित्रादेर्निमित्तकारणस्यापि पूर्वभाव्यवस्थायोगितया तत्तदुपादानत्वापत्तिरिति वाच्यम्— भाव्यवस्थापन्नः स्वनिष्ठपूर्वावस्थायोगि उपादानमिति पूर्वावस्थायाः भाव्यवस्थापन्ननिष्ठत्वस्य विवक्षितत्वात् । भ्रमणादेर्घटाद्यवृत्तित्वात् । अत एव प्रपञ्चं प्रति परमात्मन उपादानत्वं प्रपञ्चगताव्यक्तत्वादिपूर्वावस्थायाः सद्वारकं परमात्मगतत्वादुपपन्नम् । न तु नियन्तृत्वरूपपरमात्मगतावस्थामादाय । नियन्तृत्वरूपावस्था तु विशिष्टं परमात्मानं प्रति परमात्मन एव द्रव्याभेदेनोपादानोपादेयभावोपपादने उपयुज्येत । तदवस्थापन्नं प्रति तदवस्थासमानाधिकरणपूर्वावस्थायोगि उपादानमिति वा विवक्षितम् ।

शरीरात्मभावस्तु निष्कृष्टविशेषणयोः (णस्य च) निष्कृष्टविशेष्यस्य च ; चिदचिद्विशिष्टब्रह्मणश्चिदचिद्विशिष्टब्रह्मानियाम्यत्वात् केवलस्य प्रपञ्चस्य केवलब्रह्मान्तर्यामिकत्वात्" इति पक्षमाश्रित्य, 'तदन्तर्यामिकनयेत्यत्र जगत इति निष्कर्षकशब्दान्तरमध्याहर्तव्यम्' इत्युक्त्वा, "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति वाक्ये उपादानोपादेयभावप्रतिपादके,—"सन्मूलाः, सत्प्रतिष्ठाः' इत्यत्र प्रजाशब्दस्य ब्रह्मपर्यन्तत्वम् सच्छब्दस्यापि सूक्ष्मचिदचिद्विशिष्टब्रह्मपरत्वम् ; सदायतना इति शरीरात्मभावप्रतिपादकांशे तु प्रजाशब्दस्य विशेषणमात्रपरत्वम् सच्छब्दस्य विशेष्यमात्रपरत्वम् ; ब्रह्मणो ब्रह्मान्तर्यामिकत्वासंभवात्, केवलप्रपञ्चस्य विशेष्यमात्रान्तर्यामिकत्वेऽपि विशिष्टान्तर्यामिकत्वाभावात् "— इत्युक्त्वा,-अस्मिन् पक्षे सङ्कल्पयुक्तस्य प्रजाशब्दस्य वैरूप्यम्, सच्छब्दाना च वैरूप्यम्, जगत इति शब्दान्तराध्याहारादिलक्षणभाष्यक्लेशश्च पर्यालोच्य, "प्रजाशब्दस्य विशेषणमात्रपरत्वमेव ; सच्छब्दस्यापि विशेष्यमात्रपरत्वमेव । न च, विशेषणीभूतचिदचिद्वर्गस्य सदुपादानकत्वं नास्तीति शङ्क्यम् ; तस्यापि भाव्यवस्थावत्त्वेन विशिष्टस्येव विशेषणस्यापि ब्रह्मोपादानकत्वसंभवादिति स्वाभिमतं पक्षान्तरमुपन्यस्तम्-"यद्वा जगत इति निष्कर्षक शब्दः" इत्यादिना ।

"आत्मेति तूपगच्छन्ति-"इति भाष्यादौ, 'सर्वस्य चिदचिद्वस्तुनस्तज्जत्वात् तल्लत्वात् तदनत्वात् तन्नियाम्यत्वात् तच्छरीरत्वाच्च सर्वस्यायमात्मेति शरीरत्वोपादेयत्वयोः सामानाधिकरण्यं बहुकृत्व उद्घोषितम् । न चैतदन्यथा कर्तुं प्रभवाम. । "प्राज्ञेनाऽऽत्मना संपरिष्वक्तः" इति

वाक्ये प्राज्ञशब्दिते मिते परमात्मनि जीवस्य परिष्वङ्गरूपलयप्रकरणाच्च न च—परिष्वङ्गो न लय, किन्त्वन्य एव संसर्गविशेष –इति वाच्यम्, "स्वाप्ययात्" इतिसूत्रभाष्यतव्द्याख्यानग्रन्थपर्यालोचनाया(नया) तयो समानार्थकत्वस्योपलभ्यमानत्वात्। न च–जाग्रदाद्यवस्थागतरागद्वेषादि कालुष्ययुक्तजीवविशिष्टस्य परमात्मन तद्रहितजीवविशिष्टपरमात्मरूपेणा वस्थानमेव, "सता सोम्य तदा सपन्नो भवति" इति वाक्यस्यार्थोऽभ्युपेत, स एव, 'प्राज्ञेनाऽऽत्मना इति वाक्यस्याप्यर्थोऽस्त्विति वाच्यम्, तथा सति अस्य वाक्यस्य जीवपरभेदासाधकत्वेन 'सुषुप्त्यु त्क्रान्त्योर्भेदेन' इतिसूत्रासगतिप्रसङ्गात्।

न च–भाव्यवस्थावत् सर्वमुपादेयम्, पूर्वावस्थावद् सर्वमुपादान चेत्—भाविमहत्त्वाहकारत्वाद्यवस्थावत्परमात्मानं प्रति अव्यक्तत्वलक्षण पूर्वावस्थाश्रयस्याचेतनस्याप्युपादानत्वप्रसङ्ग। अतो भाव्यवस्थावत्तद

अव्यक्तत्वलक्षणेति। अचिदवस्थायास्सद्वारक परमात्मगत त्वाङ्गीकारात् उपादानत्वनिर्वचनघटक स्वनिष्ठत्वमपि परमात्मनिष्ठत्व रूपमव्यक्तत्वेऽक्षतमिति भाव। व्यासार्थ इति। तदुक्त समाधान द्विविधम्—अव्यक्तत्वाद्यवस्थाया अचिन्मात्रगत वेऽपि ब्रह्मणस्तद्यो-गित्व भवति, चक्र मुद्रा कदलीन्यायेन विशिष्टस्यैव ब्रह्मतया अचितो ब्रह्मस्वरूपान्तर्गतत्वादित्येकम्। अचिदवस्थाया विशेष्य ब्रह्मापि व्यप धानेन आश्रय पुरुष-पर्यङ्क-भूतलन्यायादिति चान्यत्। तत्र चक्र मुद्रादिपदाना समुदायवचनत्वादेकदेशमात्रसबन्धे सत्यपि समुदाय-सबन्धितया व्यवहार, पटैकदेशे दग्धेऽपि पटो दग्ध इति व्यवहारस्य भाक्तितया सद्रीत्या युक्त। अचिन्मात्रगतावस्थामादाय ब्रह्मणि तद्योगित्व तु दुर्वचम्। ब्रह्मेश्वरादिपदाना चिदचिदीश्वरसघातना-चित्याभावादिति विमृश्य प्रथमसमाधानत्यागेन द्वितीयग्रहणम्।

भिन्नं पूर्वावस्थायोग्येव उपादानमिति वक्तव्यम्। ततश्च इदंशब्दवाच्यस्य विशेषणस्य न ब्रह्मोपादानकत्वमिति वाच्यम्—भाव्यवस्थावतः पूर्वावस्थायोगि यत् कारणम्, तत् उपादानमित्युक्तावतिप्रसङ्गाभावात्। भाव्यवस्थावद् ब्रह्म प्रति अचेतनस्य हेतुत्वग्राहकप्रमाणाभावेनोपादानत्वाभावेऽपि, ब्रह्मणः सर्वकार्यकर्तृत्वश्रवणेन भाव्यवस्थावदचेतनांशं प्रत्यप्युपादानत्वे नानुपपत्तिः।

नन्वव्यक्तत्वमहत्त्वाद्यवस्थाया अव्यक्तमहदादिनिष्ठत्वेऽपि ब्रह्मनिष्ठत्वाभावेन पूर्वावस्थायोगित्वाभावात् कथमुपादानत्वमिति चेत्—अत्र व्यासार्याः प्रकृत्यधिकरणे—,

''ब्रह्मणश्चिदचिच्छरीरकतया प्रकृतेर्ब्रह्मस्वरूपान्तर्गतत्वेन प्रकृत्यवस्थानां ब्रह्मावस्थात्वात्। न हि विशेष्यमात्रं विशिष्टस्य स्वरूपम्। विशिष्टस्य वस्तुनो विशिष्टमेव हि स्वरूपम्। न हि घटस्य मृन्मात्रं स्वरूपम्, अपि तु घटत्वविशिष्टम्। ननु यदि विशेषणमपि स्वरूपान्तर्भूतम्, तर्हि दण्डादयः संयोगादयश्च स्वरूपं स्युः॥ न। यावद्द्रव्यभाविनाम् अपृथक्सिद्धविशेषणानामेव स्वरूपान्तर्भावात्। किंच घटादिवस्तुन उदकाहरणादितत्तदसाधारणकार्ययोग्य(त्व)मेव स्वरूपम्, न मृन्मात्रम्; पिण्डेष्टकादीनामपि घटस्वरूपत्वप्रसङ्गात्। घटस्योदकाहरणं प्रति योग्यता नाम अच्छिद्रघटत्वमेव। यस्य वस्तुनो यत् कार्यं यदाकारान्वयव्यतिरेकानुविधायि, स आकारस्तस्य वस्तुनस्तत् कार्यं प्रति योग्यता। यथा वह्नेरुष्णत्वं स्फोटजनने, यथा च परशोर्नैशित्यं छेदने, यथा च मृदो मृत्त्वं घटादिपरिणामे, श्लक्ष्णार्द्रभावश्च, एवं प्रकृति-

पुरुषकालाश्च (ला) जगद्रूपेण बहुभवने परमात्मनो योग्यतास्थानीया अयुतसिद्धप्रकारा । अत एव हि क्वचित् शक्तिशब्देन जगदभिधीयते । कार्योपयोग्यपृथक्सिद्धविशेषण हि शक्ति । सा च योग्यता योग्यवस्तुन स्वरूपान्तर्गता । अतो महदाद्यवस्थाश्चिदचिद्विशिष्टब्रह्मस्वरूपगता इति नाव स्थाश्रयत्वासिद्धि । यतो विशिष्ट ब्रह्मस्वरूपम्, अत एव हि, "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता, एवमेवैता भूतमात्रा प्रज्ञामात्रा स्वर्पिता प्रज्ञामात्रा प्राणेऽर्पिता" इति अरनाभिदृष्टान्त उपन्यस्यते । न हि नाभिमात्र रथचक्रम्, किंतु नाभिवद् अरनेमी अपि स्वरूपान्तर्गते । तथा, "अङ्गुष्ठमात्र पुरुषोऽन्तरात्मा सदा जनाना हृदये सन्निविष्ट । त स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकाम्" इति मुञ्जेषीकादृष्टान्तश्च श्रुत । न हि इषीकामात्र मुञ्ज, किंतु बाह्यदलविशिष्टेषीका हि मुञ्जस्वरूपम् । विशेष्याशस्य दृष्टान्त इषीका । तथा—

"यथा हि कदली नान्या त्वक्पत्रान्नाथ जायते ।

एव विश्वस्य नान्यत्व(स्त्व)त्व चापी(त्व मायी)श्वर दृश्यसे॥"(वि पु)

इति त्वक्पत्रकदलीदृष्टान्तश्च चिदचिद्विशिष्ट ब्रह्मस्वरूपमवगमयति । 'न हि बाह्यत्वक्पत्रेण विना काण्डमात्र कदली, अपि तु त्वक्पत्रविशिष्ट काण्डस्वरूपा । एव विश्वविशिष्ट त्वत्स्वरूपम्, तत्र विशेष्यभूतस्त्व विशेषणाशविलक्षणश्च दृश्यसे' इति अर्थ । इयान् भेद —नाभीषीका-काण्डानाम् अरनेमिबाह्यदलत्वक्पत्राणा च अचेतनतया मिथोनियन्तृ-नियाम्यभावाभावान्न शरीरशरीरिभाव । अत एव नेम्यादिशब्दाश्च न

विशेष्यवाचका । इह तु नियन्तृनियाम्यभावादिना शरीरात्मभाव सम्भवात् शरीरवाचिन शब्दा ब्रह्मपर्यन्ता इति। अत [एव] महदाद्य वस्थाना विशिष्टब्रह्मस्वरूपगतत्वादुपादानत्व मुख्यम् ।

किंच मा भूत् प्रकृतिपुरुषयो स्वरूपान्तर्भाव , तथाऽपि मुख्य त्व युक्तम् । न हि शरीरद्वारक ब्रह्मणो महदाद्युपादानत्वममुख्यम्, कारणतानिर्वाहकव्यवहितत्वात् , ज्वालाव्यवहितस्य काष्ठस्य पाक प्रति करणत्ववत् । ननु मृद्व्यवहितस्यापि कुलालस्य घट प्रत्युपादानत्व स्यादिति चेन्न , स्वनिष्ठमृत्पिण्डव्यवहितत्वात् । [अत स्वापृथ विसद्धव्यवधानादुपादानत्वमविरुद्धम् ।] ननु तथाऽप्युपादानस्य कार्या वस्थाश्रयत्व वाच्यम् । कथ व्यवहितस्य अवस्थाविशेष प्रत्याश्रयत्वम्—उच्यते—कुम्भोदरसमृतमम्भ प्रति पुरुषस्येव, परमात्मनो महदाद्य वस्थाश्रयत्वमुपपन्नम् । न च पुरुषस्याम्भोधारककुम्भधारकत्वमेव, नाम्भोधारकत्वमिति वाच्यम्–तथा सति अम्भोधारणजनितश्रमो न स्यात् । किं च अव्यवहितादपि व्यवहितस्याऽऽश्रयत्व मुख्य दृश्यते । यथा आस्तरणाशुकादपि पर्यङ्कस्य , यथा दर्भेभ्यो भूतलस्य । अव्यवहित मध्यशुक न पुरुषस्य धारकम्, असामर्थ्यात् । श्रमसुखविधायक विस्तीर्णमशुक हि न पदन्यास धारयितु प्रभवति । कुशच्छादका हि दर्भास्तत्र निहितपद पुरुष(निहित पुरुषपद) न धारयन्ति । तस्मादशुकस्य दर्भाणा च धारणासामर्थ्यात् पर्यङ्कभूतलयोरेव सामर्थ्यादास्तरणदर्भाणा पुरुषसयोगमात्र व्यवधायकत्वमेव । अत परमात्मन सर्वावस्थाश्रयत्व मुख्यमिति जगदुपादानत्व मुख्यमेव ।

ननु जगदुपादानाव्यक्तशरीरकत्वेन जगदुपादानत्वमुच्यते चेत्, वैशेषिकादिपक्षाद् भवत्पक्षस्य को भेद । नियाम्यविशेषो हि शरीर मभिमतम् । जिदचितोरीश्वरप्रेर्यत्व तन्मतेऽप्यस्तीति चेत् — महत्तरोऽय पर्यनुयोग । 'वैशेषिकाश्चेत् अप्रामाणिकमेव ब्रुयु , तदुक्त चेत्, अनादरणीयमिति न न प्रतिज्ञा । अस्मदुक्तार्थस्तदङ्गीकृतश्चेत्, का न क्षति । किंच साम्यमपि दुरुपपादम् । आकाशकालदिगात्मवर्ग स्येश्वरधार्यत्वाद्यनभ्युपगमात् " —

इत्याहु । ततश्च ब्रह्मणो जगदुपादानत्वे नानुपपत्ति ॥

ननु तथाऽपि ब्रह्मज्ञानाच्छरीरभूतप्रपञ्चज्ञान नोपपद्यते , तस्य तद्भिन्नत्वात् । न च सूक्ष्मचिदचिद्विशिष्टस्वरूपे ब्रह्मणि ज्ञायमाने सर्व स्यापि तदन्तर्गतत्वात्, 'वने ज्ञाते तदन्तर्गत पनसो ज्ञातो भवति' इतिवत्, प्रपञ्चो ज्ञातो भवतीति निर्देश उपपद्यतामिति वाच्यम्—'सत्य ज्ञानमनन्त ब्रह्मे ति लक्षणानाश्रयस्य चेतनाचेतनवर्गस्य ब्रह्मस्वरूपान्त-र्भावे प्रमाणाभावात् । न च, "विशेष्याशस्य लक्षण सत्यज्ञानादि, ("सत्य ज्ञानमनन्तम्" इत्यादि,) विशिष्टस्य जिज्ञास्यस्य ब्रह्मणस्तु लक्षण जन्माद्येवेति सूत्रकाराभिप्राय " इति ज मादिसूत्रे व्यासार्यैरुक्त-मिति वाच्यम् —कारणशोधकवाक्ययोर्भिन्नविषयकत्वस्यासगतत्वात्, "आत्मन आकाश सभूत " इति आत्मन एवोपादानत्वाभिधानाच्च ।

---

एव मिन्नयोरुपादानोपादेयभावस्यापनेऽपि सर्वमिदमिति-विशेषणमात्रग्रहणे, कस्मिन्नु भगव इति प्रश्नवाक्यार्थासामञ्जस्य-मेवेति शङ्कते ननु तथापीति। नचेत्यादि। अत्र, भूमविद्याया "यत्र' नान्यच्छृणोति" इति वाक्यस्य श्रीभाष्यवर्णितोऽर्थोऽनुसधेय ।

किंच—"न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः ।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥"
"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥"

"अव्यक्तं पुरुषे ब्रह्मन् निष्कले संप्रलीयते ।" "तमः परे देव एकीभवति" इति प्रमाणप्रतिपन्नस्य अव्यक्ततमःशब्देन(?) (व्दिताचेतनादि?) लयाधिष्ठानभूतस्यैव 'अक्षरात् परतः परः' इति चिदचित्कारणभूतस्यैव प्रतिपिपादयिषिततया तत्र चिदचिदनुप्रवेशस्य वक्तुं (कुम ?) शक्यत्वात् ; चिदचिल्लेशलक्षणासदंशानुप्रवेशे सत्तामात्रात्मकत्वभङ्गप्रसङ्गात् ।

अस्तु वा विशिष्टं ब्रह्म । तथाऽपि "वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतौ एकविज्ञानेन सर्वविज्ञानस्योपादानोपादेयाभेदेनैवोपपादिततया, इह, 'इदं सर्व'मिति इदंतास्पदतया प्रतीयमाने विशेषणभूते जगति विशिष्टाभेदासंभवात् ॥ 'शरीरगतावस्थायाः शरीरनिष्ठत्वम्' इति यदुक्तम्, तत्तु सर्वलौकिकतान्त्रिकविरुद्धम्, "न तु दृष्टान्तभावात्" इति सूत्रभाष्यविरुद्धं च ॥ पूर्वावस्थाश्रयनियन्तृत्वमेवोपादानत्वमित्यस्य च परिभाषामात्रत्वात् ।

किंच उत्पाद्यं ह्युपादेयं भवति । उत्पाद्यं च भवन्मते न द्रव्यम् ;

---

लेशलक्षणेति । सूक्ष्मांशरूपेत्यर्थः । ननु कस्यापि मते अशुद्धात्मन उपादानत्वस्यायोगादस्मन्मतेऽप्यपेक्षितविशेषणविशिष्टमुपादानमिति युक्तितः शास्त्रतश्च सिद्धमित्यत्राह अस्तु वेति ।

तस्य नित्यत्वात्। शब्दस्पर्शादिलक्षणाद्द्रव्यरूपावस्थाया एवोत्पत्ते। तस्याश्च ब्रह्मणाऽभेदगन्धस्यैवाभावात् । ननु घटत्वावस्थैव घटद्रव्यस्योत्पत्ति मृत्पिण्डस्य विनाशश्च । द्रव्यस्योत्तरसंस्थानयोग तत्पूर्वसंस्थानसंस्थितस्य विनाश , स्वावस्थस्य तूत्पत्ति । अवस्थाया उत्पत्तिमत्त्वचोदनमुत्पत्ते रुत्पत्तिमत्त्वचोदनमिव जात्युक्तिर्भवति। पृथक्कृतसिद्धिकार्यानर्हधर्मा पृथ गुत्पत्तिनिरपेक्षा। अत एव ह्युत्पत्त्यादेरुत्पत्त्यादिनैरपेक्ष्यम्। तस्मात् अपृथ क्सिद्धधर्मास्तु स्वय धर्मिण उत्पत्त्याद्यवस्थाभूता । अतोऽवस्थैव वस्तुन उत्पत्ति । न तु अवस्थाया उत्पत्तिर्नामास्तीत्यारम्भणाधिकरणभाष्य-श्रुतप्रकाशिकयोरुपपादितमिति चेत्—न , घटत्वावस्थाया एव घटो-त्पत्तिमृत्पिण्डविनाशरूपत्वे यावद्घटत्वावस्थासत्त्वम् , घट उत्पद्यते, मृत्पिण्डो नश्यतीति धीप्रसङ्ग , न तु घट उत्पन्न , मृत्पिण्डो विनष्ट इति । न च घटत्वावस्थागताऽऽद्यक्षणसम्बन्ध एव घटस्योत्पत्तिरिति वाच्यम्-यस्य ह्यागन्तुकत्वम्—आद्यक्षणसम्बन्ध , अभूत्वा भवन वा, न तस्योत्पत्ति , यस्य तु तन्नास्ति, तस्योत्पत्तिरित्यपि परिभाषामात्रत्वात्। घटे रूपरसादिषु, संयोगे च जायमाने घटो (तदाश्रयो)त्पत्ति व्यवहारा भावात्। "अन्यतरकर्मज उभयकर्मज संयोगज "(वै द )इत्यादिप्रतीति व्यवहारादिक सर्वं निर्मूल स्यात् । "छन्दासि यज्ञा क्रतवो व्रतानि", "छन्दासि जज्ञिरे तस्मात्" इत्यादीना वेदाद्युत्पत्तिप्रतिपादकानामप्रामाण्य स्यात्। शब्द उत्पन्न इति प्रतीतिव्यवहारौ न स्याताम् , आकाश उत्पन्न इत्येव प्रतीतिव्यवहारौ स्याताम् । अपृथक्सिद्धधर्माणामुत्पत्ति विनाशाभावे शरीरस्योत्पादविनाशौ न स्याताम् , आत्मन एव तौ

स्याताम् । किं बहुना—ईश्वरव्यतिरिक्तस्य कस्याप्युत्पादविनाशौ न स्याताम्; ईश्वरस्यैव तौ स्याताम् । नन्वपृथक्सिद्धस्याद्रव्यस्यैवोत्पत्तिविनाशौ नाभ्युपेयेते; द्रव्यस्य तौ स्त एवेति चेन्न; विनिगमकाभावात्; वैपरीत्यस्यापि सुवचत्वाच्च ।

किंच प्रकृतिरुपादानम्; विकार उपादेयमिति निर्विवादम् । "वाचाऽऽरम्भणं विकारो नामधेयम्" इत्यत्र घटत्वावस्थाया एव विकारशब्देनाभिहिततया, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इति पूर्ववाक्येऽपि विकारार्थमयट्प्रत्ययेन तस्या एवाभिधातुमुचिततया तस्या एवोपादेयत्वं सिद्धवत्कृत्य विज्ञातत्वाभिधानात्, भवन्मते चावस्थाया ज्ञातत्वासंभवादनुपपत्तिस्तदवस्थैव । न च, 'सर्वं मृण्मयं विज्ञातं स्यात्' इत्यत्र मयट्प्रत्ययार्थविकारस्तु अवस्थावान् । 'वाचाऽऽरम्भणं विकारः' इत्यत्रावस्था विकारशब्देनोच्यते । 'मृत्तिकेत्येव सत्य'मित्यभेदप्रतिपादनांशेऽनुषक्तेन मृण्मयमिति पदेन पुनरप्यवस्थावान् विकारः परामृश्यत इति वाच्यम्—अस्या उक्तेरहृदयङ्गमत्वात् । तस्मात्, 'सर्वं मृण्मयं', 'वाचाऽऽरम्भणं विकारः', "मृत्तिकेत्येव सत्य'मिति स्थलत्रयेऽप्यैकरूप्यमेव वक्तव्यम् । तस्मात् विकाररूपावस्थाया युष्मन्मते ज्ञातत्वानभ्युपगमात् एकविज्ञानेन सर्वस्य तदभिन्नस्य विकारस्य ज्ञानमनुपपन्नमिति चेत्—

उच्यते-[प्रकृतौ ज्ञातायां विकृतिर्ज्ञाता भवतीत्यस्यायमर्थः ।] प्रकृतिविकृत्योः कारकव्यापारवैयर्थ्यप्रसङ्गात् भेदसत्त्वेऽपि पृथक्स्थिति

---

उच्यत इति । उपादानत्वनिर्वचनविषये वादिनां नानाप्रक्रिया-

प्रतिपत्त्यनर्हत्वेन पृथक्सत्ता नास्तीति सिद्धम् । ततश्चाभिन्नसत्ताक कारणम्, उपादानम्, प्रकृतिः, आत्मेति पर्यायाः । तत्र च नैयायिका स्तदेव स्फुटतरविवेकप्रकार(श)रहितम्, 'अयुतसिद्धं कारणम्' 'समवायिकारणम्' इति व्यवहरन्ति । कार्यभिन्नाभिन्नं कारणमुपादानमिति भेदाभेदवादिनः । भिन्नतयाऽभिन्नतया वा दुर्वचं कारणमिति केचित् । भिन्नत्वे सति अभिन्नसत्ताकं कारणमित्यन्ये । अस्माकं तु भिन्नयोरप्युपादानत्वाभ्युपगमादभिन्नसत्ताककारणत्वलक्षणमपृथक्सिद्धकारणत्वमेवोपादानत्वमिति सम्मतम् । घटशरावादिरूपावस्थैव विकारः । "घटशरावादिनानासंस्थानरूपविकारापन्नं नानानामधेयमपि मृत्तिकासंस्थानविशेषत्वात् मृद्द्रव्यमेवेत्थमवस्थितम्" इति वेदार्थसंग्रहेऽवस्थाया विकारत्वकथनात्, तस्य च मृदश्च दण्डघटयोरिव पृथक्स्थितिप्रतिपत्त्योरभावादपृथक्सिद्धत्वेन घटापृथक्सिद्धकारणत्वरूपस्योपादानत्वस्य मृदि सत्त्वात् मृदो घटशरावादिं प्रति प्रकृतित्वमारम्भत्वं च । ततश्च तस्यां मृदि ज्ञातायां घटशरावादिलक्षणतदवस्थारूपविकृतीनां पृथक्स्थितिप्रतिपत्त्यनर्हाणां मृत्सत्तया सत्तावत्त्ववत् मृज्ज्ञाततयैव ज्ञातताश्रयत्वात् सर्वमिदं विज्ञातमिति शक्यते वक्तुम् । एवं नखगोऽपि

---

द्वैतरूप्यं नास्तीति अनुभवं प्रामाणिकवस्तुपरिस्थितिश्चानुसृत्य किञ्चिद्दूषणं तन्निर्वचनीयम् । तत्र भाष्यनस्थाख्यत इति पूर्वोक्तमुपादानत्वं भिन्ने चाभिन्ने च कारणेऽनुगतमेव । परन्तु स्वस्य ना शब्दरूपादीनामुपादेयत्वानन्तरस्ताया शक्तितया तदनुरोधेनापृथक्सिद्धकारणत्वरूपमुपादानत्वं च निरुच्य प्रकृतिसाधनेन विशेषणभूतस्यैचिदात्मप्रत्युपपादनं इत्युक्तं भवति ।

चेतनाचेतनसमस्तप्रपंचं प्रति अपृथक्सिद्धकारणत्वेन सर्वात्मतया सर्वस्य ततो भिन्नत्वेन प्रदर्शनायोग्यतया ज्ञातत्वं सिद्धम् ।

ननु भाष्येपि, "केवलभेदवादिनाञ्चात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासंभवादेव ब्रह्मात्मभावोपदेशा न संभवन्तीति सर्ववेदान्तपरित्यागः स्यात्" इति केवलभेदस्य प्रतिक्षिप्तत्वात्—

[1]"एकत्वे सति नानात्वं नानात्वे सति चैकता ।
अचिन्त्यं ब्रह्मणो रूप कस्तद्वेदितुमर्हति ॥"

इति स्मृतिवशात् जगद्ब्रह्मणोर्भिन्नाभिन्नत्वमेव भगवतो भाष्यकारस्याभिमतम्। ततश्च कार्याभिन्न कारणमुपादानमित्येवास्तु। एवं सति सर्वस्यापि तदभिन्नत्वात् सर्वविज्ञानमप्युपपद्यते । "हरेर्न किंचिद्व्यतिरिक्तिमस्ति", "एक. समस्तं यदिहास्ति किंचित् त्दच्युतो नास्ति परं ततोऽन्यत्", एकं सदेकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति" इत्यादिनिषेधाश्च केवलभेदाश्रयनिषेधकतयोपपद्यन्ते । केवलभेदपक्षे शरीरभूतस्य जगतः आत्मभिन्नत्वात् भिन्ननिषेधो नोपपद्यते । अत कार्याभिन्नं कारणमुपादानमित्येवास्त्विति चेत् ; न— "भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात् तत्प्रयुक्तजीवगता दोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्त

1 अत्र सत्यन्तेन एकत्वनानात्वयोर्योगपद्यावगमनात् पूर्वपादार्थापेक्षया द्वितीयपादार्थस्य भेदा [illegible] रक्त्यप्रसंगाच्च एकत्वमविभक्तनामरूपत्वम् नानात्वं [illegible] विभक्तनामरूपत्वमित्यर्थं विहाय वेदार्थसंग्रहे एवं व्याख्यातम्—प्रकाशितृतयैकत्वे सति नानाप्रकारत्वं नानात्वम्, नानारूपत्वे सति एकत्वमद्वितीयत्वं समाभ्यधिकराहित्यमिति । एष सिद्धान्तेऽर्थः ।

निखिलदोषरहितकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परि
त्युक्ता स्यु" इति तत्रैव भेदाभेदपक्षस्य भाष्ये दूषितत्वात् । "ब्रह्मा
ज्ञानपक्षादपि पापीयानय भेदाभेदपक्ष" इति वेदार्थसग्रहेऽतिनिर्दित
त्वात् भेदाभेदवादो न भाष्यकाराभिमत । ननु यदि भेदाभेदवादो न
भाष्यकाराभिमत, कथ तर्हि "केवलभेदवादिना चात्यन्तभिन्नयो"
इति भाष्यमुपपद्यताम् । शरीरात्मभावो ह्यत्यन्तभेद एव । प्रकार
प्रकारिभावो हि भेदरूप । नियमेन प्रकारप्रकारिभावलक्षण शरीर
शरीरिभावो हि नियमेन रूप इति शरीरात्मभावे केवलभेद एव
दृढीकृतो भवति । अत एव । ऽप्यभेदेऽपि हि भेदेनैवमधीयते" इति
शरीरात्मभाव एव भेदत्वेन वर्णित इति चेत्— उच्यते । 'अत्यन्त
भिन्नयो रित्यादिभाष्यस्याय भाव —लोके ह्यैक्यव्यवहारे स्वरूपैक्य
तन्त्रम् । तदभावे देशादिलक्षणप्रकारैक्यम्, यथा 'साय गोष्ठे सर्वे गाव
एकीभवन्ति,' 'राजान एकीभूता', एको व्रीहिरित्यादौ देशबुद्धि
जात्याद्यभेदत । इह तु जगद्ब्रह्मणो स्वरूपतो भिन्नयो केनचिदा
कारेणाभेदो वक्तव्य । स क इति विचारे—अपृथक्सिद्धविशेषणत्व
मिति सहसङ्गत्वोऽभ्यस्ता(स्या ?)पृथक्सिद्धपदप्रयोगात् सिद्ध्यैक्यमेव
भाष्यकृदभिमतमिति प्रतीयते । सिद्धिर्नाम स्थिति प्रतिपत्तिश्च । "पृथक्
स्थितिप्रतिपत्तियोग्य" इति भाष्यादिग्रन्थेषु बहुशो व्यवहारदर्शनात् ।
स्थितिप्रतिपत्त्योरैक्यम् अवयवावयविजातिव्यक्तिगुणगुणिस्थलेषु पृथ
क्स्थितिप्रतिपत्त्योरभावादवसीयते ।

ननु घटो भूतले वर्तते, नीलादिगुणस्तु घटे । तथा गन्धरस

शब्दाना द्रव्यप्रतिपत्तिमन्तरेणापि पृथक्प्रतिपत्तिर्दृष्टा । अत कथ स्थितिप्रतिपत्त्यैक्यमुपपद्यताम् । न च—

"तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयो ।
अनश्यदेकमपराऽऽश्रितमेवावतिष्ठते ॥"

इति तार्किकोक्तमयुतसिद्धत्वमेवापृथक्सिद्धत्वमिति वाच्यम् , तथा हि सति नियताश्रयाश्रयिभावलक्षणायुतसिद्धत्वस्य भेदैकसाधकत्वेन प्रकारैक्यासाधकत्वादिति चेत्—न ।

"पृथक्प्रतिपत्तिकार्यार्हाणामेव पृथगुत्पत्त्यादिकमपेक्षितम्" इत्यादिश्रुतप्रकाशिकाग्रन्थपर्यालोचनायाम् , यस्योत्पत्तिविनाशापरसत्त्वादिकमाश्रयोत्पत्त्यादिनैव व्यवह्रियते, तत् तदपृथक्सिद्धमिति फलति । ततश्च [यत् ?] यदुत्पत्त्या 'उत्पद्यते' इति व्यवह्रियते, यत्सत्त्वया सदिति व्यवह्रियते, न तु सत्तान्तरमपेक्षते, तत् तदपृथक्सिद्धमिति । ततश्च विकृतेः प्रकृतिसत्तातिरिक्तसत्ताशून्यत्वादभिन्नसत्ताककारणत्वमुपादानत्वम् । तदेव चाऽऽत्मत्वम् । इदम् , 'तज्जत्वात्तदन्यत्वात् तन्नियाम्य

---

1 ययोर्द्वयोराधाराधेयभूतयोर्मध्ये एकम् आधेयभूतम् अपराश्रितमेव अविनश्यदेव सदा वर्तते, तयोरयुतसिद्धशब्दवाच्यत्वम्। युतु मिश्रणामिश्रणयोः । युतसिद्धौ पृथक्सिद्धौ । अयुतत्वमपृथक्त्वम् । ननु कपालादिनाशात् घटादिनाशः । तथा कपालनाशोत्पत्तिकाले घटस्य कपाले विनाऽपि स्थित्या अपराश्रितमेवेति कथमिति चेत्—अत एव अनश्यदित्युक्तम् । अविनश्यदवस्थस्यापराश्रितत्वं विवक्षितम् । तदानीं तु घटादिः नश्यत्—अनन्तरक्षण एव नाशं लप्स्यमानमिति यावत् । अतो न दोषः । अत्र ते एवायुतसिद्धे द्वे विज्ञातव्ये इति द्वीयप ऽः श्रेयान् ; उपदिष्टानिदर्शनादित्यलम् ।

त्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मेति वदतो भगवतो भाष्यकारस्याप्यभिमतम् । न खलु आत्मत्वमन्तःप्रविश्य नियन्तृत्वरूपम्, तादृशात्मत्वस्योपादानत्वाप्रयोज्यत्वात् । न ह्युपादानत्वनियन्तृत्वाभ्यां निर्वाह्यमात्मत्वं नियन्तृत्वरूपं संभवति, अस्मदुक्तमात्मत्वं तूभयनिर्वाह्यं भवति । कथम् । उच्यते — तज्जत्वादिनाऽचेतनांशे उपादानत्वलक्षणमात्मत्वं फलति । तन्नियाम्यत्वादित्यनेन जीवरूपेण नियन्तृत्वं विवक्षितम् । जीवापृथक्सिद्धत्वमिति यावत् । ततश्च चेतनवर्गेऽप्यपृथक्सिद्धकारणत्वलक्षणमुपादानत्वमुक्तं भवति । ततश्च ब्रह्मव्यतिरिक्तचेतनाचेतनवर्गं प्रति ब्रह्मणोऽपृथक्सिद्धकारणत्वलक्षणाभिन्नसत्ताककारणत्वरूपोपादानत्वप्रकृतित्वापरपर्यायात्मत्वस्य सत्त्वादात्मभूते तस्मिन् ज्ञाते इतरत् सर्वं ज्ञातमेव । इतरस्य पृथक्प्रतिपत्तियोग्यस्य ज्ञातव्यस्याभावात् तत्सत्तया सदिति व्यवहारवत् तज्ज्ञाततया ज्ञातमिति व्यवहर्तुं शक्यत्वात् ।

न च प्रपञ्चस्य ब्रह्मसत्ताव्यतिरिक्तसत्ताऽभावे मृषावादिमतवत् मिथ्यात्वं स्यादिति वाच्यम्—यथा गुणगतजात्यनभ्युपगन्तृमते रूपादौ सद्बुद्धेर्द्रव्यगतसत्ताविषयत्वेऽपि न रूपादिमिथ्यात्वम्, यथा वा द्रव्यगतगुणादिषु द्वित्वैकत्वादिसंख्याप्रतीतेर्द्रव्यगतसंख्यानिर्वाह्यत्वेऽपि रूपादिगतसंख्याप्रतीतेर्न भ्रान्तित्वम्, यथा वा सिद्धान्ते घटत्वाद्यवस्थाया मृद्द्रव्यापेक्षयोत्पत्तिस्थितिसत्ताना पार्थक्याभावेऽपि न तत्रोत्पत्तिस्थितिसत्ताप्रतीतेर्भ्रान्तित्वम्, एवं प्रपञ्चगतसत्ताप्रतीतेर्ब्रह्मसत्तानिर्वाह्यत्वेपि न तत्सत्त्वप्रतीतेर्भ्रान्तित्वम्, न वा प्रपञ्चस्य मिथ्यात्वम् । अत एव, "नैकस्मिन्नसंभवात्" इति सूत्रे, "कालस्य पदार्थविशेषणतयैव

प्रतीतेः तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः । कालोऽस्तीति व्यवहारो जात्याद्यस्तित्वव्यवहारतुल्यः" इति स्पष्टं भावितम् । अतो ब्रह्मसत्ताव्यतिरिक्तसत्ताशून्यत्वेऽपि प्रपञ्चस्य न मिथ्यात्वम् ।

नन्वपृथक्सिद्धकारणत्वमुपादानत्वम् ; तदेवाऽऽत्मत्वं चेत्, भगवद्विग्रहगोपुरप्राकारनित्यसूरिप्रभृतिनित्यविभूतिं प्रति आत्मत्वं न स्यात् ; कारणत्वाभावेनोपादानत्वाभावात् ।

ननु च "प्रतिज्ञाहानिरव्यतिरेकात्" इति सूत्रे वियदादेर्ब्रह्मण उत्पत्त्यनभ्युपगमे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाहानिप्रसङ्गात् वियदाद्युत्पत्त्यभ्युपगमवत्, नित्यविभूतेरप्युपादेयत्वमभ्युपगन्तव्यम् । इतरथा सर्वविज्ञानप्रतिज्ञाहानिप्रसङ्गात् । न च नित्यविभूतेर्नित्यत्वग्राहकप्रमाणानुसारात्, "येनाश्रुतं श्रुतं भवति", 'सर्वमिदं विज्ञातं भवति' इत्यादावश्रुतादिशब्दानां नित्यविभूतिव्यतिरिक्तपरतया संकोचः क्रियतामिति वाच्यम्—"आकाशवत् सर्वगतश्च नित्यः", "वायुश्चान्तरिक्षं चैतदमृतम्", आकाशं नित्यं निरवयवद्रव्यत्वादित्यादिप्रमाणबलेन अश्रुतादिशब्दानामाकाशव्यतिरिक्तपरत्वमेव स्यादित्याकाशप्रतिबन्धाः दुर्मोचत्वमेव स्यादिति इति चेन्न—नित्यविभूतेर्नित्यत्वानभ्युपगमे बहुप्रमाणसंक्षोभप्रसङ्गात् अश्रुतादिशब्दानां नित्यविभूतिव्यतिरिक्तपरतया संकोचाभ्युपगमेऽपि वियन्नित्यत्वप्रतिपादकप्रमाणस्य आपेक्षिकनित्यत्वपरतयाऽप्युपपन्नस्य प्रतिविपादयिषितसर्वविज्ञानप्रतिज्ञासंकोचकत्वायोगात् ।

ननु—वाक्यकारैः "रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात्" इति, यथा ज्ञानादयः परस्य ब्रह्मणः स्वरूपतया निर्देशात्

स्वरूपभूता गुणा, तथेदमपि रूपं श्रुत्या स्वरूपतया निर्देशात् स्वरूप भूतमित्युक्तत्वात्, "यदात्मको भगवान् तदात्मिका भगवतो व्यक्ति" इति श्रुतेर्भगवद्विग्रहादिकं सर्वमात्मस्वरूपादव्यतिरिक्तमित्येवाभ्युपगम्यताम्। एवञ्च एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽपि न क्लेशिता भवति। न च वापीकूपारामादीनां कथं ब्रह्मरूपत्वमिति वाच्यम्। वापीकूपो द्यानादिप्रतिपादकवाक्यानां तत्तत्क्रीडाजनितसुखानां ब्रह्मानुभवाम्बुनिधि स्वकणिकायमानत्वमित्यत्र तात्पर्यात्। "यच्चास्येहास्ति, यच्च नास्ति, सर्वं तदस्मिन् समाहितम्, सर्वाणि च भूतानि, सर्वे च कामा" इति वाक्यस्य ब्रह्मणः सर्वविधभोग्यत्वमस्तीत्यत्र तात्पर्यमिति दहराधिकरणे भाष्यश्रुतप्रकाशिकयो स्थितत्वादिति चेत्, न—अर्चिरादिना मार्गेण विरजानदीमतिक्रम्य गन्तव्ये अप्राकृते लोके, "तदैरमदीयं सरः। तदश्वत्थः सोमसवनः। तदपराजिता पूर्नाम" इत्यादि वाक्यप्रतिपन्नानां सरोऽश्वत्थादीनां ब्रह्मस्वरूपमात्रत्वस्य वक्तुमशक्यत्वात्। "द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च। क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते॥" इति अमूर्तशब्दितमुक्तात्मरूपस्यापि शरीरवाचिना रूपशब्देन निर्देशेन मुक्तात्मस्वरूपस्य परब्रह्मस्वरूपताया वक्तुमशक्यत्वात्, "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता", "स तत्र पर्येति" इत्यादिश्रुतिभिर्मुक्तानां ब्रह्मणश्च भोक्तृभोग्यतयाऽऽधाराधेयभावेन च भेदप्रतीत्या, नित्यसूरीणां ब्रह्मस्वरूपमात्रत्वासंभवात् तान् प्रत्यपि च परमात्मन

---

एवमचेतननित्यविभूतिनिरूपितमात्मत्वमाक्षिप्य मुक्तनित्यचेतननिरूपितमात्मत्वमाक्षिपति द्वे रूपे इत्यादिना।

आत्मत्वस्य वक्तव्यत्वात् नित्यसूर्यादीनाञ्च नित्यतया तान् प्रति उपादानत्वलक्षणात्मत्वासंभवात् कथं तस्य सर्वात्मत्वं सिध्येदिति चेत् —

यदि नित्यपदार्थान् प्रत्यप्यात्मत्वं परमात्मनो वक्तव्यमिति निर्बन्धः, तर्हि तान् प्रति आत्मत्वमुपादानत्वैकदेशभूतमपृथक्सिद्धाश्रयत्वमेव तत्राऽऽत्मशब्दप्रवृत्तिनिमित्तमस्तु । इतरत्रोपादानत्वलक्षणात्मत्वम् । एतद्रूपं चाऽऽत्मत्वं तज्जलानादिभिरुपपाद्यमिति नानुपपत्तिः । ततश्चोपादाने ज्ञाते तदपृथक्सिद्धमुपादेयमपि ज्ञातं भवतीति एक विज्ञानेन सर्वविज्ञानमुपपन्नं भवति ।

यद्वा यथा, "को भवान्" इति सौवीरराजप्रश्नस्य प्रकृति

---

सदेव सोम्येदमग्र आसीदित्यत्र इदम्पदेन विशेषणमात्रग्रहणं न भवति, विशेषणे विशेष्यभूतसद्भेदायोगात् । अतस्तत्र यथा विशिष्टार्थैकेदम्पदप्रयोगो वेदान्तव्युत्पत्तिरहितं प्रति, तथाऽयं प्रश्नोऽप्युपपद्यते । एवञ्चैकविज्ञानेन सर्वविज्ञानं सूपपन्नम्, एकसर्वयोरभेदादेकविज्ञानान्तर्भावात् । ननु सर्वपदेन उत्तरावस्थाविशिष्टानामेव ग्रहणात् अवस्थानां भिन्नत्वात् पूर्वावस्थाविशिष्टज्ञानात् तज्ज्ञानं कथम्? न च धर्मिमात्रस्य ज्ञातत्वादेवं व्यवहार इति वाच्यम्—तथा सति कार्यकारणैक्यात् एककार्यज्ञानात् तत्कारणजन्यसकलकार्यज्ञानमिति, कार्यज्ञानात् कारणज्ञानमिति चोक्तिप्रसङ्गादिति चेन्न—एकस्मान्महामृत्पिण्डात् घटशरावाद्यनेकनिर्माणे जाते, यथा मृत्तिकाज्ञाने तद्दशारूपघटशरावादिकं ज्ञातमित्युच्यते, 'इदं सर्वं पूर्वं हि मृत्तिकैवासीत्' इति पश्चाद्विवेकात् । तथा कारणभूतचिदचिद्विशिष्टब्रह्मप्रदेशविज्ञाने सर्वस्यापि प्रपञ्चात्मनो ब्रह्मणः तादृशचिदचिदंशावच्छिन्नब्रह्मांशाभिन्नतया ज्ञातत्वमुच्यत इति वैलक्षण्यादित्याशयेन समाधानान्तरमाह यद्वेत्यादिना ।

तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च ॥ ४ ॥

---

सम्प्रष्टात्मविषयत्वेऽपि वस्तुगत्या भवच्छब्दमुख्यार्थत्व परिशुद्धात्मस्वरूप स्यैवोचितमिति मत्वा तस्यैव भवच्छब्दमुख्यार्थत्व प्रदर्शयन् आदि भरतः, "यदा समस्तभूतेषु पुमानेको व्यवस्थित ", "यद्यन्योऽस्ति पर कोपि" इत्यादि प्रत्यवोचत्, यथा वा अथर्वशिरसि रुद्र प्रति देवै प्रयुक्तस्य, "को भवान्" इति प्रश्नस्य पुरोवर्तिरुद्रमात्रपरत्वेऽपि भवच्छब्दस्य परमात्मपर्यन्तत्वशिक्षणाय "अहमेक प्रथममासम्" इत्यादिप्रतिवचनप्रवृत्ति — एवं सर्वमिद विज्ञातमिति प्रश्नस्य विशेष णमात्रपरत्वेऽपि विशेष्यपर्यन्तत्वशिक्षणाय स्थूलचिदचिच्छरीरके ब्रह्म प्रति सूक्ष्मचिदचिच्छरीरक ब्रह्मोपादानमित्येतदर्थप्रतिपादकस्य प्रति वचनसंदर्भस्य प्रवृत्तौ दोषाभावादिति ।

प्रपञ्चित चेदमस्माभि बृहदारण्यकप्रकाशिकायामित्यलमतिचर्चया ॥३

तस्मै स होवाच । स्पष्टोऽर्थ । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति । अत्र प्राप्तुमित्यध्याहार । यद्वस्तु प्राप्तु द्वे विद्ये ज्ञाने उपादेये इति ह वेदाभिज्ञा पराशरादय,

"तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्त महामुने ।
आगमोत्थ विवेकाच्च द्विधा ज्ञान तथोच्यते ॥"

---

४ यद्वस्तु प्राप्तुमित्यस्य वदन्तीत्यत्रान्वय । इतीत्युक्त्या इतिहेत्युक्ति 'द्वे विद्ये वेदितव्ये' इति वाक्यमनितरूपेण परम्परया प्रवृत्तमिति दर्शयितुम् ॥ प्राप्तुमित्यस्य, वदन्तीत्यत्रापि प्रत्यक्ष कर्म

"शब्दब्रह्मागममयं परं ब्रह्म विवेकजम्" इति यद्वदन्ति, तज्ज्ञाने सर्वमिदं विज्ञातं भवतीत्यर्थः । एतत् सर्वमभिप्रेत्य भगवता भाष्यकृता, "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा चेति । ब्रह्म प्रेप्सुना द्वे वेदितव्ये ; ब्रह्मविषये परोक्षापरोक्षरूपे द्वे ज्ञाने उपादेये इत्यर्थः" इति भाषितम् । एतेन—परविद्यायाः ब्रह्मप्रेप्सूपादेयत्वेऽपि अपरविद्यायास्तथात्वाप्रतीतेः, प्रत्युत 'अथ परा यया तदक्षरमधिगम्यते' इति वाक्यपर्यालोचनायामपरविद्याया ब्रह्मप्रेप्सूपादेयत्वाभावस्यैव प्रतीतेः, 'ब्रह्मप्रेप्सुना द्वे विद्ये उपादेये' इति भाष्यं कथम्-इति शङ्काऽपि निरस्ता । प्राप्तुमितिपदाध्याहारेणास्यार्थस्य प्रतीतेः । इतरथा यत्तद्वैयर्थ्यात् । किंच, 'कस्मिन्नु भगवः' विज्ञातिरिक्तमस्ति', इति सर्वोपादाने पृष्टे विद्याद्वयकथनम् 'आम्रान् पृष्टः कोविदारा नाचष्टे' इति न्यायमनुसरेत् । अतो यथोक्त एवार्थः । ओदनपाक पच-

---

* त्वं सुवचमिति यद्वदन्तीत्युक्तम् ।

शब्दब्रह्मेत्यर्धं, 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती'ति मनूक्ताविव शब्दब्रह्मपदार्थः आगमजन्यं ज्ञानम् ; परब्रह्मपदार्थः विवेकादिजन्यज्ञानमित्यर्थः वि. पु. विष्णुचित्तीये ६-५

ननु सर्वविद्याप्रतिष्ठाभूतविद्यामङ्गिरसि स्थितां विदित्वा शौनक उपसद्य तादृशविद्याविषयः क इति पप्रच्छ । तत्र विद्येयमितरविद्यावत् न श्रवणमात्ररूपा ; किन्तु परोक्षापरोक्षोभयरूपेति ज्ञापयितुं सर्वविद्याप्रतिष्ठाभूतविद्याया द्वैविध्यं प्रथमतः कथयित्वा ततो विद्याविषयं पृष्टं यत्तदद्रेश्यमित्यादिना वक्तीत्युक्तौ न दोष इत्यत्राह अतो यथोक्त एवेति । प्रथमवाक्यस्यैव प्रश्नोत्तररूपत्वे संभवति, न तदुपेक्षितुं युक्तम् । 'इति यद्वदन्ति सा परा चापरा

तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम् [इतिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणि] इति । अथ परा यया तदक्षरमधिगम्यते (५)

---

तीतिवत् द्वे विद्ये वेदितव्ये इति निर्देशः । के ते विद्ये इत्यत्राऽऽह— परा चैवापरा चेति । परमपरमिति ज्ञानं द्विविधमित्यर्थः ॥ ४ ॥

तत्र सूचीकटाहन्यायेनापरज्ञानस्वरूपमाह—तत्रापरा—ऋग्वेदो

. . . .

छन्दो ज्योतिषमितिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीति । षडङ्गोपेतसशिरस्कसोपबृंहणवेदश्रवणजन्यं परोक्षज्ञानमित्यर्थः ।

अपरविद्यामुक्त्वा परविद्यामाह—अथ परा, यया तदक्षर-

---

चे'ति वा, द्वे विद्ये वेदितव्ये, यस्माद्ब्रह्मविद इत्थं वदन्तीति वा, परा चैवापरा चेति द्वे विद्ये वेदितव्ये इति ब्रह्मविदो यद्वदन्ति स्म तदुभयाचेति वा योजनायाम्, यत्पदस्य निरर्थकत्वस्वीकारेणोपेक्षापक्ष इव, प्रश्नोत्तररूपत्वालाभेऽपि यत्पदस्य ब्रह्मविद्यावेद्यपरत्वमार्थिकस्य ब्रह्मप्रेप्सुनेति भाष्यपदानुसारेण यद्वस्तु प्राप्तुमिति वा—, 'ब्रह्मविषये' इति भाष्यपदमनुसृत्य यत् प्रति यद्विषये इति वा अर्थवर्णने, अध्याहारमुपेक्ष्य 'द्वे विद्ये वेदितव्ये इत्येवं 'ब्रह्मविदो यद्वस्तु वदन्ति स्मे'त्यर्थवर्णने वा उत्तरस्य सम्यग भवति—यदेवं वदन्ति, तस्मिन् विज्ञाते सर्वं विज्ञातं भवतीति लाभात् । अतो यत्पदस्य ब्रह्मपरतया अर्थवर्णनमेव साधीय इति । एवमङ्गोपाङ्गसर्वविद्याविशिष्टसर्ववेदविद्यावेद्यत्वस्य ब्रह्मणि पर्यवसानकथनात् ब्रह्मविद्यायास्सर्वविद्याप्रतिष्ठात्वमुक्तमुपपादितं भवति ।

५. ऋग्वेदादिपदमुपनिषद्व्यतिरिक्तकर्मभागमात्रपरमिति भ्रान्तिव्युदासाय सशिरस्केत्युक्तिः । सोपबृंहणेति । अत्र मूले ज्योतिषमित्यन्तमेव शाङ्करानुमतम् । तदुपरि 'इतिहासपुराणं

**मधिगम्यते** । अत्र तच्छब्दः, 'इति ह स्म यद् ब्रह्मविदः, इति यच्छब्द-प्रतिनिर्देशकः(?) । येन ज्ञानेन 'इति ह स्म यद् ब्रह्मविद' इति वाक्ये प्राप्यतया निर्दिष्टं तदक्षरमधिगम्यते=आधिक्येन गम्यते, अपरोक्षी-क्रियत इत्यर्थः । विवेकादिसाधनसप्तकजन्यं श्रवणजन्यपरोक्षज्ञानानन्तर-भावि दर्शनसमानाकारं ज्ञानं परज्ञानमित्यर्थः ।

एतेन-अधिगम्यत इत्यस्य, ज्ञायत इति वा, प्राप्यत इति वाऽर्थस्याऽऽश्रयणीयतया परविद्याया एव ब्रह्मविषयत्वतत्प्राप्तिहेतुत्व-योः सिद्ध्या अपरविद्यायाः ब्रह्मप्राप्तितद्विषयत्वयोरभावेन अपरविद्याया अपि ब्रह्मविषयत्वतत्प्राप्तिहेतुत्वप्रतिपादकभाष्यासंगतिः । किंच पर-*विद्याया अपरोक्षज्ञानरूपत्वे प्रमाणानुपलम्भात् अपरोक्षत्वप्रतिपादक-*भाष्यस्याप्यसंगतिः-इति दूषणं परास्तम् । अधिगम्यत इत्यस्यापरोक्षी-क्रियत इत्यर्थकत्वात् । नन्वेतदुपबृंहणे **श्रीविष्णुपुराणे**—"द्वे विद्ये वेदितव्ये वै इति चाऽऽथर्वणी श्रुतिः । परया त्वक्षरप्राप्ति. ऋग्वेदादि-मयाऽपरा" इति अधिगम्यत इत्यस्य प्राप्त्यर्थतयोपबृंहितत्वात् कथमिद-मुच्यत इति चेत्—यदि उपबृंहणानुसारेण प्राप्त्यर्थकतया व्याख्या-तव्यमिति निर्बन्धः, तर्हि, इति ह स्म यद्ब्रह्मविदो वदन्तीति पूर्ववाक्ये

न्यायो मीमांसा धर्मशास्त्राणि' इति पाठः श्रीभाष्यसंमतः । भाषितं हि (१-२-२३) साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्येति । मीमांसापदेन न्यायोऽपि सङ्गृहीतः । एव मुपरि तत्र तत्र निर्देशक इति । यद्ब्रह्मविद इति यच्छब्दघटितवाक्यस्य तस्मिन् विज्ञाते सर्वं विज्ञातं भवतीत्यर्थसिद्धोत्तरवाक्यसापेक्षत्वेनेर-वाक्यत्वाभावायं तच्छब्दस्तत्प्रतिनिर्देशभूतः, किन्तु पूर्वं यच्छब्दघटित-

परापरविद्ययोर्द्वयोरपि ब्रह्मप्राप्तिहेतुत्वस्य कथितत्वेन, 'यया तदक्षरमधिगम्यते' इत्यस्यापरविद्याव्यावर्तकत्वाभावप्रसङ्गेन तद्व्यावर्तकत्वार्थं 'साक्षात्' इति पदमध्याहृत्य, 'यया साक्षादक्षरमधिगम्यते=प्राप्यते' सा परविद्या' इत्यस्तु । अपरोक्षत्वं त्वर्थाल्लभ्यते । श्रुत्यन्तरे [च] "निचाय्य तन्मृत्युमुखात् प्रमुच्यते", "तस्मिन् दृष्टे परावरे" इत्यादिदर्शनादिति द्रष्टव्यम् ।

ननु "स्वाध्यायस्य तथात्वे हि" इति सूत्रे. 'तेषामेवैतां ब्रह्मविद्यां वदेत' इत्युपसंहारगतब्रह्मविद्याशब्दस्य ब्रह्म वद्यां वेदविद्यामित्युपनिषत्परतया भाष्यकृता व्याख्यातत्वात्, 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति द्वितीयखण्डगतब्रह्मविद्याशब्दस्यापि तत्परत्वौचित्यात्, उपक्रमे च 'ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह'ेति उक्तिकर्मतया श्रूयमाणाया ब्रह्मविद्याया उपनिषद्ग्रन्थरूपत्वस्यैवौचित्यात्, 'तत्रापरा–ऋग्वेदो यजुर्वेदः सामवेदः' इत्यत्र ऋग्वेदादिशब्दानां तज्जन्यज्ञानलक्षणाया अयुक्तत्वेन विद्याशब्दस्यैव ग्रन्थपरत्वाश्रयणस्य युक्तत्वात् परविद्याशब्देनापि साक्षाद्ब्रह्मप्रापकोपनिषद्ग्रन्थ एवाभिधातुमुचितः । ततश्च परोक्षापरोक्षरूपज्ञानपरत्वे न युक्तिं पश्याम इति चेत्—अत्रोच्यते—यदि परविद्याशब्देनोपनिषद्ग्रन्थसंदर्भविशेषः प्रतिपाद्य, ऋग्वेदादिशब्देन मुख्यया वृत्त्या ऋग्वेदादय एव प्रतिपाद्या, तर्हि ब्रह्मप्रतिपादकोपनिषदामृग्वेदा-

---

निदर्शक इति मन्तव्यम् ॥ परविद्येत्यस्त्विति । व्याख्यातत्वमित्यनुषङ्गात् समानकर्तृकक्रियालाभः । निचाय्य तदिति । कठोपनिषदि भाष्यानुसारेण तमिति मुद्रणेऽपि तदिति युक्तमेव (धनम्र. १-४-१)।

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।

दियर्हिर्भावप्रसङ्गेन, या वेदबाह्याः स्मृतय', इत्युक्तरीत्या असदर्थत्वमेव स्यात् । ऋग्वेदादिशब्दाना मुख्यार्थमाश्रितवद्भिरपि परै. उपनिषदा वेदबाह्यत्वप्रसङ्गात् अपरविद्याशब्दो ब्रह्मज्ञानवाचीति व्याख्यातम्। इयांस्तु विशेष.—परमते द्वे विद्ये वेदितव्ये इत्यत्र सङ्ख्यायुक्त एव विद्याशब्दः असत्यपि साधारणे प्रवृत्तिनिमित्ते ऋग्वेदादिग्रन्थसदर्भलक्षणामपरविद्या ब्रह्मज्ञानलक्षणा परविद्या च वक्तीति दोषोऽस्तीति। अस्मन्मते स नास्ति। किंच परव्याख्याने ऋग्वेदादिवेद्यविलक्षणत्वाद् ब्रह्मण, "वेदैश्च सर्वैरहमेव वेद्य" इति स्मृति पीडयेत । अत ऋग्वेदादिजन्यं ज्ञानं ब्रह्मविषयकमेवेत्येव युक्तम् । अत्र परापरज्ञानशब्दितापरोक्षपरोक्षज्ञानविषयत्वं ब्रह्मण एवेति भाष्यकारीया साधीयसी ॥ ५ ॥

यत्तदद्रेश्यं. . धीराः ॥ अद्रेश्यम् अदृश्य ज्ञानेन्द्रियाविषय (यम्) । अग्राह्य पाण्यादिकार्यहानोपादानाद्यविषय (यम्) । अगोत्र कुलरहितम् । अवर्णम् अपेतब्रह्मक्षत्रादिकम् । अचक्षुःश्रोत्र ज्ञानेन्द्रियरहि-म्।

६. भाष्ये 'अविषय.' इति प्रथमान्तपाठे 'यदद्रश्यत्वादिविशिष्टम्, यद्भूतयोनि परिपश्यन्ति तदव्ययम्' इति योजना। सुसूक्ष्ममित्यन्तस्य प्रथमान्तत्वात् प्रथमार्थे व्यत्ययेन द्वितीया ग्राह्या। यद्वा आनुपूर्व्या प्रतिपदं क्रमेण व्याख्यानेऽप्यन्वयक्रम· यथायोगमभिमतः । एवं बहुलं शाङ्करे। एव च नित्यमित्यादि तृतीयान्तम्। उक्तविशेषणविशिष्टमित्यस्य अपाणिपादत्वान्त विशेषणविशिष्टमित्यर्थः । तथा च यदपाणिपादत्वान्तविशिष्ट भवति, यत् नित्यं विभुं सर्वगतं सुसूक्ष्मं भूतयोनि परिपश्यन्ति, तदव्ययमिति योजना।

नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः॥
[यस्मात् परं नापरमस्ति किञ्चिन् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्।

तत् प्रसिद्धम्। अपाणिपाद् कर्मेन्द्रियरहितम्। नित्यं कालापरिच्छिन्नम्। विभु देशापरिच्छिन्नम्। सर्वगत सर्वत्र अन्त प्रविश्यावस्थितम्। तत्र हेतुमाह—सुसूक्ष्ममिति। उक्तविशेष[ण]विशिष्टं यत्तत् अव्ययम् =अथ परा यया तदक्षरमित्यत्र अक्षरशब्दनिर्दिष्टमित्यर्थ। यद् भूतयोनिं परिपश्यन्ति धीराः। धीराः प्रज्ञाशालिनो यतत्(यत्) सर्वभूतोपादानतया पश्यन्तीत्यर्थ। "योनिशब्दस्योपादानवचनत्व 'यथोर्णनाभि सृजते गृह्णते च' इति वाक्यशेषादवगम्यते" इति प्रकृत्यधिकरणे भावितम् ॥ ६ ॥

ननु भूतयोनिशब्दनिर्दिष्ट सर्वोपादानत्व ब्रह्मणो न संभवति। घटादिषु मृदादेरेवोपादानत्वदर्शनात् ब्रह्मण उपादानत्वासंभवात् इत्याशङ्क्य मृदादिष्वपि ब्रह्मण आत्मतया व्याप्तत्वान्मृदादिरूपस्य ब्रह्मण उपादानत्वे नानुपपत्तिरित्यभिप्रयन् आह—यस्मात् परं नापरमस्ति किंचित्। अत्र परशब्द उत्कृष्टवचन। अपरशब्दोऽन्यवचन।

---

अविनश्यमिति पाठे अद्रेश्यमित्याद्यपि द्वितीयान्तम्, 'यत्तत्, यदव्ययम् तदद्रेश्यमित्यादिसुसूक्ष्मत्वान्तविशिष्ट भूतयोनिं परिपश्यन्ती'ति योजना। उक्तविशेषणेत्यादि। विद्याद्वयवद्यत्वाधिगम्यत्वादिविशिष्टमित्यर्थः। यत्तदित्यत्र तच्छब्दस्योक्तविशेषणविशिष्टमित्यर्थः। श्रुतप्रकाशिकायाम् 'अद्रेश्यं ज्ञानेन्द्रियाविषयः' इत्येवं प्रथमान्तमेव व्याख्यातम्। अर्थान्तरमप्यद्रेश्यादिपदस्योक्तम्। अनेकयत्तच्छब्दानां वाक्यभेदेन निर्वाहश्च तत्रोपर्युक्त.। अविनश्यमिति तु शाङ्करे ॥

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ७ ॥]

---

यस्मादन्यदुत्कृष्टं नास्तीत्यर्थः । नात्र परावरयोर्द्वयोरपि निषेधः । तथा सति नञः सकृच्छ्रुतस्याऽऽवृत्तिप्रसङ्गात् । यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । अणोरणीयान् महतो महीयानिति भावः । "अणीयस्त्वं सूक्ष्मत्वम् । व्यापित्वमिति फलति (यावत्) । ज्यायस्त्वं सर्वेश्वरत्वम् । सर्वव्यापित्वात् सर्वेश्वरत्वादस्यैव, एतद्व्यतिरिक्तस्य कस्याप्यणीयस्त्वं ज्यायस्त्वं च नास्तीत्यर्थः" इति वेदार्थसंग्रहे व्याख्यातम् । कश्चिदिति लिङ्गव्यत्ययश्छान्दसः । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः । नम्रत्वा[न्यक्त्व]भावाद् वृक्षवदप्रणतस्वभावः सन् जगत्प्रधानभूतः परमपदे आस्त इत्यर्थः । तेनेदं पूर्णं पुरुषेण सर्वम् । नियमनार्थमन्तः-

---

७. द्वितीययस्मात्पदानन्तरमपि अपरमिति पदमनुषज्यते । यस्मादन्यत् किञ्चित् अणीयो न भवतीत्येवमर्थः । अभिहितत्वादिति । १—२—२३ सूत्रे प्रकृतसर्वज्ञपदरूढिभङ्गनिरूपणावसरे । अत्रैव स्थानेऽयं मन्त्र इति च २२ सूत्रे तत्र व्यक्तम्; 'भूतयोन्यक्षरमभिधायानन्तरमेव, यस्मात् परं नापरमस्ति किञ्चिदिति समाभ्यधिकनिषेधस्योपक्रमावगतत्वात्' इति व्याख्यानात् । एवं पराधिकरण-(३—२—३५) भाष्यमप्यस्य मुण्डकगतत्वे गमकं स्यात् । तत्र हि "तत्रैव ततोऽन्यस्य परस्य प्रतिषेधात्" इति भाषितम् । तत्रेति पदस्य श्वेताश्वतरोपनिषदीत्यर्थ उक्तः श्रुतप्रकाशिकायाम् । तथापि मुण्डकतैत्तिरीयश्वेताश्वतरस्थपदग्रहणेन पूर्वपक्षे त्रितयगतैकरूपेण मन्त्रेण तन्निरासः क्रियत इति उपनिषत्त्रयं तत्रेति ग्रहीतुमुचितम् ।

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयस्संभवन्ति ।
यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् संभवतीह विश्वम् ॥

प्रविष्टेन सर्वमिदं व्याप्तमित्यर्थः । अतश्च मृदादिशरीरकस्य ब्रह्मणो घटादावप्युपादानत्वसम्भवाद् भूतयोनित्वं नानुपपन्नमिति भावः ॥ अयं मन्त्रः केषुचित् कोशेषु न दृष्टः, कैश्चिदव्याकृतः । तथाऽपि व्याख्यातृभिः, "अक्षरपुरुषस्य, 'यस्मात्परं नापरमस्ती'ति समाभ्यधिकनिषेधश्चोपक्रमावगतः" इत्यभिहितत्वान्न प्रक्षेपशङ्कार्हः इति द्रष्टव्यम् ॥ ७ ॥

ननु लोके उपादानस्य स्वभिन्ननिमित्तकारणसापेक्षत्वदर्शनादेकविज्ञानेन सर्वविज्ञानमनुपपन्नम् । किंच एकस्य ब्रह्मणः परस्परविलक्षणानन्तप्रपञ्चोपादानत्वमपि न सम्भवति । किंच घटाद्युत्पत्तावुपादानभूतमृत्पिण्डादिषु पूर्वावस्थोपमर्दो दृश्यते । प्राकारोपादानभूतासु इष्टकासु चतुरश्रत्वादिलक्षणपूर्वाकारतिरोधानं दृश्यते । अक्षरशब्दितस्य निर्विकारस्य ब्रह्मणः पूर्वाकारोपमर्दतिरोधानयोरसम्भवेनोपादानत्वं न सम्भवतीत्याशङ्कयाऽऽह यथोर्णनाभिः सृजते गृह्णते च । "यथोर्णनाभिर्हृदयादूर्णां सतत्य वक्त्रतः । तया विहृत्य भूयस्तां ग्रसत्येव जनार्दन" इत्युक्तरीत्या यथा लूताख्यकीटविशेषस्य स्वान्तःस्थितन्तुनिःसारणतत्प्रवेशनयोर्निरपेक्षकर्तृत्वम्,—यथा पृथिव्यामोषधयः सम्भवन्ति— यथैकस्या एव पृथिव्याः पूर्वावस्थोपमर्दतिरोधानाभावेऽपि विलक्षणा-

---

माणयुक्त्यन्तरसत्त्वाच्चादरातिशयेन व्याख्याने विदित्य तद्ग्रहणमिति । अत एव भाष्यसंमतेरतिशयादेतन्मात्रमिह व्याख्यातमिव, न तु व्याख्यार्थगृहीतापूर्वमुण्डकमन्त्रान्तरवत् उपेक्षेति । मन्त्रोऽयं श्वेताश्वतरे (३) तैत्तिरीयनारायणेऽपि(१०) ।

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ ९ ॥

---

न्त्वौषध्युपादानत्वम्, **यथा सतः पुरुषात् केशलोमानि**—यथा जीवतः **पुरुषस्य**-चेतनस्य अचेतनकेशलोमाद्युपादानत्वम्,— **तथाऽक्षरात् संभवतीह विश्वम्**—एवमेव निमित्तान्तरनिरपेक्षादुपादेयविलक्षणान्निर्विकारात् परमात्मनः परस्परविलक्षणं चेतनाचेतनात्मकं निखिलं जगत् संभवतीत्यर्थः ॥ ८ ॥

ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते—**तपसा चीयते ब्रह्म** । **तपसा** ज्ञानेन । 'यस्य ज्ञानमयं तपः' इति वक्ष्यमाणत्वात् । **चीयते** उपचीयते । 'बहु स्या'मिति संकल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः । **ततोऽन्नमभिजायते** । "अद्यतेऽत्ति च भूतानि" इति भोग्यभोक्तृरूपचेतनाचेतनसंघातलक्षणमव्याकृतं परस्मात् ब्रह्मणो जायत इत्यर्थः । **अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्** । तस्मात् समष्टिरूपचिदचित्संघातात्मकात् अन्नशब्दितादव्याकृतात् मुख्यः प्राणः,

---

९. 'अद्यतेऽत्ति च भूतानी'ति निर्वचनमुत्तरमन्त्रगतान्नपदविषये व्यासार्योक्तम् । अत्र तु "अद्यत इत्यन्नम्" इत्येव भाष्यम् । अथाप्यत्रापि तत्संभवस्याविशिष्टत्वात् तत् दर्शितम् । तस्य तैत्तिरीयवाक्यस्य, "अदन्तमत्ति, अन्नं मृत्युं तमु जीवातुमाहुः' इत्यादिरीत्या अचेतनगतात्त्वाद्यमानत्वोभयप्रतिपादकत्वात् भोग्यभोक्तृरूपेत्येतदव्याकृतविशेषणम् ; न तु चेतनाचेतनविशेषणमिति युक्ततरम् । अचेतनस्य भोक्तृत्वं भोग्याकारेणेव भोक्तृशरीराकारेण परिणामा-

यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः ।
तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते ॥ १० ॥
इति प्रथममुण्डके प्रथमः खण्डः ॥

—:**:—

---

अन्तःकरणम् , सत्यशब्दितो मोक्षवर्गः, स्वर्गादयो लोकाः, कर्मसु आयत्तममृतं च ; अमृतत्वसाधकं(नं) कर्मेति यावत् । अथवा कर्मस्विति निर्धारणे सप्तमी । कर्ममध्ये मोक्षार्थं कर्मेत्यर्थः । एतत् सर्वमभिजायत इति पूर्वेणान्वयः । एतत् सर्वं भाष्यश्रुतप्रकाशिकयोः स्पष्टम् ॥ ९ ॥

पूर्वमन्त्रोक्ततपश्शब्दं विवृण्वन् भूतयोनिभूतस्य ब्रह्मणः सृष्ट्युपकरणं सार्वज्ञ्य दर्शयति यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । सर्वज्ञः सर्वविषयकज्ञानवान् । सर्ववित् तत्तद्वस्तुगतसर्वप्रकारकज्ञानवान् । स्वरूपतः प्रकारतश्च सर्वविषयकज्ञानवत्त्वमस्मिन् मन्त्रे भूतयोनेर्विधेयम् ; अप्राप्तत्वात् । यस्य ज्ञानमयं तपः इत्यनेनांशेन पूर्वमन्त्रोक्ततपश्शब्दविवरणम् । यस्य ब्रह्मणः संकल्परूपज्ञानव्यतिरेकेण जगत्सृष्ट्युपयुक्तं कर्मान्तरं नास्तीत्यर्थः ।

'ततोऽन्नमभिजायते' इत्यादिकमनुवदति—

तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते । तस्मात् संकल्पेन

---

दपि भवति ॥ "कर्मस्वायत्तममृतम्" इति श्रुतप्रकाशिकाव्याख्यानावसरे, 'स्वर्गापवर्गेति भाष्यानुरोधात् कर्मस्वित्यस्य लोका इत्यत्राप्यन्वयः' इति भावप्रकाशिका ॥

१०. एतदिति पदस्य, 'ततोऽन्नमभिजायते' इत्यनुसारेण कार्याकारमित्यर्थो भावितः । तदिह दर्शयति अन्नशब्दनिर्दिष्टमेतदिति ॥

॥ प्रथममुण्डके द्वितीयः खण्डः ॥

हरिः ओम्—तदेतत् सत्यम् ॥

सृष्ट्युन्मुखाद्ब्रह्मणः । 'ततोऽन्नमभिजायत' इत्यत्रान्नशब्दनिर्दिष्टम् एतद् अव्याकृताख्यं ब्रह्म साक्षाज्जायते । तद्द्वारा नामरूपवत्, "अन्नतेऽत्ति च भूतानि"ति अन्नशब्दनिर्दिष्टभोग्यभोक्तृरूपं च जायत इत्यर्थः । यद्यप्यस्मिन् मन्त्रे सर्वज्ञत्वाद्यनुवादेन ब्रह्मशब्दिताव्यक्तादिहेतुत्वं विधीयत इति प्रतिभाति, तथाऽपि तस्य पूर्वमन्त्रप्राप्तत्वेन विधेयत्वा-संभवादप्राप्तस्य सर्वज्ञत्वस्यैव विधेयत्वमिति द्रष्टव्यम् ।

ननु सर्वज्ञसर्ववित्छब्दयोरपौनरुक्त्याय सर्वज्ञशब्दस्य रूढिर-भ्युपगन्तव्या । "कृशानुरेताः सर्वज्ञः" इति निघण्टुपाठेन सर्वज्ञशब्दस्यो-मापतौ रूढत्वात् । तस्मात् सर्वविदो देवनान्तरान्निमित्तभूतात्, 'तपसा चीयते ब्रह्म' इति पूर्वमन्त्रनिर्दिष्टमुपादानं ब्रह्म अन्यदेव भवितुमर्हति । तस्मादेतद् ब्रह्म नामरूपमन्नं च जायत इति चोपादानभूताद् ब्रह्मणो निमित्तभूतेश्वरस्य भेद एव प्रतीयत इति चेन्न—'यः सर्वज्ञः सर्व-विद् यस्य ज्ञानमयं तपः' इति, तपसोपचीयमानतया पूर्वमन्त्रनिर्दिष्ट-स्याक्षरब्रह्मण एव सर्वज्ञत्वसर्ववित्त्वयोः प्रतीत्या तयोर्भेदासंभवात् । निमित्तोपादानभेदविवक्षायामेकविज्ञानेन सर्वविज्ञानासंभवेन, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति प्रश्नप्रतिवचनत्वासंभवेन प्रतिपिपादयिषितप्रधानार्थविरोधप्रसङ्गादित्यलमतिप्रसङ्गेन ॥ १० ॥

इति प्रथममुण्डकप्रथमखण्डप्रकाशिका ।

तदेतत् सत्यम् । सत्यं नित्यम्, उत्पत्तिविनाशादिषड्भाव-

मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा संततानि ।
तान्याचरथ(त) नियतं सत्यकामाः एष वः पन्थास्सुकृतस्य लोके
(सुकृतो ब्रह्मलोकः) ॥ १ ॥

---

विकारशून्यमित्यर्थः । **मन्त्रेषु कर्माणि कवयो यान्यपश्यन्** । अतीन्द्रियार्थसाक्षात्कारसमर्था वेदेषु यानि अग्निहोत्रादिकर्माणि दृष्टवन्तः । **तानि त्रेतायां बहुधा संततानि** । तानि त्रेतायां गार्हपत्यादिषु वैतानिकाग्निषु यावज्जीवं कर्तव्यतया अधिकारिमन्त्रफलभेदेन बहुधा विहितानि । **तान्याचरथ नियतं सत्यकामाः** । सत्यकामाः स्वतस्सत्यं परं ब्रह्मैव कामयमानाः । फलाभिसंधिरहिताः सन्त इत्यर्थः । तानि कर्माण्याचरत, अनुतिष्ठत । कर्मणां ब्रह्मप्राप्तिहेतुत्वं ज्ञानद्वारेति द्रष्टव्यम् । **एष वः पन्थास्सुकृतस्य लोके** । सुकृतस्य सदनुष्ठितस्य ब्रह्मज्ञानस्य **लोके** फले मोक्षे साध्ये एष वः पन्था इत्यर्थः ॥ १ ॥

एवं ब्रह्मविद्याङ्गतया फलाभिसंधिरहितकर्मानुष्ठानं विधाय, 'फलाभिसंधिपूर्वकस्य तु कर्मणः, अयथावदनुष्ठितस्य न प्रतिपदोक्तफलजन-

---

१. आचरथेति लटो निर्देशात् 'युष्माभिर्वस्तुतः फलकामैः कर्माण्याचर्यन्ते । स नूनम्, 'एष वः पुण्यस्सुकृतो ब्रह्मलोकः' इति वक्ष्यमाणचतुर्मुखस्वामिकलोकप्राप्त्येव वः पन्था' इत्यर्थो घटते । अथापि लोटः स्थाने लट्प्रयोगस्य, 'तमेवैकं जानथ', 'अन्या वाचो विमुञ्चथ', 'ओमित्येवं ध्यायथ' इत्येवं बहुलं दर्शनात्, 'क्रियावानेषः', 'क्रियावन्तः श्रोत्रियाः' इत्यादि वक्ष्यमाणम्, अत्र 'नियतं', 'सत्ये'ति-पदद्वयस्वारस्यं चाऽऽलोच्य एवमर्थो भाषितः । न च मुमुक्षून् उपसन्नान् प्रति, युष्माभिः काम्यकर्माचर्यत इति वक्तुं युक्तम् ।

**यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने । तदाऽऽज्यभागावन्तरेण आहुतीः प्रतिपादयेत् (प्रतिपादयेच्छ्रद्धया हुतम्) ॥ २ ॥**

**यस्याग्निहोत्रमदर्शमपौ(दर्शपू)र्णमास[मचातुर्मास्य]मनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवं [अश्रद्धया] अविधिना हुतमासप्तमान्**

करत्वम्, प्रत्युत प्रत्यवायजनकत्वमेव, यथावदनुष्ठितस्यापि तस्य सत्यलोकपर्यन्तफलकत्वमेव' इत्याह — **यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।** यदा, इन्धनादिभिर्दीपितेऽग्नौ, यस्मिन् काले ज्वाला चलति । **तदाऽऽज्यभागावन्तरेण आहुतीः प्रतिपादयेत् ।** तदा तस्मिन् काले आज्यभागयोः मध्ये आहुतीः प्रक्षिपेदित्यर्थः । [श्रद्धया तत् सुहुतं भवेदित्यर्थः] ॥ २ ॥

**यस्याग्निहोत्रमदर्शमपौ(पू)र्णमास [मचातुर्मास्य] मनाग्रयणमतिथिवर्जितं च अहुतमवैश्वदेवमश्रद्धया अविधिना हुतम् आसप्तमांस्तस्य लोकान् हिनस्ति ।** दर्शाख्य(दर्श)पूर्णमासाख्येष्ट्यननुष्ठाने, नवान्नस्वीकारार्थशरत्कालकर्तव्याग्रयणाख्येष्टिविशेषाननुष्ठाने, अतिथिसत्कारौपासनहोमवैश्वदेवाननुष्ठाने, श्रद्धावैधुर्ये, यथाशास्त्रमननुष्ठाने, अनुष्ठितमप्यग्निहोत्रकर्म तस्य सुकृतफलं सर्वं सप्तपुरुषपर्यन्तं नाशयतीत्यर्थः । यद्यप्यग्निहोत्रस्य न दर्शपूर्णमासादिकमङ्गम् ; तेषां पृथक्फलत्(व)त्वात्—तथाऽपि नित्यनैमित्तिक सकलं कर्मानुष्ठेयमित्यत्र तात्पर्यम् । अत एव भगवता **भाष्यकृता,** "श्रुतिस्मृतिचोदितेषु कर्मसु

२. आज्यभागयोर्मध्य इति । आज्यभागद्वयहोमस्थानभूताग्नेर्यान्तर्गतदक्षिणोत्तरपार्श्वमध्ये इत्यर्थः ॥

[मात् ]तस्य लोकान् हिनस्ति ॥ ३ ॥

[सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन ॥ ]

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरूपी (रुची) च देवी लेलायमाना इति सप्त जिह्वाः ॥

---

एकतरकर्मवैधुर्येऽपि इतरेषामनुष्ठितानामपि निष्फलत्वम्, अयथानुष्ठितस्याननुष्ठितत्व । चाभिधाय" इति मन्त्रार्थो विवृत ॥ ३ ॥

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च (चिरुच) देवी लेलायमाना इति सप्त जिह्वाः । देवीत्येतत् विश्वरुच्या विशेषणम् । इति 'लेलायमानाः सप्त जिह्वाः' इत्यन्वय ॥ ४ ॥

---

३ आसप्तमान्—आसप्तमान् सप्तमपुरुषपर्यन्तान् लोकान् फलानि पुरुषानिति वा । आसप्तमादित्यपि पाठ ॥

तै सं १-५-३ विद्यारण्यभाष्ये, समिध "अश्वत्थोदुम्बर-पलाशशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपा ऋषय, समित्संपादनार्था मन्त्रा अश्वो रूपकृत्वेत्यादय, धाम=स्थानानि आहवनीय-गार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजहिताग्नीध्रीयाख्यानि, होत्रा. होतृप्रमुखा वषट्कर्तार होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टा अग्नीध्रोऽच्छावाकश्च । आपृणस्व पूरय" इति । "सप्तजिह्वस्सप्तैधा " इत्यत्र श्रीभट्टपराशरविष्णुसहस्रनामभाष्यमपि द्रष्टव्यम् ।

४ विश्वरूपीति पाठोऽपि बहुत्र । सप्तानां नामान्तराण्यपि हिरण्या कनका रक्ता कृष्णा सुप्रभा अतिरक्ता बहुरूपेति । तत्र रूपपदमेवास्ति ॥

*एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् ।*
*तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥*

*एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।*
*प्रियां वाचमभिवदन्त्योऽर्चयन्त्यः एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥*

---

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाऽऽहुतयो ह्याददायन् । एतेषु दीप्यमानेष्वग्निजिह्वाभेदेषु विहितकालानतिलङ्घनेन होमद्रव्यं गृहीत्वा योऽग्निहोत्रादि कर्माऽऽचरति । तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः । अधिवसतीत्यधिवासः । यस्मिन् सत्यलोके देवानां पतिरसमानो हिरण्यगर्भ आस्ते, तत्र ता आहुतयः सूर्यस्य रश्मयो भूत्वा तं यजमानं प्रापयन्तीत्यर्थः ॥ ५ ॥

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः। सूर्यस्य रश्मिसंपृक्ताः, अत एव सुवर्चस आहुतयः तं यजमानमर्चयन्त्यः, 'सुकृतसाध्यः पावन एष चतुर्मुखलोको वः भवदीयः=भवत्स्वामिक' इतीदृशीं प्रियां वाचं वदन्त्यः एह्येहीत्याह्वयन्त्यः तं यजमानं ब्रह्मलोकं प्रापयन्ति ॥ ६ ॥

---

५ आहुतय आददायन् । आहुतिद्रव्याण्याददाना इत्यर्थः । आहुतय इति प्रथमाप्रयोगश्छान्दसः । उत्तरार्धान्वयो वा । होमद्रव्यमिति शेषे, अध्याहारात् । आहुतयस्तमाददाना इति भाष्यप्रकाशिका । आददायन्नित्यस्योत्तरत्र तदाऽन्वयेति ॥

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।

---

एवं ब्रह्मलोकपर्यन्तसाधकान्यपि कर्माणि क्षयिफलतया निन्दन्ने–

**प्लवा ह्येते अदृढा यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म ।**

षोडशर्त्विक्पत्नीयजमानरूपाष्टादशकर्त्राश्रितत्वेनोक्तम् अवरं फलाभिसन्धिमत्तया अश्रेष्ठं कर्म येषु यजमानेषु वर्तते, एते यज्ञरूपाः यज्ञप्रधानाः पुरुषाः जीर्णनौका इव संसारार्णवसंतरणासमर्था इत्यर्थः । यद्वा अष्टादशस्मृत्युक्तं स्मार्तं कर्म येषु श्रौतकर्मसु तदधिकारसंपादकत्वेन अवरम् अङ्गभूतं भवति, तान्यपि श्रौतानि यज्ञात्मकानि कर्माणि

---

७ अष्टादशोक्तमिति । अर्थद्वयं तावत् भाष्योक्तम् । "नवग्राम्यान् पशूनालभते नवाऽऽरण्यान्, उभयान् पशूनालभते" इत्युक्ताष्टादशपशुहविष्कं कर्मेत्यर्थान्तरमपि श्रुतप्रकाशिकायाम् । यज्ञरूपाः यज्ञनिर्वाहका एते अष्टादशर्त्विज इति अष्टादशपदं पृथगपि कुर्वन्ति (शाङ्करे) । तदनुसारे षोडशेत्यादिभाष्ये उक्तपदमात्रविवरणं ग्राह्यम् । माध्वव्याख्याने अष्टादशविद्यास्थानानि यज्ञनिरूपकाणि प्लवा इत्यप्यर्थः कैश्चिद्विशेषो दर्शितः । मुण्डकारम्भे चतुर्दश विद्यास्थानानि कण्ठोक्तानि । मूले यस्याग्निहोत्रमिति पूर्ववाक्योक्तान् यज्ञान् अष्टादशधा विभज्य ते प्लवा इत्युक्तौ आशयो लक्ष्यते, यत — पूर्वोक्तानां प्रयोगभेदकृतभेदेन विभागे अग्निहोत्रं सायं प्रातरिति द्वे, दर्शपूर्णमासौ द्वौ, चातुर्मास्यपर्वाणि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चत्वारि, आग्रायणमेकम्, अतिथिपूजनमेकम्, औपासनहोमौ सायं प्रातरिति द्वौ, वैश्वदेवे द्वे प्रातस्सायमित्येवं चतुर्दश सिद्ध्यन्ति । प्रातर्वैश्वदेवेन सहानुष्ठीयमानानां पञ्चमहायज्ञान्तर्गतानां चतुर्णामुपलक्षणेनाष्टादशत्वं सुवचम् ।

एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्युं ते पुनरेवापियन्ति ॥ ७ ॥
अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढाः अन्धेनैव नीयमाना यथाऽन्धाः ॥ ८ ॥
अविद्यायां बहुधा वर्तमानाः वयं कृतार्था इत्यभिमन्यन्ति बालाः ।

---

शोकाम्बुधितरणे साधनानि न भवन्तीत्यर्थः । **एतच्छ्रेयो येऽभिनन्दन्ति मूढाः, जरामृत्युं ते पुनरेवापियन्ति ।** एतत् कर्म श्रेयःसाधनं मत्वा ये हृष्यन्ति, ते जरां मृत्युं च भूयो गच्छन्ति ॥७॥

**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः।** अविवेकप्रधानाः, स्वयमेव धीमन्तः, 'ऊहापोहक्षमधीशालिनः' इति मन्यमानाः । **जङ्घन्यमानाः परियन्ति मूढाः ।** जरारोगाद्यनेकानर्थव्रातैर्भृशं हन्यमाना मूढाः परिभ्रमन्ति । **अन्धेनैव नीयमाना यथाऽन्धाः ।** स्पष्टोऽर्थः ॥ ८ ॥

एतदेव विशदयति—**अविद्यायां बहुधा वर्तमानाः ।** प्रकृतिमण्डले देवमनुष्यादिबहुविधाभिमानितया वर्तमानाः । **वयमेव(?) कृतार्था इत्यभिमन्यन्ति बालाः ।** बालाः अज्ञानिनः, 'वयमेव कृतार्थाः' इत्यभिमानं कुर्वन्ति । **यत् कर्मिणो न प्रवेदयन्ति रागात् ।**

---

भास्तामेतदेवम्, अन्यथा वा ॥ अवरं येषु कर्मेत्येतत् पूर्वार्धं यथान्विततयाऽत्र व्याख्यातम् । येषु पुरुषेष्ववरं कर्मेत्यर्थेनोत्तरत्रान्वय इष्टः श्रुतप्रकाशिकायाम् । तत्र च भावप्रकाशिका, फलाभिसन्धिमत्कर्मकारिकां तदभिनन्दितॄणां च जरामृत्युवश्यत्वमिति ॥

८. मन्त्रोऽयं कठोपनिषदि (२) । दन्द्रम्यमाणा इति विशेषः ॥

यत् कर्मिणो न प्रवेदयन्ति रागात् तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते ॥
इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वा (चा)विशन्ति ॥
तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्त
(ब्रह्मचर्यं चरन्ति) ।

---

कर्मफलस्वर्गादिरागात् कर्मठास्तत्त्वं यतो न जानन्ति, तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते । तेन तत्त्वज्ञानाभावादेव हेतोः क्षीणे पुण्ये मर्त्यलोकं विशन्तीत्यर्थः ॥ ९ ॥

**इष्टापूर्तं मन्यमाना वरिष्ठम्** । इष्टं यागादि । पूर्तं खातादि । एतदेवाखिलपुरुषार्थसाधनं मन्यमानाः । **नान्यच्छ्रेयो वेदयन्ते प्रमूढाः** । श्रेयोऽन्तरं न जानन्तीत्यर्थः । **नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति** । ते सुकृते सुकृतसाध्ये स्वर्गलोकाद्यूर्ध्वलोके कर्मफलमनुभूय इमं लोकं मनुष्यलोकम्, ततो हीनतरं वा नरकादिलक्षणं विशन्ति ॥ १० ॥

**तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो........ ह्यव्ययात्मा** । ये सन्न्यासिनः कृतश्रवणमनना वने स्थित्वोपरतकरणग्रामाः तपश्शब्दितं ब्रह्म च तदादरनिश्चयरूपश्रद्धां च सेवन्ते, ते

---

१० हीनतरं चेति चकारपाठेऽपि वाकारार्थः । हीनमनुष्यलोकयोः क्रमेण [illegible]लक्षण्या क्वचित्समुच्चयोऽपि स्यात् । हीनपदं सुखहीनत्वार्थं [illegible] ॥

११ उप[illegible] इति तपश्श्रद्धयोराधारत्वविवक्षया द्वितीया । फलितमाह सेवन्त इति । सेवा भक्तिरुपास्तिः । भवति चोपवेशार्थक आस धातुरिव निवासार्थकोऽयमप्युपपूर्वकस्सेवार्थकः ।

सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११
परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥
तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

इति प्रथममुण्डके द्वितीयः खण्डः ॥ इति प्रथममुण्डकम् ॥

---

विधूतपापाः सूर्यमण्डलं भित्त्वा —"सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते" इति पर्यङ्कविद्यायुक्त. हेयप्रत्यनीकः, 'सत्यैकरूपाय' इति प्रमाणप्रतिपन्ननित्यविग्रहयुक्तो यत्राऽऽस्ते, तत्र यान्तीत्यर्थः । "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्यत्र तपश्शब्देन ब्रह्मोच्यते। बृहदारण्यके, 'श्रद्धां सत्यमुपासत' इति तपश्शब्दस्थाने सत्यशब्दप्रयोगात्; सत्यशब्दस्य ब्रह्मपरत्वात्" इति व्यासार्यैरुक्तत्वात् तपश्श्रद्धे इत्यत्र तपश्शब्दो ब्रह्मपरः ॥ ११ ॥

विरक्तस्य परब्रह्मप्राप्तिसाधनज्ञानेच्छोर्गुरूपसदनं विधीयते—

**परीक्ष्य लोकान् .........प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥**

---

व्यासार्यैरिति । अनियमाधिकरणभाष्यमप्यत्र मानं द्रष्टव्यम् । यद्यपि तपःपदस्य भगवतीव, श्रद्धापदस्य लक्ष्म्यामपि दर्शनात् 'श्रद्धया देवो देवत्वमश्नुते' इत्यत्र तथा व्याख्यानाच्च लक्ष्मीनारायणविषयमुपासनमित्यर्थ उचितः । एवं 'श्रद्धां सत्यमुपासते', 'श्रद्धा तप इत्युपासते' इत्यत्रापि ।अथापि श्रद्धापूर्वकं ब्रह्मोपासीनानामित्यादिभाष्यमनुसृत्य प्रसिद्धार्थ एव दर्शितः । तेन पञ्चाग्निविद्यानिष्ठानामत्यन्तविलम्बसहत्वात् किञ्चिच्छ्रद्धावैरस्यं ब्रह्मविशेष्यकोपास्त्यभावश्च सिध्यति । विरजा इति । आर्षमकारान्तत्वम् ।

(श्रु प्र) "अस्मिन् वाक्ये न्यायसिद्धार्थानुवादेन गुरूप सत्तिर्विधीयते । **कर्मचितान्** कर्मसचितान् कर्मभ्य इ न् लोकान् **परीक्ष्य**—मीमासान्यायैर्निरूप्य **ब्राह्मणः** अधीतसाङ्गसशिरस्कवेद । य इत्याध्याहार्यम्, स इत्युत्तरत्र श्रवणात् । **अकृत** नित्य । अत्र पुरुषो विशेष्य, लिङ्गवशात्, अक्षर पुरुषमित्यनन्तरोक्तेश्च । **कृतेन** कर्मणा । **नास्ति** न सिध्यति-न लभ्यते । इतिकरण द्रष्टव्यम् । इति यो **निर्वेदमायात्**, स तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् । एवकारेण नियमविधित्वमवगम्यते । **समित्पाणिः** अरिक्तपाणि । ' रिक्तपाणिस्तु नोपेयात् राजान दैवत गुरुम् " इति हि स्मर्यते । **श्रोत्रिय** श्रुतवेदान्तम् । **ब्रह्मनिष्ठ** ब्रह्मसाक्षात्कारवन्तम् । श्रुतवेदान्तोऽपि रुचिभेदादब्रह्मनिष्ठो नोपगन्तव्य इति भाव । अभिगच्छेदित्यन्वय । **शमो** बाह्येन्द्रिय नियमनरूप, 'प्रशान्तचित्ताये त्यन्त करणनियमस्योक्ततया पारि शेष्यात् । एतेन श्रवणोपयुक्तमवधान विवक्षितम्, न [illegible] उपासनोप युक्तात्यन्तेन्द्रियजयादि । **तस्मै स विद्वान् प्रोवाचे**त्यन्वय । **येने**ति निर्देशो विज्ञानाभिप्राय । तद्विज्ञानार्थमिति हि प्रकृतम् । सामान्यन कारणाभिप्रायो वा । लिङ्गव्यत्ययो वा । **अक्षर** स्वरूपेणाविकारम् । **सत्य** गुणतोऽप्यविकारम् । आभ्यामचिज्जीवव्यावृत्ति । **तां ब्रह्मविद्या प्रोवाच** प्रब्रूयादित्यर्थ इति वेदान्तभारे व्याख्यातम्" ।

---

१२ कर्मचितानित्यत्र कर्मजितानिति प्राचीनपाठ इति केचित्, जयतीमान् लोकानित्यादिनिदर्शनस्यैव दर्शनादिति । मुण्डकेऽपि जयतिरधिक । अस्मिन् वाक्य इत्यादि श्रुतप्रकाशिकानुवाद ।

एतच्छ्रुत्यर्थं हृदि निधाय भगवता बादरायणेन शास्त्रारम्भे, 'अथातो ब्रह्मजिज्ञासा' इति सूत्रितम् । तस्य चायमर्थः—अथ षोडशलक्षणकर्मविचारानन्तरम् । अतः कर्मणामल्पास्थिरत्वाधिगमसहितानन्तस्थिरफलापातप्रतीतेर्हेतो ब्रह्मजिज्ञासा ब्रह्मविचारः कर्तव्य इति । कर्मविचारे [हि] सति, "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिभिरक्षय्यफलकत्वेन श्रुतानामपि चातुर्मास्यादीनाम्, "प्रत्यब्दं चातुर्मास्यैर्यजेत" इत्यादिभिरावृत्तिविधानात्, ततोऽपि बहुवित्तयथायाससाध्याश्वमेधविश्वजिदादीनामननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् चातुर्मास्यादीनामक्षय्यफलत्वमापेक्षिकमिति निश्चित्य, अनन्तस्थिरफलरूपं ब्रह्म च वेदान्तवाक्यैरापाततोऽवगत्य, तन्निर्णयाय ब्रह्मविचारे पुरुषः प्रवर्तत इति पर्यवसितोऽर्थः ।

ननु कर्मविचारे सति आवृत्तिविधानादिभिः कर्मणामल्पास्थिरफलत्वं प्रतीयतां नाम । वेदान्तवाक्यैरनन्तस्थिरफलं ब्रह्म कथं प्रतीयताम्, सिद्धे ब्रह्मणि व्युत्पत्तिविरहात् । व्यवहाराधीनत्वादाद्यव्युत्पत्तिग्रहस्य । व्यवहारस्य

---

ननु कर्मविचार इति । अयं भावः—या हि कर्मजिज्ञासा पूर्वमुत्तरभागार्थभूतब्रह्मविचारप्रतिबन्धिकाऽऽसीत्, तदधीनः कर्मविचारः पूर्वमीमांसात्मकः सम्प्रति सुतरां बाधकः, ब्रह्मविचारकारणभूतापातप्रतीतिविघ्नस्याप्यधुना प्राप्तत्वात् । कार्यान्[illegible] शक्ते, कार्यपरतयैव च प्रामाण्यस्य कर्ममीमांसातोऽवगमनो [illegible] । सिद्धब्रह्मपरत्वाभावावधारणेन विषयस्यैवासिद्धेरिति । एतमाशङ्कापरिहारार्थमेव सूत्रे अत इति प्रयुक्तम् । समीचीनकर्मविचारे न

च कार्यान्वित एव सभवात्। तथा हि–'गामानय' इति वाक्यश्रवणानन्तर गवानयने प्रवृत्त प्रयोज्यमुपलभ्य बालो व्युत्पित्सु, इय गवानयनप्रवृत्ति गवानयनकार्यताज्ञानसाध्या गवानयनप्रवृत्तित्वात् मदीयगवानयनप्रवृत्तिवदिति *तदीयकार्यताज्ञानमनुमाय, तस्य च ज्ञानस्य शब्दान्वय* व्यतिरेकानुविधायितया शब्दजन्यता निश्चिनोति। ततश्च प्राथमिकव्युत्पत्तिग्रहे शब्दस्य कार्यज्ञानजनकत्वनिश्चयात् तदुपजीविद्वितीयादिव्युत्पत्तिग्रहोऽपि कार्यविषयक एवेति कार्यान्विते सिद्धार्थे व्युत्पत्तिग्रहा सभवात् अव्युत्पन्नस्य शब्दस्यार्थप्रत्यायकत्वाभावादनन्तस्थिरफलापातप्रतीत्यसभवात् ब्रह्मविचारो नाऽऽरभ्य इति पूर्व पक्ष। अम्बातातादिभिचन्द्रादीन् अङ्गुल्या निर्दिश्य, अय चन्द्र, अय गौरित्यादिशब्देषु बहुश प्रयुक्तेषु भूयस्सहचारदर्शी बाल शब्दप्रयोगे तदर्थबुद्ध्युत्पत्ति स्वात्मनो दृष्ट्वा तयो कंचिदौत्पत्तिक सबन्ध निश्चिनोति। स एव शक्तिरिति गीयते। ततश्च सिद्धार्थेऽपि व्युत्पत्तिग्रहसभवात्, तान्त्रिकान्तरोपदर्शितमार्गैश्च सिद्धार्थे व्युत्पत्तिग्रहसभवादन तस्थिरफलापातप्रतीतिसभवाद्ब्रह्मविचार आरम्भणीय इति तत्र सिद्धान्त कृत ॥१२॥१३॥

इति मुण्डकोपनिषत्प्रकाशिकाया प्रथममुण्डके द्वितीय खण्ड।

समाप्त प्रथममुण्डकम्।

— * —

बाधक, प्रत्युत साधक इति तदाशय। तान्त्रिकान्तरेति। अत्र विषये प्राभाकरमीमासकसरणि उपक्षेपेति भाट्टमीमासकनैयायिकादिनयनिरूढम्। 'आम्नायस्य क्रियार्थत्वात्' इत्यादिजैमिनिसूत्रमप्यन्यपर ग्राह्यम्, भाष्यादिदर्शितयुक्ति तदर्चेति भाव।

अथ द्वितीयमुण्डके प्रथमः खण्डः ॥

हरिः ओम् । तदेतत् सत्यम् ॥

*यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।*
*तथाऽक्षरात् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥*

---

तदेतत् सत्यम् । पूर्ववत् । यथा सुदीप्तात्...सरूपाः । अयोगोलकादिगतात् हन्यमानाद्वा वेश्मादिषु सुदीप्ताद्वा पावकादनेकशः सरूपाः विस्फुलिङ्गाः यथोत्पद्यन्ते । तथाऽक्षराद्....प्रजायन्ते । तत्र चैवापियन्ति । एवमेव [1]सूक्ष्मचिदचिच्छरीराद्ब्रह्मणः तत्सरूपाः नानाविधस्थूलचिदचिद्रूपाः, भवन्तीति भावाः कार्यवर्गाः उत्पद्यन्ते । तत्रैव लीयन्ते च ॥ १ ॥

दिव्यो ह्यमूर्तः....परः । वृक्ष इव स्तब्धो दिवि तिष्ठ

---

1 सूक्ष्मचिदिति । अयं भावः—पूर्वं यथोर्णनाभिरिति मन्त्रे ऊर्णनाभिपृथिवीपुरुषदृष्टान्तत्रयेण नियन्तृचेतनाचेतनाख्यचेतनत्रयं मिलितं जगत्कारणमिति सूचितम् । एवञ्च तथाक्षरादित्यत्र अक्षरादित्यस्य साक्षात् परम्परया चाक्षरत्वविशिष्टादित्यर्थः । त्रयाणामप्यक्षरपदवाच्यत्वम्, अक्षरं तमसि लीयते, अमृताक्षरं हरः, येनाक्षरं पुरुषं इति वाक्यैरवगतम् । यथा तदक्षरमित्यत्र यत्तदद्रेश्यमग्राह्यमिति अचेतनाक्षरव्यावृत्तिः, अचक्षुःश्रोत्रमिति जीवरूपाक्षरव्यावृत्तिः प्रकृताक्षरस्य क्रियते । तद्वदिहापि स्फुलिङ्गदृष्टान्तेन दाह्यद्रव्यविशिष्टाग्निकथनात् विशिष्टस्यैव कारणत्वं ज्ञायते । उत्तरमन्त्रे च 'अक्षरात् परतः परः' इति प्रधानरूपाक्षरात् ततः परभूतजीवरूपाक्षराच्च व्यावृत्ताक्षरोऽयं पुरुष इति तयोर्विशेषणत्वमाविष्क्रियत इति ।

दिव्यो ह्यमूर्त पुरुष· स बाह्याभ्यन्तरो ह्यज ।
अप्राणो ह्यमना शुभ्रो ह्यक्षरात् परत पर ॥ २ ॥

ध्येक' इति द्युसन्धित्वेन, 'तदपाणिपादम्' इति वा, 'नित्यं विभुम्' इति वाऽमूर्तत्वेन, 'तेनेदं पूर्णं पुरुषेण सर्वम्' इति बाह्याभ्यन्तरसर्ववस्त्वात्मतया, 'अचक्षुश्श्रोत्रम्' इत्यनिन्द्रियत्वेन प्राणमनश्शून्यतया, 'येनाक्षरं पुरुषं वेद सत्यम्' इति विकाररूपदोषशून्यतया च दिव्यादि-शुभ्रपर्यन्तशब्दितश्च य, स अव्याकृतादक्षरात् य पर समष्टिपुरुष तस्मादपि कारणत्वेन पर इत्यर्थ । प्रधानपुरुषयोस्तज्जन्यत्वादिति भाव । अक्षरात्परत इत्यत्र अक्षरशब्द, अश्नुत इति वा, न क्षरतीति वा व्युत्पत्त्या स्वविकारव्यापके नामान्तराभिलापयोग्यक्षरणाभाववति अव्याकृते वर्तते, न तु भूतयोन्यक्षरे । भूतयोन्यक्षरस्य स बाह्याभ्यन्तर इत्यत्र तच्छब्दनिर्दिष्टस्य तस्मादेव परत्वासम्भवात् । न हि तस्यैव तत परत परत्वं संभवति, विरोधात् । न च-'अक्षरात्परत' इति पञ्चम्यो सामानाधिकरण्यमेवास्तु, ततश्च स्वविकारापेक्षया परभूतादव्याकृतात् अक्षरात् पर इत्येवास्तु, न त्वव्याकृताक्षरात्परभूतात्समष्टिपुरुषात्पर इति--इति वाच्यम् । परशब्दस्य प्रतियोगिसापेक्षत्वेन अक्षरशब्दस्य

२ स बाह्येत्यत्र स इति पृथक्पदम्, न तु शाङ्करीत्या समस्तम् । उक्तमिदं न्यायरक्षामणावपि । हिशब्दचतुष्टयं वाक्यचतुष्टये सत्येवोपपद्यत इति निर्बन्धाभावाल्लाघवादेकमेव वाक्यं कृतम् । अनिन्द्रियत्वेन प्राणमनश्शून्यतयेति । अचक्षुश्श्रोत्रमित्युपकरण-सामान्यशून्यत्वपरत्वात् प्राणमनश्शून्यत्वलाभ इति भाव । विकार-रूपदोषेति अजशुभ्रपदद्वयाभिप्रायेण ॥

एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च ।
ख वायुर्ज्योतिराप. पृथ्वी(पृथिवी) विश्वस्य धारिणी ॥ ३ ॥

---

परत्वावधिसमर्पकत्वस्यैव युक्तत्वात् । न हि देवदत्तादुत्पन्नाद्वयमित्यत्र पञ्चम्यो सामानाधिकरण्यप्रतीतिरस्ति । अतो यथोक्त एवार्थ ॥ २ ॥

विश्वसृष्टिमेव प्रपञ्चयति–एतस्मात्......सर्वेन्द्रियाणि च । स्पष्टोऽर्थ । ख .. धारिणी । खम् आकाश । ज्योतिः तेज । विश्वस्य कृत्स्नस्य धारिणी । एतत् पृथ्वीविशेषणम् । इद हि सूत्रकृता प्राणपादे वियत्पादे च विचिन्तितम् । प्राणपादे —, "असद्वा इदमग्र आसीत् । तदाहु किं तदासीदिति । ऋषयो वाव तेऽग्रेऽसदासीत् । के ते ऋषय इति । प्राणा वाव ऋषय " इति जगदुत्पत्ते प्राक् प्राणशब्दितानामिन्द्रियाणा सद्भावश्रवणात् प्राणोत्पत्तिवादिश्रुतयो जीवोत्पत्तिवादिश्रुतिवत् अन्यथा नेया इति "तथा प्राणा " इति पूर्वपक्षे प्राप्ते, "[1]तथा प्राणाः"–वियदादिवत् प्राणशब्दवाच्यानीन्द्रियाण्यपि उत्पद्यन्त एव । 'सदेव सोम्येदमग्र आसीत्' इत्यादिषु प्राक् सृष्टे एकत्वावधारणात्, 'एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च' इति इन्द्रियाणामाहत्योत्पत्तिश्रवणाच्चोत्पद्यन्त एव । न च इन्द्रियोत्पत्तिवादो जीवोत्पत्तिवादवत् अन्यथा नेय , बाधकाभावात् । 'प्राणा वाव ऋषय ' इत्यत्र प्राणशब्दस्य सर्वज्ञवाचिऋषिशब्दसमानाधिकरणतया परमात्मवाचित्वेनेन्द्रियवाचित्वा-

---

1 'तथा प्राणा' इति सूत्र पूर्वपक्षपरमिव शाङ्करयोजनानुसारेण सिद्धान्तपरमप्यस्त्वित्याशयेन सिद्धान्तेऽपि तद्ग्रहणम् । एकमेव सूत्रमुभयपर योज्यते । तदिद पूर्वमीमासायाम्, आनर्थक्यात् तदङ्गेषु, उत्तरमीमासायाम्, कार्याख्यानादपूर्वमित्यादौ विमृश्यम् ।

भावात् । कथं तर्ह्येकस्मिन् परमात्मनि, प्राणा वाव ऋषय इति बहुवचनोपपत्तिरिति चेत्–तत्राऽऽह–"गौण्यसंभवात् तत्प्राक्छ्रुतेश्च" । बहुवचनश्रुतिर्गौणी । तत्र बहुत्वासंभवात् , परमात्मन एव सृष्टे प्रागवस्थानश्रवणात् तस्यैव प्राणशब्देन प्रतिपादनीयत्वात् । "तत्पूर्वकत्वाद्वाच" । वागिन्द्रिय[विषयनामधेय?]स्य वागिन्द्रियकार्याभिलपनकर्मभूतनामवाच्यवियदादिसृष्टिपूर्वकत्वात् प्रलये वागिन्द्रियादिकार्यशब्दाभिलापादिप्रयोजनाभावात् न प्रलये तेषामवस्थितिरिति स्थितम् ॥

तथा तत्रैव पादे—"आनीदवातं स्वधया तदेकम्" इति महाप्रलयसमये प्राणकार्य-अननश्रवणात् , "एतस्माज्जायते प्राण" इति मुख्यप्राणो पत्तिवादो जीवोत्पत्तिवादवन्नेतव्य इति शङ्कायाम्—"श्रेष्ठश्च" । श्रेष्ठप्राणोऽपि इन्द्रियवत् उत्पद्यते । 'आनीदवातम्' इति परब्रह्मण अनन— विद्यमानत्वमुच्यते , न मुख्यप्राणस्य , अवातमिति वायुमात्रसत्ताया तत्रैव प्रतिषिद्धत्वादिति स्थितम् ।

तथा वियत्पादे—'वायोरग्निः । अग्नेराप । अद्भ्य पृथिवी' इत्यादौ वायुरूपाद्ब्रह्मणोऽग्निसृष्टि —उत केवलवायोरेवेति [रीत्या ?] विशये, "तेजोऽतस्तथा ह्याह" । अतः केवलवायोरेव तेज उत्पद्यते । 'वायोरग्नि', इति हि श्रुतिराह । "आप" । आपस्तेजस एवोत्पद्यन्ते । 'अग्नेराप' इति हि श्रुतिराह । "पृथिवी" । पृथिवी अद्भ्य एवोत्पद्यते । 'अद्भ्य पृथिवी', 'ता अन्नमसृजन्त' इति हि श्रुतिराह । ननु कथमन्नशब्देन पृथिवी अभिधीयते ? तत्राह—"अधिकाररूपशब्दान्तरेभ्य" । महाभूतसृष्टयधिकारात् पृथिव्येवान्नकारणभूता अन्न-

शब्देनोपचारादुच्यते । तथा 'यदग्नेः रोहितं रूपं तेजसस्तद्रूपम्, यच्छुक्लं तदपाम्, यत् कृष्णं तदन्नस्य' इति कृष्णरूपस्यान्नसंबन्धितया कीर्तनात् न मुख्यमन्नमन्नशब्देनोच्यते ; अपि तु पृथिव्येव । तैत्तिरीयके — 'अद्भ्यः पृथिवी' इति पृथिवीवाचकविस्पष्टशब्दान्तरश्रवणाच्च अन्नशब्देन पृथिव्येवोच्यते । ततश्च केवलवाय्वादेरेवाग्न्याद्युत्पत्तिः ; न तु तच्छरीरकब्रह्मण इति पूर्वपक्षे प्राप्ते—

"तदभिध्यानादेव तु तल्लिङ्गात् सः" । तुशब्दः पक्षव्यावर्तकः । वाय्वग्न्यादिशब्दैः सः परमात्मैवाभिधीयते 'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' इति तत्तत्कार्यसृष्टिसंकल्पलक्षणाभिध्यानरूपात् परमात्मलिङ्गात् । अचेतने तेजआदौ ईक्षणासंभवात् । "विपर्ययेण तु क्रमोऽत उपपद्यते च" । तुशब्दोऽवधारणे । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च', 'खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इत्येवं सर्वेषां भूतानां परब्रह्मानन्तर्यरूपः 'वायोरग्निः, अग्नेरापः' इत्युक्तक्रमविपर्ययेण श्रूयमाणो यः क्रमः, स वाय्वादिशरीरकपरमात्मोपादानकत्व एवोपपद्यते ; न तु केवलवाय्वाद्युपादानकत्वे इत्यर्थः । "अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्" । विज्ञानसाधनत्वात् इन्द्रियाणि विज्ञानमित्युच्यन्ते । ननु एतस्माज्जायत इति वाक्यं प्राणादीनां सर्वेषामव्यवहितब्रह्मोपादानकत्वं प्रतिपादयितुं न प्रवृत्तम् ; किंतु 'प्राणोत्पत्त्यनन्तरं मनसश्च सर्वेन्द्रियाणां चोत्पत्तिः ; तत आकाशादिभूतानामुत्पत्तिः' इतीन्द्रियाणां मनसश्च प्राणभूतान्तरालसृष्टत्वप्रतिपादनार्थं प्रवृत्तम् । श्रुत्यन्तरसिद्धमहाभूतसृष्टिक्रमप्रत्यभिज्ञानरूपाल्लिङ्गात्

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥

इति चेत्, न — अविशेषात् । अविशेषेण प्राणादीनां सर्वेषां ब्रह्मानन्यत्वव्यपदेशप्रतीतेस्तत्परित्यागे कारणाभावात् । न तु वाय्वादिशरीरकब्रह्मणोऽन्यथानुपपत्तौ वाय्वादिशब्दानां तच्छरीरकब्रह्मणि लक्षणा स्यात्, तत्राऽऽह– "चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" । तुशब्दः शङ्कानिवृत्त्यर्थः । चराचरव्यपाश्रयो देवमनुष्यवृक्षादिशब्दव्यपदेशो भाक्तः । वाच्यैकदेशे भज्यत इत्यर्थः । भक्त्या प्रयुक्तो भाक्तः । भक्तिः भङ्गः । विशिष्टवाची शब्दो विशेषणमात्रे भङ्क्त्वा प्रयुज्यते। वाच्यैकदेशे प्रयोगात् भज्यत इत्यर्थः । 'वचसां वाच्यमुत्तमम्' इत्यादिप्रमाणानुसारात् सर्वेषां चराचरशब्दानां विशिष्टब्रह्मैवार्थः । विशेषणमात्रे प्रयोगस्तु अमुख्यः । ततश्च वाय्वादिशब्दैः ब्रह्माभिधानं मुख्यमेव । यद्वा अभाक्त इति च्छेदः । चराचरवाचिशब्दैः ब्रह्मव्यपदेशः अभाक्तः मुख्य इति यावत् । शरीरवाचिशब्दानां शरीरिपर्यन्तत्वादिति स्थितम् ॥ ३ ॥

प्रकृतमनुसराम – अग्निर्मूर्धा ... ह्येष सर्वभूतान्तरात्मा ॥ अत्र मन्त्रे प्रस्तुत्य, "स्मर्यमाणमनुमानं स्यादिति" इत्यत्र 'अग्निरिह द्युलोकः' । 'असौ वै लोकोऽग्नि' इति श्रुतेः । स्मरन्ति च मुनयः, 'द्यौ मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे। दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता'तीति भाषितम् । वाग्विवृताः वाग्भिर्विवृताः त एव वेदाः । वायुः प्राणः । महावायुरेव देहधारकः प्राणः । जगत् सर्वमस्य देहान्तर्वर्तिहृदयाख्यमासविशेषः । पद्

तस्मादग्निः समिधो यस्य सूर्यः सोमात् (सोमः) पर्जन्य ओषधयः पृथिव्याम् (व्याः ।) पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात् (बहुधा)संप्रसूताः ॥ ५ ॥

तस्मादृचस्साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।
संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥

---

भ्यां पृथिवी । पादावेव पृथिवीत्यर्थः । "प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया । सर्वभूतानां तच्छरीरत्वात् सर्वेषामन्तरात्मेत्यर्थः ॥ ४ ॥

**तस्मादग्निः समिधो यस्य सूर्यः ।** तस्मात् अक्षरात् 'अग्निर्मूर्धा' इत्यत्राग्निशब्दनिर्दिष्टो द्युलोकः । यस्य अग्नेः सूर्यः समिधः इन्धनानि । 'असौ वै लोकोऽग्निर्गौतम । तस्याऽऽदित्य एव समित्' इति पञ्चाग्निविद्यायां श्रवणात् । **सोमात् पर्जन्य ओषधयः पृथिव्याम् ।** अतो हि द्युलोकाग्नेर्निष्पन्नात् सोमात् पर्जन्यो द्वितीयोऽग्निः संभवति । तस्मात् पर्जन्यात् ओषधयः पृथिव्यामग्नौ संभवन्ति । **पुमान् रेतः सिञ्चति योषितायाम् ।** ओषधीभ्यः पुरुषाग्नौ हुताभ्य उपादानभूताभ्यः पुरुषरूपोऽग्निः योषिद्रूपाग्नौ रेतस्सेकं करोति । **बह्वीः प्रजाः पुरुषात् संप्रसूताः ।** एवं पञ्चाग्निविद्योक्तक्रमेण बह्व्यः प्रजाः परस्मात् पुरुषात् संप्रसूताः ॥५॥

**तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च । संवत्सरश्च यजमानश्च लोकाः ।** तस्मादक्षरपुरुषात् ऋग्यजुस्सामवेदाः, दीक्षाः, अग्निहोत्राद्या यज्ञाः, सोमविकाराः क्रतवश्च, दक्षिणाश्च, संवत्सराद्याः कालाः, यजमानः, कर्मफलभूताः

---

५. तस्मादग्निस्समिद्धश्च सूर्यस्सोमः पर्जन्य ओषधयः पृथिव्यामिति श्रुतप्रकाशिकापाठः (१-२-२३) ।

तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः पशवो वयांसि ।
प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥
सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः (जिह्वाः) ।
सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥८॥

---

स्वर्गाद्या लोकाश्चोत्पन्ना इत्यर्थः । लोकान् विशिनष्टि—**सोमो यत्र पवते यत्र सूर्यः** । ये लोकाश्चन्द्रसूर्यकिरणपूता भवन्तीत्यर्थः ॥ ६ ॥

**तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः पशवो वयांसि** ॥ **बहुधा** कर्मज— आजानजादिभेदाद् बहुधेत्यर्थः । **वयांसि** पक्षिणः । शिष्टं स्पष्टम् । **प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च** ॥ यवो दीर्घशूकधान्यविशेषः । व्रीहियवशब्दौ धान्यमात्रोपलक्षकौ । तपः कृच्छ्रादिलक्षणम् । श्रद्धा आस्तिक्यबुद्धिः । सत्यं सत्यवचनम् । ब्रह्मचर्यं स्त्रीसङ्गादिराहित्यम् । विधीयत इति विधिः नित्यनैमित्तिकादि ॥ ७ ॥

**सप्त प्राणाः प्रभवन्ति तस्मात्** । तस्मात् अक्षरात् शीर्षण्यानि चक्षुःश्रोत्रनासिकारन्ध्रयुग्मास्यसंचारीणि सप्तेन्द्रियाण्युत्पद्यन्ते । **सप्तार्चिषः समिधः सप्त जिह्वाः** । गार्हपत्याद्या अग्नय , इन्धनानि, कालीप्रभृतय सप्त जिह्वाश्च प्रभवन्तीति पूर्वेणान्वय । किञ्च **सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त** । इमे सप्तापि लोका उत्पन्ना , येषु लोकेषु हृदयगुहासु सुषुप्तिवेलाया

---

८, ९. मन्त्रद्वय तैत्तिरीयनारायणे (९) । सप्तहोमा इत्यत्र सप्तजिह्वा इति, गुहाशया निहिता इत्यत्र गुहाशयानिहिता इति

अतः समुद्रा गिरयश्च सर्वेऽस्मात् स्यन्दन्ते सिन्धवः सर्व(र्व)-
रूपाः। अतश्च सर्वा (विश्वा) ओषधयो रस(सा)श्च येनैष भूतैः
(एतेषु भूतेषु?) तिष्ठते ह्यन्तरात्मा ॥ ९ ॥
पुरुष एवेदं विश्वं (सर्वं) कर्म तपो ब्रह्म परामृतम्।

---

शयाना सप्त प्राणाश्चक्षुरादिगोलकप्रदेशेषु धात्रा निहिताः सन्तश्चर-
न्तीत्यर्थः। सप्त सप्तेति वीप्सा पुरुषभेदाभिप्राया ॥ ८ ॥

अतः समुद्रा गिरयश्च सर्वे। स्पष्टोऽर्थः। अस्मात् स्यन्दन्ते
सिन्धवः सर्वरूपाः। सर्वरूपा बहुरूपा सिन्धवः गङ्गाद्याः सरित
इत्यर्थः। अतश्च सर्वा ओषधयो रसाश्च। स्पष्टोऽर्थः। ननु पृथिव्या
एवौषधयो जायमाना दृश्यन्ते, इक्ष्वादिभ्यो रसा जायमाना दृश्यन्ते,
कथमक्षरात् सर्वं जायत इत्युच्यत इत्याशङ्क्याऽऽह—येनैष भूतैः
तिष्ठते ह्यन्तरात्मा। येन यस्मात्कारणात् एषः अक्षरपुरुषः सर्वैः
भूतैः परिवृतः सन् तदन्तरात्मतया वर्तते, तस्मात् पृथिव्यादिभ्यो जाय-
माना अपि अक्षरात् ब्रह्मणो जाता इति शक्यते वक्तुमिति भावः ॥ ९ ॥

पुरुष एवेदं विश्वम् (सर्वम्)। यस्मादसौ सर्वभूतान्तरात्मा,
तस्मात् सर्वमिदं पुरुषोपादानकत्वात् पुरुष एव। तस्मात् तद्विज्ञाने सर्व-
स्यापि ज्ञानमुपपद्यत इति भावः। कर्म तपो ब्रह्म परामृतम्। तस्य
जगत्सृष्ट्यनुकूलः कर्मशब्दितो व्यापारः सृष्टव्यालोचनात्मकं तप एव।

---

भूतैरित्यत्र भूत इति च भेदः। श्रुतप्रकाशिकायाम्, 'येनैष भूतै'
रिति स्थाने 'एतेषु भूतेषु' इत्येव पठितम् ॥

१० विश्वमित्यत्र सर्वमिति श्रुतप्रकाशिका। ब्रह्म परामृतमिति।
ब्रह्मणः प्रकृतेः पराः (तिरश्चाः) ये तेषाममृतमिति विग्रहः। 'पुरुष

एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥१०॥
इति द्वितीयमुण्डके प्रथमः खण्डः ॥
॥ अथ द्वितीये द्वितीयः खण्डः ॥

हरिः ओम् । आविः संनिहितं गुहाचरं नाम महत् पदम्
अत्रैतत् समर्पितम् (तत्रेदं सर्वमर्पितम्) । एजत् प्राणन्निमिषच्च यत्

'एको व्यापी सदा शुद्धो निर्गुण प्रकृते पर' इति प्रकृतिब्रह्मशब्दित [प्रकृति]परमुक्तात्मनाम् अमृतवत् परमानन्दतया भोग्यभूतं ब्रह्माप्यक्षर-पुरुष एवेत्यर्थ । एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य । हे सोम्य सोमार्ह! एतत् अक्षर ब्रह्म इह लोके यो वेद, स ग्रन्थिवद्दुर्मोचामविद्या विकिरति निरस्यति । कॄ विक्षेप इति धातुः ॥
इति मुण्डकोपनिषत्प्रकाशिकाया द्वितीयमुण्डके प्रथम· खण्ड ॥

—:**:—

आविः संनिहितं गुहाचर नाम महत् पदम् । आविरित्यव्ययम् । योगिनामपरोक्षम् । संनिहि गुहाचरम् हृदयगुहावर्तितया संनिहितम् । नाम=दुर्विज्ञेयस्वरूपतया प्रसिद्धम् । सर्वतो महत् । पदं प्राप्यभूतमित्यर्थ । अत्रैतत्समर्पितम् एजत्प्राणन्निमिषच्च यत् । एजत् कम्पमानं जाग्रदिति यावत् । प्राणत् प्राण भृत् । निमिषत् सुप्तम् । जाग्रत्सुप्तादिभेदभिन्न प्राणिजातमत्रा-

एवेदं सर्वं तपो ब्रह्मपरामृतमिति ब्रह्मपुरुषशब्दयोरेकविषयत्वावगमात् इति श्रुतप्रकाशिकामतुसृत्य ब्रह्मेदं परब्रह्मपरं वेत्याशयेन ब्रह्मेपीति पुन.ब्रह्मपदप्रयोगः। अत एव कचित् ब्रह्मशब्देतेति पाठाभावोऽपि युक्तः । परामृतातपरिमुच्यन्तीत्यत्रैव परामृतपदव्याख्यानसंभवेऽपि संभवदर्थान्तरसङ्ग्रहोपि युक्त इति सूचनायान्यथा व्याख्यातम्।

एतज्जानथ सदसत् वरेण्यं परं विज्ञानात् यद् वरिष्ठं प्रजानाम् ॥ १ ॥

यदर्चिमत् यदणुभ्योऽणु[च]यस्मिन् लोका निहिता लोकिनश्च। तदेतदक्षरं ब्रह्म स प्राणस्त दु वाङ्मनः। (तद्वाङ्मनः।) तदेतत् सत्यं तदमृतं तद् वेद्धव्यं सोम्य विद्धि ॥ २ ॥ [ऋग् धनुः यजुर्बाणः साम ज्या घोषणादिना। आथर्वणमयं शुभ्रं प्रतिगृह्णीत सुव्रतः ॥]

---

क्षरपुरुषेऽर्पितमित्यर्थः। **एतज्जानथ सदसद्वरेण्यम्।** स्थूलसूक्ष्मवस्तुभिराधारत्वेन प्रार्थनीयम्। आधारभूतमिति यावत्। तादृशमेतत् अक्षरम्। **परं विज्ञानाद्यद्वरिष्ठं प्रजानाम्।** 'यो विज्ञाने तिष्ठन्' इति श्रुतेर्विज्ञानशब्दो जीवपरः। विज्ञानात्परं जीवाधिकं प्रजानामुपायोपेयत्वेनात्यन्तवरणीयम्=अत्यन्तप्रार्थनीयमित्यर्थः ॥ १ ॥

**यदर्चिमत् यदणुभ्योऽणु च।** यदर्चिष्मत्। अर्चिश्शब्दितदीप्तिमत्त्वं विग्रहद्वारा द्रष्टव्यम्। अणुभ्यः अपि श्यामाकादिभ्यः। अतिसूक्ष्म(श्यामाकादिभ्योऽणिष्ठम् सूक्ष्म)तया सर्वान्तःप्रवेशयोग्यमित्यर्थः। **यस्मिँल्लोका निहिता लोकिनश्च।** लोकिनः लोकवासिनः। शिष्टं स्पष्टम्। **तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः।** उशब्दोऽवधारणे। प्राणादिकमपि तदात्मकमित्यर्थः। **तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि।** तदेतदक्षरं सत्यम् अविनाशि

---

२. तद्वाङ्मन इति पाठे वाङ्मनसागोचरमित्यर्थ उक्तो भावप्रकाशिकायाम्। बृहदारण्यके (५-८-२) गार्गीवाचि, "द्वौ बाणवन्तौ हस्ते कृत्वा" इति प्रयोगात् शरोऽन्यः तदग्रनिक्षिप्तवंशखण्डादिरूपो बाणोऽन्य इति ज्ञायमानत्वात् अत्र ऋगादीनां धनुरादिरूपत्वेऽपि आथर्वणमयपदेन शरत्वेन वक्ष्यमाणं जीवतत्त्वं सुग्रहम्। घोषणादिनेति ज्यायाः साम्नश्च साम्यकथनम्।

**धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत (सन्धीयत) । आयम्य तद्भागवतेन(तद्भावगतेन) चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥**
**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥ ४ ॥**

---

**अमृतम्** असंसारि । भोग्यमिति वाऽर्थः । तदेव मनसा वेद्धव्यं [विद्धि] समाहितमनोविषयं विद्धि । तत्र मनःसमाधानं कुर्विति यावत् ॥ २ ॥

**धनुः सन्दधीत** । उपनिषत्प्रसिद्धं प्रणवाख्यं धनुर्गृहीत्वा भगवदुपासनया स्थूलसूक्ष्मशरीराद्विवेचितमष्टाक्षरादिलक्षणमहास्त्रसंयोजितमात्मलक्षणं शरं सन्दध्यात् । किं कृत्वेत्यत्राऽऽह **आयम्य तद्भागवतेन चेतसा** । भगवत्प्रवणेन चेतसा तद्धनुरायम्य । प्रणवाख्यस्य धनुष आयमनं नाम प्रत्यक्परमात्मनोः शेषशेषिभावलक्षणार्थप्रकाशकत्वेनानुसंहितत्वम् । **तद्भावगतेन चेतसेति** पाठे तद्भावः तत्प्राप्तिः । **तद्भावगतेन चेतसा** तत्प्राप्तीच्छया शरमायम्येत्यर्थः । तस्य चाऽऽयमनं नाम सेन्द्रियान्तःकरणस्य तस्य विषयान्तरविमुखीकरणपूर्वकमक्षराख्यलक्ष्याभिमुखतयाऽवस्थापनम् । **लक्ष्यं तदेवाक्षरं सोम्य विद्धि** । हे सोम्य । तदेवाक्षरं लक्ष्यं[लभ्यं] जानीहीत्यर्थः ॥ ३ ॥

उक्तमर्थं विवृणोति **प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते** । 'ओमित्यात्मानं युञ्जीत' इत्यात्मरूपशरसमर्पणे हेतुत्वात् प्रणवस्य धनुष्ट्वेन रूपणम् । **अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्** । **अप्रमत्तेन** विषयान्तरविमुखेन एकाग्रचित्तेन । वेधो हि तदेकशेषत्वेन तद्ध्यानम् । **शरवत् तन्मय** इति । यथा लक्ष्ये निमग्नस्य

[लक्ष्यं सर्वगतं चैव शरो मे सर्वतोमुखम् ।
वेद्धा सर्वगतश्चैव विद्धं लक्ष्यं न संशयः ॥
आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ॥ ]

यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ॥ ५

---

शरस्य लक्ष्यापेक्षया भेदकाकारास्फुरणम्, एवं परमात्मनि प्रणवेन समर्पितस्य प्रत्यगात्मनस्तत्साम्यलक्षणां मुक्तिमापन्नस्य ज्ञानैकाकारस्य देवत्वमनुष्यत्वादिलक्षणभेदकाकारास्फूर्तिरेव तन्मयत्वमिति द्रष्टव्यम् ॥ ४ ॥

यस्मिन् द्यौः....मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः । यस्मिन्नक्षरे द्युपृथिव्यन्तरिक्षमनःप्राणादिकं समवेतम्, तमेकमेव स्वेतरसमस्तवस्तुनियन्तृत्वेन व्यापकतया आत्मानं जानीत; अनात्मविषया वाचस्त्यजत । कस्य हेतोः ? अमृतस्यैष सेतुः । नद्यादिषु हि सेतुः कूलस्य प्रतिलम्भकः । संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इत्यर्थः ॥ ५ ॥

---

() सोम्य विद्धीत्युपदेशं शृण्वन् शिष्य आह लक्ष्यं सर्वगतमिति मन्त्रम् । गुरोरेव वा स्वानुभवप्रदर्शनरूपोऽयम् । लक्ष्यमित्यादिपादत्रयेण सर्वस्य सर्वगतत्वात् कथं वेधनमिति शङ्का । तत्संशयापनोदनेन वेद्धव्यत्वं वक्तुं चतुर्थपादः । अथवा सर्वपदं देशनियमं विना सर्वत्र वेधनसौलभ्यदर्शि । तदुत्तरमन्त्रेणोपपाद्यते ॥ (). आत्मानमित्यादि । मन्त्रोऽयम् (१-२-२३) प्रणवो धनुश्शरोह्यात्मा, आत्मानमरणिं कृत्वेत्यादिभिरुपासनस्य प्रकार उक्त इति श्रुतप्रकाशिकायां गृहीतः । अयं श्वेताश्वतरीयेऽपि । निगूढवदित्यस्य तात्पर्यं चन्द्रिकोद्धृतब्रह्मबिन्दूपनिषदनुसारादौचित्याच्च निगूढाग्निवदित्यर्थः ॥

अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः। ओमित्येवं ध्यायथात्मानम्, स्वस्ति वः, पाराय तमसः परस्तात्॥
यः सर्वज्ञस्सर्वविद् यस्यैष महिमा भुवि।
दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ॥ ७ ॥

---

अरा इव रथनाभौ संहता यत्र नाड्यः। स एषोऽन्तश्चरते बहुधा जायमानः। "सतत सिराभिस्तु लम्बत्याकोश संनिभम्" इत्युक्तरीत्या यत्र हृदये, रथनाभौ समर्पिता अरा इव, नाड्यः संहताः सगताः, तत्र मध्ये स एषः प्रकृत आत्मा, "अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्" इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयस्व(स्व)रूपसंस्थानगुणकर्मसमन्वितः स्वीयस्वभावमजहदेव स्वेच्छया बहुधा जायमानः सन् चरते वर्तत इत्यर्थः। ओमित्येवं ध्यायथाऽऽत्मानम्। स्पष्टोऽर्थः। स्वस्ति वः पाराय तमसः परस्तात्। तमसः परस्तात् वर्तमानाय च पाराय परतीराय। "पाराऽवारे परार्वाची तीरे" इति नैघण्टुकाः। प्राप्यभूतायेति यावत्। तत्पदप्राप्तये ओमित्येवमात्मानं ध्यायथेत्यन्वयः। एवं ध्यानाय प्रवृत्तेभ्यो युष्मभ्यं स्वस्ति भवतु ॥ ६ ॥

यः सर्वज्ञः सर्ववित्। उक्तोऽर्थः। यस्यैष महिमा भुवि। भूलोके संसारप्रवर्तनरूप एष महिमा यदीयः। दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः। "यस्यैष महिमा भुवीति लीलाविभूत्यन्वय उक्तः। दिव्ये व्योम्नीति त्रिपाद्विभूतिरुक्ता" इति व्यासार्यैरुक्तत्वात् वैकुण्ठाख्ये ब्रह्मपुरे परमे व्योम्नि अयमात्मा प्रतिष्ठित इत्यर्थः ॥७॥

मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्नि(ऽन्तर्हृदये संवि)धाय । तद् विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ ८ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

---

**मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय।** **मनोमयः** विशुद्धमनोग्राह्यः । **प्राणशरीरनेता** । प्राणश्च शरीर [च?] प्राणशरीरम् । तस्य नेता । जीवस्य प्राणशरीरलम्भक इत्यर्थः । यद्वा "मनोमयः प्राणशरीरो भारूपः" इति श्रुतेः प्राणः शरीरमस्य प्राणशरीरः ; स चासौ नेता च । प्रभुरित्यर्थः । 'अधिभूर्नायको नेता प्रभुः' इति हि नैघण्टुकाः । अन्ने अन्नपरिणामे शरीरे प्रतिष्ठितो यः— तस्मिन् चित्त हृदयं सन्निधाय । **तद् विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति** । अमृतं अस्पृष्टसंसारगन्धम् आनन्दरूपं यद्विभाति, तद्ब्रह्म विज्ञानशब्दितेन दर्शनसमानाकारेणोपासनेन धीराः प्रज्ञाशालिनः **परिपश्यन्ति** साक्षात्कुर्वन्तीत्यर्थः ॥ ८ ॥

तस्य फलमाह—**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि** । **हृदयस्य** अन्तःकरणस्य ग्रन्थयः ग्रन्थिवद्दुर्मोचा रागद्वेषादयः । हृत्स्थानमयत इति व्युत्पत्त्या हृदयशब्दितो जीवो वा । ब्रह्मज्ञानेन सार्वज्ञ्यसिद्धेः सर्वविषयका संशया नश्यन्ति । अस्य च(?) प्रारब्धव्यतिरिक्तानि पूर्वानेकभवार्जितानि

---

८. अन्तर्हृदये इति स्वरसपाठ एवात्र. पूर्वश्रुतप्रकाशिकायाम् । अन्ने हृदयमिति पाठे सन्निधायेत्यस्य सम्यङ्निक्षिप्येत्यर्थः ॥

हिरण्मये परे(पुरे)कोशे विरजं ब्रह्म निष्कलम्।

कर्माणि च नश्यन्ति। नाशो नाम कर्मणा फलजननशक्तिविनाशः। "तद-धिगम उत्तरपूर्वाघयो..." इति सूत्रे "अघस्य विनाशकरणमुत्पन्नायाः तच्छक्तेर्विनाशकरणम्। शक्तिर्हि (रविः) परमपुरुषप्रीतिरेव" इति भाषितम्। एतत् सर्वं कदेत्यत्राह--**तस्मिन् दृष्टे परावरे।** परे अवरे यस्मात् स **परावरः।** *सर्वोत्कृष्टा अपि ब्रह्मादयो यस्मात् निकृष्टा इत्यर्थः।* अथवा **परावरे** परावरशरीरके; सर्वात्मभूते इत्यर्थः। तादृशे तस्मिन् दर्शनसमानाकारज्ञानविषयीकृते इत्यर्थः।

न च "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति शरीर-वियोगकाल एव पुण्यपापारब्धकर्मविनाशस्य श्रुतत्वात्, "साम्पराये तर्त-व्याभावात्...." इति सूत्रतद्भाष्ययोरपि तथैव प्रतिपादनात्, **'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे'** इति दर्शनसमानाकारज्ञानारम्भसमय एव श्रूयमाणः कर्मक्षयः कथमुपपद्यतामिति वाच्यम्—अस्मिन् [क्षीयन्त इति] वाक्ये श्रूयमाणः कर्मक्षयो दर्शनसमानाकारोपासनारम्भप्रभृत्यस्य परमात्मनः 'तत्संपाद्यौ (संपूर्तौ) उपासकस्याघक्षपिष्ये' इति संकल्परूपः। देहवियोग-समयभावी कर्मक्षयस्तु, 'क्षान्तम्' इति संकल्परूप इत्यविरोधो द्रष्टव्यः॥ ९

**हिरण्मये परे(पुरे)कोशे विरजं ब्रह्म निष्कलम्।** "तस्या हिर-ण्मयः कोशः" इति श्रुत्युक्तरीत्या सप्रकाशतया कमनीयतया वा हिर-ण्मयशब्दाभिलप्ये अत्युत्कृष्टपदार्थोपलब्धिस्थानतया कोशतुल्ये **परे**

तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ १० ॥
न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।

---

उत्कृष्टे परमपदे । पुर इति पाठेऽपि स्पष्टोऽर्थः । **विरजम्** । छान्दस मदन्तत्वम् । सत्त्वरजस्तमोतीतम् । **निष्कलं** निरवयवमित्यर्थः । **तच्छुभ्रं ज्योतिषां ज्योतिः** । शुभ्रम्–अनवद्यम् । **ज्योतिषां ज्योतिः** प्रकाशकानामपीन्द्रियाणां प्रकाशकम् । ज्योतिश्शब्दितदीप्तियोगो विग्रहद्वारको द्रष्टव्यः। **तद्यदात्मविदो विदुः**। आत्मविदः य(त)द्विदुः, य(त?)दात्मतत्त्वमिति यावत् ॥ १० ॥

ज्योतिषां ज्योतिष्ट्वं प्रपञ्चयति—**न तत्र....कुतोऽयमग्निः** ।

---

१०. प्रकाशकानामपीति । सूर्यादिप्रकाशकानामिन्द्रियाणामपि चेत् प्रकाशकम्, सूर्यादिप्रकाशकत्वं सुतरामित्याशयेन इन्द्रियाणामित्युक्तम् । इन्द्रियाणामपीत्यन्वयेन सूर्यादिसमुच्चयार्थो वा अपिशब्दः । यथा बृहदारण्यके 'तं देवा ज्योतिषां ज्योतिः' इत्यत्र ज्योतिषामिति इन्द्रियार्थकम्, प्राणमिति वाक्यशेषात्, तथेह 'न तत्र सूर्य'ेति वाक्यशेषात् सूर्यादिज्योतींषि गृह्यन्ते । एवं प्रसिद्धज्योतिर्ग्रहणेन श्रीगीताभाष्ये, 'ज्योतिषामपि तज्ज्योतिः' (१३-१७) इत्यत्र, 'ज्योतिषां दीपादित्यमणिप्रभृतीनामपि तदेव ज्योतिः प्रकाशकम्' इति जीवात्मा वर्ण्यते । उच्यते चात्र समनन्तरमेव, ज्योतिष्ट्वं प्रपञ्चयतीति । ननु द्वितीयज्योतिःपदस्य प्रकाशकमित्यर्थः ; प्राणस्य प्राणं चक्षुषश्चक्षुरितिवत् । तत्र दीप्तिमत्त्वं कथं लभ्यते । तत् कथमुच्यते दीप्तियोग इति चेत् ; शक्यार्थापरित्यागेनाजहल्लक्षणया प्रकाशकदीप्तिमदित्यर्थः संभवात् विवक्ष्यते । दिव्यमङ्गलविग्रहदीप्त्यधीनायाः सूर्यादिज्योतिषि प्रमाणसिद्धत्वात् ।

**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ ११ ॥**
**[न तत्र चन्द्रार्कवपुः प्रकाशते न वान्ति वाताः कुतोऽन्या देवताः ।**
**स एष देवः कृतभूतभावनः स्वयं विरुद्धो (विशुद्धो) विरजः प्रकाशते ॥**
**ब्रह्मैवेदममृतं[यत्]पुरस्ताद्ब्रह्म पश्चात्[ब्रह्म] दक्षिणतश्चोत्तरतश्च(रेण)**

---

तस्मिन् दीप्यमाने नैतेषां सूर्यादीनां दीप्तिरस्तीत्यर्थः। नन्वतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमाने, तद्भासा च जगति भासमाने, **न तत्र सूर्यो भातीति** प्रत्यक्षविरुद्धं कथमभिधीयत इत्यत्राऽऽह–**तमेव भान्तमनुभाति सर्वम्** । इदं [च] जगद्भासकमादित्यादीनां परिदृश्यमानं रूपं न नैजम्, किंतु परमात्मदत्तं तदीयमेव तेजः । गीतं च भगवता–"यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥" इति । विवृतं चैतद्भगवता **भाष्यकृता**– "अखिलस्य जगतो भासकमेतेषामादित्यादीनां यत् तेजः, तन्मदीयं तेजः तैस्तैराराधितेन मया तेभ्यो दत्तमिति विद्धि" इति । अतो [1]याचितकमण्डितपुरुषतुल्यानामेतेषां भास्वररूपशालिनामपि अनन्याधीनतेजस्त्वाभावात्, न भातीति व्यपदेशो युज्यत इति भावः। **तस्य भासा सर्वमिदं विभाति** । सर्वप्रपञ्चभासकस्यापि सौर(र्या)दितेजसस्तद्दत्तत्वेन स्वकीयत्वाभावादिति भावः।

अत्र वक्तव्यं सर्वं कठवल्लीविवरणे(5.15.)उक्तं तत्रैव द्रष्टव्यम् ॥ ११ ॥

उपसंहरति–**ब्रह्मैवेदममृतं पुरस्तात् [ब्रह्म]पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण** । सर्वासु दिक्षु यदिदं दृश्यते, तत् सर्वं ब्रह्मैवेत्यर्थः ।

---

1. याचितकमण्डितेति। तार्किकरक्षायामप्येवं प्रयोगो दृश्यते ; यथा प्रमाणप्रकरणे, "याचितकमण्डनकमनीयमेव स्मृतेर्याथार्थ्यम्" इति ।

अधश्चोर्ध्वं च प्रसृतं [ब्रह्म] ब्रह्मैवेदं विश्व(सर्वं)मिदं वरिष्ठम् ॥ १२ ॥
[पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम् ।
हृदयं तद् विजानीयात् विश्वस्यायतनं महत् ॥]
इति द्वितीयः खण्डः ॥ द्वितीयमुण्डकं समाप्तम् ॥
॥ अथ तृतीयमुण्डकम् ॥ हरिः ओम् ।
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीतीति ॥ १ ॥

---

शिष्टं स्पष्टम् । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् । [इदं वरिष्ठम्?] वरणीयतमं ब्रह्मैवेत्यर्थः । शिष्टं स्पष्टम् ॥ १२ ॥

इति मुण्डकोपनिषत्प्रकाशिकायां चतुर्थः खण्डः ।

द्वितीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

नन्वेकस्यैव ब्रह्मणः सर्वदेहानुप्रवेशे तस्य सुखदुःखभोक्तृत्वप्रसङ्ग इत्यत्राऽऽह–द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । युज्यत इति युक् । युक्छब्दो गुणपरः । "समानगुणक सयुक्" इति व्याख्यातृभिर्विवृतत्वात् । सयुजौ=समानगुणकौ अपहतपाप्मत्वादिगुणैः

---

( ) पद्मकोशेति मन्त्रः अदृश्यत्वाधिकरणश्रुतप्रकाशिकायां द्विरनूदितः । एतदर्थस्तैत्तिरीयभाष्ये नारायणानुवाके ।

१. अत्र मन्त्रे परस्य स्वयं हेयरहितत्वमुच्यते ; उत्तरमन्त्रे च हेयनिवर्तकत्वमपि । सह युङ्क्तः इति सयुजौ एकत्र भोग्ये सह निविष्टौ । यद्वा युज्यत इति युक् ययोस्तौ सयुजौ समानभोग्यकावित्यर्थोऽपि प्रामाणिकः, "सायुज्यमुभयोस्तत्र भोक्तव्यस्याविशिष्टता । सार्ष्टिता तत्र भोगस्य तारतम्यविहीनता" इति । सार्ष्टिताशब्दार्थस्यापि अत्र घटनाय [illegible] समानगुणकावित्यर्थ उच्यते । उक्तश्च चरमश्लोकाधि-

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥

परस्परसमानौ, **सखायौ** सहचरौ **द्वौ सुपर्णौ** पक्षिसदृशौ **समानम्** एकं **वृक्षं** वृक्षवत् छेदनार्हं शरीरं समाश्रितावित्यर्थः । **तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति** । तयोर्मध्येऽन्यतरः जीवः स्वादु परिपक्वं **पिप्पलं** कर्मफलं भुङ्क्ते । अन्यस्तु परमात्मा अभुञ्जान एव प्रकाशते । अत्र शरीरतदाश्रयजीवपरादिविषयवाचकशब्दनिगरणेन विषयिवाचकवृक्षसुपर्णादिशब्दैर्वृक्षत्वाद्यध्यवसानलक्षणरूपकातिशयोक्तिविच्छित्तिविशेषायेति द्रष्टव्यम् ॥ १ ॥

**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । अनीशया** भोग्यभूतया प्रकृत्या **मुह्यमानः**—"पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ", "देहयोगाद्वा सोऽपि" इत्युक्तन्यायेन तिरोहितपरमात्मशेषत्वज्ञानानन्दलक्षणस्वस्वरूपः सन् **वृक्षे** वृक्षवच्छेदनार्हे एकस्मिन् शरीरे जीवः, 'स्थूलोऽहं' 'कृशोऽहम्' इत्यादितादात्म्यबुद्ध्या पात्रूदकवत् तदेकतामापन्नः सन् तत्संसर्गकृतानि दुःखान्यनुभवतीत्यर्थः । **जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति**

कारे 'सायुज्यमन्ये स तु मोक्ष उक्तः' इत्यत्र सायुज्यं भोगसाम्यमिति । सायुज्यं गुणान्तरेषु साम्यम्, सार्ष्टिता भोगसाम्यमित्याहुः (तै. १२. अनु-भाष्ये) । भोक्तव्यस्याविशिष्टत्वेऽत्र भोग्यभोगोपकरणादिग्रहणेनापहतपाप्मत्वादिसत्यसंकल्पत्वान्त सर्वग्रहणे तु सर्वैक्यतात्पर्यं सुवचम् । न्यायसिद्धाञ्जने "समानगुणत्वं—" इति ।
१. २. मन्त्रद्वयं श्वेताश्वतरीयेऽपि (४) । तद्भाष्यमप्यवधेयम् ॥

वीतशोकः । इतिशब्दो बुद्धिस्थप्रकारवचन । चशब्दश्चाध्याहर्तव्य । यदासौ(असौ?) जीवो निमग्नात् स्वस्मात् धारकत्वनियन्तृत्वशेषित्वादिना विलक्षण जुष्ट स्वकर्मभि प्रीत परमात्मानम्, अखिलजगदीशनलक्षण मस्य महिमान च यदा पश्यति-तदा वीतशोको भवतीत्यर्थ ।

केचित्तु—अनीशया-अनीशत्वेन असमर्थत्वेनेत्यर्थ । लोके हि (लौकिकोपि हि) पङ्कादौ निमग्न पङ्कादिसंबन्धेन मुह्यमान स्वय निर्गमनासमर्थत्वेन शोचन् स्वोद्धरणसमर्थं स्वय पङ्काद्यवनिमग्न स्वस्मिन् प्रीतिमत्त्वेन सुहृद्भूतम्, तस्योद्धरणसामर्थ्यं च दृष्ट्वा वीतशोको भवति। तत्समाधिरत्रानुसधेय । न च अस्मिन् पक्षे, "अनीशया भोग्यभूतया प्रकृत्या" (१-३-४) इति भाष्यविरोध शङ्कनीय । भोग्यभूतये-त्यस्यानीशयेत्येतद्विवरणरूपत्वाभावात् । तस्य सामर्थ्यलब्धार्थानुवाद-रूपत्वात्—इति वदन्ति ।

(श्रुतप्र, १-३-६ सू) "ननु कथ द्वा सुपर्णेति मन्त्रस्य जीवपरमात्मपरत्वम् । अन्त करणजीवपरो ह्यय मन्त्र । पैङ्गिरहस्यब्राह्मणेऽस्य मन्त्रस्य तथा व्याख्यातत्वात् । तथा हि-"तयोरन्य पिप्पल स्वाद्वत्तीति सत्त्वम् । अनश्नन्नन्योऽभिचाकशीतीति ज्ञ तावेतौ सत्त्वक्षेत्रज्ञौ" इत्यत्र स्वाद्वत्तीत्येतदन्तस्य वाक्यस्य सत्त्वपरत्वम्, अनश्नन्नित्यादे क्षेत्रज्ञपरत्त्व च प्रतीयते । न च सत्त्वक्षेत्रज्ञशब्दौ जीवपरमात्मपराविति वाच्यम्—तयो शब्दयोरन्त करणजीवपरतया प्रसिद्धत्वात् । "तदेतत् सत्त्वम् । येन स्वप्न पश्यति । अथ योऽय शारीर उपद्रष्टा, स क्षेत्रज्ञ । तावेतौ सत्त्वक्षेत्रज्ञौ" इति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवशब्दाभ्या

पैङ्गिश्रुत्यैव व्याख्यातत्वाच्च । येन पश्यतीति करणत्वप्रतीतेः सत्त्वं अन्तःकरणम्, स्वमद्रष्टृत्वाच्च क्षेत्रज्ञो जीवः । अतोऽयं मन्त्रोऽन्तःकरण जीवपर इति चेत्"—

"न तावत् जीवपरमात्मपरत्वमस्य मन्त्रस्यापवदितुं शक्यते । अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने, "समाने वृक्षे पुरुषो निमग्न" इत्यनन्तरे मन्त्रे जीवपरयोः प्रतिपन्नत्वात् । अस्य मन्त्रस्य तदैकार्थ्याच्च । 'समानं वृक्षं परिषस्वजाते' 'समाने वृक्षे पुरुषो निमग्नः' इति तयोरैकार्थ्यं हि प्रतीयते । 'समाने वृक्षे' इति मन्त्रे च पुरुषो जीवः ; अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात् । 'शोचति' 'मुह्यमान' 'पश्यति' 'वीतशोकः' इति पदानामस्वारस्यप्रसङ्गाच्च । अन्यश्च परमात्मा ; ईशशब्दोक्तत्वात्, स्वविषय[क]ज्ञानेन वीतशोकत्वहेतुत्वाच्च ॥ न केवलमनन्तरमन्त्रैकार्थ्यात् 'द्वा सुपर्णे'ति मन्त्रस्य जीवपरमात्मपरत्वम् ; किंतु स्ववाक्ये 'स्वाद्वत्ति, अनश्नन्न्य' इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च तदवसीयते । चक्षुःश्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादिवत् अन्तःकरणस्यापि करणत्वादेव भोक्तृत्वं हि न संभवति । जीवस्य च सूक्ष्मशब्दोक्तदेहपरिष्वक्तदशायामेवानश्नत्वमपि नोपपद्यते ॥"

"तर्हि पैङ्गिश्रुते कोऽर्थः ॥ उच्यते—

सत्त्वं बद्धजीवः । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इति नामानुशासनात् जन्तुपरत्वावगतेः । जन्तुश्च चेतनः ; "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इति नामपाठात्, "वन्यान् विनेष्यन्निव दुष्टसत्त्वान्" इति प्रयोगात् ; "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥" इति दर्शनाच्च ।

क्षेत्रज्ञशब्दश्चात्र परमात्मपरः । अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवत् अर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः । "विष्णोर्नामसहस्रं मे" इत्युपक्रम्य, 'क्षेत्रज्ञोऽक्षर एव च' इति परमात्मनि प्रयोगात् । क्षेत्रं जानातीत्ययथार्थस्य तस्मिन्नेव पुष्कलत्वाच्च ।

मोक्षधर्मे—'ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ॥
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ।' इति,

तत्रैव--'विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥
क्षेत्राणि च शरीराणि भानानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते॥' इति प्रयोगात् ।

तत्रैव कपिलासुरिसंवादे—"ज्ञानानामासुरे ! क्षेत्रे क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षकः । ज्ञातृको बुद्ध्यमानाप्रतिबुद्धयोः परममृतं विदित्वा निरवयवम् अनामयमस्माद् दुःखात् विमुच्यत एव" इति बुद्ध्यमानाप्रतिबुद्धशब्दाभिहितयोश्चिदचितोः परस्य क्षेत्रज्ञशब्देनाभिधानात् । तत्रैव पञ्चविंशतितत्त्वानि वर्गशब्देनोक्त्वा, "एतस्माद्वर्गादपवृत्तोऽपवर्गदः क्षेत्रज्ञः शुचिरुपेक्षको बुद्ध्यमानाप्रतिबुद्धयोः परस्तात्" इति, तत्रैव—"अन्यदुदकम् अन्यत् पुष्करपर्णम्, तथाऽन्यत् क्षेत्रम् अन्यः पुरुषः पञ्चविंशकः अन्यश्चास्मात् क्षेत्रज्ञ" इति, पुनश्च तत्रैव, — "एवमासुरे ! अन्यद्व्यमन्यः पुरुषः पञ्चविंशतितत्त्वम् अन्योऽस्मात् क्षेत्रज्ञ." इति पञ्चविंशात् परस्मिन् क्षेत्रज्ञशब्दप्रयोगात् ।

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥

---

भावादिति पूर्वपक्षं कृत्वा, "ऋतं पिबन्तौ", 'द्वा सुपर्णा' इत्यत्र च द्वित्वसंख्याप्रतीतेरैक्यं प्रतीयते । तत्र च 'द्वा सुपर्णे'ति मन्त्रे 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्यः' इति अशनायाद्यतीतः परमात्मा प्रतीयते । अत एव 'जुष्टं यदा पश्यत्यन्यमीशम्' इति वाक्यशेषे परमात्मन एव प्रतिपादनं दृश्यते । 'ऋतं पिबन्ता'विति मन्त्रे च 'अन्यत्र धर्मात्' इत्युपक्रमेण परमात्मनः प्रकृतत्वात्, 'यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्' इति परमात्मविषयवाक्यशेषाच्च परमात्मैव प्रतिपाद्यः । अतः ऋतं पिबन्तावित्येतत् छत्रिन्यायेन योज्यम् । अतो वेद्याभेदात् विद्याऽभेदः" इति तदीयभाष्य एव प्रतिपादिततया तयोर्मन्त्रयोर्भिन्नार्थत्वसमर्थनस्य तद्विरुद्धत्वात् ।

तस्मात् द्वासुपर्णेति मन्त्रो जीवपरमात्मपर एव । सत्त्वक्षेत्रज्ञशब्दावपि तत्परावित्येव युक्तम् ॥ २ ॥ प्रकृतमनुसरामः—

**यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥** पश्यतीति पश्यः । "पाघ्राध्माधेड्दृशः शः" इति शप्रत्ययः । शित्वात् पश्यादेशः । यस्मिन् काले (?) पश्यः ब्रह्मदर्शी रुक्मवर्णम्—'आदित्यवर्णं तमसः परस्तात्', 'हिरण्यश्मश्रुर्हिरण्यकेशः' इत्युक्तरीत्या देदीप्यमानमङ्गलविग्रहयुक्तम्, ईशं जगदीशितारं तं कर्तारं ब्रह्मयोनिम्-'तस्मादेतद्ब्रह्मे'ति निर्दिष्टाव्यक्तब्रह्मोपादानभूतम्,

प्राणो ह्येष [यः] सर्वभूतैर्विभाति विजानन् विद्वान् भव तेना(ति ना)तिवादी। आत्मक्रीड आत्मरति क्रियावानेष [हि] ब्रह्मविदां वरिष्ठ. ॥

---

'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने' इत्युक्तरीत्या पुरुषशब्दनिर्दिष्टं वासुदेवं यदा पश्यति, तदा पुण्यपापे निरस्य निरञ्जनः निरस्तप्रकृतिलेपः सन् अपहतपाप्मत्वादिगुणाष्टकलक्षणेन ब्राह्मेण रूपेण परमसाम्यमुपैतीत्यर्थः । व्यासार्यैः ब्रह्मयोनिमित्यत्र षष्ठीतत्पुरुषे लक्षणाप्रसङ्गात् ब्रह्मयोनिशब्दयोः सामानाधिकरण्यमित्युक्तम् । तदतिसुन्दरम् ॥ ३ ॥

**प्राणो ह्येष सर्वभूतैर्विभाति** । अत्र, "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति" इत्यादाविव प्राणशब्दः परमात्मपरः । एष परमात्मा सर्वभूतैराश्रितो विभातीत्यर्थः । **विजानन् विद्वान् भव तेनातिवादी** । भवेति लोण्मध्यमपुरुषैकवचनम् । विजानन् श्रवणमननाभ्यां जानन् विद्वान् तमुपासीनः तेन परमात्मनाऽतिवादी भवेति शिष्यं प्रत्युपदेशः । अतीत्य सर्वान् वदितुं शीलमस्य सोऽतिवादी । यस्तु स्वोपास्यदेवतायाः सर्वातिशायित्वं वदति, सोऽतिवादीत्युच्यते । **आत्मक्रीड आत्मरतिः क्रियावान्** । यस्य क्रीडा आत्मन्येव, नोद्यानादिषु, स आत्मक्रीडः । यस्य रतिरात्मन्येव, न स्रक्चन्दनादिषु,

---

४. भवति नातिवादीति पाठे बहुवर्णग्राहे न भवतीति भावप्रकाशिकायामर्थ उक्तः । भवतेनातिवादीति पाठे छान्दसात्मनेपदस्वीकारापेक्षया पूर्वं सोम्य विद्धीतिवत् अत्रापि भवेति पृथक्पदं युक्तम् । एवञ्च वेदान्त (दहरविद्या) प्रसिद्धमतिवादित्वं गृहीतं भवतीत्यभिप्रायेणान्यथा व्याचष्टे—भवेति लोडिति ॥

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥
सत्यमेव जयति नानृतं सत्येन(त्यस्य)पन्था विततो देवयानः ।

---

स आत्मरतिः । रतिः स्रक्चन्दनादिजन्या प्रीतिः । क्रीडा उद्यानादिजन्येति भूमाधिकरणे व्यासार्यैरुक्तत्वात् । क्रियावान् अननुसंहितफलक्रियानुष्ठानशाली । एवंभूतश्च भवेति योजना । क्रियावत्त्वं किमर्थमित्यत्राऽऽह—एष [हि] ब्रह्मविदां वरिष्ठः इति । क्रियया ह्यन्तःकरणे परिशुद्धे ब्रह्मविद्यानिष्पत्त्या ब्रह्मविदां वरिष्ठो भवति ॥ ४ ॥

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ क्षीणदोषाः रागादिदोषशून्याः यतयः जितेन्द्रियाः यं पश्यन्ति, ■ शरीरान्तर्वर्ती ज्योतिर्मयः ज्ञानमयः शुभ्रः निर्दोष आत्मा, 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इत्युक्तबाह्याभ्यन्तरेन्द्रियैकाग्र्यलक्षणतपसा, आगमोत्थज्ञानेन च, स्त्रीसङ्गादिराहित्यलक्षणनित्यब्रह्मचर्येण च, सत्येन भूतहितवचनेन च लभ्यः साक्षात्कर्तव्यः । अथवा लभ्यः प्राप्यः इत्यर्थः । प्राप्तिश्चोपासनाद्वारेति द्रष्टव्यम् ॥ ५ ॥

सत्येन लभ्य इत्युक्तं स्तौति—सत्यमेव जयति नानृतं सत्येन पन्था विततो देवयानः । लोके सत्यमेव जयति ; नानृतम् । सत्यवादिना ह्यनृतवादी पराभूयते । अर्चिरादिरूपेण विततो विस्तीर्णो देवयानाख्यः पन्थाः सत्येन हि भवति-सत्यवादिनो हि भवतीत्यर्थः ।

येनाक्रमन्त्य ऋ (प्नुवन्ति ऋ) षयो ह्याप्तकामा (ह्यात्ताः)यत्र तत्
सत्यस्य परमं निधानम् ॥ ६ ॥
बृहच्च तत् दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत् सूक्ष्मतरं विभाति। दूरात्सु-
दूरे तदिहान्तिके च पश्यत्स्विहैव (पश्यस्त्वेतत् )निहितं गुहायाम् ॥७
न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञान-

तं मार्गं विशिनष्टि—येनाऽऽक्रमन्त्यृषयो ह्याप्तकामाः। आप्त-
कामाः विगततृष्णा ऋषयः तत्त्वदर्शिनो येन मार्गेण तत् प्राप्नुवन्ति
हि। किं तदित्यत्राऽऽह—यत्र तत् सत्यस्य परमं निधानम्।
यत्र स्थाने सत्यवदनस्य परमप्रयोजनभूतं मूर्तं ब्रह्माऽऽस्ते, तत्
स्थानमित्यर्थः ॥ ६ ॥

अर्चिरादिप्राप्यं विशिनष्टि—बृहच्च तद्दिव्यमचिन्त्यरूपं
सूक्ष्माच्च तत् सूक्ष्मतरं विभाति। स्वरूपतो गुणतश्च बृहत् दिव्यं
परमाकाशनिलयं वाङ्मनसागोचरकमनीयरूपवत् सर्वचेतनान्तःप्रवेशन-
समर्थात् जीववर्गादपि तदनुप्रवेशसमर्थतया सूक्ष्मतरं दीप्यते तत्। दूरा-
त्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्।
दूरात् सुदूरे प्रकृतेः परस्तात् वर्तमाने परमपदे, इहान्तिके अण्डा-
न्तर्वर्तिनि रविमण्डले, पश्यत्सु ब्रह्मदर्शिष्विहैव गुहायां हृदयाकाशे च
निहितम् स्थितमित्यर्थः ॥ ७ ॥

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा

---

७. अण्डान्तर्वर्तिनीति इहेतिशब्दार्थः। दूरादित्यस्य रवि-
मण्डलादेरित्यर्थविवक्षायामिहेत्यस्य पृथिव्यामित्यर्थोक्तौ अन्तिके
इति श्रीवेङ्कटाद्रिप्रभृतिकं ग्राह्यम्।

प्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति (ते) निष्कलं ध्यायमानः ॥८॥
एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ।

---

वा । देवाः इन्द्रियाणि । शिष्टं स्पष्टम् । **ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः** । ज्ञायतेऽनेनेति व्युत्पत्त्या, "प्रज्ञा च तस्मात् प्रसृता पुराणी" इति श्रुत्युक्तरीत्या ज्ञानप्रसरणहेतुः परमात्मा ज्ञानशब्देनोच्यते । अयमन्वयः निष्कलं परमात्मानं ध्यायन् परमात्मप्रसादेन विशुद्धान्तःकरणो भवति । तदनन्तरं **तं पश्यति**-दर्शनसमानाकारज्ञानेन तं विषयीकरोतीत्यर्थ ॥८

**एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश । प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा** । यस्मिन् आत्मनि प्राणापानादिपञ्चरूपेण विभक्तः प्राण आश्रितः ; प्राणैः इतरेन्द्रियैः सह प्रजानां सर्वमपि मन आश्रितम्—

---

८. धर्मभूतज्ञानप्रसादस्य सत्त्वशुद्ध्यधीनत्वात् अत्र प्रसादाधीनत्वं सत्त्वशुद्धेः पाठक्रमस्वरसलब्धं ज्ञानपदस्य परमात्मपरत्वाश्रयणेन निर्वहतीति ज्ञायत इति । ज्ञानानन्दमयदिव्यमङ्गलविग्रहसहिततया सकलं परमात्मानं ध्यात्वा तत्प्रसादेन विशुद्धसत्त्वो निष्कलं परमात्मस्वरूपमपि ध्यायन् पश्यतीत्यर्थोऽपि घटते ॥

९. ओतमित्यत्रापि पूर्वार्धात् यस्मिन्निति पदमनुषञ्जनीयम्—अत्र प्रजानां सर्वमिति पदद्वयश्रवणात् यस्मिन्निति परमात्मपरमेव युक्तम् । एवं च पूर्वार्धेऽपि तत् तत्परमेव । तथा च तत्प्रतिसंबन्धी एषोऽणुरित्येतच्छब्द इति परमात्मन एव ग्राह्यत्वादणुपदमणुपरिमाणपरं न भवतीति विमृश्य, दुर्विज्ञेय इत्यर्थ उक्तः। परंतु 'स्वशब्दोन्मानाभ्यां च' इति सूत्रभाष्ये जीवपरतयैवेदं वाक्यमुपात्तम् । तत्र मतान्तर-

प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ॥ ९ ॥
यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते(ति) तांश्च कामान् तस्मादात्मज्ञ(स्थ) ह्यर्चयेद्
भूतिकामः ॥ १० ॥

इति तृतीयमुण्डके प्रथमः खण्डः ॥

---

यस्मिंश्च परमात्मनि विशुद्धे प्रसन्ने सति एष जीवात्मा विभवति अपहत पाप्मत्वादिगुणाष्टकविशिष्टतयाऽऽविर्भवति (विभुत्वमानन्त्यमश्नुते ?) स एष अणुः-दुर्विज्ञेय आत्मा विशुद्धेन मनसा प्राह्य इत्यर्थः ॥ ९ ॥

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्, तं तं लोकं जयते तांश्च कामान् । संविभाति सकल्पयतीत्यर्थः । कामान् स्त्र्यादीन् जयते जयति-वशीकरोतीत्यर्थः । शिष्टं स्पष्टम् । तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः । यस्मादेवमसौ

---

खण्डनावसरे श्रुतप्रकाशिकायामप्येवम्—अथापि पूर्वं पश्चाच्च परमात्मन एव प्रस्तावात्, द्युभ्वाद्यधिकरणादिनयेन परमात्मपरतयैव सुनिर्णेतृ अत्र जीवात्मग्रहणं मा भूदिति कृत्वा योजनैव दर्शिता । ननु यच्छब्दस्य परमात्मपरतायाः आवश्यकत्वात् भाष्यनिर्वाहः कथमिति चेत्—उच्यते । पूर्वार्धमुत्तरार्धात् पृथग्वाक्यम् । यस्मिन्-जीवात्मनि पञ्चवृत्तिप्राणो निविष्टः, एष आत्मा चेतसा अणुर्वेन वेदितव्यः न तु परमात्मा अणुर्वेन वेद्यः । यस्मिंस्तु विशुद्धे—सर्वथैव शुद्धे (परमात्मनि) सर्वप्रजासम्बन्धिचित्तप्राणादिकमोतम्, एष परमात्मा विभाति-विभुर्भवति, न त्वणुरिति योजना । अथवा यस्मिन् परमात्मनि पञ्चवृत्तिप्राणचित्तादिकं सर्वमोतम् एष परमात्मा यस्मिन् जीवात्मनि विशुद्धे-विविक्ततया गृहीते विभवति-विशेषेण आविर्भवति, एष जीवात्मा अणुश्चेतसा वेदितव्य इत्येवमूहम् ॥

अथ तृतीये द्वितीयः खण्डः ॥ हरिः ओम् ।
स वेदैतत् परमं ब्रह्म धाम यत्र (यस्मिन्)विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥
कामान् यः कामयते मन्यमानः स कामभिर्जा(भूत्वा)यते

---

वशीकृतलोककामतया लोकान् कामांश्च प्राप्तुं च शक्नोति, तस्मादैश्वर्यादिकामः, 'प्रीतोऽसावात्मज्ञो मह्यमभिलषितं वरं प्रयच्छति' इति बुद्ध्या पूजयेदित्यर्थः ॥ १० ॥

इति मुण्डकोपनिषत्प्रकाशिकायां तृतीयमुण्डके प्रथमः खण्डः

—:*:—

आत्मवित्पूजाया मोक्षफलकत्वमाह—स वेदैतत् परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् । यत्र ब्रह्मणि विश्वं जीवजातं निहितं शुभ्रं निर्मलं स्वप्रकाशं भाति, एतत् ईदृशं सर्वकामास्पदतया धामशब्दितं परमं ब्रह्म नारायणं सः पूर्वप्रकृत आत्मज्ञो वेदेत्यर्थः । उपासते पुरुषं ये ह्यकामाः ते शुक्रमेतदतिवर्तन्ति धीराः । अतः ये धीराः प्रज्ञाशालिनस्तादृशमात्मज्ञं पुरुषं फलान्तरकामनारहिता मुमुक्षवः सन्तः परमात्मानमिवोपासते, ते एतच्छुक्रं चरमधातुमतिक्रम्य वर्तन्ते—जन्मशून्या भवन्तीत्यर्थः ॥ १ ॥

कामान् यः कामयते मन्यमानः स कामभिः जायते तत्र तत्र । पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः । यस्तु देवत्वमनुष्यत्वादीन् कामान् भोग्यतया मन्यमानः

---

१. स इत्यात्मज्ञमर्चयतः, पुरुषमिति परमात्मनश्च ग्रहणमपि संभवति ॥

तत्र तत्र (यत्र तत्र)। पर्याप्तकामस्य कृतात्मनश्च(स्तु) इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ३ ॥

कामयते, सः तत्तत्र देवत्वमनुष्यत्वादौ कामाभिः कामैः तत्तत् कामवशादिति यावत् देवमनुष्यादिरूपेण जायते । पर्याप्ते परिपूर्णे ब्रह्मणि कामनावतः कृतात्मनः विदितात्मतत्त्वस्य तु इहैव अस्मिन्नेव जन्मनि सर्वा आशा लुप्ताः । [अत ] न जन्मान्तरप्रसक्तिः इत्यर्थः । कृतात्मन इत्यत्र शब्ददर्दुरं करोतीत्यत्रेव कृञो ज्ञानमर्थः ॥ २ ॥

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।** **प्रवचन**शब्देन मननं लक्ष्यते, तत्साधनत्वात् । मेधाशब्दश्च निदिध्यासनवाची । श्रवणमनननिदिध्यासनैः केवलैः न प्राप्य इत्यर्थः । पुनः केनेत्यत्राऽऽह—**यमेवैष वृणुते तेन लभ्यः** । एषः परमात्मा यमुपासकं वृणुते, तेन प्राप्य । वरणीयेन प्राप्य इति यावत् । प्रियतमश्च वरणीयो भवति । प्रियतमत्वं च स्वस्मिन् प्रीतिमत एव । अतश्चाय मर्थो लभ्यते—'यस्तु परमात्मनि निरतिशयप्रीतिमान्, स परमात्मानं प्राप्नोति' इति । प्रीतिरूपापन्नभगवदुपासनस्य भगवत्प्राप्तिहेतुत्वमित्यर्थः । **तस्यैष आत्मा विवृणुते तनूं स्वाम्** । तादृशस्योपासकस्यैष आत्मा स्वात्मानं प्रकाशयति; स्वानुभवमुत्पादयतीत्यर्थः ॥

३. अयं कठोपनिषद्यपि । तृतीयपादेनोपायस्य ध्यानस्य अत्र स्नेहगर्भतया भक्तिरूपत्वावश्यकत्वं शाप्यते ; चतुर्थपादेन चोपायोपेयैक्य स्वामिति । एवञ्च भक्तान्तरेभ्यो ज्ञानिवैलक्षण्यमपि मन्त्रार्थः ॥

नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाऽप्य (द्वाऽत्र तपसोऽप्य) लिङ्गात्। एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशति(ते) ब्रह्म धाम ॥ ४ ॥
सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।

**नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाऽप्यलिङ्गात्।** अयमात्मा अवसन्नमनसा न लभ्यः। अवसादो नाम देशकालवैगुण्यादिजन्यं दैन्यम्। तदभावो हि बलम्। प्रमादः अनवहितचित्तता। तपश्शब्दः तपःप्रधानसन्यासाश्रमपरः। "तप एव द्वितीयः" इतिवत्। तस्य च लिङ्गं शिखायज्ञोपवीत-त्रिदण्ड-जलपवित्रादि। तद्रहितात् सन्यासादपीत्यर्थः। तपस इत्येतत् आश्रमान्तरस्याप्युपलक्षणम्, सर्वाश्रमाणामपि ब्रह्मविद्याधिकारसत्त्वादिति द्रष्टव्यम्। लिङ्गशून्यैराश्रमैः न प्राप्य इत्यर्थः। आश्रमलिङ्गानि अपेक्षितानीति यावत्।

**एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्म धाम।** उक्तैर्बलाप्रमादसलिङ्गाश्रमैर्यो विद्वान् ब्रह्मप्राप्तये यतते, तस्य एषः तादृशोपायसंस्कृतः आत्मा स्वरूपं धाम प्राप्य परं ब्रह्म प्राप्नोतीत्यर्थः ॥४

**सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः।** ऋषयः तत्त्वदर्शिनः एनं परमात्मानं सम्प्राप्य जीव

४ तस्यैष आत्मेति। तस्येति कर्तुर्ग्रहणं, आत्मेति तदीयशुद्धस्वरूपस्य च ग्रहणम्। एवञ्च तस्यैष आत्मेत्यत्र पूर्वमन्त्रैकरूप्य सहम्। तत्र एष आत्मेत्यस्य परमात्मपरत्वात्। ऐकरूप्यलिप्सायां तु अत्रापि एष आत्मा-परमात्मा ब्रह्मभूत तस्योपासकस्य धाम—स्थानं हृदयम्, यद्वा धाम—तेजः धर्मभूतज्ञानं विशति। सम्यक् तद्विषयो भवतीत्यर्थो ग्राह्यः ॥

ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानस्सर्वमेवाऽऽविशन्ति ॥ ५
वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगात् यतयश्शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु (तु)परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥ ६ ॥

---

दृशायामेवानुभूय तेनानुभवेन सन्तुष्टाः कृतात्मानः लब्धात्मस्वरूपाः, अपगतविषयाशाः, अत एव प्रशान्ताः निगृहीतेन्द्रियाश्च ये सन्तीत्यर्थः। **ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाऽऽविशन्ति ।** ते सर्वदेशावच्छेदेन अन्तर्बहिश्च सर्ववस्तुगतं परमात्मानं देशविशेषविशिष्टं प्राप्य आविर्भूतब्राह्मरूपविशिष्टात्मानो धर्मभूतज्ञानेन सर्वं वस्तुगत्या व्या(प्रा)प्नुवन्ति, सर्वमनुभवन्तीत्यर्थः ॥ ५ ॥

**वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः ।** ये यतयः – निर्जितेन्द्रियग्रामाः काम्यकर्मसंन्यासेन शुद्धसत्त्वाः परिशुद्धान्तःकरणाः वेदान्तश्रवणजन्यज्ञानेन निर्णीतपरमात्मतत्त्वा इत्यर्थः । **ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ।** "ब्रह्मैव लोको ब्रह्मलोकः । तत्र वर्तमाना ब्रह्मनिष्ठाः, **परान्तकाले**–'अन्तकाले च मामेव' इत्युक्तचरमदेहावसानसमये **परामृतात्**–प्रसन्नात् ब्रह्मणो हेतोः सर्वे परिमुच्यन्त इत्यर्थः" इति 'विशेषं च दर्शयति' इति सूत्रे व्यासार्थैरयं मन्त्रखण्डो विवृतः । "ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे" इति पाठे, ते चरमशरीरावसाने भगवल्लोकेषु, परम् अमृतशब्दितं ब्रह्म प्राप्यत्वेन येषां ते **परामृताः**–ब्रह्म प्राप्ताः इति यावत्–स्वरूपतिरोधायकाविद्यया सवासनं विमुक्ता भवन्ति । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति

गता कला पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वे एकी(क)भवन्ति ॥७

श्रुतेरित्यर्थः । न च भगवल्लोकस्यैकतया कथं बहुत्वमिति शङ्कनीयम्, "परस्य ब्रह्मण परिपूर्णस्य सर्वगतस्य सत्यसंकल्पस्य स्वेच्छापरिकल्पिता स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्ति, श्रुतिस्मृतीतिहास-पुराणप्रामाण्यात्" (४ ३ ११) इति भगवता भाष्यकृतोक्तत्वात् ॥

**गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।** मुच्यमानजीवोपकारिकाः, 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' इत्यादि-प्रश्नोपनिषदुक्तप्राणादिनामान्तषोडशकलामध्ये कर्मव्यतिरिक्ताः पञ्चदश कलाः स्वस्वप्रकृतिषु संश्लेषविशेषयुक्ता भवन्ति । देवाः वागादीन्द्रियाणि

६ अथ तैत्तिरीयेऽपि । विवृत इति । तत्र करिष्यमाणस्य विवरणस्य प्रतिज्ञा अदृश्यत्वाधिकरणे कृतेत्यपि ध्येयम् ॥

७ श्रुतप्रकाशिकायाम्, 'मुक्तात्मपरित्यक्तदेहेन्द्रियतदभि-मानिदेवतादीनामितरचेतनाचेतनवत् प्रलये परमात्मनि लयपरं, न तु मोक्षपरं, मुक्तौ कलाशब्दोक्तभूतेन्द्रियाणां परमात्मना ऐक्या-पत्त्यभावात्' इत्युक्त्या पञ्चदश कलाः—पञ्च भूतानीन्द्रियाणि चेति ज्ञायते । अथापि तद्वाक्यं कलापदेन भूतेन्द्रियग्रहणं यत्र क्वचित् परोक्तमन्वारुह्य तद्दूषणपरम् । न तु तथैवार्थोऽभिमतः । अस्मत्पक्षे इन्द्रियाणामेकादशतया षोडश कलाः इत्येव वक्तव्यत्वात् । अत षोडशकलत्वप्रदर्शकप्रश्नोपनिषद्वचनस्वण्डोक्तकलाविषयतया यथा शाङ्करमेवात्र व्याख्यातम् । ननु कलाशब्देनैवेन्द्रियाणां गृहीतत्वात् देवाश्चेत्यादिना किमुच्यते ॥ उच्यते—पूर्वैरिन्द्रियादिगतदेवतानिय-मनव्यापाराणां प्रतिनियतदेवताप्राप्तिरुच्यत इति । अत्र 'प्रलये परमात्मनि लयपर' इति श्रुतप्रकाशिकास्वारस्यात् गता इति

तत्तदधिष्ठातृ-आदित्यादिदेवतासु **प्रतिष्ठां-**संसर्गविशेषं गच्छन्ति, न तु लीयन्ते। इन्द्रियादीनामाकल्पस्थायित्वात्। 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्' इत्यादिषु वागादीनामग्न्याद्यप्ययश्रवणस्य भाक्तत्वमिति "अग्न्यादिगतिश्रुतेरिति चेन्न, भाक्तत्वात्" इति सूत्रितत्वात्। **कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति।** यानि च कर्माणि अदत्तफलानि दर्शनसमानाकारज्ञानारम्भसमये, 'क्षमिष्ये' इति सङ्कल्पविषय(यी)भूतानि, तानि कर्माणि [च] विज्ञानमय आत्मा च 'अक्षरात्परतः' इति सन्स्थात् परे भूते अव्यये अक्षरे एकीभवन्ति। परमात्मप्रीत्यप्रीतिरूपाणां कर्मणां तत्रैकीभावः तद्धर्मभूतज्ञाने लय एव। जीवस्यैकीभावो नाम नामरूपात्मकभेदकाकारप्रहाणम्। कर्मणां नाशात् कलानां मुच्यमानं प्रति नोपकरणत्वमिति भावः॥ ७॥

---

क्रमप्रत्ययबलाच्च मन्त्रेऽस्मिन् विशिष्टमेकं वाक्यम्-उपादानेषु प्रतिष्ठां गताः पञ्चदश कलाः, प्रतिदेवतासु प्रतिष्ठां गताः देवाः, कर्माणि विज्ञानमयश्चात्सर्वे परमात्मन्येकीभवन्तीत्येवरूपमिति प्रतीयते। तथा च विज्ञानमये मुक्ते तदीयानि कलादीनि कथमवतिष्ठन्त इति प्रश्ने तस्य परमात्मना एकीभावे तेषां कञ्चित् कालं निर्व्यापारतया स्थित्वा प्रळये तत्रैव एकीभावः कर्मणामात्मनश्चैव तदैव एकीभाव इति समाहितमिति। मूले प्रतिष्ठा इति बहुवचनं देवभेदेन प्रतिष्ठाव्यक्तिभेदात्। जात्यैक्यादेकवचनेनानुवादो भाष्ये। सर्व इति पुल्लिङ्गौचित्यम्—"एतेन कर्माणि गुणाश्च व्याख्याताः" इति वैशेषिकदर्शनरसायनेऽस्मदीये द्रष्टव्यम्।

यथा नद्यः स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥

---

तदेवोत्तरमन्त्रेण निदर्शयति—**यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय।** यथा गङ्गायमुनासरस्वत्यादिनद्यः स्वोत्पत्तिस्थानेभ्यः प्रसृता गङ्गायमुनासरस्वत्यादीनि नामानि शुक्लकृष्णलोहितादीनि रूपाणि च विहाय समुद्रे एकनामित्व भजन्ते। **तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।** विद्वान् तद्वदेव भेदकैर्नामरूपादिभिर्विमुक्तः सन्, "दिव्यो ह्यमूर्तः पुरुषः" इति मन्त्रप्रतिपाद्यं पुरुषं प्राप्नोति। यथा नदीसमुद्रजलयोर्वस्तुनो नैक्यम्, अपि तु भेदकाकारप्रहाणमात्रम्— एवमिहापि मुक्तस्य परमात्मना, पूर्वमुक्तात्मभिरपि नैक्यम्, अपि तु परमसाम्यमात्रम्। अत एव कठवल्ल्याम्, "शुद्धे शुद्धमासिक्तं तादृगेव भवति" इति सादृश्यमेवोक्तम्; न तु तद्भाव ॥

ननु अवयवातिरिक्तावयव्यन्तराभाववादिनाम् परस्परसदृशानां घटावयवानां भिन्नानामेव सतामेकत्वावस्थाश्रयत्ववत्, कुण्डलकटकादीनां मूषानिक्षिप्तानामग्निनाद्रुतानां वस्तुनो भिन्नानामप्येकत्वावस्थाश्रयत्ववत् नदीसमुद्रजलयोरपि परस्परमिलितयोः संसर्गिद्रव्ययोरेकत्वावस्थाश्रयत्वमस्ति। तत्त्वश्च निर्विशेषब्रह्मैकतापत्तिरेव परममुक्तिरिति चेन्न— निर्गुणविद्याश्रेष्ठत्वेन पराभिमतायां प्रजापतिविद्यायामपि, 'स तत्र पर्येति' इति मुक्तब्रह्मणोराधाराधेयभावश्रवणात्। सत्यकामत्वसत्यसङ्कल्पत्वादिरूपधर्माणां मुक्तावेव आविर्भावस्य निर्गुणविद्याफलत्वेन 'उत्तराच्चे-

स यो ह वै तत् ब्रह्म वेद, ब्रह्मैव भवति। नास्याब्रह्मवित् कुले भवति।

दाविर्भूतस्वरूपस्तु' इत्यत्र परैरप्यङ्गीकृतत्वात् । न च सत्यकामत्व च जीवस्य स्वरूपमात्रमिति शक्यते वक्तुम् । कामशब्दोदिताना कामनाविषयसुज्यपदार्थानाम् , सङ्कल्पशब्दोदितस्य तत्सृष्टिहेतुमायावृत्तिविशेषस्य च स्वरूपाद् बहिर्भावावश्यम्भावात् । तेषा च मुक्तावाविर्भावे कथ निर्विशेषतापत्ति । अनाविर्भावे च प्रजापतिविद्यायाम् , 'य आत्माऽपहतपाप्मा' इत्यादिना गुणाष्टकोपदेशवैयर्थ्यम् । न हि प्रजापतिविद्याया गुणाष्टकोपदेशस्योपासनार्थत्व सम्भवति , परैस्तत्रोपासनाविध्यनङ्गीकारात् । नापि तत्त्वमस्यर्थ उपदेश । मुक्त्यात्मगत शुद्ध ब्रह्मविषयत्वात् । तत्त्वमसीत्युपदेशस्थले ब्रह्मणो जगदुपादानत्वादिवर्णन स्याध्यारोपापवादन्यायेन निष्प्रपञ्चत्वबोधनार्थतयैवात्र प्रकारान्तरेण सार्थकत्वोपपादनायोगात् । नापि प्रवृत्त्यर्थरन्युत्पादनार्थ , गुणकीर्तनस्य निर्गुणविद्यास्थ्युत्पादकत्वासम्भवात् । अतो निर्गुणविद्याप्रकरणे अपहतपाप्मत्वाद्युक्ते आविर्भविष्यतया तद्बोधनार्थतयैव साफल्यं वाच्यम् ; अतश्च मुक्तौ निर्विशेषब्रह्मभावापत्तिकथनमसगतम् ॥ ८ ॥

स, यो ह वै तत् परम ब्रह्म वेद, ब्रह्मैव भवति । य एतत् परम ब्रह्म वेद वेदनं ध्यानविश्रान्त ध्यानं श्रान्त ध्रुवस्मृती । सा च दृष्टित्वमभ्येति दृष्टिर्भक्तित्वमृच्छति ॥" इत्युक्तरीत्या प्रीतिरूपापन्नदर्शन समानाकारोपासनयुक्तो भवति, स ब्रह्मैव भवति आविर्भूतब्रह्मरूपो भवतीत्यर्थ । आनुषङ्गिकं प्रयोजनमाह—नास्याब्रह्मवित् कुले भवति।

तरति शोकम्, तरति पाप्मानम्। गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति॥

तदेतदृचाभ्युक्तम्—(तदेष श्लोकः)

क्रियावन्तः श्रोत्रियाः ब्रह्मनिष्ठाः स्वयं जुह्वते एकर्षिं श्रद्धयन्तः।
तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम्॥ १०॥

---

अस्य कुले अब्रह्मवित् न भवतीत्यर्थः। तरति शोकं तरति पाप्मानम्। स्पष्टोऽर्थः। गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति॥ त्रिगुणात्मकप्रकृतिकारितरागद्वेषादिभ्यो विमुक्तः सन् आविर्भूतगुणाष्टको भवति॥९

तदेतदृचाऽभ्युक्तम्। एतद्विद्यासंप्रदानमभिमुखीकृत्य मन्त्रेणोक्तम्। क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः। नित्यनैमित्तिकक्रियायुक्ताः अधीतवेदाः ब्रह्म बुभुत्सवः एकर्षिशब्दितमग्निहोत्रं स्वयमेव जुह्वतीत्यर्थः। एकर्षिंद्रव्यसाध्यत्वादग्निहोत्रस्यैकर्षित्वमित्यर्थः। यद्वा एकश्चासावृषिश्च। मुख्यर्षिः परमात्मा; "तथा प्राणाः" इत्यत्र, "ऋषिशब्दश्च सर्वज्ञे तस्मिन्नेव युज्यते" इति भाषितत्वात्। श्रद्धयन्तः तत्र श्रद्धायुक्ताः इत्यर्थः। तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम्॥ अत्र विद्याशब्दो ग्रन्थसंदर्भे वर्तते। तेषामेवैतां ब्रह्मप्रतिपादिकां वेदरूपां ब्रूयात्; यैः शिरस्यङ्गारपात्रधारणलक्षणमाथर्वणिकानां वेदव्रतत्वेन प्रसिद्धं यथाशास्त्रमनुष्ठितमित्यर्थः। अयं चार्थः "स्वाध्यायस्य तथात्वे हि—"इति सूत्रभाष्ये स्पष्टः।

---

१०. आथर्वणिकानामेकर्षिनामकैकाग्निरथर्वणशाखायां प्रसिद्धः। अत्र एकर्षिमिति द्वितीयान्तत्वौचित्याय अग्निहोत्रमित्युक्तम्। द्वितीयव्याख्याने श्रद्धयन्त इत्यत्रान्वयो विवक्षितः॥

इत्थं हि तदधिकरणम्—नानाशाखास्वाम्नातानि वैश्वानराक्षरोपासादीनि
अभ्यासप्रकरणान्तराभ्यां भिद्यन्ते । इतरथा पुनःश्रवणलक्षणाभ्यासस्य
प्रकरणान्तरस्य च वैयर्थ्यप्रसङ्गात् इति शाखान्तराधिकरणपूर्वपक्षन्यायेन
पूर्वपक्षे प्राप्ते—"सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" । सर्ववेदान्तेषु
प्रतीयमानं वैश्वानराद्युपास्तिरूपफलसंयोगोऽप्यविशिष्टः । उपास्यरूपमप्य-
विशिष्टम् । वैश्वानरविद्येति समाख्याऽप्यविशिष्टा । अतः "एकं वा
संयोगरूपचोदनाख्याऽविशेषात्" इति शाखान्तराधिकरणसिद्धान्तसूत्रो-
क्तन्यायेनोपासनैक्यमेव स्वीकर्तव्यम् । "भेदान्नेति चेत् एकस्यामपि" ।
शाखान्तरेऽभ्यासप्रकरणान्तरवशेन विद्याभेदावश्यम्भावात् न विद्यैक्यम्,
विद्यैक्ये पुनःश्रवणवैयर्थ्यप्रसङ्गादिति चेन्न—एकस्यामपि विद्यायामध्येतृ-
भेदात् पुनःश्रवणसार्थक्योपपत्तेः न विद्याभेदः । ननु विद्यैक्ये मुण्डकाम्नाता-
क्षरविद्यायाः शाखान्तराधीताक्षरविद्यैक्येन, **तेषामेवैतां ब्रह्मविद्यां वदेत
शिरोव्रतं विधिवद् यैस्तु चीर्णम्** इत्याथर्वणिकमात्रानुष्ठेयशिरोव्रता-
ङ्गकत्वं शाखान्तराधीताक्षरविद्याया अपि स्यात् । न च इष्टापत्तिः ।
शिरोव्रतशून्यानाम् अनाथर्वणिकानामक्षरविद्यानिष्ठा न स्यात् । अतः
आथर्वणिकमात्रानुष्ठेयशिरोव्रताङ्गकमुण्डकाम्नाताक्षरविद्यायाः शाखान्तरा-
धीताक्षरविद्या भिद्यत इत्यभ्युपगन्तव्यमिति चेत्—तत्राऽऽह—
"स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः" ।
तथात्वे इति निमित्तसप्तमी । स्वाध्यायस्य तथात्वसिद्ध्यर्थम् अध्य-
यनजन्यसंस्कारभाक्त्वसिद्ध्यर्थं शिरोव्रताङ्गाध्ययनेनोपनिषद्रूपस्वाध्या-
यस्य संस्कारो भवति । उपनिषदध्ययनाङ्गं शिरोव्रतम्; न विद्याङ्गम् ।

प्राप्ते—'अदृश्यत्वादिगुणको धर्मोक्ति', 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ', 'रूपोपन्यासाच्च' इति त्रिभिः सूत्रैः सिद्धान्तः कृतः ।

तेषां चायमर्थः—अदृश्यत्वादिगुणकः परमात्मैव, तद्धर्माणां सर्वज्ञत्वादीनां 'यः सर्वज्ञः सर्ववित्' इत्यादिवाक्येनात्र प्रकरणे उक्तत्वात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिना सिद्धेन चेतनाचेतनात्मक-निखिलप्रपञ्चोपादानत्वेन भूतयोन्यक्षरस्य विशेषणात्, 'अक्षरात्परतः परः' इति प्रकृतिजीवाभ्यां भेदव्यपदेशाच्च भूतयोन्यक्षरं परमात्मैव । न च अक्षरात्परतः इति पञ्चम्योः सामानाधिकरण्यात् स्वकार्यवर्गापेक्षया परभूतादक्षरशब्दितात् अव्याकृतात् परत्वेन तद्भेदसिद्धावपि न जीवभेदः सिध्यतीति वाच्यम्—सामानाधिकरण्ये सति परत्वावधिसमर्पक-स्वकार्यवर्गवाचिपदान्तराध्याहारप्रसङ्गात् । वैयधिकरण्यपक्षेऽध्याहाराभावात् । जीवादपि वैलक्षण्यप्रतिपादकत्वेन सार्थक्यसंभवे परतःपदस्य सामानाधिकरण्याश्रयणेन स्वकार्यवर्गपरत्वानुवादस्य निष्प्रयोजनस्याऽऽ-श्रयणायोगात् । न च अक्षरात्परस्य पुरुषस्य परमात्मत्वे भूतयोन्यक्षरस्य कथं परमात्मत्वं सिध्येदिति वाच्यम्—अक्षरात्परतः इति निर्दिष्टस्या-क्षरस्य, 'अथ परा यया तदक्षरमधिगम्यते', 'तथाऽक्षरात् संभवतीह विश्वम्', 'तथाऽक्षराद्विविधाः सोम्य भावाः', 'येनाक्षरं पुरुषं वेद सत्यम्' इति वाक्यनिर्दिष्टभूतयोन्यक्षरापेक्षया भिन्नत्वात् । न च तत्र प्रमाणाभावः, दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रः' इति पूर्वसन्दर्भप्रतिपादितविशेषणविशिष्टं भूतयोन्यक्षरं स इति पदेन परामृश्य तस्य अक्षरात्परतः परत्वाभिधानात् । न हि

तस्यैव तत परत परत्व सभवति । अत 'अक्षरात्परत पर' इति वाक्यस्थमक्षरपदमव्याकृताभिधायि, न तु भूतयोन्यक्षराभिधायि ॥ 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति भगवत्सबन्धिनया प्रसिद्धस्य रूपस्य भूतयोन्यक्षरसबन्धितयोपन्यासाच्च,' पुरुष वेद सत्यम्', 'दिव्यो ह्यमूर्त पुरुष' इति भगवदसाधारणपुरुषशब्दाभ्यासाच्च परमात्मैवात्र प्रतिपाद्यत इति ।

द्युभ्वाद्यधिकरणम्–तथा "यस्मिन् द्यौ" इति वाक्ये, "ओत मन सह प्राणैश्च सर्वे" इति मन प्राणसबन्धित्वप्रतिपादनात्, 'अरा इव रथनाभौ सहता यत्र नाड्य स एषोऽन्तश्चरते बहुधा जायमान' इति जीवलिङ्गाच्च भूतयोन्यक्षरप्रकरण भङ्क्त्वा जीवपरत्वमेवास्य संदर्भस्याऽऽश्रयणीयमिति पूर्वपक्षेमाप्ते—"द्युभ्वाद्यायतन स्वशब्दात्", "मुक्तोपसृप्यव्यपदेशाच्च", "नानुमानमतच्छब्दात् प्राणभृच्च", "भेदव्यपदेशात्", "प्रकरणात्" "स्थित्यदनाभ्या च" इति षड्भि सूत्रै सिद्धान्त कृत । अयमर्थ —द्युभ्वाद्यायतन परमात्मा । 'अमृतस्यैष सेतु' इति मोक्षप्रदत्वलक्षणासाधारणशब्द(धर्मशब्द)श्रवणात् । व्यापकत्वार्थस्याऽऽत्मशब्दस्य च श्रवणात् । 'नामरूपाद्विमुक्त परात् पर पुरुषमुपैति दिव्यम्' इति परमात्मासाधारणमुक्तप्राप्यत्वव्यपदेशाच्च परमात्मैव । अनुमानम्= आनुमानिक प्रधानमस्मिन् प्रकरणे यथा तत्प्रतिपादकशब्दाभावान्न प्रतिपाद्यम्, एव प्राणभृत्–जीवोऽपि तत्प्रतिपादकशब्दाभावान्न प्रतिपाद्य । 'जुष्ट यदा पश्यत्यन्यमीशम्' इति प्रकरणप्रतिपाद्यस्येशस्य जीवभेदव्यपदेशाच्च । भूतयोनिप्रकरणाच्च । 'तयोरन्य पिप्पल स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति जीवस्य कर्मफलभोक्तृ(त्तृ)त्वम्, परमात्मनस्तु

प्राप्ते—'अदृश्यत्वादिगुणको धर्मोक्तेः', 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ', 'रूपोपन्यासाच्च' इति त्रिभिः सूत्रैः सिद्धान्तः कृतः ।

तेषां चायमर्थः—अदृश्यत्वादिगुणकः परमात्मैव ; तद्धर्माणां सर्वज्ञत्वादीनां 'यः सर्वज्ञः सर्ववित्' इत्यादिवाक्येनात्र प्रकरणे उक्तत्वात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिना सिद्धेन चेतनाचेतनात्मकनिखिलप्रपञ्चोपादानत्वेन भूतयोन्यक्षरस्य विशेषणात्, 'अक्षरात्परतः परः' इति प्रकृतिजीवाभ्यां भेदव्यपदेशाच्च भूतयोन्यक्षरं परमात्मैव । न च अक्षरात्परत इति पञ्चम्योः सामानाधिकरण्यात् स्वकार्यवर्गापेक्षया परभूतादक्षरशब्दितात् अव्याकृतात् परत्वेन तद्भेदसिद्धावपि न जीवभेदः सिध्यतीति वाच्यम्—सामानाधिकरण्ये सति परत्वावधिसमर्पकस्वकार्यवर्गवाचिपदान्तराध्याहारप्रसङ्गात् । वैयधिकरण्यपक्षेऽध्याहाराभावात् । जीवादपि वैलक्षण्यप्रतिपादकत्वेन सार्थक्यसंभवे परतःपदस्य सामानाधिकरण्याश्रयणेन स्वकार्यवर्गपरत्वानुवादस्य निष्प्रयोजनस्याऽऽश्रयणायोगात् । न च अक्षरात्परस्य पुरुषस्य परमात्मत्वे भूतयोन्यक्षरस्य कथं परमात्मत्वं सिध्येदिति वाच्यम्—अक्षरात्परत इति निर्दिष्टस्याक्षरस्य, 'अथ परा यया तदक्षरमधिगम्यते', 'तथाऽक्षरात् संभवतीह विश्वम्', 'तथाऽक्षराद्विविधाः सोम्य भावाः', 'येनाक्षरं पुरुषं वेद सत्यम्' इति वाक्यनिर्दिष्टभूतयोन्यक्षरापेक्षया भिन्नत्वात् । न च तत्र प्रमाणाभावः ; दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रः' इति पूर्वसंदर्भप्रतिपादितविशेषणविशिष्टं भूतयोन्यक्षरं स इति पदेन परामृश्य तस्य अक्षरात्परतः परत्वाभिधानात् । न हि

तस्यैव ततः परतः परत्वं संभवति । अतः 'अक्षरात्परतः परः' इति वाक्यस्थमक्षरपदमव्याकृताभिधायि ; न तु भूतयोन्यक्षराभिधायि ॥ 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति भगवत्संबन्धितया प्रसिद्धस्य रूपस्य भूतयोन्यक्षरसंबन्धितयोपन्यासाच्च,' पुरुषं वेद सत्यम्', 'दिव्यो ह्यमूर्तः पुरुषः' इति भगवदसाधारणपुरुषशब्दाभ्यासाच्च परमात्मैवात्र प्रतिपाद्यत इति ।

**द्युभ्वाद्यधिकरणम्**–तथा "यस्मिन् द्यौः" इति वाक्ये, "ओतं मनः सह प्राणैश्च सर्वैः" इति मनःप्राणसंबन्धित्वप्रतिपादनात्, 'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः' इति जीवलिङ्गाच्च भूतयोन्यक्षरप्रकरणं भङ्क्त्वा जीवपरत्वमेवास्य संदर्भस्याऽऽश्रयणीयमिति पूर्वपक्षेप्राप्ते—"द्युभ्वाद्यायतनं स्वशब्दात्", "मुक्तोपसृप्यव्यपदेशाच्च", "नानुमानमतच्छब्दात् प्राणभृच्च", "भेदव्यपदेशात्", "प्रकरणात्" "स्थित्यदनाभ्यां च" इति षड्भिः सूत्रैः सिद्धान्तः कृतः। अयमर्थः.—द्युभ्वाद्यायतनं परमात्मा । 'अमृतस्यैष सेतुः' इति मोक्षप्रदत्वलक्षणासाधारणशब्द(धर्मशब्द?)श्रवणात् । व्यापकत्वार्थस्याऽऽत्मशब्दस्य च श्रवणात् । 'नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्' इति परमात्मासाधारणमुक्तप्राप्यत्वव्यपदेशाच्च परमात्मैव । अनुमानम्= आनुमानिकं प्रधानमस्मिन् प्रकरणे यथा तत्प्रतिपादकशब्दाभावान्न प्रतिपाद्यम्, एवं प्राणभृत्–जीवोऽपि तत्प्रतिपादकशब्दाभावान्न प्रतिपाद्यः। 'जुष्टं यदा पश्यत्यन्यमीशम्' इति प्रकरणप्रतिपाद्यस्येशस्य जीवभेदव्यपदेशाच्च । भूतयोनिप्रकरणाच्च । 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति जीवस्य कर्मफलभोक्तृ(त्वात्)त्वम्, परमात्मनस्तु

नमः परमऋषिभ्यो नमः परमऋषिभ्यः ।
इति तृतीयमुण्डके द्वितीयः खण्डः ॥
मुण्डकोपनिषत् संपूर्णा ॥
भद्रं कर्णेभिः—इति च शान्तिः ॥
॥ शुभमस्तु ॥

—:**:—

---

तदनन्तरेण शरीरेऽवस्थानमिति परमात्मन एव प्रकरणतात्पर्यपर्यवसानभूमितया (तया) आविष्कृतत्वाच्च परमात्मैव मुण्डकोपनिषत्प्रतिपाद्य इति।

अतश्च मुण्डकोपनिषद् भगवत्परेति सिद्धम् ।

इयं ब्रह्मविद्या येभ्यो ब्रह्मादिभ्यः पारम्पर्येण प्राप्ता, तान् नमस्यति—

**नमः परमऋषिभ्यो नमः परमऋषिभ्यः ।**

द्विर्वचनमादरार्थं विद्यासमाप्त्यर्थं च ॥ ११ ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां

तस्यैव ततः परतः परत्वं संभवति । अतः 'अक्षरात्परतः परः' इति वाक्यस्थमक्षरपदमव्याकृताभिधायि ; न तु भूतयोन्यक्षराभिधायि ॥ 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति भगवत्संबन्धितया प्रसिद्धस्य रूपस्य भूतयोन्यक्षरसंबन्धितयोपन्यासाच्च,' पुरुषं वेद सत्यम्', 'दिव्यो ह्यमूर्तः पुरुषः' इति भगवदसाधारणपुरुषशब्दाभ्यासाच्च परमात्मैवात्र प्रतिपाद्यत इति ।

**द्युभ्वाद्यधिकरणम्**–तथा "यस्मिन् द्यौः" इति वाक्ये, "ओतं मनः सह प्राणैश्च सर्वैः" इति मनःप्राणसंबन्धित्वप्रतिपादनात्, 'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः' इति जीवलिङ्गाच्च भूतयोन्यक्षरप्रकरणं भङ्क्त्वा जीवपरत्वमेवास्य संदर्भस्याऽऽश्रयणीयमिति पूर्वपक्षेप्राप्ते–"द्युभ्वाद्यायतनं स्वशब्दात्", "मुक्तोपसृप्यव्यपदेशाच्च", "नानुमानमतच्छब्दात् प्राणभृच्च", "भेदव्यपदेशात्", "प्रकरणात्" "स्थित्यदनाभ्यां च" इति षड्भिः सूत्रैः सिद्धान्तः कृतः। अयमर्थः,—द्युभ्वाद्यायतनं परमात्मा । 'अमृतस्यैष सेतुः' इति मोक्षप्रदत्वलक्षणासाधारणशब्द(धर्मशब्दः)श्रवणात् । व्यापकत्वार्थस्याऽऽत्मशब्दस्य च श्रवणात् । 'नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्'

अवधेयम्—यत्र ज्ञातप्राय आकर., तादृशमत्रानेकमुपेक्षितमिति ।

## पुरुषनामानि

१. अथर्वा (वे) ब्रह्मणो ज्येष्ठपुत्र ; २. अङ्गी ; ३ भारद्वाजस्सत्यवाह·; ४. अङ्गिरा.; ५ शौनको महाशाल .

## अपूर्वपदम्

एकर्षिम् 312 शिरोव्रतम् 312

॥ शुभमस्तु ॥

श्रीः

# माण्डूक्योपनिषत्

[अथर्ववेदीयोपनिषच्छान्तिपाठः—

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥
ओं शान्तिश्शान्तिश्शान्तिः]

---

[येनोपनिषदा भाष्यं रामानुजमतानुगम्।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम्॥]

**श्रीरङ्गरामानुजमुनिविरचिता माण्डूक्योपनिषत्प्रकाशिका**

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम्॥

---

## माण्डूक्योपनिषद्भाष्यपरिष्कारः

श्रीमानञ्जनशैलशृङ्गनिलयो भिन्नाञ्जनश्यामलो
जाग्रत्सुप्तसुषुप्ततुर्यदशाचिद्रक्षापरो राजते।
जन्मस्थेमविनाशनिर्मलदशानिर्वाहिनानावपुः
माण्डूक्योपनिषद्विदीर्णविभवः श्रीपञ्चरात्रे यथा॥
स्थानं 'न स्थानतोपी'ति सूत्रे भाष्ये च भण्यते।
जागराद्यं परस्येति नूनं माण्डूक्यमूलकम्॥

ऐतरेयारण्यके(3-1-1)'वायुः संहितेति माण्डूकेयः' इति श्रूयते। 'शूरवीरो माण्डूकेयः', 'इति नु माण्डूकेयानाम्' इति च। मण्डूक-महर्षिपुत्र इति तत्र व्याख्या। नूनं स एव माण्डूक्य इति प्रतीत।(?)

भगवता बादरायणेन, "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र

व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि।
माण्डूक्योपनिषद्व्याख्यां करिष्ये विदुषां मुदे॥

---

हि" इति सूत्रेण जाग्रदाद्यवस्थाविशिष्टजीवान्तर्यामिस्थितस्यापि परस्य निर्दोषत्वं न्यरूपि। तत्तदवस्थतदन्तर्यामित्वं कुत्रोक्तमिति विमर्शे, एकत्र सर्वैतद्दर्शनमत्र माण्डूक्य एव। यथावदेतदुपनिषदर्थमजानतामिदमस्फुटम्। पुराणपञ्चरात्ररूपोपबृंहणप्रदर्शितमर्थमनुसृत्य पश्यतामिदं सुग्रहम्। तत्र श्रीभागवते (१२-११) "त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम्। अनपायिन्यात्मभूता श्रीः साक्षादात्मनः प्रभा। विष्वक्सेनस्तस्य मूर्तिर्विदितः पार्षदाधिपः। नन्दादयोऽष्टौ द्वास्स्थाश्च तेऽणिमाद्या हरेर्गुणाः। वासुदेवः संकर्षणः प्रद्युम्नः पुरुषः स्वयम्। अनिरुद्ध इति ब्रह्मन् मूर्तिव्यूहोऽभिधीयते। स विश्वस्तैजसः प्राज्ञः तुरीय इति वृत्तिभिः। अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाव्यते। अङ्गोपाङ्गायुधाकल्पैर्भगवांस्तच्चतुष्टयम्। बिभर्ति स्म चतुर्मूर्तिर्भगवान् हरिरीश्वरः।" इति वाहनपार्षदद्वारपालान् दिव्यमहिषीञ्चानपायिनीं श्रियमात्मनः प्रभातीत्यात्मभूतामुक्त्वा, 'भगवान् स्वयमेव संकर्षणादिचतुर्व्यूहो भवति, न तु संकर्षणादीनां सुपर्णादिवत् अन्यत्वम्। विश्वतैजसप्राज्ञशब्दाश्च तत्परा एव। तत्रतत्रास्याङ्गोपाङ्गायुधभूषणादिवैचित्र्यमपि' इति प्रत्यपादि। "या वेदागमतन्त्राभ्यामाचार्यैः पद्मजादिभिः" इति वेद्योच्यमानस्य परिचर्यारूपस्य क्रियायोगस्य वेदपाञ्चरात्रोभयानुसारित्ववर्णनपूर्वकमेवमुक्त्वा सर्वमिदं श्रुत्यारूढमित्यवगम्यते। व्यूहानां सृष्टिस्थितिसंहारहेतुत्वञ्च तत्रोक्तम्, "द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णो मायया च स्वयैतत्। सृजति हरति पातीत्याख्ययाऽनावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलभ्यः" इति। जीवस्य समष्टिकर्तृत्वमित्यतोऽपि विश्वादिपदं

## प्रथमः खण्डः

हरिः ओम् । ओमित्येतदक्षरमिदं सर्वम् । तस्योपव्याख्यानम्—

---

. ओमित्येतदक्षरमिदं सर्वम् । तस्योपव्याख्यानम् ।

अकार-उकार-मकार-अर्धमात्रात्मकपादचतुष्टयवति ओङ्कारे अनिरुद्ध-प्रद्युम्न-सङ्कर्षण-वासुदेवापरपर्याय-विश्व-तैजस-प्राज्ञ-तुरीयाख्यपादचतुष्टययुक्तब्रह्मदृष्टिविधानायेदं प्रकरणमारभ्यते । ओमित्येतदक्षरमिदं सर्वम् । चेतनाचेतनात्मकमिदं जगत् सर्वमोङ्काररूपमेव ; "तद् यथा शङ्कुना सर्वाणि पर्णानि संतृण्णानि, एवमोङ्कारेण सर्वा वाक्

---

भगवत्परमिति सिद्धम् ।

श्रीगीताभाष्यतात्पर्यचन्द्रिको(८-१३)द्धृतेन च वचनेन, "अङ्गिरात्मा त्रिसमायश्च तथा त्रिव्यूह एव च । पञ्चरात्रे तथा ह्येव भगवद्वाचकः स्मृतः" इत्यादिना बलवीर्यतेजोज्ञानैश्वर्यशक्तिरूपत्रियुगशालिनां सङ्कर्षणप्रद्युम्नानिरुद्धानां प्रणवार्थत्वमभिहितम् । अहिर्बुध्न्यसंहितायां च षष्ठोक्तमेव तारसूक्ष्मार्थनिरूपणावसरे, अकारादीनां जागरादिस्थाननिर्वाहकविश्वादिनामकानिरुद्धादिपरत्वम् । एवमादिप्रमाणजातं हृदि निधाय व्यूहादिपरप्रणवविषयतया व्याख्यानमारभते—अकारेत्यादिना । तत्र माण्डूक्यमिदं त्रिव्यूहपक्षानलम्बनेन प्रवृत्तं चतुर्व्यूहपक्षेण वेत्यन्यदेतत् ॥

[1. खण्डविभागो नास्ति शाङ्करे । माध्वे 'शान्त.प्रश'मित्यतः पूर्वं प्रथमखण्डसमाप्तिः । उपरि न विशेषः । परन्तु गौडपादीयत्वेन शाङ्करेण अपि कारिकाः श्रुतित्वेन माध्वे मन्यन्ते । तदनुसारेण अस्मदीयार्थाकूतनारायणभाष्येऽपि । कृष्णनारायणप्रायमीशावास्यव्याख्याता नारायणमुनीन्द्र इत्यत्र न किञ्चिद् गमकमस्ति । अन्य एव तु प्रथमसंपुटोपोद्घाते दर्शित. स्यात् ।]

भूतं भवद् भविष्यदिति सर्वमोङ्कार एव ।
यच्चान्यत् त्रिकालातीतम्, तदप्योङ्कार एव ॥ १ ॥
सर्वं ह्येतद्ब्रह्म; अयमात्मा ब्रह्म । सोऽयमात्मा चतुष्पात् ॥ २ ॥

इति प्रथमः खण्डः ॥

---

संतृण्णा । ओङ्कार एवेदं सर्वम्'' (छा. २-२३) इति श्रुत्यन्तरात् । तस्य प्रणवस्य उपव्याख्यानं गुणविभूत्युपासनप्रकारप्रपञ्चनम्; क्रियत इति शेषः। भूतं भवद्भविष्यदिति सर्वमोङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव । कालत्रयपरिच्छिन्नं कालत्रयापरिच्छिन्नं च सर्वमोङ्कार एवेत्यर्थः । प्रणवोपबृंहव्याहृतिमूलकवेदसृष्टत्वात् सर्वस्य जगत इति भावः ॥ १ ॥

सर्वं ह्येतद् ब्रह्म । कालत्रयपरिच्छिन्नापरिच्छिन्नात्मकं सर्वमपि वस्तु ब्रह्मैवेत्यर्थः। ततः किमित्यत्राह अयमात्मा ब्रह्म-अयम्-ओङ्कारः सर्वात्मभूतं ब्रह्मैव । ततश्चोङ्कारे सर्वात्मभूतब्रह्मदृष्टिः कर्तव्येत्यर्थः । सोऽयमात्मा चतुष्पात् । ओङ्कारे अध्यस्यमानोऽयमात्मा पादचतुष्टययुक्त इत्यर्थः ॥ २ ॥

इति प्रथमः खण्डः

---

२. अयमोङ्कार इति । वासुदेवस्यात्मत्वं वक्ष्यते । अत्रेदं बोध्यम्-प्रणवस्य ब्रह्मरूपत्वमिहोपनिषदि प्रधानप्रतिपाद्यम्। तदुपयोगितया प्रथमवाक्यस्य व्याख्यानं क्रियते—'तस्योपव्याख्यान'मित्यादिना तदप्योङ्कार एवेत्यन्तेन । तेन सर्वशब्दार्थशोधनेन परिच्छिन्नापरिच्छिन्नसर्वात्मकत्वमोङ्कारे उक्तं भवति। अथ ब्रह्मणः सर्वात्मकत्वमुच्यते, सर्वं ह्येतद् ब्रह्मेति । एवं ब्रह्माभिन्नसर्वाभिन्नत्वादोङ्कारस्य ब्रह्माभिन्नत्वमितीदं निगम्यते, 'अयमात्मा ब्रह्मे'ति इत्यर्थः सुवचः ।

यद्वा "प्रकाशादिवत्तु नैव परः" इति सूत्रभाष्ये (२-३-४५), " 'तत् त्वमसि", 'अयमात्मा ब्रह्म' इत्यादिषु तच्छब्दब्रह्मशब्दवत् त्वमयमात्मेति शब्दा अपि" इति जीवशरीरकब्रह्मवाचकत्वेन भाषितत्वात्, अयम्पदात्मपदयोर्जीवविशिष्टवाचित्वं प्रतीयते । तदयमर्थः—ब्रह्मरूपत्वेन प्रतिपिपादयिषितस्योङ्कारस्य सर्वात्मकत्वेन प्रशंसा कृता । अथ जीवात्मनो ब्रह्मात्मकत्वमुच्यते—अयमात्मा ब्रह्मेति । अयमिति जीवविशेषणम् । दृश्यमाननानावस्थ इत्यर्थः । अथास्य जीवात्मविशिष्टस्य जाग्रदादिरूपात्मविशिष्टानिरुद्धादिरूपान् पादान्, सोऽयमात्मा चतुष्पादिति वक्तुमारभ्योक्त्या प्रधानप्रतिपाद्यमोङ्कारस्यैव ब्रह्मात्मकत्वमुच्यते, "सोयमात्मा अध्यक्षरमोङ्कार इति" इत्येवमपि सुवचम्।

अथाप्ययमत्र भाष्याशय—ओमिति ब्रह्मेत्युक्त्वा प्रणवस्य ब्रह्मात्मकत्वे निरूपणीये, ओमित्येतदक्षरमिदं सर्वमिति किमुच्यत इत्याशङ्का मा भूदिति तद्व्याख्यानमारब्धम्, तस्योपव्याख्यानमिति । तदप्योंकार एवेत्यन्तेन न प्रकृतव्याख्यानसमाप्तिः, किन्तु कृत्स्नोपनिषदा । ओमितीदं सर्वमित्यनेन प्रणवे ब्रह्मात्मकत्वमेवोच्यत इति नामरूपाभिधानमिति व्याख्यानदर्शित शङ्कासमाधानम् । तदुच्यते—परिच्छिन्नापरिच्छिन्नसर्वात्मकत्व ह्योङ्कारेऽनेन वाक्येन प्रतीतमस्ति । तत्रेदं सर्वं वस्तु न ब्रह्मानात्मकं स्वतन्त्रम् । सर्वं ह्येतद् ब्रह्म । अतो ब्रह्मपर्यन्ततयैव वस्तुवाद्योङ्कारे सर्वात्मकत्वप्रतिपादकात्तस्माद्वाक्यात् तादृशसर्ववस्त्वात्मभूतब्रह्मात्मकत्वमोङ्कारे उक्तमेव भवतीति । एतद्बोधनाय, सर्वं ह्येतद्ब्रह्म, अयमात्मा ब्रह्मेति वाक्यम् । एवं च आत्मशब्दः सार्थक एव । योऽयं सर्वं इति उक्त आत्मा सोऽनिरुद्धादिरूपेण चतुष्पात्, प्रणवोऽपि चतुष्पात्, तत्र प्रणवपादानाम् आत्मपादरूपत्वादपि प्रणवे ब्रह्मात्मकत्वमित्युपर्युच्यते । तथा च जाग्रदादिसर्वप्रपञ्चात्मभूतानिरुद्धादिरूपब्रह्मात्मकत्वप्रतिपादकत्वात् ओमित्येतदक्षरमिति प्रथमवाक्यं ब्रह्मात्मकत्वपरमिति सुस्थमिति ।

हरिः ओम्. जागरितस्थानो बहिःप्रज्ञस्सप्ताङ्ग एकोनविंशतिमुखः

---

तदेव पादचतुष्टयं प्रपञ्चयति—**जागरितस्थानो ....वैश्वानरः प्रथमः पादः** । जागरितं स्थानं यस्य स **जागरितस्थानः** जाग्रद्दशानिर्वाहक इत्यर्थः । 'जागरिते ब्रह्मे'ति ब्रह्मशब्दितस्यानिरुद्धस्यैव जाग्रद्दशानिर्वाहकत्वात् । **बहिःप्रज्ञः** बहिः—रूपादौ प्रज्ञा येन स बहिःप्रज्ञः । **सप्ताङ्गः** 'एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः, चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मा, सन्देहो बहुलः, बस्तिरेव रयिः, पृथिव्येव पादौ' इति वैश्वानरविद्योक्तरीत्या द्युसूर्यवाय्वाकाशवारि-

---

नन्वेवम् 'अयमात्मा ब्रह्मे'त्यस्य ओङ्कारो ब्रह्मेत्यर्थवर्णने पूर्वोक्तार्थभाष्यसूक्तिविरोध इति चेन्न, तत्सूक्तेः, "अयमात्मा ब्रह्म सर्वानुभूः" इति समन्वयाधिकरणोपात्तबृहदारण्यकवाक्यविषयतयाऽप्युपपत्तेः । तत्र मधुब्राह्मणे पूर्वम् अयमात्मेति प्रत्यगात्मप्रस्तावात् । अस्तु वा प्रकृतवाक्यस्यापि तत्राभिमतत्वम् । तावता वाक्यार्थस्य ईषद्भेदेऽपि उपपादनशैली एकैव । प्रणवस्य सर्वात्मकत्वं प्रथमवाक्यप्रतिपन्नम् । सर्वस्य ब्रह्मपर्यन्तत्वाद्ब्रह्मात्मकत्वमपि तत्र सिद्धमिति सर्वं ह्येतद्ब्रह्मेत्यनेन दर्शितम् । एवं सर्वस्य ब्रह्मपर्यन्तत्वे कालत्रयापरिच्छिन्नपूर्वोक्तजीवात्मनोऽपि ब्रह्मपर्यन्तत्वात् प्रणवस्य ब्रह्मात्मकत्वं तन्मुखेनापि सिद्धमस्त्येवेति कथ्यते अयमात्मा ब्रह्मेति॥ इदमभिसंधाय अस्मदाचार्यैरपि वेदसाम्राज्ये 'अयमात्मे'ति जीवपरमभिहितमिति। वक्ष्यति चात्रापि जागरितादिपादे एकोनविंशतिमुखत्वादिकं जीवद्वारा ग्राह्यमिति ॥ 'येन स' इति जीवमद्वारीकृत्याप्यन्वयार्थम् ।

१. द्युसूर्येति । उपात्तश्रुतिगतसुतेजआदिपदानामेतन्नामधेयत्वादेतल्लाभः । उक्तश्रुतेरस्मन्मते उपासकमूर्धादौ वैश्वानरमूर्धा-

स्थूलभुक् वैश्वानरः प्रथमः पादः ॥ ३ ॥

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥

---

पृथिवीरूपे. मूर्धचक्षु प्राणमध्यकायमूलाशयपादरूपै षड्भिरङ्गैः, जाग्रता जीवेन च सप्ताङ्गत्वं द्रष्टव्यम् । एकोनविंशतिमुखः । पञ्चज्ञानेन्द्रिय पञ्चकर्मेन्द्रियपञ्चप्राणान्तःकरणचतुष्टयरूपैर्मुखैरेकोनविंशतिमुखत्वम्। एषामधिष्ठेयत्वं[यत्वञ्च स्वाधिष्ठेय]जाग्रदवस्थजीवद्वारा द्रष्टव्यम् । स्थूलभुक् स्थूलं रूपादिकं भुङ्क्ते इति स्थूलभुक् । भोजने प्रयोजककर्तृत्वात् 'अत्तं पिबन्तौ'' इति परमात्मनि निर्देशनात् उपपत्तिर्द्रष्टव्या । वैश्वानरः विश्वान् नरान् नयतीति वैश्वानर । ॥ एक पाद ॥ १ ॥

स्वप्नस्थानोऽन्तःप्रज्ञः...द्वितीयः पादः । स्वाप्निकवस्तूना जाग्रद्वत् इतरानुभाव्यत्वं नास्तीति तद्वस्तूनामनुभावयिता प्रद्युम्न अन्तःप्रज्ञ उच्यते । सप्ताङ्गत्वैकोनविंशतिमुखत्वे तस्य स्वाप्निकैरीश्वरसृष्टैः मूर्धादिभि प्राणेन्द्रियै, तदानीमप्रलीनेनान्तःकरणचतुष्टयेन च पूर्ववद् द्रष्टव्ये । स्वाप्नार्थाना(र्थस्य) तत्पुरुषमात्रभोग्यतया स्वप्नदशापन्नस्य जीवस्य प्रविविक्तभुक्त्वात् तदधिष्ठातु तैजसशब्दितस्य प्रद्युम्नस्यापि प्रविविक्तभुक्त्वोक्तिर्द्रष्टव्या । इतरानिद्रितानामतिसृज्यमाना स्वाप्न-

---

दिव्यरचनापरत्वेऽपि पञ्चसाद्धाक्यात् सर्ववैश्वानराङ्गलाभमैकार्थ्यमभिप्रेत्येयं श्रुतिर्दर्शिता । वैश्वानरस्य तादृशमूर्धादिमत्त्वं तु वाक्यान्तरास्सेयम् ॥ तत्रैव खण्डे दृष्टिविधानात् वैश्वानरविद्यायाञ्चोपासकमूर्धादौ परमात्ममूर्धादिदृष्टेरेवोच्यमानत्वात् तद्ग्रहणं युक्तमिति चाशयः । अन्यत्र विश्व इत्युक्त एवात्र वैश्वानर इत्युच्यते ऐकार्थ्यात् ॥

यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति, तत् सुषुप्तम्। सुषुप्तस्थान एकीभूत प्रज्ञानघन एव आनन्दमयो ह्यानन्दभुक्

---

पदार्थानां तेजोवद्भासकत्वात् प्रद्युम्नस्य स्वप्नाधिष्ठातुः तैजसत्वोक्तिः ॥२

यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति, तत् सुषुप्तम्। यत्र स्थाने जीवः सुप्तस्सन् रागादिदोषानुपहतः स्वप्नं च न पश्यति, तत् स्थानं सुषुप्तम्। सुषुप्तमित्यधिकरणे क्तप्रत्यय इति भावः। सुषुप्तस्थान एकीभूतः—प्राज्ञस्तृतीयः पादः। सुषुप्तस्थान एकीभूतः सुषुप्तस्थाने एकत्वं प्राप्तः स्वयं सुषुप्तिस्थानतया स्थित इत्यर्थः। 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इत्यधिकरणोक्तरीत्या सुषुप्तस्थानस्सन् (स्थानभूतस्सन्?) प्रज्ञानानन्दघनः जीवस्य सौषुप्तिकानन्दानुभावकः चेतोमुखः विशुद्धचेतोग्राह्यः प्राज्ञः (प्रज्ञानघनः ज्ञानस्वरूपः, आनन्दमयः [आनन्दघनः ज्ञानानन्दमय इति

---

२-३ सुषुप्तस्थाने इति सप्तम्यन्तपाठाभिप्रायेणैव व्याख्या। प्रथमान्तपाठे तु यत्रेत्यस्य यस्यां दशायामित्यर्थः। सुषुप्तस्थान इत्यस्य पूर्ववत् सुषुप्तिदशानिर्वाहक इत्यर्थः। सुषुप्तमिति भावे क्तप्रत्ययः। एकीभूत इति एकाङ्गत्वमुच्यते। पूर्वः सप्ताङ्गः, अयमेकाङ्गः। मूर्धादिकार्यविरहाज्ज्ञानमात्राङ्ग इति यथाभाष्यम्। पूर्वे स्थूलादिभुक्, अयमानन्दभुक्। ननु सुषुप्तौ धर्मभूतज्ञानप्रसरानङ्गीकारात् कथमानन्दानुभव इति शङ्कां प्रतिबन्धुं प्रज्ञानघन एवानन्दमयो हीत्युपपादनम्। जीवात्मस्वरूपस्य ज्ञानानन्दरूपत्वात् तत्स्वप्रकाशादानन्दभुक्त्वम्, न त्वन्यथेति भावः। पूर्वे एकोनविंशतिमुखः, अयं चेतोमुखः। धर्मभूतज्ञानप्रसराभावात् मनोरूपकरणस्य तदानीमनपेक्षितत्वात् कथं

चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ३ ॥

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिस्सर्वस्य । प्रभवाप्ययौ हि भूतानाम् ॥ ४ ॥

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनं नप्रज्ञं नाप्रज्ञम्

---

यावत् । आनन्दभुक्[?] जीवस्य सौषुप्तिकानन्दानुभावकः चेतोमुखः, विशुद्धचेतोग्राह्यः । ज्ञानानन्दमय इति यावत् । आनन्दभुक् च (?) प्राज्ञः) सङ्कर्षणाभिधः तृतीयः पाद इत्यर्थः ॥ ३ ॥

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी एष योनिस्सर्वस्य प्रभवाप्ययौ हि भूतानाम्** । योनिः स्थानमित्यर्थः । 'योनिर्द्वयोर्भगे स्थाने' इति कोशात् । शिष्टं स्पष्टम् । यद्यपि विश्वतैजसप्राज्ञानां त्रयाणां भगवद्व्यूहतया सर्वेश्वरत्वादिकमप्यविशिष्टम् । तथापि व्यवस्थित पूर्वोक्ततत्तद्धर्म(-व्यवस्थितधर्म)वत्तया त्रयाणामनुसन्धानं कर्तव्यमिति भावः ॥

चतुर्थं पादं निर्दिशति--नान्तःप्रज्ञ म विज्ञेयः । 'नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञ'मिति बहिःप्रज्ञान्तःप्रज्ञयोर्विश्वतैजसयोर्व्यावृत्तिः ।

---

मेतदिति शङ्कां परिहर्तुं तदर्थमाह विशुद्धचेतोग्राह्य इति । नन्विदं किं परमात्मनः साक्षात्, उत जीवद्वारा । नाद्यः, अस्य सर्वमूर्तिसाधारण्यात् एतद्व्यूहे एतन्निर्देशे विशेषाभावात्, सुषुप्तौ चेतसा तद्ग्रहणाच्च । अत एव नान्त्य इति चेन्न--एकीभूतत्वादेरिव जीवद्वारैव विवक्षितत्वात् । न हि सुषुप्तौ चेतसा ग्रहणमिह विवक्षितम्; किन्तु जागरादावेकोनविंशतिकरणग्राह्यं स्थूलादिकं भोग्यमासीत्; यत् योगादौ विशुद्धचेतोग्राह्यमात्मस्वरूपमानन्दात्मकम्, तदेव तु सुषुप्तौ भोग्यमित्यादाशयेनैवमुक्तं । अन्यदुपरि ।

यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति, तत् सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्

---

पदार्थानां तेजोवद्भासकत्वात् प्रद्युम्नस्य स्वप्नाधिष्ठातुः तैजसत्वोक्तिः ॥२

यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति, तत् सुषुप्तम् । यत्र स्थाने जीवः सुप्तस्सन् रागादिदोषानुपहतः स्वप्नं च न पश्यति, तत् स्थानं सुषुप्तम् । सुषुप्तमित्यधिकरणे क्तप्रत्यय इति भावः । सुषुप्तस्थान एकीभूतः—प्राज्ञस्तृतीयः पादः। सुषुप्तस्थान एकीभूतः सुषुप्तस्थाने एकत्वं प्राप्तः स्वप्न सुषुप्तिस्थानतया स्थित इत्यर्थ. । 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इत्यधिकरणोक्तरीत्या सुषुप्तस्थानस्सन् (स्थानभूतस्सन्?) प्रज्ञानानन्दघनः जीवस्य सौषुप्तिकानन्दानुभावकः चेतोमुखः विशुद्धचेतोमात्रः प्राज्ञः (प्रज्ञानघनः ज्ञानस्वरूपः, आनन्दमयः [आनन्दघनः ज्ञानानन्दमय इति

---

२-३. सुषुप्तस्थाने इति सप्तम्यन्तपाठाभिप्रायेणेवं व्याख्या । प्रथमान्तपाठे तु यत्रेत्यस्य यस्यां दशायामित्यर्थः। सुषुप्तस्थान इत्यस्य पूर्ववत् सुषुप्तिदशानिर्वाहक इत्यर्थः। सुषुप्तमिति भावे क्त एव। एकीभूत इति एकाङ्गत्वमुच्यते। पूर्वः सप्ताङ्गः, अयमेकाङ्गः। मूर्धादिकार्यविरहाज्जीवमात्राङ्ग इति यथाभाष्यम्। पूर्वः स्थूलादिभुक्, अयमानन्दभुक् । ननु सुषुप्तौ धर्मभूतज्ञानप्रसरानङ्गीकारात् कथमानन्दानुभव इति शङ्कां प्रतिबन्धुं प्रज्ञानघन एवानन्दमयो हीत्युपपादनम्। जीवात्मस्वरूपस्य ज्ञानानन्दरूपत्वात् तत्स्वयंप्रकाशादानन्दभुक्त्वम्, न त्वन्यथेति भावः। पूर्वं एकोनविंशतिमुखः, अयं चेतोमुखः। धर्मभूतज्ञानप्रसराभावात् मनोरूपकरणस्य तदानीमनपेक्षितत्वात् कथ-

अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा । स विज्ञेयः॥

इति द्वितीयः खण्डः ॥

---

'नप्रज्ञानघनं नप्रज्ञ'मिति प्रज्ञानघनस्य सुषुप्तिस्थानस्थस्य व्यावृत्तिः । प्रज्ञ-शब्दात् 'प्रज्ञादिभ्यश्च' इति स्वार्थे अणि प्राज्ञशब्दस्य निष्पन्नतया (अण् । अतः प्राज्ञशब्दस्य स्वार्थाणन्ततया) प्रज्ञप्राज्ञयोरेकार्थत्वात् । ननु प्रज्ञभिन्नत्वे अप्रज्ञत्वं स्यात् । एतच्च अज्ञत्वप्रसङ्ग इत्यत्राह **नाप्रज्ञ-मिति** । प्रकर्षेण जानातीति प्रज्ञः । ज्ञानादिषड्गुणमध्ये ज्ञानप्रधानत्वेन प्रज्ञशब्दितात् सुषुप्तिस्थानस्थात् सङ्कर्षणात् भिन्नत्वेपि सर्वज्ञतया अप्रज्ञ-त्वमपि (मिति) नास्तीति भावः । अदृष्टं ज्ञानेन्द्रियागोचरम् (बाह्येन्द्रिय-ज्ञानागोचरम्) अव्यवहार्यं वाग्हस्तादिकर्मेन्द्रियागोचरम्, अग्राह्यं मनोऽगोचरम्, अत एव अलक्षणं लक्ष्यते अनेनेति लक्षणम् अनु-मानम् । अनुमानागम्यमित्यर्थः । अत एव **अचिन्त्यमव्यपदेश्यम्** इदमीदृगिति चिन्ताव्यपदेशानर्हम् । **ऐकात्म्यप्रत्ययसारम्**—एकात्म-प्रत्ययगोचरम् । प्रपञ्चोपशमं [1]सङ्कर्षणप्रद्युम्नानिरुद्धादिप्रपञ्चस्याप्युप शमो यस्मिन् तत् प्रपञ्चोपशमम् । 'एतन्नानावताराणां निदानं बीजम-व्ययम्' इति स्मरणात् । **शान्तम्** ऊर्मिषट्करहितम् । शिवं कदा-चिदुत्पादविनाशाविर्भावतिरोभावगन्धरहिततया शिवं मङ्गलम् । अद्वैतं सजातीयद्वितीयरहितम् । ता(एता)दृशं वासुदेवं चतुर्थं मन्यन्ते ।

---

1. वासुदेवमूर्तौ प्राकृतप्रपञ्चलयस्य दुर्वचत्वात् प्रपञ्चोपशम-पदमन्यथा व्याचष्टे संकर्षणेति । एतत्—पर वासुदेवरूपम् ।

स आत्मा । आप्नोतीति ह्यात्मा । सर्वदेशकालसर्ववस्तुव्याप्तत्वात् ॥ सङ्कर्षणादीनामपि स एवात्मा । स विज्ञेयः ।

---

2 खण्डोऽयं न केवलजीवपरः किन्तु परमात्मपर्यन्त इत्यवश्याभ्युपेयम् । सुषुप्तिस्थाननिर्वाहकस्य प्राज्ञशब्देन व्यपदेशाच्च, "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्" इति श्रुत्यन्तरेऽपि । बाह्यान्तरज्ञानहीनस्य पृथगत्र निर्देशात् तत्परिष्वङ्गकर्ता प्राज्ञो ह्ययं परमात्मैव । एतत्साहचर्यात् विश्वतैजसशब्दयोरपि परमात्मपरत्वं सिद्धम् । प्रद्युम्नस्य तैजसशब्दवाच्यत्वं द्युम्नतेजश्शब्दसमानार्थकत्वादपि समुचितम् । स्वप्नानुभाव्यस्य विषयस्य विवादास्पदत्वात् ज्ञानस्य चावाच्यत्वात् अवाच्यस्वरूपमस्याश्रयज्ञानमात्रनिर्वाहकत्वात् प्रद्युम्नता । तेजश्शब्दोऽपि स्वयंप्रकाशमुखेन ज्ञानपरो भवितुमर्हति । विश्वशब्दस्थाने वैश्वानरशब्दपाठात् तस्य च विश्वान् नरान् नयतीत्यर्थस्य निरुक्तत्वात् तद्वत् विश्वशब्दोऽपि प्रकारवाचिना प्रकारिपर्यन्तवाचित्वन्यायेन विश्वनियन्तृवाची परमात्मपर एव । सुप्तसुषुप्तापेक्षया जाग्रताम् आधिक्यात् विश्वशब्देन तन्मुखेन परमात्मोच्यते । अत एवा पदानां ब्रह्मपरत्वेन सर्वेषां विशेषणानां परमात्मपरत्वेनैव व्याख्यानमिहाऽऽदृतम् । अयमात्मा ब्रह्मेत्यत्र प्रान्दर्शितभाष्यरीत्या, अनन्यथासिद्धजीवलिङ्गस्थले जीवद्वाराऽन्वयस्येष्टत्वाच्च जागरितस्थानत्वादि—स्थूलभुक्त्वपर्यन्तधर्मविशिष्टजीवान्तर्यामी वैश्वानर इत्युक्तावपि न दोषः । एवमुपर्यपि । तर्हि जीवस्यैव सप्ताङ्गत्वे वर्णनीये अङ्गिनो जीवस्य सप्तमाङ्गत्वेन ग्रहणं कथमिति चेत्—न परमात्मनोऽङ्गित्वे तदुपपत्तेः ।

अत्र शाङ्करे 'मूर्धैव सुतेजाः' इति वाक्यस्योदाहृतत्वात् तदितरीत्यैवाङ्गानि षट् निर्दिश्य तदुक्तं सप्तममङ्गं परमुपेक्षितम् । तत्र हि वैश्वानरविद्यायामग्निहोत्रत्वसम्पत्तये कल्पितस्याऽऽहवनीयस्य सप्तमा

गत्वेन गणना । अत्र तु सार्वेत्रिकत्वाय जीव एव परमात्मांगत्वेनोक्तः । सुषुप्तिकाले चैकीभूत इत्यत्र जीवरूपाङ्गपरिशेषणौचित्याच्च तथा व्याख्यातम् । सुषुप्तिकाले प्राणाग्नीनां जाग्रत्त्वात् तत्र प्राणानामेकीभावविरहेऽप्यन्तर्भावेऽपि जाठराग्निरेकः सप्तमत्वेन सुग्रहः । अस्तु वा सप्ताङ्ग इति सप्तीकरणविषयभूतमहदहंकारभूतपञ्चकग्रहणम् । एवञ्च एकीभूत इत्यस्य महन्मात्रशेष इत्यर्थः । महत्कार्यश्चोच्छ्वासनिश्वासादि सर्वप्राणकार्यं परं सुषुप्तावपीत्युक्तं भवति । जाठराग्निकार्यमपि समानवायुकार्यत्वात् महत्कार्य एवान्तर्भवतीति न तद्ग्रहः । एवञ्चाङ्गिभूतात् जीवादतिरिक्तान्येवाङ्गानि सप्तेति नानुपपत्तिलेशोऽपि । शांकरे जीवब्रह्मैक्यात् जीवविशेषणं सर्वं ब्रह्मण्यक्लेशेनान्वितमिति मन्यते । अस्माकं तु जीवपरयोर्भेदेपि तत्तद्धर्मनिर्वाहकत्वेन तदन्वय इष्टः । शांकरेऽपीदं मंगलश्लोके कण्ठोक्तम्, "प्रज्ञानांशुप्रतानैः स्थिरचरनिकरव्यापिभिर्व्याप्य लोकान् भुक्त्वा भोगान् स्थविष्ठान् पुनरपि धिषणोद्भासितान् कामजन्यान् । पीत्वा सर्वान् विशेषान् स्वपिति मधुरभुक्' इति तस्यावस्थात्रयभोक्तृत्वमभिधाय, "मायया भोजयन्नः" इति सर्वजीवभोजयितृत्वस्यापि कथनात् । एवं भोजयितृत्वेनैव निर्दिष्टे भोक्तृत्वे साक्षात् परस्मिन् न स्वीक्रियते । "न स्थानतोऽपि" इति सूत्रञ्च एवं ब्रह्मणि साक्षात् तन्निषेधार्थमेव प्रवृत्तम् । एवम्भूतस्य जीवस्य सुषुप्तौ चेतोमुखत्वोक्तिः, "सुप्तव्यासक्तमनसाञ्च" इति न्यायदर्शनसूत्राभिमतरीत्या प्रणिधानवशात् प्रतिबोधनोचितावसरे चेतोबलात् झटिति प्रतिबुध्यत इति तदनुगुणचेतस्स्थितिरूपविशेषप्रतिबोधनायेत्यपि ध्येयम् । एवञ्चावस्थात्रयेऽपि विशेषणानां सर्वेषां जीवद्वारेण विद्यादिशब्दार्थे परमात्मन्यन्वयेऽपि न क्षतिः । नान्तः प्रज्ञमिति वाक्यं तु जीवमद्वारीकृत्यैवान्वेति । अन्तःप्रज्ञशब्दः प्रद्युम्नपरः ॥ तेनापि स्वप्ने रथादिसर्वबाह्यवस्तुसर्जनात् कथमन्तःप्रज्ञतेति चेत्–

'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ' इति श्रुते तस्यैव विज्ञेयत्वमिति भाव ॥ ५ ॥

इति द्वितीय खण्ड

---

न हि ते रथादय सुप्तशयनस्थाने अपवरके भवन्ति, तस्यापि स्वामिकल्पुच्छ्रितसर्वैचस्त्वाश्रयत्वायोगात्। किंतु तद्वदेव प्रतिघातादिदोषराहित्यात् जीवदेशे अन्तरेवेतरादृश्यतया भवन्तीति अन्तस्थजयपदार्थज्ञानहेतुत्वात् प्रद्युम्नोऽन्त प्रज्ञ इति ॥ अस्त्यन्यद् भाष्य माण्डूक्यस्य कूरनारायणीयम्। तत्र प्रायश पदवाक्यार्थवर्णनम् अनतिप्रसिद्धमन्याहरामः। तत्र सप्ताङ्ग एकोनविंशतिमुख इत्यस्य—चत्वारो हस्ता, द्वौ पादौ, गजमुखत्वाद् गजहस्त एक इति सप्ताङ्ग, मध्यममुख गजमुखाकारम्, पार्श्वद्वयोतु नव नव मुखानि पुरुषमुखाकाराणीत्येवमर्थवर्णनं नूनं किञ्चित्प्रमाणमूलकमेव। तदन्वेषणीयम्। चेतोमुख इत्यस्य [illegible] ज्ञानस्वरूप इत्यर्थ उक्त। तैजस, तेजोमयचित्तसंबन्धित्वादित्युक्तम्। 'शुक्रमादाय पुनरेति स्थानम्' (बृ ६-३ ११) इत्युक्तरीत्या स्वप्ने जागरशरीरगतानीन्द्रियाणि आत्मना स्वयज्योतिषा सह स्वाभिकशरीरे निवेश्य कार्यकर्तृत्वात् तैजसस्य, इन्द्रियाणां 'स एतास्तेजोमात्रा समभ्याददान' (बृ ६-४ १) इति मन्त्रादिकतया तेजश्शब्दार्थत्वाच्च, जागरदेहादिकं विहाय उक्तविधतेजोरूपसर्वेनियामकस्य तैजसत्व स्यात् स्वप्ने चैतत्तमोवृत्तिनिरोधाय आलोकात्मकतेज प्राचुर्याद्वा तथेत्यादि विमृश्यम्।

४ एकात्मप्रत्ययगोचरमिति। अनिरुद्धादे जागरादिनियमनव्यापारविशिष्टात्मप्रत्ययगोचरता, वासुदेवस्यतु तत्राव्यापृतत्वात् केवलात्मप्रत्ययगोचरतेति ॥

इति द्वितीय खण्ड

हरिः ओम्. सोयमात्मा अध्यक्षरमोङ्कारोऽधिमात्रम् ।
पादा मात्राः मात्राश्च पादाः अकार उकारो मकार इति ॥ १ ॥
जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा ; आप्तेरादिमत्त्वाद्वा ।
आप्नोति ह वै सर्वान् कामान्, आदिश्च भवति, य एवं वेद ॥ २ ॥

---

सोऽयमात्मा अध्यक्षरमोङ्कारोऽधिमात्रम् । अध्यक्षरम्— अक्षरेषु, अधिमात्रं मात्रासु वर्तमानो य ओङ्कारः नादात्मकः, स एव अयमात्मेत्यर्थः । पादा मात्रा मात्राश्च पादाः [यतो ब्रह्मणः पादभूताः उक्ताः अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवाः मात्राः प्रणवमात्राभूताकारादिवाच्याः । अतः] अस्योङ्कारस्य याः अकार-उकार-मकारात्मिकाः, ता एव ब्रह्मणः पादभूता इत्यर्थः । [समस्तप्रणवे ब्रह्मदृष्टिं कृत्वा प्रणवमात्रासु अकारादिषु चतुर्षु चानिरुद्धादिचतुष्टयदृष्टिः कर्तव्येत्यर्थः] तदेव दर्शयति अकार उकारो मकार इति [इदमुपलक्षणं नादस्यापि] ॥ १ ॥

तदेव विविच्य दर्शयति-जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा [प्रथममात्रायाम् अकारे जागरितस्थानवैश्वानरशब्दितानिरुद्धदृष्टिः कर्तव्येत्यर्थः ।] वैश्वानरस्याकाररूपत्वे हेतुमाह—आप्तेरादिमत्त्वाद्वा [आप्तिः व्याप्तिः सकलशब्दप्रकृतिभूतस्य अकारस्य सर्वशब्दव्याप्तत्वं सर्वजगद्व्याप्तस्यानिरुद्धस्यैवेत्यवगन्तव्यम् ।] आदिमत्त्वाद्वा सर्वशब्दादिभूताकारशब्दवाच्यत्वाद्वा वैश्वानरस्याकाररूपत्वमित्यर्थः । आप्तिमत्त्वादिमत्त्वज्ञानयोः फलमाह—आप्नोति ह वै

---

१. अध्यक्षरमधिमात्रमित्यनेनाक्षरभूतमात्रासु इत्युक्तं भवति । यद्वा ओमित्येकाक्षरम्, ओमित्येतदक्षरमित्युक्तरीत्या अध्यक्षरं स्तप्रणवे, अधिमात्रम् अवयवेषु चेत्यर्थः ॥

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा उत्कर्षादुभयत्वाद्वा। उत्कर्षति ह वै ज्ञानसन्ततिम्, समानश्च भवति। नास्याब्रह्मवित् कुले भवति, य एवं वेद ॥ २ ॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा।

---

सर्वान् कामान्, आदिश्च भवति, य एवं वेद। स्पष्टोऽर्थः। [आदिश्च भवति। सर्वप्रधानं भवतीत्यर्थः] ॥ २ ॥

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा। तैजसस्य उकाररूपत्वे हेतुमाह–उत्कर्षादुभयत्वाद्वा विश्वापेक्षया तैजसस्योत्कृष्टत्वाद्वा तत्समानतया (तत्समानयोः प्राज्ञतैजसयोः) द्वितीयत्वाद्वा उकाररूप(त्वाच्य)त्व मित्यर्थः [अत्र विश्वापेक्षया तैजसस्योत्कृष्टत्वं ततोऽपि सूक्ष्मत्वात्। प्राज्ञतैजसयोः विश्वापेक्षया साम्यं तु गुणपूर्तिसाम्यादिति द्रष्टव्यम्। एवम् उकारस्याप्यकारलयस्थानत्वात् तत उत्कृष्टत्वम्। उकारमकारयोरकारसाम्यं च वर्णत्वादिनेति ध्येयम्।] उत्कृष्टत्वज्ञानस्य फलमाह उत्कर्षति.. वेद। शिष्यप्रशिष्यादिषु ज्ञानसन्तत्या उत्कृष्टो भवतीत्यर्थः। एवंविदस्सन्ताने ब्रह्मविद्या इतरसन्तानापेक्षया अतिरिच्यत इति यावत्। उभयत्वज्ञानस्य फलमाह समानश्च भवति। उत्कृष्टानां समानश्च भवतीत्यर्थः। नास्याब्रह्मवित् कुले भवति, य एवं वेद। स्पष्टोऽर्थः ॥

सुषुप्त(प्ति)स्थानः प्राज्ञो मकारस्तृतीया मात्रा। मकाररूपत्वे युक्तिमाह मितेरपीतेर्वा। मिनोति प्रज्ञ सर्वमात्मनि तादा

---

३ उभयत्वादिति। विश्ववत् ज्ञानवत्त्वात्, आन्तरापूर्वेयस्तुदर्शितया प्राज्ञवत् जागरितज्ञानाभावाच्चोभयरूपत्वादुभयत्वमित्यपि सुवचम्।

४ वर्णत्वादिनेति। आदिना प्रणव घटकत्वादिपरिग्रह

मिनोति ह वा इदं सर्वम्, अपीतिश्च भवति, य एवं वेद ॥ ४ ॥

इति तृतीयः खण्डः ॥

हरिः ओम्. अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानम्, य एवं वेद [य एवं वेद] ॥१

इति चतुर्थः खण्डः ॥ 'भद्रं कर्णेभिः—' इति शान्तिः

माण्डूक्योपनिषत् समाप्ता ॥

—:·:—

---

त्म्येन । मकारोऽपि स्वात्मनि अकारोकारौ मिनोति । मकारावधिकत्वादकारोकारयोरित्यर्थः । अपीतिः प्रलयः । प्राज्ञे जगत् प्रलीयते । मकारे हि अकारोकारौ प्रलीयेते ; मकारावसानत्वादकारोकारयोरित्यर्थः। तद्ज्ञानद्वयस्य फलं क्रमेणाह (ज्ञानस्य फलमाह) **मिनोति ह वा इदं सर्वम्** । इदं सर्वं जगत् *मिनोति* परिच्छिनत्ति–जानातीत्यर्थः । *अपीतिश्च भवति य एवं वेद* । परमात्मनि लयश्च तस्य भवति, य एवं वेदेत्यर्थः ॥ ४ ॥

इति तृतीयः खण्डः

*अमात्रश्चतुर्थोऽव्यवहार्यः....आत्मैव* । अमात्रः परिच्छेदशून्यः । अव्यवहार्यत्वादि[पूर्वोक्त] लक्षणोपेतश्चतुर्थः आत्मैव [व्यूहवासुदेव एव । एवमोङ्कारः] । एवंभूत ओङ्कारः । [ओंकारैकदेशनादरूप इति यावत् । अस्य व्यूहवासुदेवस्य परवासुदेवेन समस्तप्रणवरूपेणाति-

---

१. त्रिव्यूहपक्षे नान्तःप्रज्ञ इत्यादिकं परवासुदेवस्य चतुर्थपादत्वकल्पनया प्रवृत्तम् । चतुर्व्यूहपक्षे च व्यूहवासुदेवविषयम् । परव्यूहवासुदेवयोरत्यन्तभेदात् एवम् । अमात्र इति प्रकृतवाक्येऽपि

सन्निकृष्टैक्यसूचनार्थमोङ्कार इति समस्तनिर्देश ]। तद्ज्ञानस्य फलमाह—**संविशत्यात्मनाऽऽत्मानम्, य एवं वेद** [एनमनिरुद्धप्रद्युम्नसङ्कर्षण-वासुदेवरूपेण व्यस्तसमस्तप्रणवोपासक ], आत्मना परमात्मना अनुगृहीतस्सन् तेनैवोपायेन तमेव (तेनैवोपायेन क्रमात् तमेव) प्राप्नोतीत्यर्थः ।

इति चतुर्थः खण्डः ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमत्तातार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपाद-सेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिपादसेवा-समधिगतपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु
माण्डूक्योपनिषत्प्रकाशिका समाप्ता ।

॥ श्रीरस्तु ॥

---

अमात्रपदेन मात्रारूपावयवरहितमकृतावयवविभागं समस्तप्रणवं गृहीत्वा तस्याव्यवहार्यत्वाद्याकारविशिष्टपरवासुदेवरूपत्वं सुवचम् । अथापि पूर्ववाक्येषु ब्रह्मपादनिर्देशपूर्वकं प्रणवमात्राकथनात्, अत्राप्यमात्रपदं ब्रह्मपादरहितपरमेव युक्तम् । अथर्वशिखायां 'या अवसानेऽस्य चतुर्थी' इति अर्धमात्रारूपचतुर्थपादकथनात्, अहिर्बुध्न्यसंहितायां चतुर्थपादार्थतया व्यूहवासुदेवनिर्देशाच्चेदमपि वाक्यम् आत्मैवेत्यन्तं तत्परमेव युक्तमित्याशयेन आत्मैवेति पदं तदनुगुणं योजयित्वा व्याचष्टे—अमात्र इत्यादि । एवं अमात्रश्चतुर्थ इति पूर्णमात्रानात्मकनादरूपप्रणवचतुर्थांशग्रहणेन अद्वैत इत्यन्तेन तस्य व्यूहवासुदेवरूपत्वम्, एवमोंकार आत्मैवेति समस्तप्रणवस्य परवासुदेवरूपत्वं चोक्त्वा, संविशतीत्यादिना तद्वेदनफलमुच्यते इत्यर्थवर्णनेपि अन्ततोऽविशेष एव । एवं प्रकृतवाक्योपात्तोपासनफलपरे

संविशतीत्यादिवाक्ये पूर्वोक्तार्थमपि संकलय्य विवक्षितविशिष्टार्थं माह-एवमिति । एवमोङ्कारोपासनत्वाद् दृष्टिरूपत्वाच्च साक्षान्मोक्ष-हेतुत्वायोगादाह क्रमादिति । परविद्यारूपभक्तियोगनिष्पत्तिरिह दृष्टिफलम् । सर्वत्र वाच्यवाचकभावनिबन्धनं सामानाधिकरण्यमिति निर्वाहसंभवेपि वाच्यवाचकयोः साम्यादि कथनात् स्वरसप्रतीत-दृष्टिविधिपक्षस्वीकारे बाधकाभावादिति भावः ।

मुद्रितग्रन्थगं ताले भाष्ये बहु न दृश्यते ।
अथाप्येषां टिप्पणी तु मुद्रितस्यानुरोधतः ॥
जगज्जन्मस्थितिध्वंसमहानन्दैकहेतवे ।
विव्यूहपररूपाय नमोऽस्तु निधये श्रियः ॥
ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
माण्डूक्योपनिषद्भाष्यपरिष्कारः कृतस्त्वयम् ॥

इति श्री वात्स्यवीरराघवाचार्य विरचितः
माण्डूक्योपनिषद्भाष्यपरिष्कारः ॥

शुभमस्तु

---

विषयसूची

## माण्डूक्योपनिषदर्थसंग्रहकारिकाः

आत्मा चतुष्पाद् ब्रह्मेति प्रोक्तस्तारोऽथ दर्शिता ।
वैश्वानरस्तैजसश्च प्राज्ञश्चात्मा च निर्गुण ॥ १

जागर स्वप्न सुषुप्ति तुर्यावस्थानियामका ।
पादाश्चत्वार , एतेषु लिप्वकारादिघूदितम् ॥ २

वैश्वानरादिरूपत्वभावनाना फल क्रमात् ।
अर्धमात्रात्मकस्तार स्यादात्मा, यस्य भावना ॥ ३

मुक्तये कल्पते चेति प्रोक्तमन्ते , तदिष्यते ।
माण्डूक्ये वासुदेवस्य व्यूहयुक्तस्य वर्णनम् ॥ ४

स व्यूहवासुदेव स्यात् नादो मात्रातिगस्तु य ।
स्यात्तु सपूर्ण ओंङ्कारो वासुदेव पर पुमान् ॥ ५

अपूर्वपदानि—१ वैश्वानर २ तैजस ३ प्रज्ञानघन
४ प्राज्ञ ५ अद्वैत ६ चतुर्थ.

### प्रमाणाकरः

| | | | |
|---|---|---|---|
| अयमात्मा | बृ ४ ५ १९ | तमेवैक | मु उ २ २-५. |
| ऋत पिबन्तौ | कठ ३-१-१ | न स्थान | ब्र. सू. ३ २ ११ |
| एतन्नानावताराणा | पु ३ ३ ४ | प्रकाशादि | " २ ३ ४५. |
| एतस्मात्मनो | छा ५ १८-२ | प्रज्ञादिभ्यश्च | पा ५-४ ३८. |
| जागरिते ब्रह्मा श्रुति | पु ३ ४ ० | या अवसाने | अ शि उ १. |
| तदभावो | ब्र सू. ३-२-७ | वासुदेव श्री | भाग } १२ ११ |
| तद्यथा शकुना | प्रा २-२३-३ | स विश्व - | ,, } १२ ११ |

श्रीः

ईशोपनिषदो भाष्यं निगमान्तगुरोः कृतिः ।
ये दशोपनिषद्भाष्यकारा इति सुविश्रुताः ॥ १ ॥

रङ्गरामानुजस्वामिनामानो यतिशेखराः ।
पूर्वे वरदविष्ण्वार्याः वेलामूर्ग्रामसामगाः ॥ २ ॥

तैः श्वेताश्वतरादीनामन्योपनिषदामपि ।
भाष्यमारचितं दृष्टो यासां शारीरकेऽन्वयः ॥ ३ ॥

तत्र व्यासार्यरचिता सुबालविवृतिः परम् ।
अशेषतत्प्रकाशोऽपि पुनरत्र विधीयते ॥ ४ ॥

तैत्तिरीयादिभाष्याणां प्रकाशो भूय इष्यते ।
सूचीकटाहन्यायात्तु पूर्वमेतत्प्रकाशनम् ॥ ५ ॥

—:*—*:—

श्रीः

श्रीपद्मावतीसमेत श्रीनिवासपरब्रह्मणे नमः

# कृष्णयजुर्वेदीय—श्वेताश्वतरोपनिषत्

[ओम्—पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते इति, भद्रं कर्णेभिरिति, सह नाववत्विति च शान्तिः ।] हरिः ओम् ॥ ब्रह्मवादिनो वदन्ति—

किं कारणं ब्रह्म कुतः स्म जाताः जीवाम केन क्व च सं(सु)प्रतिष्ठा ।
अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥ १ ॥

---

श्रीः

श्रीमते रामानुजाय नमः

[येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥]

## श्रीरङ्गरामानुजमुनिवरविरचितं प्रकाशिकाभिधानं भाष्यम् ।

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
श्वेताश्वतरमन्त्राणां विवृतिं करवाण्यहम् ॥

स्वेतरसमस्तचेतनाचेतनविलक्षणपरमात्मस्वरूपनिर्दिधारयिषया इयमुपनिषत् आरभ्यते । विद्यास्तुत्यर्थमाख्यायिकामाह ब्रह्मवादिनो वदन्तीति । ब्रह्मवदनशीला मुनयो वक्ष्यमाणप्रकारेण वदन्ति स्मेत्यर्थः । किमिति । हे ब्रह्मविदः ! जगतः कारणं ब्रह्म किन्देवतारूपम् ? कस्माद्ब्रह्मणोऽस्माकं जन्म स्थितिश्च संप्रतिष्ठाशब्दितो लयश्च । केन वा

ब्रह्मणा अधिष्ठिताः तत्परतन्त्रास्सन्तः, अनसि उन्नगोसंघवत्, जिह्मसितेषु

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

श्वेताश्वतरोपनिषद्भाष्यपरिष्कारः

यः श्वेताश्वतरोदितश्चिदचितोरीशः परं योगिनाम्
मुक्तयध्वा च जगन्मयोऽप्यणुचिदानन्त्यावहः संश्रयः ।
देवं कालहिरण्यगर्भगिरिशाद्याधारमेतं परं
शेषाकारसुवर्णशैलनिलयं श्रीशं गिरिशं श्रये ॥

१. *विदितं खलु भृगुर्वारुणिः वरुणं पितरमुपसृत्य, यत इमानि भूतानि जायन्ते, येन जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद् ब्रह्मेत्यधीत्य, तादृशं ब्रह्मैव किमिति निर्धारयितुमनाः तपस्तप्त्वा क्रमेण अन्नप्राणमनोविज्ञानव्यतिरिक्तमानन्दं ब्रह्म निश्चिकायेति (तै.भृ.) । तयैव रीत्या यद्यपि ब्रह्मवादिनः सर्वविधकारणत्वेन श्रूयमाणं ब्रह्म किम्भूतमिति निर्धारयितुं संभूय विचिन्त्य कालस्वभावकर्मजीवादीनामतथात्वं तदन्यस्य कस्यचित् तथात्वस्वीकारे कस्याप्यवचस्य विरहश्चाऽऽलक्ष्य तादृशं ब्रह्म स्वीचक्रुः, यादृशस्य ग्रहणं न दुष्यति ।*

तदेव तपःप्रभावदेवप्रसादभावितपरमार्थज्ञानः श्वेताश्वतरः ब्रह्मविन्महर्षिसंघजुष्टं ब्रह्म परममुत्तमाश्रमिभ्यः प्रोवाच । तदिह प्रतिपाद्यते ब्रह्मवादिन इत्यादिना । वदन्ति स्मेति भूतकालादरणं भूतस्यैवोपजीव्यत्वार्हत्वात् । श्रुतौ लट्प्रयोगो वादस्यास्य सार्वकालिकत्वव्यक्तये । किं कारणं ब्रह्मेति । जगत्कारणं तावत् ब्रह्मेति सर्वे प्रतियन्ति । तच्च जन्मस्थितिलयरूपसर्वकारणम् । न केवलमेतावत् । स्थितेरिव प्रवृत्तेरपि कारणम् । तद् ब्रह्म किम्भूतम् ?

दुःखरूपेषु जन्मसु विशिष्टामवस्थितिमनुसृत्य वर्तामहे । सुप्रतिष्ठेति पाठेऽप्ययमेवार्थः । (१)

ननु कारणं ब्रह्म सिद्धवत्कृत्य किंदेवतारूपमिति प्रश्न एवानुपपन्नः । तस्यैवानभ्युपगम्यमानत्वात् । लोके हि कालज्ञाः कालमेव सर्वकारणमाचक्षते । लोकायतिकास्तु स्वभावमेव हेतुमाचक्षते । मीमांसकास्तु नियतिलक्षणं कर्मैव हेतुं मन्यन्ते । अपरे अहेतुकत्वलक्षणं

---

किं निर्गुणं सगुणं वा ? सगुणमपि कीदृशगुणम् ? तथा गुणातिरिक्तद्रव्यात्मकविशेषविधुरं तद्विशिष्टं वा ? विशिष्टमपि कियद्विशिष्टम् ? वैशिष्ट्यमपि किंरूपम् ? तथा एवम्भूतमिदं किं ब्रह्मवद्भ्यन्तर्भूतम् उत सर्वजीवविलक्षणं ब्रह्मरुद्रादिहेतुभूतं किञ्चित् दैवतमित्येव ब्रह्मवादिनो मीमांसन्ते इति भावः । वर्तामहे इत्यस्य मन्तर्मिहे इत्यथ उत्तरार्धं प्रवृत्तिकारणत्वमपि ब्रह्मणो वक्तुं प्रवृत्तमिति ध्येयम् । अथवा जीवामेत्यैहिकं सुखदुःखमिश्रं जीवनमुक्तम् सुदेतरेषु वर्तामहे इत्यनेन स्वर्गनरकयोर्व्यवस्थया वृत्तिरुच्यते । तत्र वृतुधात्वर्थस्य व्यवस्थया सहाभेदविवक्षया क्रियाविशेषणतया व्यवस्थायिति कर्मत्वोपपादने क्लेशमनुचिन्त्य, अनुसृत्येति ल्यबन्तस्याध्याहारः कृतः । अत्र अनेकक्रियाशब्दप्रयोगः, कार्यभेदेन कारणभेदोऽपि किं स्यादिति शङ्काव्यञ्जनाय, एककार्यकारणत्वेन सम्भाव्यमानस्याप्यन्यकार्यकारणत्वासम्भवे कथं ब्रह्मत्वमित्याक्षेपाविर्भावाय च।

कालज्ञाः ज्योतिर्विदः । स्वभावमेव हेतुमिति । न्यायकुसुमाञ्जलौ सर्वार्थसिद्धौ चैतद्विस्तरः । यदृच्छया भवतीत्यस्य, अकस्माद् भवति, न कस्मादपि भवतीत्यर्थः, तत्र कस्यचित् हेतुतया निर्देशा-

काल स्वभावो नियतिर्यदृच्छा भूतानि योनि पुरुष इति चिन्त्यम्।
संयोग एषां न त्वात्मभावादात्माऽप्यनीश सुखदु खहेतो ॥ २ ॥

---

यादृच्छिकत्वम् । अपरे पञ्च भूतानि । प्रकृति केचित् । पुरुष केचि-द्वाचक्षते । तेषामन्यतम पक्षोऽस्तु । किं ब्रह्मकारणवादाभ्युपगमेनेत्या-शङ्क्याह काल इति । कालादीनि कारणमित्येतन्न युक्तिसहम् । दोषाणा बहूना स्फुरणात् । चिन्त्यम् न निश्चेतु शक्यम्, अचेतनाना चेतनस्य वा प्रत्येक हेतुत्वासंभवादित्यर्थ । ननु एषा सयोगो हेतुर्भवितुमर्हति । न चैषा सयोजकाभाव शङ्कितव्य । तेषां मध्ये आत्मनश्चेतनस्य सयोजकस्य सद्भा वेन सयोगसभवादित्याशङ्क्य आत्मन स्वातन्त्र्ये सुखभोक्तृत्वमेव स्यात्, दु खभोक्तृत्वम् । अत सुखदु खानुभवितुर्जीवस्यापि न नियन्तृत्व समवतीत्याह संयोगः —हेतो। । उक्तोऽर्थ । न त्वात्मभावादित्यत्र तुशब्द एवार्थ । आत्मसद्भावात् सयोग समवतीत्येतन्नैवेत्यर्थ । ब्रह्मणोऽप्यपरिणामिन उपादानत्वञ्च न सभवतीति भाव । (२)

---

योगात् पूर्वोत्तरभङ्गीं विहाय, ('यदृच्छा हेतुम्' इत्यनिर्दिश्य) अहेतु-कत्वलक्षण यादृच्छिकत्वमिति भङ्ग्यन्तरादरणम् । पुरुष केचिदिति । कर्मणा योगेन च पूर्वपूर्वकल्पे सिद्धिमधिगतवतामुत्तरकल्पे भूम्यन्त-रिक्षस्वर्गनरकादिसर्वनिर्माणनैपुणी सभाव्यत इति कपिलहिरण्य-गर्भादिषु परदेवताबुद्धि विभ्रतामभिमान । अत्र योनिशब्द कारण-पर्याय कालादौ प्रत्येकमभिसबध्यत इति परेषा व्याख्यागति । इह तु पूर्वमन्त्रादेव कारणमित्यनुषङ्गात् योनिपद प्रसिद्धप्रकृतिपर स्वीकृतम्।

आत्मभावादित्यस्यार्थद्वयम् । जीवात्मसद्भावादिति, परमात्म-भावसद्भावादिति च । जीवात्मन कारणत्वमिव परमात्मन कारण-

त्वमपि तेन निरस्तं भवति। कथं हि तस्य जन्मलयादिसर्वकारणत्वम्, अपरिणामितयोपादानत्वायोगादिति । तत्राह ब्रह्मणोऽप्यपरिणामिन इति। एवञ्च पूर्वार्ध पुरुषशब्दोऽप्युभयपर इति वा, तत्र प्रकारवाचिना इतिशब्देन परमात्मग्रहणमभिमतमिति वा ग्राह्यम् । तथा च कालादीनां पृथगपृथग्वा कारणत्वं दु साधमित्युक्तं भवति ।

तत्र कालस्तावत् नोपादानम् । इदानीं जायते, तदानीं नश्यतीति जन्मनाशावच्छेदकतया प्रतीतावपि न च सप्रतिष्ठेत्युक्तलयाधारत्वादिरूपोपादान न्यायोगात् । कार्याभिन्न हि कारणमुपादानम् । न च कालस्य घटपटादिना कार्येण सहैक्यप्रतीतिरानुभविकी । वर्तमानत्वादिरूपस्य कालस्य सर्वत्र विशेषणतयैव स्फुरणात् । अखण्डः कालः कश्चित् कारणमिति चेत्—तर्हि तत सर्वदा सर्वकार्योत्पत्तिः प्रसज्यते ।

अथ स्वभावः । स किं कार्यस्य स्वभाव उत कारणस्य? नाद्य, कार्यं हि स्वपूर्वकालवर्ति यदपेक्षते, तत् कारणम् । तत्र स्वमेव स्वस्य कारणं न भवति आत्माश्रयादिति स्थिते, का कथा स्वगतो भाव स्वस्य कारणमिति । अथ कारणस्य स्वभाव इति, तर्हि कारणमन्यत् निरूप्यम् । अथ सत्कार्यवादात् कार्यकारणैक्यात् स्वात्मको भाव पदार्थः कारणमित्यर्थ इति चेत्—स एव क । घटस्य मृदादि पटस्य तन्त्वादिरिति चेत्—तस्याचेतनस्य कथं स्वतन्त्र्येण कारणत्वम्। जीवाम केन, सुखेतरेषु वर्तामहे इत्युक्त चेतननिरूपित कारणत्वमचेतने कथं घटते ?

अथ नियति । नियति = नियमः अवश्यम्भाव । अनवश्यम्भावा दवश्य भवती युक्तौ उत्पत्तिरेवोत्पत्तौ कारणमुक्ता स्यात् । अथ यतोऽवश्य भवति, सा नियति —सा पक्षान्तरभूता का नाम ? पुण्य पापात्मकं कर्मेति लोकप्रसिद्धमेवेति चेत्–क्षणभङ्गुरं तत् कालान्तर

भाविने फलाय कथमलमिति व्यनाम्। व्यापारद्वारेति चेत्-कि कर्मणोऽपि कश्चिद् व्यापार ? स कुतस्त्य ? न कर्मणि तस्य नष्टत्वात्। न भूतेषु तेषामपि नश्वरत्वात्। भूतानां कारणत्वपक्षस्य स्वीकार प्रसङ्गात्। न कर्तरि पुरुषकारणत्वपक्षपरिग्रहापत्त। न चाचेतना धर्मभूता नियति धर्मिभूतचेतनाचेतनसर्वोत्पत्तिस्थितिस्थान च स्खलन्वश्च भवितुमर्हति।

न च यदृच्छापक्ष। तथा हि सति कारण किमपि नेत्येवोक्त भवति। सवेतत् अन्नपानाद्यर्थिन कृषिकूपनिर्माणादिसार्वलौकिक-प्रवृत्तिव्याहतमनुन्मत्त को नु वक्तुमर्हति?

भूतानीति, योनिरिति च भातिरूपदार्थविषये युज्यते, न पुरुषादिविषये। न च भूतान्यचेतनानि स्वतन्त्राणि कार्यकराणि दृष्टानि। तानि च सुखदु खेषु पुरुषाणां व्यवस्थया कथ कारणानि भवेयु? सर्वेषामेषां केनचित् प्रकारेण कारणत्वेऽपि ईशानव्यापार-लवलेशस्यापि तत्राभावेन न पुष्कल कारणत्वम्। तदिदम् आत्माऽप्यनीश इति अपिना दर्शितम्। आत्मा तु पुरुषो यद्यपि कश्चिदीष्टे—अथापि अनीश सुखदु खहेतो। न खलु स्वदु खार्थं किञ्चित् स्वयमेव चेतन सृजेत्। ननु कर्मयोगसिद्धा केचित् कल्पारम्भे कल्पितजनय सर्वेषां सर्वविध जनयन्तीति चेत्—त एव स्वात्मने तु खहेतु कथ कल्पयेयु। तेषु एके ऽन्यस्य, स एतस्येत्येव कल्पयन्तीति चेत्-तर्हि परस्परफलटैन कल्प आरम्भ एव प्रध्वसित स्यात्। किञ्च ते कि जनित्वा सच कल्पयन्ति अथाजनित्वा। अन्त्य पक्षो नोत्थातु मर्हति। आद्ये तु जनिर्नाम देहेन्द्रियबुद्धिवेदनासघातसपत्ति। सा च भूतपञ्चकाद्यधीना। तत् सर्वमिद तदुत्पत्ते प्रागेव यदि, ते कथ सर्वकारणम्? इति रीत्या अत्र चिन्तनाप्रकारो द्रष्टव्य।

ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम् ।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥३॥

ते इति । एवं ध्यानयोगयुक्ता मुनयः, 'अपहतपाप्मा दिव्यो देव एको नारायणः' इति श्रुतिप्रसिद्धदेवशब्दितनारायणात्मिका कार्योपयोग्यपृथक्सिद्धविशेषणत्वेन शक्तिशब्दिता सत्त्वरजस्तमोलक्षणस्वगुणोपेता ब्रह्मणो जगत्कारणत्वनिर्वाहिका प्रकृतिं दृष्टवन्त इत्यर्थः । ततः परं तच्छरीरकं सर्वविधकारणं सकलकारणाधिष्ठातारं समाभ्यधिकशून्यं परमात्मानमपि दृष्टवन्त इत्याह यः कारणानीति । उक्तोऽर्थः ।

---

मूले योनिरिति प्रकृतिरुच्यते । भूतकारणवादिनः चार्वाकादयः । तत्कारणभूतमात्राहङ्कारमहत्पूर्वतया प्रवृत्तेः कारणत्वं सांख्यसंमतम् ।२

उक्तकालाद्यतिरिक्तस्य तत्प्रेरकस्य सर्वविदितं कस्यचिदेव कारणत्वं निश्चाय तस्याप्यपरिणामिन उपादानत्वायोगात् उपादानान्तरस्वीकारे च तस्य सर्वविधकारणत्वभङ्गप्रसङ्गात् किं कार्यमिति विमृश्य यादृशपदार्थस्वीकारे उपादानत्वमपि रक्षितं भवेत्, अनन्यथासिद्धचिदचिद्गतपरिणामश्रुतिरक्षा पालितो भवेत्—तादृशपदार्थस्वीकारमध्यवसितवन्त इत्युच्यते ते ध्यानेत्यादिना । देवात्मशक्तिमिति । आत्मा द्विविधः जीवात्मा देवात्मा चेति । तत्र जीवात्मनः ब्रह्मरुद्रकपिलादेः कारणत्वं न कल्पते । देवात्मा ▮ कारणम् । देवात्मा नाम यः सर्वदा देव एव भवति, सः । तद् भाष्यते, अपहतपाप्मा दिव्यो देव एको नारायण इति । दिवु क्रिडायामिति निष्पन्नेन देवशब्देन, लोकवत्तु लीलाकैवल्यमिति च दर्शितं भवति । शक्तिमिति अपृथक्सिद्धविशेषणरूपतया पदार्थस्वीकारप्रदर्शनात् उपादानत्वासम्भवादिसर्वदोषनिस्तारः । शक्तिरित्यस्य

कार्योपधायकापृथक्सिद्धविशेषणमित्यर्थः । उपयोगित्वं नाम कारणतावच्छेदकत्वम् । तेन ब्रह्मोपादानम्; उपादानतावच्छेदिका प्रकृतिरित्युक्तं भवति । प्रकृतेर्ब्रह्मापृथक्सिद्धत्वमजानतां व्यवहारस्तावत्, प्रपञ्चं प्रति प्रकृतिः कारणमिति । जानतां तु स व्यवहार औपचारिकः, परमतस्यांशतः स्वीकारमूलको वा । वस्तुस्थितिमनुसृत्य मुख्यस्तु व्यवहारः प्रपञ्चं प्रति प्रकृतिविशिष्टं ब्रह्मोपादानमिति । न चोपादानोपादेययोरभेदहानिः प्रपञ्चस्यापि ब्रह्मापृथक्सिद्धतया तद्विशिष्टब्रह्मण एव कार्यतया तदक्षतेः । प्रकृतिरियं द्रव्यभूताऽपि उक्तविधापृथक्सिद्धिमत्तया शक्तिर्भवितुमर्हति । एवं शक्तिभूताया अस्याः द्रव्यत्वं स्वगुणैर्निगूढामित्यनेन दर्शितम् । स्वपदेन परमात्मादौ सत्त्वरजस्तमोरूपप्राकृतगुणासंभवः सूच्यते । प्रकृतेर्गुणानाञ्च भेदप्रदर्शनेन, गुणसमुदायः प्रकृतिरिति सांख्यमतञ्च व्युदस्यते । नन्वेवमचेतनस्य कस्यचिदुपादानतावच्छेदकत्वे सर्वोपादानत्वं कथं ब्रह्मण इति शङ्कापरिहारपूर्वकं शक्तिशक्तिमतोरनयोः संबन्धोऽपि विशदीक्रियते उत्तरार्धे । यानि कारणानि, प्राक् प्रस्तुतानि, स्वभावो नियतिर्भूतानीति, तानि सर्वाणि प्राकृतान्येव । प्रकृत्यनन्तर्गतश्च यदि कश्चित् स्वभावः, स पुरुषेऽन्तर्भविष्यति । यथैषां कारणानां देवापृथक्सिद्धत्वम्, तथा कालस्यापि द्रव्यस्यानाद्यन्तस्य क्षणलवकाष्ठामुहूर्तादिपरिणामशालिनः तदपृथक्सिद्धत्वमेव । एवं देवमनुष्यतिर्यक्स्थावरात्मना जायमानस्य जीवात्मनोऽपि । एवं स्वापृथक्सिद्धप्रकृतिपुरुषकालस्यास्य ब्रह्मणः न दाहजनकौष्ण्यरूपशक्तिसंपन्नस्याग्नेरिवाधिष्ठातृत्ववैरूप्यम्, येन स्वातन्त्र्यहानिरन्यापेक्षा च प्रसजेत् । तदुच्यते अधितिष्ठत्येक इति । एवञ्चास्य सर्वशक्तत्वादुपादानत्वमिव निमित्तत्वमपि निरूढमिति एक एव सर्वविधकारणत्वसंपन्न इति पूर्वपृष्टसर्वोत्तरपुष्कलमिदं परं ब्रह्मेति । अत्रोत्तरार्धे तमित्यध्याहारेण अपश्यन्नित्यन्तस्यानुषङ्गो वा;

**तमेकनेमिं त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः ।**
**अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥४॥**

---

चिन्तावतारसौकर्याय तं चक्रत्वेन रूपयति **तमेकनेमिमिति** । परमात्मानं प्रकृत्याख्यैकनेमियुक्तं सत्त्वरजस्तमोगुणैस्त्रिप्रकारतया त्रिवृतं षोडशसंख्यायुक्तान्तशब्दितविकारोपेतं वाचकभूताकारादिपञ्चाशद्वर्णलक्षणारोपेतं द्वादशमासपञ्चर्त्वयनद्वयसंवत्सरात्मकविंशतिप्रत्यर-युक्तमित्यर्थः । **प्रत्यराभिरिति** लिङ्गव्यत्ययश्छान्दसः । अरा हि नाभिनेमिमध्यवर्तिकाष्ठविशेषाः । *प्रत्यराश्च तद्दार्ढ्यार्थं निहिताः तन्मध्यवर्ति* काष्ठविशेषाः । **अष्टकैरिति** । अणिमाद्यैश्वर्याष्टकमेकम्, प्राच्यादिदिगष्टकमपरम्, दिक्पालाष्टकमेकम्, 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा' इति गीतोक्तं प्रकृत्यष्टकम् । (*'अष्टौ प्रकृतयः' इत्युक्तप्रकृत्यष्टकात्मकमन्यत्*,) *'ब्रह्मा प्रजापतिर्देवा* गन्धर्वा यक्षराक्षसाः । पितरश्च पिशाचाश्च' इति देवाष्टकमेकम्, ('अष्टौ वसवः' इत्युक्तवस्वष्टकम्,) अपहतपाप्मत्वादिब्रह्मगुणाष्टकम्, 'दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा' इति *आत्मगुणाष्टकं वा । एवमेभिः [यथार्हं ?] षड्भिरष्टकैरुपेतम् ।* **विश्वरूपो**

---

योऽधितिष्ठति, तस्य देवात्मशक्तिमपश्यन्नित्यन्वयो वाऽस्तु । यद्वा उत्तरार्धमिदमुत्तरश्लोकेनान्वितमिति, मा भूत् तत्र तमित्यध्याहारः, किं तु अपश्यन्नित्यन्तानुषङ्गमात्रम् । पूर्वत्र तु पक्षे उत्तरश्लोकस्य तदुत्तरश्लोकेन एकवाक्यतया तं देवात्मानं प्रकृतिं पश्यपरमिधीम इत्यन्वयोऽपि स्यात् । तेन पूर्वोक्तापृथक्सिद्धिनिबन्धनं आत्म-प्रकृत्योः सामानाधिकरण्येन निर्देशोऽपि दर्शितो भवति ।

पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् ।
पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥ ५ ॥

---

विराट्पुरुषः । स एव (एको ?) मुख्य पाशः । स्वाश्रितजगद्बैध-
रूयहेतुतया बन्धकपाशवत् विराट्पुरुष ब्रह्मचक्रस्य पाशरूप इत्यर्थ ।
त्रिमार्गभेदाद्विनिमित्तैकमोहं देवयानपितृयाणक्षुद्रजन्तुभवनलक्षणमार्ग
त्रययुक्तम्, तत्र च पितृयाणक्षुद्रजन्तुभवनलक्षणमार्गद्वयहेतुभूतदेहात्मै-
क्यमोहमित्यर्थ । अपश्यन्निति पूर्वेण संबन्ध । (४)

एवं चक्रत्वेन रूपयित्वा तच्छक्तित्वेन निर्दिष्टा प्रकृतिं वैराग्याय
नदीत्वेन रूपयति पञ्चस्रोतः इति । स्रोतोरूपेणाविच्छिन्नतया प्रवर्त-
मानानि तमोक्षराव्यक्तमहदहङ्काररूपाणि अम्बुस्थानीयानि यस्याः सा
तथोक्ता । महाभूतोपादानतया योनिभूतानि पञ्च तन्मात्राण्येव उग्र-
वक्राणि प्रवाहमुखरूपाणि यस्याः सा पञ्चयोन्युग्रवक्रा । प्राणापा-
नादयः पञ्च ऊर्मिस्थानीया यस्याः सा पञ्चप्राणोर्मिः । बुद्धेर्ज्ञानस्या-
दिभूतानि पञ्च ज्ञानेन्द्रियाणि मूलं यस्याः सा पञ्चबुद्ध्यादिमूला ।
पञ्चकर्मेन्द्रियाणि आवर्तस्थानीयानि यस्याः सा पञ्चावर्ता । पञ्च
महाभूतानि अत्यन्तप्रतिकूलतया प्रवर्तमानानि [1]ओघ वेगस्थानीयानि
यस्याः सा पञ्चदुःखौघवेगा । अकारादिपञ्चाशद्वर्णलक्षणनामभेद
युक्ताम्, 'तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञित' इति पुराणप्र-
सिद्धपञ्च[विध]सृष्टिलक्षणपर्वपञ्चकयुक्ता ब्रह्मात्मिका प्रकृतिं तदधिष्ठिता
रञ्च परमात्मानम् अधीमः स्मराम इति अपश्यन्निति पूर्वेणान्वय । (५)

---

1. ओघशब्दितेति पाठे ओघशब्दिततमोक्षरादिपञ्चकीयवेगेति स्यात्।

सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥ ६ ॥

---

एवं, "किं कारणं ब्रह्म कुतः स्म जाताः" इति चिन्तायां, 'देवात्मशक्तिं', 'यः कारणानि निखिलानि तानि' इत्यनेन च देवशब्दित-नारायण एव सर्वकारणम्, अपरिणामिनोऽपि तस्य कारणत्व-निर्वाहिका प्रकृतिरिति निस्तारो दर्शितः। अधिष्ठिताः केन सुखेतरेषु (रो.तरेषु) इति चिन्तायां निस्तारं दर्शयति सर्वाजीवे इति । सर्वान् आजीवयतीति सर्वाजीवम् (वे) । अनेन, जीवाम केनेत्यस्योत्तर-मुक्तं भवति। सर्वेषां संस्था समाप्तिः=प्रलयो यस्मिन् तत् सर्वसंस्थम् । अनेन च, 'क्व च संप्रतिष्ठाः' इत्यस्योत्तरमुक्तं भवति। बृहन्ते बृहती-त्यर्थः । अतश्च निरतिशयबृहत्त्वादेव सर्वसंस्थत्वादिकं युज्यत इति भावः । तादृशे ब्रह्मरूपे चक्रे, हन्ति=गच्छति अनेकजन्मसहस्रसंचरण-शील इति हंसः जीवः परवशतया, 'भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' इत्युक्तरीत्या ब्रह्मचक्रेण भ्र(भ्रा)म्यमाणोऽयं भ्रमतीत्यर्थः। एतज्ज्ञा-नस्य फलमाह पृथगात्मानमिति । उक्तरीत्या भ्रमयितृत्वेन परमात्मा-नम्, तेन भ्राम्यमाणं तच्छरीरभूतं च स्वात्मानं मत्वा तज्ज्ञानप्रीतेन

---

६ 'यन्त्रारूढानि मायया (गी 18 61) इत्यत्र तात्पर्यचन्द्रि-कायां ब्रह्मचक्रपदं प्रकृतिपरं वर्णितम् ।

प्रेरितारमिति । ईर क्षेपे । आधृषादित्वात् णिचो विभाषा । प्रेरयितारमित्यर्थः । ननु कथं पृथङ्मत्वेति पृथक्त्वानुसंधानविधिः, 'योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमिति, न स वेदेति

उद्गीत(थ)मेतत् परमं तु ब्रह्म तस्मिंस्त्रयं स्व(सु)प्रतिष्ठाक्षरञ्च ।
अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥ ७॥

परमात्मना [प्रसन्नेन] जुष्टः प्रीत्या विषयीक्रियमाणः मुक्तिं प्राप्नोती-त्यर्थः । तत्श्चामृतत्वफलप्राप्तिहेतुभूतज्ञानविषयस्य प्रेर्यप्रेरकलक्षणजीव परमेशस्य परमार्थत्वमुक्तं भवति । अपरमार्थज्ञानस्य मोक्षहेतुत्वासंभवादिति द्रष्टव्यम् । (६)

उद्गीतमिति । एतत् चक्ररूपतया प्राङ्निर्दिष्टमेव, 'नारायणः परं ब्रह्म', 'स्वे महिम्नि प्रतिष्ठित,' 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इत्यादिवेदान्तवाक्येषु परमब्रह्मत्वेन स्वप्रतिष्ठत्वेनाक्षरत्वेन चोद्गीतम् उच्चैर्गीतम् । उद्गीथमिति पाठेऽपि स एवार्थः । तस्मिन् स्वप्रतिष्ठा-

तन्निषेधादिति चेत्—न, तत्र 'आत्मेत्येवोपासीत' इति आत्मत्वोपासनविधानात् राजभृत्यन्यायेन भिन्नत्वेन पृथक्सिद्धत्वानुसंधानं निषिध्यते । इह तु आत्मत्वानुसंधानोपयोगी शरीरत्वात्मत्वरूपपार्थक्यं वस्तुभेदो वस्त्वैक्यभ्रमव्यावृत्तये मन्तव्यतयोच्यते इत्यविरोधात् । आत्मत्वानुसंधानञ्चेत्थम्, 'अहं ब्रह्मास्मि' इति प्रकाराभिलापानुगुणमिति च सर्वत्र बृहदारण्यके व्यक्तम् ।

'नन्वेतावता साक्षात्प्रपञ्चाधिष्ठाता ब्रह्मचक्रे पुरुषाणां भ्रमयिता प्रेरयिता देवात्मा कश्चित् सिद्धः । तावता ब्रह्म कारणमिति कथं सिद्ध्यति' इत्यत्र, 'अयमेव ब्रह्म अस्य ब्रह्मशब्देन कारणसमर्पकेण व्यवहारकाले उक्तसर्वविशेषणविशिष्टं तत्र प्रतिपत्तव्यम् । निशिष्टाकारेण ह्यस्य स्थूलावस्थापत्तिहेतुत्वरूपं बृहत्त्वापादकत्वम्' इत्युच्यते उद्गीतमिति ।

स्वप्रतिष्ठाक्षरञ्चेत्यनेन त्रयस्य ग्रहणायोगात् तस्य पूर्वान्वय-

क्षररूपे ब्रह्मणि प्रकृतिपुरुषकालरूपं त्रयमाश्रितमित्यर्थः । अत्रान्तरमिति । तत्पराः ब्रह्मपरा ब्रह्मेष्वत्र अत्रैतस्मि(श) प्रकृतिपुरुषकालानां विवेके (क) तेषां परमात्मनश्चापृथक्सिद्धतया आधाराधेयभावलक्षणम् अन्तरम् अन्तरशब्दितभेदं अतिशयितं भेदं विदित्वा प्रकृतिबन्धनिर्मुक्तास्सन्तः परमं साम्यं प्राप्य भिन्नतया (अभिन्नतया) अदर्शनलक्षणलयं गता इत्यर्थः । (७)

---

विषक्षया 'तस्मिन् त्रयम्' इत्यस्य मध्यनिविष्टस्य वाक्यात् पृथक्कारः । तस्य च, त्रयं तन्निष्ठमित्यर्थः । शिष्यस्य तु निरुक्ते देयात्मैव परमं ब्रह्म च भवति स्वप्रतिष्ठाक्षरश्च भवतीत्यर्थः । अक्षरं द्विविधम्, 'अक्षरात् परतः परः' इत्युक्तं प्रकृतिरूपम्, 'एतद्वै तदक्षरं गार्गि' ति तद्वितरपरब्रह्मरूपश्च । तत्र द्वितीयस्य ग्रहणाय स्वप्रतिष्ठेति विशेषणनिर्देशः । अमृताक्षरं हर इति वक्ष्यमाणजीवरूपाक्षरव्यावृत्तये वा विशेषणनिर्देशः । तेन ब्रह्मणः परमत्वं तदुपरिवस्त्वन्तरसद्भावशङ्कानिरासपूर्वं स्थापितं भवति । तस्मिन्नित्यादेः उपर्यन्वयसम्भवे तु— तस्मिन् यत् त्रयं प्रकृतिपुरुषकालरूपम्, यच्च तदाधारभूतं स्वप्रतिष्ठाक्षरम्, (तदुभयं विदित्वा) अत्र मिथोऽन्तरं विदित्वेति रीत्या वर्णनीयम् । तदपेक्षया ब्रह्मनिष्ठं पूर्वोक्तं त्रयम्, ब्रह्मरूपं स्वप्रतिष्ठाक्षरश्चेति सर्वमिदं उद्गीतमेतत् परमं ब्रह्म भवति — ब्रह्मशब्दार्थविशेष्यविशेषणभावेन निविष्टं भवतीत्यर्थवर्णनं ज्यायः । कश्चित्तु, 'परमं ब्रह्मैतत् उद्गीतं प्रमाणेन । किं तत् प्रमाणम्? उच्यते । तस्मिन् ब्रह्मणि विषये त्रयं—वेदत्रयम्, स्वप्रतिष्ठाक्षरं मूलान्तरनिरपेक्षप्रणवाक्षरञ्चास्ति प्रमाणतया' इति व्याख्यानि । स्वप्रतिष्ठाक्षरमिति कर्मकृतपरिणामरहितनित्यमुक्तजीवनित्यविभूत्यन्यतरपरं वा । तत्रापि 'क्षरश्चाक्षर एव च', 'यदक्षरे परमे प्रजा' इति तत्प्रसिद्धेः ।

संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

ननु प्रकृतिसंबन्धे जीवपरयोरविशिष्टे सति जीवस्य कुतो बन्ध ? परस्य कुतो नेत्यत्राह संयुक्तमिति । ईशः परमात्मा व्यक्तरूपं क्षरम-चिद्वर्गम् अव्यक्तमक्षरं चिद्वर्गं च परस्परसंयुक्तं बिभर्ति ; न तु बध्यते । अनीशो जीवस्तु बध्यते कर्मफलभोक्तृत्वाभिसन्धिलक्षणभावसत्त्वात् । परमात्मनस्तु (परमात्मा तु ?) 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' इत्युक्तरीत्या तस्य कर्मफलस्पृहाभावेन कर्मलेपाभावात् , स्वसंयुक्त-तया प्रकृतिभरणेऽपि अपहतपाप्मत्वात् प्रकृतिसंबन्धप्रतिभटः तत्प्रतिभ-टज्ञाने विषयश्चेति निर्गलितार्थः । (८)

तथाच कालादिवयवत् तदक्षरमपि भवति सन्निविष्टमित्यर्थः । सुप्रतिष्ठा-क्षरमित्यपि पाठोऽस्ति ॥ ७ ॥

संयुक्तमिति । क्षरमक्षरञ्च यदा संयुक्तं भवति, तदा एवम्भूतं देहि तेन ध्रियते । तत्र देहस्यापि आत्मनोऽपि तद्धार्यत्वमस्तीति भावः । अत्रात्मत्वोपयोगि धारकत्वमुक्तम् । ईश इत्युक्तं नियन्तृ-त्वमप्युपरि विवरिष्यते, 'क्षरात्मानावीशते देव एक' इति । ननु ईशः स्वतन्त्रो न बध्यते, अक्षरं तु परतन्त्रत्वाद् बध्यते चेत्, ईशो निष्करुणः प्रसज्यते ; नेत्याह भोक्तृभावादिति । अहं भोक्तेत्याकारक-भावात्मकादित्यर्थः । तादात्विकक्षुद्रभोगप्रावण्येन कर्मणो निषिद्धस्य, पाश्चात्यप्रकृष्टभोगलिप्सया काम्यस्य च तेनानुष्ठिततया कर्मवेष्टितत्वा-दिति भावः । एवमवश्यानुभोक्तव्यशुभाशुभकर्मनिगडबद्धोऽपि यत् मुच्यतेऽननुभुज्यैव तत्फलजातम्, तत्र देवस्य कारुण्यमेव कारण-मित्युच्यते, ज्ञात्वा देवमित्यादिना । सर्वमिदं विनियत उत्तरमन्त्रे ॥८॥

*ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता ।*
अनन्तश्चात्मा विश्वरूपो ह्य(प्य ?)कर्ता त्रय यदा विन्दते ब्रह्ममेतत् ॥

---

परस्परवैलक्षण्यमेव प्रपञ्चयति ज्ञाज्ञाविति । पूर्वनिर्दिष्टयोर्मध्ये एक सर्वज्ञ अत एव ईशश्च । अपरस्तु अज्ञोऽनीशश्च । उत्पत्तिराहित्य तु द्वयोरपि समानम् । ईशनीशाविति दीर्घाभाव छान्दस । भोक्तृजीवस्य भोगरूपप्रयोजनयुक्ता उत्पत्तिरहिता काचनान्या प्रकृतिरित्यर्थ । एव तृतीय(त्रितय ?)मुत्पत्तिराहित्येन समानमपि परस्पर विलक्षणमित्यर्थ । ननु प्रकृते जीवभोगोपकरणत्ववत् परमात्मनोऽपि भोगार्थत्व कुतो न भवेत् ? प्रत्युत एकैकशरीरजीवभोगार्थत्वे सकलशरीरकपरमात्मभोगार्थत्वमपर्जनीयमेवेति, अत्राह अनन्तश्चेति । विश्वशरीरकस्यापि परमात्मन, 'नान्त गुणाना गच्छन्ति तेनानन्तोऽयमुच्यते' इत्युक्तरीत्या सत्यकामत्वाद्यनन्तगुणाश्रयस्य निरपेक्षस्य जीववत् कर्मफलाभिसन्धिपूर्वककर्तृत्वाभावात् न तद्भोगार्थत्व प्रकृतेरिति भाव । एतादृशवैलक्षण्यज्ञानस्य फलमाह—त्रयमिति । एतत् त्रय यदा विन्दते परस्परवैलक्षण्येन दर्शनसमाना—

---

ज्ञाज्ञाविति । असत्यत्व जीव प्रतिकूलमनुकूलञ्च प्रपञ्च भावयन् रागद्वेषोपप्लुत कर्मपरवश स्वयमनीशो बन्ध प्रतिनन्तुम् । अभितनमन्तु देवो न तथा । भोक्तृभोगार्थयुक्तेति । 'आत्मेन्द्रियमनोयुक्त भोक्तेत्याहुर्मनीषिण' इत्युक्तलक्षण भोक्तारमेव भोजयेदजा न पुन शरीरान्मुक्तम् । जहाति ह्येना भुक्तभोगामजोऽन्य । नतरा निर्मल परमात्मानमिति । अनन्तश्चेति । न केवल ह , अपहतपाप्मत्वसत्यसङ्कल्पत्वाद्यनन्तगुणश्च, त्रिविधपरिच्छेदरहितश्च, विष्णु नादनन्तरदरूद्व्यर्थभूतश्चेति । दर्शनसमानाकारध्यानेनेति । ननु देवस्य

**क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।**

---

कारध्यानेन विषयीकरोति, तदा ब्रह्म भवति—मुक्तो भवतीत्यर्थः । एवमेव व्याख्यार्थैः, "चमसवदविशेषात्" इत्यत्र व्याख्यातम् । ब्रह्ममिति छान्दसं रूपम् । (९)

संयुक्तमिति मन्त्रनिर्दिष्टक्षराक्षरशब्दार्थं विवृण्वन् परस्परवैलक्षण्यज्ञानमात्रेण मुक्तौ, मनननिदिध्यासनवैयर्थ्यमिति शङ्काश्च शमयति क्षरं प्रधानमित्यादिना । 'प्रधानं प्रकृतिः स्त्रियाम्' इति प्रधानशब्दिता प्रकृतिः क्षरमित्युच्यते । भोग्यमात्मनो भोगार्थं हरतीति हरो जीवः ।

---

तादृशध्यानविषयीकारो मुक्तये स्यात्, न तु त्रयस्येति चेन्न–चेतनाचेतनविलक्षणत्वेन परमात्मोपासने तयोरपि ध्यानविषयीकारो भवतीति तात्पर्यात् । प्रसिद्धश्चोपासनत्रैविध्यमपि । इन्द्रप्राणाधिकरणे च टीकायां 'भोक्ता भोग्यम्' इति वाक्यं गृहीत्वा त्रिविधोपासनं दर्शितम् । ब्रह्म भवतीति । त्रयं त्रिविधं ब्रह्म यदा विन्दते, एतत् तद्वेति वा । मुच्यते सर्वपाशैरिति पूर्वमन्त्रान्वयापेक्षयेदं युक्ततरम् । ९

उक्तमेव त्रयवेदनं विशदीक्रियते क्षरमिति मन्त्रेण । त्रयवेदनमित्यनेन ब्रह्मण इव प्रकृत्यादेरपि पार्थक्येन स्वातन्त्र्येण वेदनं मुक्तिहेतुरिति नोच्यते, किंतु प्रकृतिपुरुषविशिष्टत्वेन परमात्मवेदनमेव त्रयवेदनं नाम । तथा वेदनमपि न श्रवणादिमात्रम्, किंतु तत्त्वभानरूपं दर्शनसमानाकारपर्यवसन्नमित्युक्तं भवति । क्षरमक्षरञ्चेति प्रागुक्तक्षराक्षरविवरणं क्रियते क्षरमिति । अमृताक्षरमिति । प्रधानमपि कचिदक्षरमिति व्यपदिश्यते । क्षरणं चेतनाचेतनसाधारणम्; मरणं चेतन एव व्यवह्रियमाणं लोके । तद् द्वयं वस्तुगत्या चेतनस्य नास्तीति अमृताक्षरत्वमस्य । अमृतवत् स्वयमेव भोग्यम् अमृतभूत-

तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः

---

स अमृताक्षरम् । अमृतत्वात्=मरणधर्मशून्यत्वादक्षरमित्यर्थः । क्षरात्मानौ....एकः । क्षराक्षरशब्दितचेतनाचेतनयोरीशिता, 'अपहतपाप्मा दिव्यो देव एको नारायणः' इति निर्दिष्टो नारायण इत्यर्थः । तस्याभिध्यानादिति । अभिध्यानमारम्ब(म्भ)णसंशीलनम् । योजनं योगः । तत्त्वभावः तत्त्वाविर्भावः । एते अन्ते शरीरावसाने भूय समस्तप्रकृतिसंबन्धनिवृत्तिरित्यर्थः । तत्रश्च त्रय यदा विन्दते ब्रह्ममेतदिति मन्त्रोक्ता मुक्तिः ब्रह्मोपासनकालीनब्रह्मानुभवरूपेत्यर्थः । (१०)

---

परमात्मसंबन्धि च सदपि इदमक्षरं हन्त क्षुद्रमन्यद् भोगाय हरतीति चानुद्योच्यते । अत्र हर इत्यस्य रुद्रपरतया देव एक इत्यत्र नान्वयः । व्यवहितत्वात् अमृताक्षरशब्दस्यैकस्योद्देश्यविधेयोभयासमर्पकत्वाच्चेति (१३-२) तात्पर्यचन्द्रिकायामुक्तम् । अभिध्यानादिपदानामर्थः श्रमसाधिकरणटीकायामुक्त एव । आरम्भणसंशीलनमिति पाठेऽपि आलम्बनसंशीलनमित्येवार्थः । आरभ्यते (रलयोरभेदात्) आलम्ब्यते स्पृश्यत इति आरम्भणमालम्बनम् । योगाद् व्युत्थितस्यापि अनवरतं चित्तालम्बनभूतध्येयवस्तुपरिशीलनं योगकाले अविच्छिन्नानुसंधाने उपयुज्यते । तत्त्वाविर्भावो नाम दर्शनसमानाकारं ज्ञानम् । तत्त्वे भावः अवस्था तत्त्वभाव इत्यर्थेन भक्तिरूपापन्नमपि गम्येत । अत्र पञ्चम्यन्तत्रयोक्तेषु पूर्वपूर्वस्योत्तरोत्तरहेतुत्वमस्ति । एवम्भूतज्ञानात् प्रथमं मायानिवृत्तिः ; भूयश्च अन्ते—शरीरावसाने अन्तिमप्रत्ययकाले तत एव दर्शनात्मकध्यानात् अन्या मायानिवृत्तिरिति । अयमर्थः उत्तरमन्त्रे स्पष्टं भाविष्यते । संभवत्सर्वविधफलप्रतिपादकत्वात् तस्य । (१०)

ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥११॥

---

ज्ञानसाध्यमुक्तिक्रमं दर्शयति ज्ञात्वेति । दर्शनसमानाकारज्ञानेन विषयीकृत्य सर्वपाशशब्दितपापहानिर्भवति । "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति सूत्रे दर्शनसमानाकारज्ञानारम्भसमये पूर्वोत्तरपुण्यापुण्यकर्मणाम्, 'उपासनावसाने क्षमिष्ये' इति भगवत्संकल्परूपाश्लेषविनाशौ भवत इत्युक्ते । क्षीणैः क्लेशप्रापकशरीरेन्द्रियादिभिः सह जन्ममृत्युप्रापककर्मणाम्, 'क्षान्तम्' इति संकल्परूपा प्रकृष्टा हानिर्भवति । "साम्पराये तर्तव्याभावात्—"इत्यत्र सकलपुण्यापुण्यकर्मणां पूर्वं दर्शनसमानाकारज्ञानारम्भसमये, क्षमिष्य इति भगवत्संकल्परूपाश्लेषविनाशवत्ता क्षान्तमिति संकल्परूपप्रकृष्टहान्यभ्युपगमात् । तस्याभिध्यानपरमफलीभूतमपहतपाप्मत्वादिलक्षणं विश्वातिशायि तृतीयमैश्वर्यं तु

---

ज्ञात्वेति ज्ञानं पूर्वोक्तः तत्त्वभावः । हानिः हानं पुरुषक्रिया । 'तत् सुकृतदुष्कृते धूनुते' इतिवत् । तस्याः ज्ञानसमानकर्तृकत्वात् क्त्वाप्रत्यय उपपद्यते । देहभेदे–देहविशेषे । 'अत्र ब्रह्म समश्नुत' इति श्रुत्या सोऽश्नुते सर्वान् कामानिहैवेति न मन्तव्यमित्युपदिश्यते केवल आप्तकाम इति । केवलोद्देशेन आप्तकामत्वविधायकं पृथग्वाक्यमिदम् ।

अत्र मन्त्रेऽयमर्थः स्वरसतः प्रतीयते—पूर्वोक्तात् दर्शनसमानाकारध्यानात् सर्वपापहानौ तत्साध्यानां क्लेशानां क्षीणत्वादननुभाव्यत्वात् तदर्थजननमरणरूपबन्धहीनो भवति पुरुषः । प्रहाणिरित्यत्र प्रशब्देन प्रलयकालिकजन्ममृत्युहानिविलक्षणं पुनर्जन्मादिप्रागभावासमानकालिकत्वविशिष्टं जन्ममृत्युहानं ज्ञाप्यते । तदयं परमजन्मजरणादिवर्जितत्वात् केवल एव । अथाप्यस्य विद्वदात्मक-

एतत् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् ।
भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ १२ ॥

---

प्राकृतदेहभिन्नशुद्धसत्त्वमयदेहभेदे भवति । केवलः प्रकृतिसंबन्ध विनिर्मुक्त एव देशविशेषविशिष्टं ब्रह्म प्राप्य आप्तकामो भवति ; न तु प्रकृतिमण्डले इति भाव । (११)

एतत् ज्ञेयं....किञ्चित् । एवम्भूतं परं ब्रह्म आत्मन्यन्तर्या-

---

ब्रह्मसायुज्यरूपं भोगसाम्यमप्राकृतदेहप्राप्त्या परमपदे भगवत्पद्-पद्मसंश्रयसमनन्तरमेव । देहवियोगकाल एव प्राकृतभोगहेतुसर्व-कर्मक्षयेऽपि 'स्यात् धीसंकोचमात्रस्थितिरिह तदनुगतः सूक्ष्मसंस्कार-योगः' । तद्ब्रह्मरूपे तस्मिन् सायुज्ये सति पुरुषोऽयं सत्यकामः सत्य-संकल्पश्चाप्तकामो भवति । एवञ्चेमं तृतीयं विश्वैश्वर्यरूपं विशेषम-विदुषामयथाभूतवेदान्तिनां केवले केवलभावे निःश्रेयसविश्रमणं न श्रेय इति । तथाच ब्रह्मवेदनपर्यंक्रमः पूर्वमन्त्रोक्तः ; तत्फलपर्यंक्रम इह विशदमुच्यते, यत् 'भूयश्चान्ते' इति प्राक् संगृहीतमिति । सर्वमिदं भाष्यसंमतमेव । परंतु पूर्वार्धे पापहानावुक्तायां तत्कार्यहानेरर्थ-सिद्धत्वात्, 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तद-नन्तरापायादपवर्गः' इति रीत्या कार्यपरम्पराकथनस्य प्रकृते व्यर्थत्वात् पापहानस्य ध्यानप्रारम्भ-अवसानदशाभेदेन स्थितं द्वैविध्यं युक्तमिह वक्तुमिति तथा भाषितम् । (११)

विश्वैश्वर्यमित्युक्त्या स्यात् जगद्व्यापारादिरूपमैश्वर्यमप्यस्य । तथाच सर्वप्रकारं परमं साम्यमिति वा परमात्मैक्यं वा न मन्तव्य-मित्युपदिश्यते एतदित्यादिना । नित्यमेवात्मसंस्थमिति । जीवात्मनो देवात्मनश्च शरीरात्मभावरूपः संबन्धोऽनपायः । अतोऽयं तदाऽपि तदधीन एवेति नास्य तदैक्यं तदत्यन्तसर्वप्रकारसाम्यं चेति भावः

मितया संस्थितं ज्ञेयम् । ज्ञातवतश्च ज्ञातव्यान्तरं नावशिष्यते । भोक्ता .. ब्रह्ममेतत् । 'भोक्तृशरीरकत्वं भोग्यशरीरकत्वमपहतपाप्मत्वादिविशिष्टसत्यज्ञानादिलक्षणत्वमिति विधात्रयविशिष्टं ब्रह्म ज्ञातव्यम्' इति वेदार्थसंग्रहे वर्णितम्। केचित्तु, 'भोक्ता भोग्यं प्रेरितेत्येतत् त्रिविधं प्रोक्तमेतत् सर्वं मत्वा ब्रह्म भवति=मुक्तो भवतीत्यर्थः । इत्युपसंहार'

---

एवञ्च विश्वैश्वर्यं नाम भाष्योक्तरीत्या विश्वातिशायि प्राकृतपुरुषातिशायितमैश्वर्यम्, यद्वा विश्वं—समस्तम् जीवेन यावत् संपादयितुं शक्यम्, तावदैश्वर्यमित्यस्तु । नन्वियं सगुणावस्था । निर्गुणावस्थायां तु स्यादैक्यमित्यपि नेति ज्ञाप्यते, नातः परं वेदितव्यं हि किञ्चिदिति । एवञ्च अचेतनशरीरकत्ववत् चेतनशरीरकत्वमपि ब्रह्मणः सार्वकालिकमिति प्रदर्शनपूर्वं निगम्यते भोक्तेत्यादिना । वेदार्थसंग्रह इति । तत्रेय सूक्तिः, "एवम्भूतभोक्तृभोग्ययोरन्तर्यामिरूपेणावस्थानम्, स्वरूपेण चापरिमितगुणौघाश्रयत्वेनावस्थानमिति परस्य ब्रह्मणः त्रिविधावस्थानं ज्ञातव्यमित्यर्थः" इति । केचिदिति । ननु मत्वेत्यस्य मन्तव्यं=ज्ञातव्यमित्यर्थाश्रयणायोगात्, 'ब्रह्ममेतत्' इति पूर्वत्र, 'ब्रह्म भवति' इति टीकाया व्याख्यातत्वाच्च तथैवेहापि ब्रह्ममेतदित्यस्य व्याख्यानसम्भवात् वेदार्थसंग्रहस्यापि कैश्चिदुदित एवार्थ तात्पर्यं किं न स्यात्, अतः पक्षान्तरतया निर्देशः कुत इति चेत्—उच्यते— वेदार्थसंग्रहव्याख्यायां तात्पर्यदीपिकायामत्र सन्दर्भे, 'सद्वारकप्रकारद्वयमद्वारकमेकम् आकारश्चेति ब्रह्म त्रिविधम्—तत्तदन्तर्यामितयावस्थानं स्वरूपेणावस्थानं चेति त्रिविधम्' इत्येतावन्मात्रोक्तावपि पूर्वत्र, "भोक्तृभोग्यनियन्तॄन् ज्ञात्वा त्रिविधमेतद्

वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्य तद्वोभयं वै प्रणवेन देहे ॥ १३ ॥
आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ॥ १४ ॥

---

न त्वप्रत्ता अपहृताईत्याह वह्नेरिति । **योनिगतस्य** कारणभूता रणिगतस्य **मूर्तिः** स्वरूपं प्रत्यक्षेण न दृश्यते । लिङ्गं तु दृश्यते । पश्चात् मथने सतीन्धनयोनितयेन्धनप्रभवतया गृह्यते । तद्वत् प्रणवेन परमात्म शरीरभूते जीवे शोध्यमाने पूर्वमप्रतीतस्यान्तर्यामिणः सूक्ष्मत्वाद्धला न्तर्गतमाणिक्यवत् प्रत्यगात्मस्वान्तर्गतस्योपलब्धिर्भवतीत्यर्थः । **तद्वोभय**मित्यत्र वाशब्द इवार्थः । (१३)

प्रणवेन प्रकाशनप्रकारमेव दर्शयति आत्मानमिति । स्वात्मनि प्रणवेन ध्यायमाने तदन्तर्गत आत्मा निगूढवत् स्थितः प्रकाशत इत्यर्थः । (१४)

---

ध्याने मन्त्रः प्रदर्श्यते वह्नेरिति । लिङ्गनाशः लिङ्गानुपलम्भः । णश अदर्शने इति हि धातुः । स भूय एवेति । भूयः पश्चात् । स एव साक्षात् वह्निरेवेत्यर्थः । उभयम् देवात्मा तच्चिह्नञ्चेति द्वयम् । तदभिव्यक्तिप्राचीनानि च चिह्नानि अनन्तराध्याये नीहारधूमेति मन्त्रेण गणयिष्यन्ते । पाञ्चभौतिकस्य देहस्य प्रणवार्थत्वाभावेन उत्तरारणि स्थानापन्नप्रणवमथ्यमानत्वायोगात् देहशब्दः परमात्मशरीरभूतजीवात्मपरः । उत्तरारणिर्नाम उपरितनमरणिभूतं मन्थनकाष्ठम् ।

निगूढवदित्यस्य निगूढाग्निवत् इत्यर्थः अरणिनिदर्शनबलात्, 'पश्येत् ब्रह्माग्निगूढवत्' इति ध्यानबिन्दूपनिषद्दृष्टप्रकृतजातीयमन्त्रचतुर्थपादलक्ष्यं ज्ञायते । अन्यानि च निगूढानि अनन्तरमन्त्रेण दर्श्यन्ते । प्रणवेन मथनञ्च विहितप्रतिषिद्धाचरणानाचरणपूर्वक

तिलेषु तैलं दधनीव सर्पिः आपः स्रोतस्स्वरणीषु चाग्निः ।
एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥ १५ ॥
सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्मविद्यातपोमूलं तत् ब्रह्मोपनिषत्परम् तद्ब्रह्मोपनिषत्परम् ॥ १६ ॥
इति श्वेताश्वतरोपनिषदि प्रथमोऽध्यायः ॥

---

तदेव प्रपञ्चयति तिलेषु ...पश्यति । यथा तिलादिस्थि-तैलादिकं यन्त्रपीडनाद्युपायेन गृह्यते, एवं सत्यतपोलक्षणोपायेन परमात्मा गृह्यत इत्यर्थः । (१५)

सर्वव्यापिनमिति । क्षीरार्पितसर्पिस्समतया सर्वव्याप्तमात्मानं मत्प्राप्त्यात्मविद्यया तपसा च ज्ञेयमुपनिषदा परं प्रतिपाद्य तत् परं ब्रह्म विद्यादित्यर्थः । द्विर्वचनमादरार्थमध्यायसमाप्तिद्योतनार्थं च । (१६)

इति प्रथमाध्यायप्रकाशिका ॥

---

मित्युच्यते सत्येनेत्यादिना । सत्यं यमान्तर्भूतम्, तपो नियमान्तर्गतम् । एवं सत्य सामान्यधर्मः, तपो विशेषधर्मः ।

सर्वव्यापिनम् अन्तर्बहिश्च व्याप्तम् अपापात्मनि तद्धर्मभूतज्ञानविकासे च कार्त्स्न्येन व्याप्तम् । गुरुमुखगृहीतस्वाध्यायादिकमिति सूच्यते उपनिषत्परमिति । अत्र पूर्वमन्त्रे अनुपश्यतीत्यनेनान्वयः सुवचः । पूर्वार्धमात्रस्य वा तथाऽन्वयं कृत्वा उत्तरार्धं प्रथमान्तपदात्मकं पृथग्वाक्यमित्यपि सुवचम्—अथापि मन्त्रभेदाद् वाक्यभेदो युक्त इति विद्यादिति पदाध्याहारः ।

द्विर्वचनमिति । अत्र न प्रत्यध्यायं द्विर्वचनं श्रूयते । अध्यायसमाप्तिद्योतनार्थत्वे तदावश्यकमिति चेत्—आदरार्थमित्यस्तु । आदरश्च प्रथमाध्यायोक्तस्यैवार्थस्य विवरणमनन्तराध्यायैः क्रियत इति अस्य सर्वसमासरूपत्वादिति भाव्यम् ।

॥ अथ द्वितीयोऽध्यायः ॥

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः ।
अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥

---

आत्मसंस्थपरमात्मप्रतीत्यौपयिकेन्द्रियनिग्रहरूपतपःसिद्ध्यनुगुणं भगवत्प्रार्थनामन्त्रमाह युञ्जान इति । धियः सविता प्रेरकः परमात्मा पृथिव्याः अधि ऊर्ध्वमग्निं ज्योतिः अग्निरूपं ज्योतिः निचाय्य संपूज्य अग्निहोत्रादिकर्म (त्रिर्क) कृत्वा मनः तत्त्वाय साक्षात्काराय पृथिवीनिष्ठाग्निज्योतिस्सदृशस्वात्मनिष्ठपरमात्मतत्त्वसाक्षात्काराय युञ्जानो नियुञ्जानः आभवत् भवत्वित्यर्थः । [तत्त्वसाक्षात्काराय परमात्मनि मनो नियुञ्जानो भवत्वित्यर्थ ] (१)

---

ध्याननिर्मथनाभ्यासं प्रागुक्तमधिकृत्य वक्तुं द्वितीयाध्यायस्यारम्भः । अत्र धीपदसवितृपदादेरभ्यसनात्, 'तदक्षरं तत् सवितुर्वरेण्य'मिति वक्ष्यमाणरीत्या गायत्रीमन्त्रस्यानुसंधापनं कृतं भवति । तेन संध्योपासनादेर्योगापयोगितया आवश्यकत्वं सूच्यते, "वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः" इति च श्रीविष्णुपुराणम् ।

संपूज्येति । अस्य परमात्मकर्तृकत्वबाधात् साक्षात्कारायेति जीवात्मकर्तृकक्रियायामन्वयः कार्यः । एवञ्च मूले निचाय्येति तत्त्वायेत्यत्रान्वेतीति वक्तव्यम् । न च तत्त्वपदं क्रियावाचि । तत् कथं क्रियानन्वये ल्यप् इति चेन्न—साक्षात्कारायेति क्रियार्थस्योक्तत्वात् । अथवा निचाय्य साक्षात्कार्येति तत्त्वायेत्यध्याहारेण योजना । यद्वा निचाय्येत्यस्य संकल्प्य, प्रदर्श्येत्येवमर्थोऽस्तु । तच्च परमात्मकर्तृकमेवेति । अग्निज्योतिरित्यग्निहोत्रोपस्तापनेन, 'अरणिप्रभृतिनिष्ठाग्नितुल्यतया प्राग्दर्शितस्वात्मनिष्ठपरमात्मज्योतिर्ग्रहणोपयोगित्वमस्या-

युक्तेन मनसा वय देवस्य सवितु सवे ।
सुवर्गेयाय शक्त्या ॥ २ ॥
युक्त्वाय मनसा देवान् सुवर्यतो धिया दिवम् ।
बृहज्ज्योति करिष्यत सविता प्रसुवाति तान् ॥ ३ ॥

युक्तेनेति । सवितुः प्रेरकस्य परमात्मन सवे अनुज्ञाया सत्याम्—अनुज्ञयेति यावत्—युक्तेन मनसा आत्मप्रवणेन चेतसा युक्ता वय सुवर्गेयाय स्वर्गशब्दितभगवल्लोकसाधनाय परमात्मनिदिध्यासनाख्य-कर्मणे शक्त्या युक्ता भवेमेत्यर्थ । (२)

'परमात्मा प्रणिपातमात्रेण कथमनुज्ञा प्रयच्छेत्' इत्याशङ्क्य भगवदन्तरङ्गभूतविष्वक्सेनाद्याचार्यप्रणामपूर्वक भगवत्प्रातौ वर्तमानाना मनुज्ञा प्रयच्छतीत्याह युक्त्वायेति । सुव स्वर्ग लोक भगवल्लोक यतः गतान् देवान् पूर्वाचार्यान् मनसा युक्त्वाय— छन्दसि, 'क्त्वो यक्' इति यक् । मनसा युक्त्वाय—प्रणम्येति यावत्—दिव द्योतमान निरतिशयबृहत्त्वयुक्त परमात्मरूप ज्योति धिया उपासनरूपज्ञानेन करिष्यतः विषयीकरिष्यत -ध्यातु प्रवृत्तानिति यावत्—तान् मुमुक्षून् सविता प्रेरक परमात्मा प्रसुवाति अनुजानातीत्यर्थ । [इति वय मन्यामहे इति शेष ] । (३)

परम त्मनि मनोयोग तत्समाराधन (तत्साधन) कर्म च, केषा-

---

ग्निहोत्रस्य युक्त मिति सूच्यत इत्याशयेन सदगेत्यन्तविशेषणम् ।
क्त्वो यक इति । यक आगम जात् क्त्वाप्रत्ययान्ते तन्निवेशात् युक्त्वायेति रूपम् । अस्य करिष्यत इति द्वितीयाबहुवचनेनान्वय ।
योगिनामपि सर्वेषा भगवद्दत्तेनान्तरात्मना तत्परिचर्यैकपरस्य

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चित ।
वि होत्रा दधे वयुनाविदेक इन्महीदेवस्य सवितु परिष्टुति ॥ ४ ॥
युजे वा ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरे ।

धि(त युगप)देव भवतीत्याह युञ्जत इति । 'विप्रो विप्रत्व गच्छते तत्त्वदर्शी' इत्युक्तरीत्या विप्राः तत्त्वदर्शिन परमात्मनि मन नियुञ्जते योजयन्ति । धियः ध्यानानि च योजयन्ति । विप्रस्य—प्रा पूरणे—पूर्णस्य, बृहतः गुणै बृहत्त्वाश्रयस्य विपश्चितः सर्वज्ञस्य महीदेवस्य मह्या भूम्या समेतस्य देवस्य श्रीभूमिसमेतस्य सवितुः प्रेरकस्य वयुनावित् वयुन ज्ञानम्—वयुनाविदिति छान्दसो दीर्घ—तस्य सार्वज्ञ्यादिमहिमविदित्यर्थ । तदाश्रय एक इत् एक एव परिष्टुतिः—परिष्टुतीरित्यर्थ—छान्दस ह्रस्वत्वम् । (परिचर्येति ?) परिचर्या इति यावत्—होत्रा ऋत्विग्भि, मन्त्रेणेति वाऽर्थ विदधे कृतवा नित्यर्थ । [तदाश्रयब्रह्ममहिमवित्त्वमेव भगवत्परिचरणमिति] ब्रह्मस्वरूपविदेव तत्परिचर्याकारी, तेन कृतमेव (ब्रह्मस्वरूपवित्परिचर्या एव सत्परिचर्या । तया कृतमेव) भगवत्परिचरण भगवत्प्रीणन भवतीत्यर्थं ।
युजे वामिति । दिव्यस्थानस्थिता सर्वे ब्रह्मपुत्रा मत्प्रार्थना

दौर्लभ्य प्रदर्श्यते युञ्जत इति । देवशब्दस्य पतिपर्यायत्वाभावात् मह्या समेतो देव महीदेव इति मध्यमपदलोपी समास । अत्र महीति पृथक्पद मत्वा, परिष्टुतिरित्यत्रापि छान्दस दीर्घमप्रकल्प्य, मही भूमि , तत्स्थ सर्वोऽपि देवस्य परिष्टुति विभूति स्तवकरणार्हति वा, देवस्य परिष्टुति स्तुति मही महतीति वाऽर्थो भाव्येत । परतु तदा वाक्यभेद सोढव्य । तदा विदध इत्यत्र किञ्चित् कर्माप्यध्याहार्यम् । होत्रा -होमादिक्रिया इति कमति केचित् ।

शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥५॥
अग्निर्यत्राभिमथ्यते वायुर्यत्राधिरुध्यते ।
सोमो यत्रातिरिच्यते तत्र सजायते मन ॥ ६ ॥
सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्यम् ।

---

शृण्वन्तु । सूरेः नित्यसूरिकर्तृका, स्तुतिपथादनपेतत्वेन पथ्या स्तुति । वां पूर्व्यं च पूर्वमित्यर्थ । वचनव्यत्ययश्छान्दस । सा(स) तादृश ब्रह्म यथा प्राप्नोति, एवं युजे योगाय—ब्रह्मप्राप्तये इति यावत्—मया कृत विश्लोकः विविध श्लोक श्लोकरूप एतु प्राप्नोतु । नित्य सूरिकृता स्तुति यथा भगवानङ्गीकरोति, एवमङ्गीकरोत्वित्यर्थ । ततश्च योगप्रवृत्ते प्राक् भगवत्स्तुति कर्तव्येत्युक्त भवति ।

योगमारभमाणस्य शीतोष्णदेश परिहर्तव्य इत्याह अग्निरिति । अभिमथ्यते अभितो निवार्यते । अधिरुध्यते आधिक्येन रुध्यते । वायुर्यत्र न वातीत्यर्थ । सोमशब्देन हिम लक्ष्यते । अतिशयेन रिच्यते निरस्यते । तत्र मन सम्यक्प्रवण जायत इत्यर्थ । (६)

सवित्रेति । एव गुरुप्रणामभगवत्स्तुतिप्रसवेन सवित्रा कृतेन प्रसवेन अनुज्ञया—तदनुज्ञातस्सन्निति यावत्—पूर्व्यं पूर्वपुरुष (श्रेष्ठ) ब्रह्म

---

य पूर्वमिति । पुत्रभूतयु मदपेक्षया पूर्वभूतमित्यर्थ । नित्य-सूरिपक्षया ब्रह्मण पूर्वत्व तेषा पुत्र न्न्व तेषा तदनुत्पन्नत्वेऽपि तदधीनस्वरूपस्थितिप्रवृत्तिमत्त्वात् । नमोभि प्रणामे सहेत्यर्थ । विश्लोक एतु पथ्येव सूरे । असमर्थकर्तृकत्वादपथ्योऽपि श्लोक सूरिकर्तृकपथ्यस्तुतिवदङ्गीकरणीय इति भैव्यानुसधानम् ।

देवपरिष्टुतिभूताया महा ध्यानोपयोगि स्थलमाह अग्निरिति ।

नीहारधूमार्कानिलानलानां खद्योतविद्युत्स्फटिकशशिनाम् ।
एतानि रूपाणि पुरस्सराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ ११ ॥
पृथ्व्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।

निश्चलत्वधर्मेण ध्यातृसाम्यव्यपदेशदर्शनात् ध्यातृनिश्चलत्वस्यापेक्षितत्वात् निश्चलत्वस्य च आसिकामन्तरेणासम्भवात् आसीन एव कुर्यात् । "स्मरन्ति च", 'उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' इति । "यत्रैकाग्रता तत्राविशेषात्" । 'समे शुचौ शर्करावह्निवालुकाविवर्जिते' इत्यविशेषेण एकाग्रतानुकूलदेशविशेषस्यैवाङ्गत्वकीर्तनात् तेनैव [च] न्यायेन एकाग्रतानुकूल्याऽऽस(साध)नस्यापेक्षितत्वमस्तीत्यत्रासीन इति स्थितम् । प्रकृतमनुसराम । (१०)

योगमभ्यस्यतो ब्रह्माभिव्यक्तिप्राचीनानि तच्चिह्नान्याह नीहारेति प्रथमं नीहारवत् स्फुरन्ति, ततो धूमार्कानिलाद्याकारतया स्फुरति । एवम्भूतानि स्फुरणानि पूर्वप्रवृत्तानि आगामिब्रह्माभिव्यक्तिचिह्नानीत्यर्थः ।

योगाभ्यासस्य कायसिद्धिफलकत्वमाह पृथ्वीति । गुणः गुणनमभ्यास । योगाभ्यासे प्रवृत्ते सति योगमहिम्ना सत्त्वप्रचुरभूतारब्धे

नीहारादिस्फूर्तिक्रमे उत्तरोत्तरं प्रसन्नतायस्ताश्मानतयोगतिशयस्थितिर्भाव्या ।

म्नायिकादिभेदेन पार्थिवादिप्रकारभेदेन च विचित्राणामाहाराणा सेवनेन प्राणायामयोगाभ्यासयत्नेन स्वाऽऽहारयत्नादपि कायस्य विचित्ररूपं परिणामं संपद्यते। इदं फलञ्च, योगसिद्धिचिह्नञ्च भवतीत्युच्यते पृथ्वीति । पञ्चात्मके देहे पृथिव्यादेर्देशेष्यपि योगाधीनो गुणातिशयो भवतीति ज्ञापनाय पृथ्व्यादीना विशिष्य निर्देशः ।

न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥ १२ ॥
लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवञ्च ।
गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥ १३ ॥
यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधान्त(क्त?)म् ।
तद्वात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥ १४ ॥

---

पाञ्चभौतिके शरीरे समुत्थिते तादृशसर्वरोगादिदाहसमर्थत्वेनाग्निरूपेण योगेनारब्धशरीरयुक्तस्य पुंसो रोगादिर्न सम्भवतीत्यर्थः । (१२)

लघुत्वमिति । स्पष्टोऽर्थः । (१३)

योगमभ्यस्यतो ब्रह्मोपलब्धिप्रकारं तत्फलञ्चाह यथैवेति । मृदा अयसा वा उपलिप्तः निर्मितः प्रतिमाविशेषः सुधाविशेषान्त (विशेषा-न्त्य (?)) रञ्जकद्रव्यलिप्तस्सन् तेजोमय(जोरूप)तया दीप्यते । तद्वत् सुधाविशेषलिप्ततेजोमय(जोविशेष)प्रतिमासम दर्शनसमानाकारध्यानेनोप-लभ्य कश्चित् पुरुषधौरेयो निवृत्तसंसारगन्धः सिद्धार्थो भवतीत्यर्थः । तद्वेत्यत्र वाशब्द इवार्थः । तद्वन् सतत्त्वं प्रसमीक्ष्येति पाठेऽप्यय-मेवार्थः । केचित्तु सुधान्तमिति मत्वा सुधौतमित्यर्थे (सुधातरित्यर्थे)

---

'सत्त्वं लघु प्रकाशकम्' इत्युक्तरीत्या सत्त्वातिशयो लघुत्वमित्या-दिना प्रदर्श्यते । उक्तेषु लघुत्वादिषु वातपित्तश्लेष्मधात्मनि शरीरे कतमस्य भूतस्य गुणप्रकर्षात् कतमद् भवतीत्यपि विमृश्यावधार्यम् ।

एवं सिद्धिमता योगमविच्छिन्नमभ्यस्यता प्रथमतः शुद्धं स्वात्म-तत्त्वं समीक्ष्यत इतीदं सदृष्टान्तमुच्यते यथैवेति । सुधान्तमित्यस्य सुधा अन्तो रञ्जकतया यस्य तदिति व्युत्पत्तिः । अनया भाष्यप्रती-तोऽर्थः—मृदादिनिर्मितं सुधया मसृणितं बिम्बं यथा तेजोमयं प्रकाशमानमस्तीति । सुधान्तमिति मत्वेति । अत्र भाष्यसंमतः पाठः

यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥१५॥

---

सुधान्तमिति शब्द इत्यपि वदन्ति । (१४)

यदाऽऽत्मेति । यदा योगयुक्तः परमात्मप्रतीत्युपायभूतेन प्रणवप्रतिपादितपरमात्मशेषभावेन प्रत्यगात्मना साधनेन (संबन्धेन) तत्स्थं अजम् अनादि ध्रुवम् अनन्तं विशुद्धं हेयप्रतिभटं सर्वतत्त्वैः-अस्त्रभूषाध्यायोक्तरीत्या सर्वतत्त्वात्मकास्त्रभूषणोपेतं परं ब्रह्म सूक्ष्मवस्त्रान्तरितमाणिक्यवत् पश्येत्, तदा सर्व [बन्धक] कर्महानिर्भवतीत्यर्थः । (१५)

---

क इति विमृश्यम् । इत्यपि वदन्तीति । शाङ्करभाष्यत्वेन प्रसिद्धे एवमुक्तमस्ति । तत्रोक्तो वाक्यार्थस्तावत्-विम्बं मृदा मलिनितं पश्चात् सुधौतं=क्षालितं चेत् तेजोमयं भ्राजेत, तथा परमात्मा समीक्ष्यते इति । विम्बञ्च लोहादिकृतं ग्राह्यम् । तेजोमयमिति वा तैजससुवर्णादिमयार्थकमिति । विम्बं नाम आदर्श इत्यपि कश्चित् ।

नन्वस्मोत्तरमन्त्रे ब्रह्मतत्त्वातिरिक्तस्य आत्मतत्त्वस्य निर्देक्ष्यमाणत्वात् आत्मतत्त्वं प्रसमीक्ष्य इति तदीक्षणमेव वक्तुमुचितम्, न ब्रह्मतत्त्वेक्षणम् । एवञ्च जीवसाक्षात्कारानन्तरत्वात् परसाक्षात्कारस्य स वक्तव्य इहोक्तो भवति । तदिह सुवर्णादिना विम्बनिर्माणकालस्थितिमनुसृत्य दृष्टान्तः प्रदर्श्यते । विम्बनिर्माणार्थं प्रथमतः तत्तुल्याकृतिं निर्माय मृदा यथार्हं तामुपलिप्य अग्निना प्रताप्य मृदन्तर्गतं विम्बाकृतिद्रव्यं द्रवीकृत्यापसार्य तत्स्थाने द्रवीकृतं सुवर्णादि निषिच्य विम्बं क्रियते । तदा तस्यामवस्थायामन्तर्हितविम्बकं मार्त्तिकद्रव्यं यथा स्यात्, तथेदमन्तर्निगूढपरमात्मकमात्मतत्त्वमस्ति; तत् समीक्षेत इत्यर्थः स्यादिति चेत्—सत्यम् । आत्मतत्त्वमिति जीव एव गृह्यते । परंतु तथार्थवर्णने मृद एव जीवात्मदृष्टान्तत्वात् विम्बस्य परमात्म-

एष हि देव प्रदिशोऽनु सर्वा पूर्वो हि जात स उ गर्भ अन्त ।

तस्य सर्वात्मकत्व प्रपञ्चयति एष हीति । हे जना इति परस्पर

दृष्टान्तत्वात्, यथा बिम्ब भ्राजते, तथा आत्मतत्त्वमिति कथन न युज्यते । आत्मतत्त्वमित्यस्य जीवात्मसबन्धि तत्त्व परमात्मेत्यर्थे वर्णने वैरूप्यम् । अतो भाष्योक्त एवार्थ । सुधान्तमिति पद-प्रसिद्धार्थनिर्वाहाय भाष्ये शास्त्रार्थत्याग । सुधौतमित्यर्थसभवे तु सोऽप्यर्थो नोपेक्ष्य कर्मवेष्टित जीवतत्त्वम्, मृदाद्युपलिप्त बिम्ब शोधित यथा तेजोमयम्, तथा दीप्त स्यात् ध्यानकाले इत्युक्ते समञ्जसत्वात् । सुधातमित्यपि पठन्ति । वीतशोक इति । जीवात्मदर्शन पूर्वोक्तनानाभिव्यक्तितुल्य न भवति । अपितु उपाय भूतविशिष्टदर्शनान्तर्भावार्हमिति भाव । एव वीतशोकस्यापि सर्वपाशमोक्षस्तु देवदर्शनादेवेति स्पष्टमुक्तम् । 'तद्वत् सतत्त्वम्' इति पाठे तु परमात्मग्रहणमपि भवेत् । आत्मतत्त्वशब्दे सति ह्यर्थे वैरूप्यशङ्का । एवञ्च कृतार्थत्वादिक सुसमन्वितम् । अथाप्यस्य जीव-मात्रपरत्व युक्तम् ।

एव जीवात्मतत्त्वसाक्षात्कार उक्त । अथ ब्रह्मसाक्षात्कार उच्यते यदेति । तस्य परमित्युक्त्या मूले तत्त्वमित्येतत्स्थाने तत्त्वमिति पाठ ऊह्यते । अत एव विभक्त्य तस्येत्याह परमिति । विशुद्धमित्यस्य हेयप्रतिभटमित्यर्थ । सर्वतत्त्वैरिति इत्थम्भूतलक्षणे तृतीया । तदाह भूषणोपेतमिति । अस्त्रभूषणाध्यायो विष्णुपुराणे (१-२२) 'भूषणास्त्रस्वरूपस्थ यथेदमखिल जगत् । बिभर्ति भगवान् विष्णुस्तन्ममाख्यातुमर्हसि' इत्यारभ्य द्रष्टव्य । अनेन दिव्यमङ्गल विग्रहोपासनमपि व्यञ्जितम् ।

प्रदिश इति बहुव्रीहि । सर्वा इति स्त्रीलिङ्गानुसाराद्बहुव्री हिर्वा । प्रकृष्ट दिश प्रदिश । प्रकर्ष सर्वपदार्थोपाधित्वम् ।

यो देवो अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश।
य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ १७ ॥
इति श्वेताश्वतरोपनिषदि द्वितीयोऽध्यायः ॥

—:•:—

॥ अथ तृतीयोऽध्यायः ॥

य एको जालवानीशत ईशनीभिः सर्वांन् लोकानीशत ईशनीभिः।

अन्तर्यामितया सर्वात्मत्वम्; न तु स्वरूपेणेत्येतत् प्रदर्शयति यो देव इति। स्पष्टोऽर्थः ॥ (१७)

॥ इति द्वितीयाध्यायप्रकाशिका ॥

—:•:—

उक्तज्ञानस्य फलमाह य एक इति। 'अपहतपाप्मा दिव्यो देव' इति देवत्वेन श्रुतिप्रसिद्धः परमात्मा प्रकृतिशब्दितमायारूपवागुरा-युक्तस्सन् ईशनसमर्थाभिः ज्ञानबलक्रियाशक्तिभिः मायाजालगोचरान् प्राकृतांश्च (न्) लोकान् ईष्टे तदगोचरान् अप्राकृतांश्च लोकान् ईष्टे।

तत्र जीवपरम्; प्रतीच आत्मा प्रत्यगात्मेति आत्मपदं परं परमात्मपरमिति; सर्वार्थसिद्धौ जीवपरे(७)तत्प्रत्यक्पदग्रहणात्। इह तु प्रत्यगिति परमात्मपरमेवेति। वस्तुतो जीवं प्रति परस्य मुख्यप्रत्यक्त्वस्य दुर्वचत्वेऽपि अहमितिभासमानत्वरूपसामान्या-कारेण तद्विवक्षेह शरीरात्मभावव्यञ्जनायाऽऽहता श्रुताविति न कश्चिद् दोष इति। प्रत्यगित्यस्य, एवं सर्वप्रत्यक्छरीरक' इत्ये-वार्थवर्णनसंभवेऽपि ज्ञानिभिः परमात्मा अहमित्येव गृह्यत इति विशेषव्युत्पादनायैतद्विवक्षेति ॥

इति द्वितीयाध्याय भाष्यपरिष्कारः।

य एवैक उद्भवे संभवे च य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥
एको हि रुद्रो न द्वितीयाय तस्थु ■ इमान् लोकानीशत ईशनीभि ।

यश्च जगत उद्भवे उत्पत्तौ, समवे — समित्येकीकारे — स्थापरपर्याये एकीभावे च [य] ईष्टे, तज्ज्ञानं मोक्षसाधनमित्यर्थ । (१)

ननु 'य एतद्विदुरमृतास्ते भवन्ति' इति पूर्वमन्त्रे सर्वेनैकेश-नारायणज्ञानस्यैव मोक्षसाधनत्वमिति (नारायणस्यैव मोक्षसाधनज्ञान-विषयतया मोचकत्वमिति) यदुक्तम्, तदयुक्तम् । जगत्कारणत्वेन प्रसिद्धाना ज्ञानस्यैव मोक्षसाधनत्वमिति वक्तुमुचितत्वादित्याशङ्क्याह एको हीति । हे जना ! 'सर्वलोकानीशत ईशनीभि,' 'प्रत्यक् तिष्ठति' इति विदिष्ट विश्वा भुवनानि ससृज्य सृष्ट्वा अन्तकाले सम्चुकोच संहृतवान्, गोपाः गोप्ता रक्षिता च य, स एक एव रुद्रः — संसाररुज द्राव(द्रव) यतीति रुद्र — संसारमोचक इत्यर्थ । द्वितीयाय द्वितीयत्वाय सहायतया न केऽपि तस्थुः । सहायतया वा उपाया-

---

एवमणङ्केन योगेन आत्मतत्त्वसाक्षात्कारपूर्वक ब्रह्मतत्त्व-साक्षात्कारसंपादनप्रकारो दर्शित । अथ तृतीये तस्यैकस्यैव मोक्षप्रदत्व प्रतिपाद्यते । एत विदुरिति वक्तव्ये, एतद्विदुरिति नपुसक-प्रयोगात् उद्भवसम्भवनियमनकर्तुरैक्यस्थापने निर्भय व्यज्यते । एत-दित्यस्य एकयमित्यर्थ । (१)

नियमनरूपस्थितिकर्तृ उद्भवकर्तृ प्रलयकर्तृश्च अन्येषामस्य येऽन्नीय-तयोक्तमिति न मन्तव्यम् किं तु सर्वकर्तृत्वैकयमिति ज्ञाप्यते द्वितीय-मन्त्रे । तेन, कारणज्ञानस्य मोक्षहेतुत्वात् उन्मस्थ ध्वंसकारणानाञ्च त्रित्वात् त्रयोऽपि मोक्षप्रदा इति मतिर्व्युदस्यते । एको हि रुद्र इति । नात्र एकोद्देशेन रुद्रत्वविधि न द्वितीयाय तस्थुरिति अनेकत्व

यो देवो अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश ।
य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ १७ ॥

इति श्वेताश्वतरोपनिषदि द्वितीयोऽध्यायः ॥

—:※※:—

॥ अथ तृतीयोऽध्यायः ॥

य एको जालवानीशत ईशनीभिः सर्वान् लोकानीशत ईशनीभिः ।

---

अन्तर्यामितया सर्वात्मत्वम् ; न तु स्वरूपेणेत्येतत् प्रदर्शयति यो देव इति । स्पष्टोऽर्थः ॥ (१७)

॥ इति द्वितीयाध्यायप्रकाशिका ॥

—:-:—

उक्तज्ञानस्य फलमाह य एक इति । 'अपहतपाप्मा दिव्यो देवः' इति देवत्वेन श्रुतिप्रसिद्धः परमात्मा प्रकृतिशब्दितमायारूपवागुरा-युक्तस्सन् ईशनसमर्थाभिः ज्ञानबलक्रियाशक्तिभिः मायाजालगोचरान् प्राकृतांश्च (न्) लोकान् ईष्टे तदगोचरान् अप्राकृतांश्च लोकान् ईष्टे ।

---

तत्र जीवपरम् ; प्रतीच्च आत्मा प्रत्यगात्मेति आत्मपदं परं परमात्मपरमिति ; सर्वार्थसिद्धौ जीवपरे(७)तत्प्रत्यक्पदग्रहणात् । इह तु प्रत्यगिति परमात्मपरमेवेति । वस्तुतो जीवं प्रति परस्य मुख्यप्रत्यक्त्वस्य दुर्वचत्वेऽपि अहमितिभासमानत्वरूपसामान्याकारेण तद्विवक्षेह शरीरात्मभावव्यञ्जनायाऽऽदृता श्रुताविति न कश्चिद् दोष इति । प्रत्यगित्यस्य, एवं सर्वप्रत्यक्छरीरक' इत्येयार्थवर्णनसंभवेऽपि ज्ञानिभिः परमात्मा अहमित्येव गृह्यत इति विशेषव्युत्पादनायैतद्विवक्षेति ॥

इति द्वितीयाध्याय भाष्यपरिष्कारः ।

य एवैक उद्भवे संभवे च य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥
एको हि रुद्रो न द्वितीयाय तस्थु य इमान् लोकानीशत ईशनीभि ।

यश्च जगत उद्भवे उत्पत्तौ, सभवे —समित्येकीकारे—स्थापरपर्याये एकीभावे च [य] ईष्टे, तज्ज्ञान मोक्षसाधनमित्यर्थ । (१)

ननु 'य एतद्विदुरमृतास्ते भवन्ति' इति पूर्वमन्त्रे सर्वलोकेश-नारायणज्ञानस्यैव मोक्षसाधनत्वमिति (नारायणस्यैव मोक्षसाधनज्ञान-विषयतया मोचकत्वमिति) यदुक्तम्, तदयुक्तम् । जगत्कारणत्वेन प्रसिद्धाना ज्ञानस्यैव मोक्षसाधनत्वमिति वक्तुमुचितत्वादित्याशङ्क्याह **एको** हीति । हे जना ! 'सर्वलोकानीशत ईशनीभि ,' 'प्रत्यक् तिष्ठति' इति विर्दिष्ट **विश्वा भुवनानि** ससृज्य सृष्ट्वा अन्तकाले सञ्चुकोच संहृतवान्, **गोपाः** गोप्ता रक्षिता च य, स एक एव रुद्र।— ससाररुज द्राव(द्रव) यतीति रुद्र —ससारमोचक इत्यर्थ । **द्वितीयाय** द्वितीयत्वाय सहायतया न केऽपि तस्थु । सहायतया वा उपाया-

एवमग्रहेत योगेन आत्मतत्त्वसाक्षात्कारपूर्वक ब्रह्मतत्त्व-साक्षात्कारसपादनप्रकारो दर्शित । अथ तृतीये तस्येश्वरस्यैव मोक्षप्रदत्व प्रतिपाद्यते। एत विदुरिति वक्तव्ये, एतद्विदुरिति नपुसक-प्रयोगात् उद्भवसभवनियमनकर्तुरैक्यज्ञापने नैर्भर्य व्यज्यते । एत-दित्यस्य ऐक्यमित्यर्थ । (१)

नियमनरूपस्थितिकर्तु उद्भवकर्तु प्रलयकर्तुश्च प्रत्येकमैक्य वेदनीय-तयोक्तमिति न मन्तव्यम् किं तु सर्वकर्तुरैक्यमिति ज्ञाप्यते द्वितीय-मन्त्रे । तेन, कारणज्ञानस्य मोक्षहेतुत्वात् जन्मस्थेमप्रलयकारणानाञ्च त्रित्वात् त्रयोऽपि मोक्षप्रदा इति मतिर्व्युदस्यते। एको हि रुद्र इति। नात्र एकोद्देशेन रुद्रत्वविधि न द्वितीया —ऽस्थिति अनेनत्य-

प्रत्यङ् जनास्तिष्ठति संचुकोचान्तकाले संसृज्य विश्वा भुवनानि गोपाः ॥ २ ॥

---

श्वरतया वा केऽपि न स्थितवन्तः । मोचकोऽन्यः कोऽपि नास्ति । 'वेदाहमेतं पुरुषं महान्तम्' इति महापुरुषं प्रस्तुत्य, 'तमेवं विद्वानमृत इह भवति ; नान्यः पन्था विद्यते' इति मार्गान्तरनिषेधात् । अत्र रुद्रशब्दो [यौगिकः ?] ; रूढ्यर्थापेक्षया प्रकृतौपयिकस्य मानान्तराविरुद्धस्य संसारमोचकत्वलक्षणयौगिकार्थस्य मनसि निष्परिवर्तमानस्य शारीरकापशूद्रन्यायेन बलवत्त्वात् । अस्याश्चोपनिषदो भगवत्परत्वस्य साधयिष्यमाणत्वाच्च नात्र चोद्यावकाशः । (२)

---

पक्षस्युदसनेन एकत्वविधानपरत्वस्य स्पष्टत्वात् । अतो रुद्रपदमुद्देश्यसमर्पकम् । उद्देश्यश्च प्रकृत एव भवति । न च रुद्राख्यदेवताविशेषः प्राक् कण्ठोक्तः । अतो रुद्रपदेन, पूर्वोक्तो य आकारः, तद्विशिष्टो वाच्यः । तत्र पूर्वमन्त्रोक्ताकारेषु ईशितृत्वोद्भवसंभवकर्तृत्वानामत्र द्वितीयादिपादैरनूद्यमानतया, 'य एतद्विदुरमृतास्ते भवन्ति' इत्युक्तो मोक्षप्रदत्वाकार एव दिश्यते । रुद्रशब्दश्च तत्प्रतिपादनौपयिकयोगशक्तिसंपन्न इति स एवार्थो ग्राह्य इत्याशयेनाह संसाररुजमित्यादि । प्रत्यङ् यथावस्थितस्वस्वरूपसाक्षात्कारवान् तिष्ठतीत्यर्थेन मायावश्यत्वाभावप्रापकत्वादिना आत्मानित्येतदनुवादत्वमपि संभवेत् । संचुकोचेति अणिजन्तप्रयोगेण स्वयं तस्य संकोचरूपलयाश्रयत्वावगमनात् ब्रह्मण उपादानत्वं दर्शितं भवति । भुवनानीत्यस्य संसृज्येत्यत्रेव अन्तकालेऽन्वये तु संहृतवानिति णिजर्थो ग्राह्यः । गोपाः इति च सृष्टिस्थितिलयानां सर्वेषां चेतनगोप्तृत्वरूपताज्ञापनार्थम् । तत् स्पष्टं दयाशतके । तदनेन मन्त्रेण सृष्टिस्थितिप्रलयकर्तुः मोक्षप्रदस्यैकत्वमुक्तम् । शारीरकापशूद्रेति । तत्र हि शूद्रशब्दस्य यौगिकत्वं प्रकरणादादृतम् । २

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥ ३ ॥
यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु ॥ ४ ॥

---

विश्वत इति । 'अनेकबाहूदरवक्त्रनेत्रम्' इत्युक्तरीत्या अनन्त नयनाननपाणिपादादियुक्तनित्य [निरवद्य?] दिव्यविग्रहयुक्त असहाय एव पृथिव्यादिसर्वप्रपञ्च [वि] निर्माता जीवान् बाहुभ्यां पतत्रशब्दिते पद्भिश्च संन (संध)मति-संयोजयति । करणकलेवरसंयोगं करोतीत्यर्थः । सर्वेषां शरीरेन्द्रियसंबन्धं कुर्वन् स्वयमनन्याधीनानन्तशरीरेन्द्रियवानित्यर्थः ।

परमात्मोपलब्धिप्रार्थनामन्त्रमाह यो देवानामिति । 'यान्येतानि देवत्रा क्षत्राणि, इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति बृहदारण्यकोक्तरीत्या इन्द्रवरुणरुद्रादीनामुद्भव ।

---

ननु महीमहीधरमहार्णवादीनां स्वर्गनरकाद्यनन्तलोकानाञ्च सृष्टिकर्ताऽप्येक इति दुरभ्युपगमनम्, अल्पेऽपि कार्येऽनेकपुरुषसाहाय्यकसव्यपेक्षताया एव सर्वत्र दृष्टेः । एवंसति का कथा सर्वेषां सृष्टौ स्थितौ संहारे चैकः कर्तेति इति शङ्काम्, एकस्यैव सर्वसृष्टिकार्यर्थिपरिकरसंपत्तिप्रदर्शनेन परिहर्तुं विश्वत इति मन्त्रः । बाहुभ्यां संयोजयतीति देवमनुष्यादिसृष्टिरुच्यते पतत्रैः संयोजयतीति तिर्यक्सृष्टिः । एवञ्च वाक्यद्वित्वात् क्रियापदावृत्तिरस्तीति ज्ञापनाय समित्युपसर्गस्य द्विः प्रयोगः । अथवा द्वितीयः समिति जनयन् इत्यनेन संबध्यते । तैत्तिरीयनारायणेऽपि एतदर्थो द्रष्टव्यः ।

एवं तावत् सर्वकारणस्यैकत्वं प्रतिबोध्य तस्य मोक्षप्रदत्वमुक्तम् । अथ मोक्षहेतुबुद्धिप्रदत्वमपि तस्यैवेति प्रार्थनामन्त्रमुखेन

उद्भवत्यस्मादिति प्रभवः । प्रकर्षेण भवत्यस्मादिति प्रभवः । प्रकर्षेण देवाधिपतित्वादिरूपेणास्य भवनं प्रभवनम् । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति कर्मफलदायित्वलक्षणप्रभुत्वस्य भगवद्धर्मत्वेन प्रजापतिपशुपतित्वादिपदप्रापकत्वलक्षणस्य प्रभवनस्य भगवदधीनत्वात् इति द्रष्टव्यम् । विश्वाधिकः । 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्युक्तरीत्या विश्वस्य सर्वस्यापि तदेकदेशैकदेशतया तस्य विश्वाधिकत्वम् । संसाररुजा द्रावकतया रुद्रत्वम् , निरतिशयसार्वज्ञ्यादि युक्ततया महर्षित्वञ्च भगवतो युज्यते । एवम्भूतो भगवान् , 'यस्याभिपद्माद्भवन्महात्मा प्रजापतिर्विश्वसृड्विश्वरूपः', 'तत्र ब्रह्मा चतुर्मुखोऽजायत', 'नारायणाद्ब्रह्माजायत' इत्युक्तरीत्या हिरण्यगर्भं सर्वेषां देवानां सृष्टेः प्राक् जनयामास । स देवः परमात्मविषयतया शुभया बुद्ध्या योजयत्वित्यर्थः । (४)

---

ज्ञाप्यते । सर्वकर्तृत्वेश्वरस्य प्रागवेदनात् सृष्टिमात्रकर्तृतया प्रसिद्धस्य हिरण्यगर्भस्य सर्वकर्तृत्वमेदायोगात्, हिरण्यगर्भं जनयित्वा तन्मुखेन देवानां जनकत्वात् सर्वकर्तृत्वमित्येव वक्तव्यमिति हिरण्यगर्भजनकत्वमप्याक्षिप्तमधस्तात् । एवं देवप्रभवत्वेन हिरण्यगर्भजनकत्वेन मोक्षप्रदत्वादिना च निर्दिष्टम्, अत एव विश्वाधिक इत्यादिनाऽनूद्य, तस्य शुभधीसम्बन्धकत्वमुच्यते । अत इहापि रुद्रपदमुद्देश्यकोटिनिविष्टत्वात् न रुद्रदेवतात्वविधायकम्, किं तु पूर्वोक्तार्थकं सत् हिरण्यगर्भजनकत्वेन प्रमाणान्तरप्रसिद्धदेवतापरम् । प्रकर्षेण भवतीति । भवनमिदं देवानाम् । भगवद्गतं तु प्रभवनमन्यदित्याह प्रकर्षेणेति । प्रभवनस्य भगवदधीनत्वमिति । फलप्रदत्वरूपप्रभवनस्य तत्क्रियारूपतया तदिच्छाजन्यतया तदधीनत्वम् । यद्वा पदप्रापकत्वेत्यस्य पदप्राप्त्येत्यर्थः । इदं प्रभवनं तत्तद्देवगतम् । (४)

या ते रुद्र ! शिवा तनूरघोरा पापकाशिनी ।
तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि ॥ ५ ॥
यामिषु गिरिशन्त हस्ते ! बिभर्ष्यस्तवे ।
शिवां गिरित्र ! तां कुरु मा हिंसीः पुरुषं जगत् ॥ ६ ॥

'अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे । तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥' इत्युक्तरीत्या सौम्यदिव्य मङ्गलविग्रहविशिष्टतया भगवत्प्रकाशप्रार्थनामन्त्रमाह या ते रुद्रेति । हे रुद्र संसाररुग्द्रावक ! प्रसिद्धरुद्रव्यावर्तनाय तं विशिनष्टि गिरिशन्तेति । गिरिशं तनोतीति गिरिशन्तः । रुद्रस्य स्रष्टेत्यर्थः [तव सबुद्धि ?] । या शिवा अघोरा च पापकाशिनी पापकमशितुं शीलमस्या इति पापका शिनी-पापदाहिका वैष्णवी सात्त्विकी तनुः, तादृश्या शन्तमया सुख प्रदया अत्यन्तानुकूलया तन्वा विग्रहेण अभिचाकशीहि प्रकाशस्वेत्यर्थः ।

यामिषुमिति । गिरित्र । गीः वेदान्तः । तया त्रायते पाल्यते प्रतिपाद्यते इति वेदान्तप्रतिपाद्यत्वं गिरित्रशब्दार्थः । गिरि शन्तेत्यस्य पूर्ववदर्थः । हे गिरित्र ! गिरिशन्त ! ते हस्ते शिवां यामिषुं बिभर्षि-यत् आयुधं बिभर्षीत्यर्थः । तामिषुम् अस्तवे— असु क्षेपे— मद्ब्रह्मज्ञानविरोधिक्षेपाय कुरु । मा हिंसीरिति जगत्-संसारपथचङ्क्रम्यमाणं

मोक्षहेतुभूता बुद्धिः शुभेण शुभाश्रयविग्रहविषयिणीभिः प्राप्यते या ते इति मन्त्रेण । (५)

दिव्यमङ्गलविग्रहस्येव दिव्यायुधादेरपि ध्येयत्वम्, तेन ध्यायिना दण्डनपरिहारेण परिपालनस्य कार्यस्य प्रार्थनामुखेन प्राप्यते यामिषुमिति । 'अस्तवे या बिभर्षि, तां शिवां कुरु' इत्यन्वयेऽपि न

तत पर ब्रह्म पर बृहन्त यथानिकाय सर्वभूतेषु गूढम् ।
विश्वस्यैक परिवेष्टितारमीश त ज्ञात्वा अमृता भवन्ति ॥ ७ ॥
वेदाहमेत पुरुष महान्तमादित्यवर्ण तमस परस्तात् ।
तमेव विदित्वाऽति मृत्युमेति नान्य पन्था विद्यतेऽयनाय ॥ ८ ॥

---

पुरुष मा हिंसीः ससारान्धकूपपतित मा कार्षीरित्यर्थ । (६)

ततः परमिति । उक्तप्रकारेण तत्प्रार्थनानन्तरम् बृहन्त निरतिशयबृहत्त्वाश्रयम्, अत एव परम्, यथानिकाय मशकमातङ्गादि शरीरानुरूप्येण सर्वभूतेषु अनुप्रविश्य अन्तर्यामितया वर्तमानम्, विश्वस्याप्य स्थित तमीश्वर ज्ञात्वा मुक्ता भवन्तीत्यर्थ । (७)

तज्ज्ञानस्य मोक्षसाधनत्वमुक्त्वा इतरस्य तन्निषेधति वेदाहमेतमिति । प्रकृते परस्तात् ज्योति महापुरुष (ज्योतिर्मयवपुष ?) तमेव पुरुष विदित्वा मृत्युशब्दित ससारमतिक्रामति । अयनाय तत्प्राप्तये अन्यो मार्गो नास्ति । एतमर्थमह वेद जानामि । अस्मिन्नर्थे विवादो नास्तीति मुनीना परस्पर वचनमिदम् । (८)

---

दोष । अथवा मन्यु शत्रून् राम इव, श्रिताहिंसनेन तद्विरोधिन क्षिपेति यावत् । (६)

एव प्रार्थनाया सत्या मोक्षार्थध्यान सपद्यत इति ज्ञाप्यते तत इति । गूढमिति अन्तर्व्याप्तिरुक्ता । परिवेष्टितारमिति बहिर्व्याप्ति । तत परमित्यस्य पूर्वश्लोकोक्तात् जगत परमित्यर्थ शाङ्करभाष्ये ॥ ७

एव ध्येयत्वेन कथित पर ब्रह्म कि किञ्चिद्देवतारूपम्, उतान्यादृशम् आद्ये का सा देवतेत्यत्राह वेदेति । एतम् एतावत् ध्येयत्वेनोक्तम् अह तम पारवर्त्यादित्यवर्णमहापुरुषत्वेन वेदेत्यर्थ । पुरुषसूक्तानुवादोऽयमिति स्पष्टम् । तत्र च पुरुष , 'ह्रीश्च ते लक्ष्मीश्च

न-ात्मज्ञानस्यैव, 'तरति शोकमात्मवित्' इति मोक्षहेतुत्व मुच्यते । कथमादित्यवर्णविग्रहपुरुषज्ञानस्येत्याशङ्क्य, अरैर पुरुषस्य

पत्न्यौ' इति लक्ष्मीपतित्वेन वेदित । पुरुषशब्दश्च तस्मिन्नेव प्रसिद्ध । तथा च स्कान्दे, 'यथा पुरुषशब्दोऽय वासुदेवे प्रतिष्ठित । तथा शङ्करशब्दोऽय महादेवे प्रतिष्ठित ॥' इति । मुनीना परस्परमिति एतद्व्याख्यान्तिममन्त्रानुसारेणोक्तम् । एव सृष्टिस्थितिसहारकारिणा ब्रह्मविष्णुरुद्राणा मध्ये विष्णो लक्ष्मीपत्ते पुरुषशब्दार्थस्यैव पर ब्रह्मत्व प्रतिबोध्य, 'चतुर्मुख एव वा रुद्र एव वा कुल्यनयेन पर ब्रह्म भवतु, त्रितयोत्तीर्णमन्यद् वा त्रितयहेतु । तथाच तस्यैतस्य कारणस्य ध्यानादस्तु मुक्ति' इत्याक्षेप क्षिपति तमेवेति । विष्णु-परब्रह्मणोरेवैक्यम्, नान्यथा । अत चेतनान्तर सर्वकारण न मन्तव्यम्, नापि मुक्तिप्रदम् । अतो वासुदेव एव परदेवतेति । अत्र तमेवेति तच्छब्दोपर्यैन एवकारश्रवणात् विदित्वैवेत्यश्रवणात् स एव पन्था नान्यश्चेतन इत्येव प्रतीयते । उक्तश्चेद निक्षेपरक्षायाम् । 'महापुरुषस्य वेदनमेव मोक्षसाधनम्' इति पराधिकरणभाष्यमप्यत एव महापुरुषस्यैव वेदनमित्येतदर्थपर्यवसायीति सुवचम् । पूर्वापर भाष्यसन्दर्भ टीका च तदैव सगच्छते । तावता वेदनातिरिक्तस्या नुपायत्वासिद्धिरिति तु न तमेव विद्वान् अमृत' इति एवकार-रहितपुरुषसूक्तवाक्ये तद्विलक्षणसम्भवात् । उभयोरेकार्थ्यौचित्येऽपि, 'स एनमविदितो न भुनक्ति (१४) इति बृहदारण्यकवाक्यादित तत्सिद्धे । एवमपि अत्र तज्ज्ञानस्य मोक्षसाधनत्वमुक्त्वा इतरस्य तत् निषेधतीत्यवतरणभाष्यमपि तदभिप्रायमेव ग्राह्यम् । यद्वा प्रकृतश्रुतावपि वेदनविषय ग्रतिशिष्टमहापुरुषान्यस्य पथित्वनिषेधे प्रकृतपुरुषव्यतिरिक्तस्यानुपाय वदन् वेदनातिरिच विशिष्टतया महा पुरुषस्याप्यनुपाय वाचमान् महापुरुषवेदनान्यस्यानुपायत्वसिद्धिर पीत्याशय इति । (८)

यस्मात् परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ९ ॥

व्यापकत्वादात्मत्वमपि तस्यैवेत्याह—यस्मादिति । "तथान्यप्रतिषेधात्" इति सूत्रे, "यस्मादपरं परं नास्ति केनापि प्रकारेण उत्कृष्टं नास्तीत्यर्थः" इति भाषितम् । व्यासार्यैश्च, "यस्मादित्यस्य परमित्यनेनान्वयोऽस्तु । यस्मादुत्कृष्टं नास्तीत्यर्थः" इत्याशङ्क्य, "तथा सति अपरमित्यस्य वैयर्थ्यप्रसङ्गात् । न च परश्चापरश्च नास्तीति उत्कृष्टापकृष्टवस्तुनिषेधकत्वं शक्यशङ्कम्—नञ आवृत्तिप्रसङ्गात् । अतो यस्मादित्यस्य अपरमित्यनेनैवान्वयः । यस्मादन्यत् सर्वोत्कृष्टं नास्तीत्यर्थाश्रयणे तदन्यस्योत्कृष्टस्य वस्तुन एवाभावात् समाभ्यधिकनिषेधः फलति" इति वर्णितम् । यदपेक्षया अतिशयेनान्तःप्रवेशयोग्यं वस्तु नास्ति, यस्माच्चाधिकं विवृद्धं किमपि वस्तु नास्ति, यश्चाप्राकृते लोके अवाप्तसमस्तकामतया ब्रह्मादिकमपि तृणीकृत्य वृक्ष इवाप्रणतस्वभावस्तिष्ठति, तेन, 'भगवानिति शब्दोऽयं

ननु तमःपारवर्तिन आदित्यवर्णविग्रहावच्छिन्नस्य पुरुषस्य तमोतन्तर्गतविश्वात्मकचिद्चिद्विशिष्टत्वायोगात् तस्य पूर्वोक्तब्रह्माभिन्नस्य देशविशेषस्थायि-परिच्छिन्नव्यक्तिविशेषस्योपासनादमृतत्वमिति कथमित्यत्र, पूर्वं महान्तमिति पदवेदितस्यातिसूक्ष्मत्वसर्वव्यापित्वे प्रदर्श्य, तदतिरिक्तं पूर्वोक्तं ब्रह्मेति मतिरपाक्रियते यस्मादिति । प्रपञ्चकारणस्य मोक्षस्थानाधिपतेश्चैकत्वे हि कारणस्य मोक्षप्रदत्वं सुस्थम् । अतः [illegible] एवायमिति भावः । पूर्णं पुरुषेण सर्वमिति पुरुषशब्दव्युत्पत्तिरपि दर्शिता । आदित्यवर्णविग्रहरूपपुरुषाकारत्वमपि तस्यैव । 'पूस्संज्ञे [illegible] पुरे तस्मिन् शयनात् पुरुषो हरिः' इति सर्वव्यष्टिशरीरनिर्विष्टतया, 'स यत् पूर्वोऽस्मात् सर्वस्मात्, सर्वान्

ततो यदुत्तरतरं तद्रूपमनामयम् ।
य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति ॥ १० ॥

---

तथा पुरुष इत्यपि । निरुपाधौ च वर्तेते वासुदेवे सनातने' इत्युक्तप्रकारेण पुरुषशब्दितेन भगवता वासुदेवेनेदं सर्वं व्याप्तमित्यर्थः । अनेन, 'जीवाम केन' इति चिन्ताया निस्तारो दर्शितः । पूर्णमिति व्याप्त्या आत्मत्वे कथिते, देहभूतस्य जीववर्गस्य तदधीनजीवनत्वमुक्तं भवति ॥९

यस्माद्धेतोः पुरुषापेक्षयोत्कृष्टं वा समं वा नास्ति । तस्मात् तदेव सर्वोत्तरं कर्मकृतरूपरहितं तत्कृतामयशब्दितदुःखशून्यञ्च । तज्ज्ञानमेव मोक्षसाधनमित्युपसंहरति ततो यदिति । "तथाऽन्यप्रतिषेधात्" इति सूत्रे, 'ततो यदुत्तरतरमिति पूर्वनिर्दिष्टात् पुरुषात् अधिकं वस्तु न प्रतिपाद्यते, इत्युक्त्वा तर्हि, 'ततो यदुत्तरतरम्' इति किमुच्यत इति परिचोद्य, "पूर्वत्र; 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनम् , नाऽन्योऽमृतत्वस्य पन्था इत्युपदिश्य, तदुपपादनाय, 'यस्मात् परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं

---

पाप्मनः औषत् तस्मात् पुरुषः' इति सर्वपूर्ववर्तित्व-सर्वपाप्मप्रदाहकत्वरूपकारणत्वमोक्षप्रदत्वशालितया च पुरुषत्वमपि तस्यैवेति । मन्त्रोऽयं मुण्डके, तैत्तिरीयेऽपि च । (९)

'ननु विग्रहपरिच्छिन्नत्वोक्त्या कर्मवेष्टितत्वावगमात् अन्य एव उपास्यः' इति शङ्काऽपि उक्तार्थपरिशीलने स्वयं शाम्यतीति दर्शयन् निगमयति तत इति । एवं मोक्षस्थानस्थितस्यैव सर्वव्यापितायाः द्यु-

पुरुषेण सर्वम्' इति पुरुषस्य परत्वं तद्व्यतिरिक्तस्य परत्वासंभवञ्च प्रतिपाद्य, 'ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति' इति पूर्वोक्तमर्थं हेतुतो निगमयति । यत् उत्तरतरं पुरुषतत्त्वम्, तदेवारूपमनामयं यत, ततो ये एतत् पुरुषतत्त्वं विदुः, त एवामृता भवन्ति ; अथेतरे दुःखमेवापियन्तीति' इति भाषितम् । अत्र ततश्शब्दः पूर्वोक्तहेतूपसंहारार्थः । न तु पूर्वप्रतिपादितपुरुषस्य प्रतिपिपादयिषितवस्त्वन्तरावधित्वप्रतिपादनपर इति द्रष्टव्यम् ।

केचिदाचार्याः, "तेनेदं पूर्णमिति पूर्ववाक्ये सर्वमिदमिति प्रथमान्तनिर्दिष्टतया प्रधानस्य जगत एव, ततो यदुत्तरतरमित्यत्र तच्छब्देन ग्रहणम्" इत्यूचुः । तदपि युक्तमिति वेदार्थसंग्रहव्याख्यानेऽप्युक्तम् ।

---

त्पादितत्वात् आदित्यवर्णत्ववर्णनेन कर्मकृतनिकर्षलेशस्याप्यभावस्य सुगमत्वात्, तत एव तदन्यस्य सर्वस्य कर्मकृतसामयशरीरपरिच्छिन्नतायाः अपि व्यञ्जनात्, यत् उत्तरत्वेन त्वदभिमतं ब्रह्मशिवादि, ततोऽप्युत्तरतरं तमःपारवर्ति तदरूपमनामयञ्च, अन्यत्तु सामयरूपमिति, तदुपासन एवामृतत्वम् ; तदन्यस्य कर्मतन्त्रस्य दुःखामयस्योपासने तु दुःखप्राप्तिरेवेत्यर्थः। सिद्धः अरूपमनामयमित्यस्य, 'कर्मकृतदेहतत्कृतदुःखविरोधि ; हेयप्रतिभटमित्यर्थः' इति पराधिकरणटीका। आमयस्यात्मसंबन्धित्वप्रसक्त्यभावात् इहाऽऽमयः दुःखमित्युक्तः । हेतुपरत्वे तत इत्यस्य पूर्वार्धेऽनन्वयादुत्तरार्धेऽन्वयः कृतः। एवं संदर्भानुसारात् तत इत्यस्य हेतुपरत्वं भाष्योक्तं सुस्थम् । अन्यदप्यप्रतिषिद्धमनुमतमाह केचिदिति । जगतः प्रथमान्तनिर्दिष्टत्वादव्यवहितत्वाच्च तच्छब्दस्य तत्परामर्शित्वस्य युक्तत्वं केश्चिदुक्तम् उपपन्नमिति

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवाँस्तस्मात् सर्वगतश्शिवः ॥ ११ ॥

---

ननु 'तेनेदं पूर्णं पुरुषेण सर्व'मिति सर्वशरीरसम्बन्धावगमात् तस्यापि हेयसंबन्धोऽवर्जनीय इत्याशङ्क्याह **सर्वाननेति** । सर्वशरीराणां तच्छरीरत्वेन सर्वाननशिरोग्रीवत्वम् ; सर्वभूतहृदयगुहाश्रयत्वात् सर्वभूतगुहाशयत्वम् । अनेनाऽऽकारेण सर्वव्याप्यपि यतो भगवान्, [तस्मात् ?] 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' इति हेयप्रतिभटत्ववाचिभगवच्छब्दार्थतया तस्य पुरुषस्य सर्वगतत्वेऽपि शिवत्वमेव, न त्वशुभसम्बन्ध इति भावः ।    (११)

---

तत्र स्वीकृतमिति । व्याख्यानेऽपीति अपिना हेतुपरमूलव्याख्यानपरेऽपि (वेद) अस्यार्थस्योक्तत्वात् मूले इदं प्रतिषेध्य न भवतीत्युपदर्श्यते । तदयमर्थः—उत्तरतरमित्यस्य अतिशयितोत्तरमित्यर्थात् जगदपेक्षयाऽतिशायितोत्तरत्वोक्त्या अनतिशयितमुत्तरं किञ्चिद्स्तीत्यवगमनात्, ब्रह्मरुद्रादेरपि जगदन्तर्भूततया, तत उत्तरमित्यनेन, 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इति प्रसिद्धनित्यमुक्तग्रहणम् । अतिशयितमुत्तरं तु परं ब्रह्म, स उत्तमः पुरुष इति । (१०)

ननु विग्रहवतोऽनामयत्वमसंभवीत्याशङ्कायाम्, 'तस्य विग्रहस्येव विश्वस्यैव तच्छरीरत्वाविशेषात् तद्विग्रहानङ्गीकारेऽप्याशङ्का जागर्ति । एवञ्च तत्परिहार एवैतत्परिहारोऽपि । तत्र चैवं परिहार इत्युच्यते सर्वाननेति । सर्वेषामाननशिरोग्रीवादयः अस्याप्याननशिरोग्रीवादयो भवन्ति । तत्र हेतुः जीवात्मन इवास्यापि तत्तद्भूतगुहाशयत्वम् । न केवलमेतत्, सूक्ष्मतया कार्यकारणसर्वव्यापितया आननादिरहितस्थावरादिशरीरकत्वमप्यस्ति । एवञ्च, "एको

यस्यास्ति देहः, स भवति विविधानन्त दुःखैकभोक्ता ; विश्वं देहः प्रभोश्चेत्, स कथमतिपतेत् विश्वदुःखानुभूतिम्" इत्यधिकरणसारावलिदर्शिता शङ्का उक्तमहापुरुषातिरिक्तपरब्रह्माङ्गीकारेऽपि भवत्येव। महापुरुषे त्वियं शङ्का न भवति। स हि भगवान्। भगवच्छब्दश्च हेयप्रतिभटे यौगिको रूढश्चेति विष्णुपुराणादौ व्यक्तम्,

'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः।

भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः।',

'तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः' इति।

प्रसिद्धश्च हेयप्रतिभटत्वमस्यान्तर्यामिश्रुतिषु, 'एष त आत्मा अन्तर्याम्यमृतः', 'एष आत्माऽपहतपाप्मा दिव्यो. देव एको नारायणः' इति। दिव्य इति विग्रहवैशिष्ट्यं प्रदर्शयन्त्येव श्रुतिरियमपहतपाप्मत्वमुपदिशति। अतएवोक्तम्, 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः' इति। अतो नारायणाद् भगवतोऽतिरिक्तस्य सर्वदेहित्वे स दोषः स्यात्। अयं तु सर्वव्यापी भगवान्। अस्य तु सर्वगतत्वेऽपि शिवत्वमेव = मङ्गलत्वमेवेति। भगवच्छब्दो विष्णावेव मुख्य इति श्रीमतो रामायणादपि ज्ञायते। आह हुत्तरां दिशं प्रति प्रस्थाप्यमानान् प्लवङ्गमान् प्रति सोमगिरिदेशं प्रस्तुत्य सुग्रीवः, 'भगवानपि विश्वात्मा, शम्भुरेकादशात्मकः। ब्रह्मा वसति देवेशो ब्रह्मर्षिपरिवारितः' इति। एकादशात्मकशम्भु-देवेशब्रह्मोभयातिरिक्तस्तद्विलक्षणो हि विश्वात्मको भगवानिहोच्यते; अपिशब्देन च।

विष्णुपुराणेऽपि स्पष्टम्, 'एवमेष महाशब्दो मैत्रेय भगवानिति। परमब्रह्मभूतस्य वासुदेवस्य नान्यगः' इति। ईदृशं भगवत्त्वं विधाय तेन हेतुना शिवत्वं विधीयमानं मङ्गलत्वरूपमेव हि भवितुमर्हति। अत्र सर्वव्यापी स भगवान् शिव इत्येकवाक्यता तु न भवति। तस्मादिति वाक्यभेदकपदस्य मध्ये निविष्टत्वात्। सर्वगतशब्दस्य सर्वव्यापिशब्दसमानार्थतया पौनरुक्त्यप्रसङ्गाच्च। (११)

**महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः ।**
**सुनिर्मलामिमां शान्तिमीशानो ज्योतिरव्ययः ॥ १२ ॥**

---

तज्ज्ञानस्यैव मोक्षसाधनत्वमित्येतत् द्रढयति—**महानिति** । वैशब्दोऽवधारणे । पुरुष एव महान् **प्रभुः** फलप्रदानसमर्थः । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्युक्तेः (इत्यत्र ?) "**प्रभुः**= फलप्रदः" इति भगवता भाष्यकृता व्याख्यातत्वात् प्रकृते मोक्षरूपफलस्य प्रस्तुतत्वात् महच्छब्दसमभिव्याहाराच्च महाफलरूपमोक्षप्रदः स एवेति तस्य मोक्षहेतुत्वं पूर्वोक्तं स्थिरमिति भावः । तत्र हेतुमाह **सत्त्वस्यैष प्रवर्तक** इति । 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः' इत्युक्तरीत्या मोक्षार्थज्ञानहेतु-सत्त्वगुणोन्मेषहेतुभूतकटाक्षशालितया स एव मोक्षप्रद इत्यर्थः । अत एव ज्योतीरूपनिरतिशयदीप्तियुक्तादित्य[वर्णविग्रह ?] पुरुषोऽव्ययो भगवानेव **सुनिर्मलामिमां** मोक्षरूपां रागाद्युपद्रवशान्तिम् **ईशानः** ईष्ट इत्यर्थः ।

---

एवमस्य मोक्षप्रदत्वं मोक्षहेतुबुद्धिप्रदत्वञ्चोक्तम् । अथ तद्धेतु-सत्त्वप्रवर्तकत्वमप्युच्यते महानिति । शान्तिमित्यस्य क्रियासापेक्ष-तया ईशान इत्यत्रान्वयः ; पूर्वमपि, 'सर्वान् लोकानीशत' इति सकर्मकतया प्रयोगः स्थितः । अत्र शान्तिमीशान एव महान् प्रभुः सत्त्वस्य प्रवर्तक इत्येकवाक्यता वा ; उत्तरार्धं पृथग् जीव-न्मुक्तिहेतुत्वविधिरूपं वा ।

तमसः परस्तादादित्यवर्णः स्थितः स तत्रत्यतयैव ध्येय इति विशुद्धरूपध्यानमन्, तदप्यशक्यमेवेति न हेतिनम्यम् । स हि सौलभ्यपारस्यजलधिः सर्वेषामपि शरीरान्तरेव संनिविष्टस्योपा-

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः।
हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥१३॥

---

तज्ज्ञानसाधनमाह अङ्गुष्ठमात्र इति। सर्वेषामन्तरात्माऽसौ हृदयगुहानिहितत्वनिबन्धनाङ्गुष्ठपरिमाणयुक्तः पुरुषः हृदा भक्त्या मनीषा धृत्या युक्तेन मनसा अभिक्लृप्तः प्राप्यः। हृन्मनीषाशब्दयोः भक्तिधृतिपरत्वम्, "सर्वत्र प्रसिद्धोपदेशात्" इत्यत्र व्यासार्यैर्वर्णितम्। शिष्टं स्पष्टम्।

---

ध्यानेऽपि फलप्रद इति भाष्यते अङ्गुष्ठमात्र इति। इहेदं पदं प्रमिताधिकरणोक्तरीत्या परमात्मपरम्; पञ्चमे तु जीवपरम्, प्रकरणात्। जनानां हृदयस्याङ्गुष्ठपरिमाणतया तदवच्छिन्नस्य परमात्मस्वरूपस्य व्यापिनोऽपि अङ्गुष्ठमात्रत्वम्। एतदुपपादनायैव अन्तरात्मेत्यादि। अत्र जनानामित्यस्य अन्तरात्मेत्यत्राप्यपकर्षः। जनसंबन्ध्यन्तःकरणावच्छिन्नोऽयमात्मेति अङ्गुष्ठमात्र इत्यर्थः। सदा जनानां हृदये संनिविष्ट इत्यस्य पुनस्तदेकार्थत्वे पौनरुक्त्यात् सर्वव्यापिपरमात्मस्वरूपस्य सदा हृदयनिविष्टतया असंदिग्धतया सदेतिकथनं ध्येयस्यापि हार्ददिव्यमङ्गलविग्रहविशिष्टतया सदा स्थितिं दर्शयितुं द्वितीयः पादः। सदेत्यनेन दिव्यमङ्गलविग्रहस्य उपासनकाले परम् आविर्भाव इति न मन्तव्यम्, किन्तु सर्वदा स्थितिरिति भाष्यते इत्येकोऽर्थः संभवति। अन्यस्तु अयं बद्धावस्थायां स्वदेहान्तावस्थायामेवान्तरात्मेति न, किन्तु सदैवान्तरात्मा, एवम्भूतस्य जनहृदयसंनिविष्टस्वरूपस्य हृदयावच्छिन्नत्वप्रयुक्तमङ्गुष्ठमात्रत्वमिति। अयं द्वितीयपक्षार्थ इह भाष्येऽभिप्रेतः। व्यासार्यैरिति। वेदार्थसंग्रहे भाष्यप्रदर्शितम्, "भक्त्या च धृत्या च समाहितात्मा" इति प्रदर्शनादस्यैतत्परं स्मृतिवाक्यमनुसन्धेयमिति ध्येयम्। (१३)

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा अत्यतिष्ठत् दशाङ्गुलम् ॥ १४ ॥
पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १५ ॥

---

अङ्गुष्ठमात्रशब्दश्रवणकृतपरिच्छेदभ्रान्तिं व्युदस्यति सहस्रेति । अनन्तशिरोनयनादिदिव्यविग्रहयुक्तविराड्रूपी सन् ,— दशाङ्गुलशब्देनावयवो लक्ष्यते । भूमिशब्देन ब्रह्माण्डम् — पञ्चभूतपञ्चतन्मात्रारूपदशावयवयुक्तब्रह्माण्डमतिक्रम्य परमपदे स्थित इत्यर्थः । (१४)

यस्मात् पुरुषेण व्याप्तमिदं सर्वम्, अत भूतभव्योपलक्षितं प्रपञ्चजातं पुरुषात्मकमेवेत्याह पुरुष एवेति । [उक्तोऽर्थः ।] उतामृतेति । अत्र अमृतत्वशब्देन मुक्तिवाचिना मुक्तिस्थानं लक्ष्यते । अप्राकृतभोग्यभोगोपकरणसमृद्धं यदमृतत्वं परमपदम् अन्ने प्रकृतिप्राकृत-

---

सहस्रशीर्षेत्यादेः, सर्वज्ञत्वात् सर्वशक्तित्वाच्च सर्वत्र शिरश्चक्षुःपादकार्यकरणसमर्थ इत्येतावन्मात्रपरत्वमपि सुबालोपनिषद्व्याख्यानादौ दृष्टम्—अथापि श्रीगीताविश्वरूपाध्याय इव वास्तवानेकशीर्षत्वादेरेव सुवचत्वात् यथाश्रुतमेवार्थमाह दिव्यविग्रहयुक्तविराड्रूपीति । दशाङ्गुलशब्दार्थसमीक्षणं पुरुषसूक्तव्याख्याने द्रष्टव्यम् ॥

अत्यतिष्ठदित्यत्र न भूतकालविवक्षा, सार्वकालिकसर्वपदार्थव्याप्तेरेव विवक्षितत्वादिति विवरीतुम्, अतिक्रम्य स्थितिरियं कुत्रेत्यत्र, परमपदे इति स्पष्टयितुञ्च पठ्यते पुरुष एवेति । भव्यशब्दः, 'भव्यगेये'त्यादिना भवतीति कर्तर्येव निपातितः। तेन वर्तमानग्रहणम् । 'भूतं भव्यायोपदिश्यत' इत्यादिस्थल इव साध्यरूपार्थविवक्षया भविष्यदर्थकत्व । तेन कालत्रयवर्तिसर्वग्रहणसिद्धिः । अन्नशब्देन प्रा-

सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १६ ॥

---

सन्धे नातिरोहति नोत्पद्यते, तस्याप्यमृतत्वस्यासौ ईशान इत्यर्थः ।
अतश्चोभयविभूतिनायकत्वमुक्तं भवति । (१५)

सर्वत इति । सर्वतः पाणिपादादिकार्यकारि तत्तत्कार्यमुखेन सर्वमावृत्य तिष्ठतीत्यर्थः । गीताभाष्ये च, 'सर्वतः पाणिपादं तत्' इति श्लोकव्याख्यानसमये, "परस्य ब्रह्मणोऽपाणिपादस्यापि सर्वतः पाणिपादादिकार्यकृत्त्वं श्रूयते । प्रत्यगात्मनोऽपि परिशुद्धस्य तत्साम्यापत्त्या सर्वतः पाणिपादादिकार्यकृत्त्वं श्रुतिसिद्धमेव, 'निरञ्जनः परमं साम्यमुपैती'ति हि श्रूयते—" इति भाषितम् । (१६)

---

त्तपदार्थं भोग्यताबुद्धिस्थितिपर्यन्तममृतत्वस्य दौर्लभ्यं दर्शितम् ॥१५

कार्यकरणाय शीर्षाद्यपेक्षाऽपि नेत्युच्यते सर्वत इति । इति भाषितमिति । ननु जीवस्य विराड्रूपतुल्यरूपशालित्वे प्रमाणाभावात् तद्विषये तत्कार्यकरणपरतया गीताभाष्ये व्याख्यानेऽपि परमात्मनः साक्षात् तादृशविग्रहवत्त्वस्यैव संभवात् किमिति क्लिष्टं व्याख्येयमिति चेत्—उच्यते—पाण्यादिदेशे पाण्याद्यसंभवेन सर्वतःपाणिपादत्वादिवर्णनमपि क्लिष्टमेव । वस्तुतः पूर्वमप्येव, विश्वतश्चक्षुरिति मन्त्रेण तस्यार्थस्योक्तत्वात् पौनरुक्त्यं मा भूदिति अर्थान्तरं विवक्षता तत्र भगवद्भाष्यकारसंमतिरपि दर्शितेति ध्येयम् । एतदपौनरुक्त्याय च तत्र तदर्थवर्णनम् । ननु स एवार्थ इह वर्ण्यताम्, अयमर्थश्च तत्र । अस्तु नाम । किं तेन? वस्तुत इह सर्वेन्द्रियविवर्जितमिति पदं श्रूयमाणं पाणिपाद्याद्यभावं बोधयन् पाणिपादादिकार्यकृत्त्वरूपमर्थं इह विवक्षितं दर्शयति । उपरि च अपाणिपाद इत्यादिरनुवादः । (१६)

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत् ॥ १७ ॥
नवद्वारे पुरे देही हंसो लेलायते बहिः ।

---

**सर्वेन्द्रियेति । सर्वेन्द्रियगुणैः** सर्वेन्द्रियजन्यज्ञानैराभासः प्रकाशो यस्य तत् तथोक्तम् । इन्द्रियवृत्त्या विज्ञातुं समर्थमित्यर्थः । सर्वेन्द्रियवत्त्वमप्यैच्छिकमेव, न स्वाभाविकमित्याह **सर्वेन्द्रियविवर्जित**मिति । **सर्वस्य प्रभु**मिति । प्रभुत्वं सेवाफलप्रदत्वेन, ईशानत्वं नियन्तृत्वेनेति द्रष्टव्यम् । 'निवासः शरणं सुहृद्गतिर्नारायणः' इति श्रुतेः निरवधिकवात्सल्यशालि प्राप्यं चेत्यर्थः । अत्रेशानशब्दस्य नपुंसकलिङ्गत्वान्न देवताविशेषप्रत्यायकत्वशङ्कावकाश इति व्यासार्यैर्वर्णितम् । (१७)

ननु सर्वेन पाणिपादत्वादिकं गीतासु परिशुद्धात्मस्वरूपे प्रसिद्धम् । तत्र परिशुद्धस्वरूपस्यैव सर्वप्रभुत्वेशानत्वादिकमवगम्यत इति शिष्यशङ्कां शमयति **नवद्वार** इति । मलप्रस्रवणद्वारतया हेयैर्नवभि

---

आभासः प्रकाश इति । बाह्यविषयग्रहणमित्यर्थः । नपुंसकलिङ्गत्वादिति । ईशानशब्दस्य शानजन्ततया त्रिलिङ्गत्वात् तिष्ठतीति श्रूयमाणक्रियान्वयाय नपुंसकत्वमेष्टव्यमिति भावः । न च प्रभुमिति द्वितीयान्तान्वयाय क्रियान्तरमध्याहार्यमिति इहापि द्वितीयान्तत्वकल्पनास्तीति वाच्यम्—क्रियान्तराध्याहारः, वाक्यभेदकल्पना, सुहृच्छब्दे द्वितीयान्तत्वकल्पनेत्याद्यनेकदोषपरिजिहीर्षया प्रभुमित्यत्र प्रथमान्तत्वकल्पनस्यैव युक्तत्वात् । रुद्ररूपदेवताविशेषे अन्येषां सर्वेषां विशेषणानामनन्वयाच्चावकाशाभाव एव । (१७)

एवमनेकपाणिपादादिमत्त्वेऽपि नास्य जीवात्मत्वम् । बन्धस्वरूपयोग्यताया अप्यभावादिति ज्ञाप्यते नवद्वार इति । (१८)

वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ १८ ॥
अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ १९
अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ २० ॥

---

द्वारैर्युक्ते पुरवत् स्वात्यन्तभिन्ने अहमित्यभिमन्यमानो नानादेहसञ्चरण-जङ्घालतया हंसशब्दितो जीवो नानादेहेषूच्चावचयोनिषु लेलायते गतागतं कुर्वन् परतन्त्रतया बम्भ्रमीतीति । अतः तस्य सर्वप्रभुत्वे का प्रसक्तिः ? अतः ततः बहिः बाह्य एव स्थावरजङ्गमात्मकसर्वलोकसंसार-तन्त्रवाहीत्यर्थः । (१८)

अपाणीति । पाणिपादाद्यभावेऽपि तत्कार्यकारी इतरावेद्यः स्वयं सर्वज्ञः यः, तमादिकारणं महापुरुषं वदन्तीत्यर्थः । (१९)

अणोरिति । सकलसूक्ष्मवस्त्वन्तःप्रवेशयोग्यसौक्ष्म्यवान् निरति-शयबृहत्त्वशाली एवम्भूतः अस्य जन्तोः प्राणिनो जीवस्य आत्मा प्रेरकस्सन् सर्वजीवस्य हृदयगुहायामास्ते । जन्तोरित्येतत् आत्मेत्यत्रापि च संबध्यते ; आकाङ्क्षासत्त्वात् । गुहायामितिनिर्दिष्टहृदयगुहायामपि

---

किञ्चिदाकारेण जीवसाम्यं प्रदर्श्य तादृशस्यापि अदृष्टत्वविशिष्ट-द्रष्टृत्वादिरूपोऽतिशय उच्यते अपाणीति । (१९)

एवं सहस्रशीर्षेत्यादिना प्रसक्तादृष्टापरिहारमारब्धं समाप्य ततः प्राक्तनमन्त्रोक्तमुपसंह्रियते अणोरिति । 'जुष्टं यदा पश्यत्यन्य-मीशमस्य महिमानमिति वीतशोकः' इति वक्ष्यमाणेन मुण्डकश्रुतेन च मन्त्रैकार्थ्यं युक्तमिति अत्र यदा तदेत्यध्याहारः । अन्यथा पुनः

वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात् ।
जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ॥ २१ ॥
॥ इति श्वेताश्वतरोपनिषदि तृतीयोऽध्यायः ॥

---

संबध्यते । तादृशम् अक्रतु कर्मलेपशून्यं महामहिमशालिनमीशं यदा पश्यति, तदा धातुः धारकस्य परमात्मनः प्रसादात् वीतशोको भवति । 'प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षय' इति स्मृतेः । ततश्च ध्यानसाध्यपरमात्मप्रसादनिर्वर्त्यतया ज्ञाननिवर्त्यत्वेन (प्रसादनिवर्त्यं या ज्ञाननिवर्त्यत्वेन ?) बन्धस्य मिथ्यात्वं प्रत्युक्तम् । (२०)

वेदाहमिति यस्य विभुत्वेन जन्माभावं प्रकर्षेण वदन्ति, तमजरं पुरातनं सर्वगत्वात् सर्वात्मानमहं वेद जाने इत्येवं ब्रह्मवादिनः नित्यं वदन्तीत्यर्थः ॥ (२१)

इति तृतीयाध्यायप्रकाशिका ।

---

वैराग्यात् वीतशोकादिको निरन्तरध्यानरतः तत्प्रसादात् दर्शनसमानाकारं ज्ञानं लभते इति अनध्याहारेण योजनाऽपि स्यात् । मन्त्रोऽयं कठवल्ल्यामपि । तत्र अक्रतुरिति पाठभेदः । (२०)

एवं वेदाहमेतमिति मन्त्रान्तरेण संग्रहेण वक्तव्यमुक्त्वा तदर्थो निगम्यते वेदाहमिति । सर्वगतमिति हेतुगर्भविशेषणम् । विभुत्वादिति अधीनत्वकथाय प्रभुत्वार्थकं सत् उत्तरार्धान्वयि ॥ (२१)

(अथ चतुर्थोऽध्यायः)

ब्रह्मवाचकशब्दानां जगद्वाचकशब्दैः सामानाधिकरण्येन व्यवहारः न स्वरूपैक्यनिबन्धनः ; किं तु मिथोभेदे सत्येव मुख्यः स्थित इति व्युत्पादनमत्र तुरीयेऽध्याये क्रियते । सेयं शुभा बुद्धिः प्रार्थ्यते

॥ अथ चतुर्थोऽध्यायः ॥

य एकोऽवर्णो बहुधा शक्तियोगात् वर्णान् अनेकान् निहितार्थो दधाति।
वि चैति चान्ते विश्वमादौ स देवः स नो बुध्या शुभया संयुनक्तु ॥ १
तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद् ब्रह्म तदापस्तत् प्रजापतिः ॥ २ ॥

---

ब्रह्मणः सर्वविधकारणत्वं प्रपञ्चयिष्यन् तद्विषयबुद्धिप्रार्थना-मन्त्रमाह य एक इति । 'अकारो वै सर्वा वाक् । सैषा स्पर्शोष्मभिर-भिव्यज्यमाना बह्वी नानाविधा भवति' इति ऐतरेयश्रुतेः, एकः अवर्णः **निहितार्थः** अर्थः=परं ब्रह्म स्ववाच्यत्वेन निहितः यस्मिन् तथोक्तः परमपुरुषार्थभूतब्रह्मवाचकः—'अकारेणोच्यते विष्णुः' इति श्रुतेः—तादृशः अवर्णः सर्वान् वर्णान् दधाति उत्पादयति । [सः !] विश्वं कृत्स्नं प्रपञ्चम् अन्तकाले व्येति—अन्तर्भावितण्यर्थोऽयम्— गमयति नाशयति । स देवः शुभया बुद्ध्या योजयतु । अत्र वाच्यवाचकयोर-भेदोपचारात् **स देव** इत्युक्तिः । (१)

तस्य देवस्य सार्वात्म्यमाह तदेवाग्निरिति । शुक्रं रोचिष्टम् । नक्षत्रमण्डलमित्यर्थः । शिष्टं स्पष्टम् । (२)

---

प्रथमम् य एक इति । शब्दस्य अपर्यवसानवृत्त्या ब्रह्मपर्यन्तवाचित्व-रूपमहिमवशात् सामानाधिकरण्येन निर्देश इति ज्ञापनप्रवृत्तत्वादे-वोपक्रमे अकारादन्येषां वर्णानामुत्पत्तिप्रस्तावः । अत एव अवर्ण इत्यस्य वर्णरहित इत्यर्थवर्णनेन नीलादिवर्णानां ब्राह्मणादिवर्णानां वोत्पादकत्वपरतया मन्त्रव्याख्यानमनादेयम् । निहितार्थ इत्यर्थपद-वर्णपदसमभिव्याहारबलस्वरसप्रतीतशब्दरूपवर्णत्यागश्च न युक्तः । एवं प्रतिपाद्ये ब्रह्मणि अकारवाच्यत्वप्रतिपादनात् अयमध्यायोऽपि —मेव अकारवाच्यं ब्रह्मत्वेन बुबोधयिषतीति ध्येयम् । (१)

त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥ ३ ॥
नीलः पतङ्गो हरितो लोहिताक्षस्तडिद्गर्भ ऋतवः समुद्राः ।
अनादिमत् त्वं विभुत्वेन वर्तसे यतो जातानि भुवनानि विश्वा ॥ ४ ॥
अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनु शेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ ५ ॥

---

तदेव सार्वात्म्यं सम्बोधनेनाह त्वं स्त्रीति । जीर्णः वृद्धस्सन् **दण्डेन** आलम्बनेन **वञ्चसि** सचरसि । अत्यल्पमिदमुच्यते । त्वमेव सर्वरूपो जातोऽसीत्यर्थः । (३)

**नील** इति । नील-हरित-लोहिताक्षमेदभिन्नः **पतङ्गः** पक्षी त्वमेव ; [तडिद्गर्भ ?] ऋतवः समुद्राश्च । त्वमेवानादि (?) । यतो विश्वानि भूतानि जातानि, तदपि त्वमेव ; निखिलजगत्कारणमपि त्वमेवेत्यर्थः । नीलपतङ्गाद्यात्मत्वमपि न स्वरूपेण, अपितु व्यापकत्वेनाऽऽत्मत्वादित्येतत् प्रदर्शयति **विभुत्वेन वर्तस** इति । यतस्त्वं व्याप्य आत्मतया वर्तसे, ततः सर्वात्मत्वमित्यर्थः । (४)

'भोक्ता भोग्यं प्रेरितारञ्च मत्वा', 'क्षरं प्रधानममृताक्षरम्' इति पूर्वनिर्दिष्टचिदचिद्विवेकं दर्शयति **अजामेकामिति** । तेजोबन्नलक्षणविकारगतलोहितशुक्लकृष्णरूपयुक्ताः स्वसमानरूपविविधभूतभौतिकसृष्टिम्

---

[अनादिमत्-आदिमद्विध यथा तथा?] विभुत्वेनेत्युक्ता व्याप्तिः अचेतने चेतने चेति विस्तरेण ज्ञाप्यते शरीरात्मभावनिबन्धनमेव सामानाधिकरण्यमिति विवेकार्थम् अजामित्यादिना। लोहितशुक्लकृष्णामिति पृथिवीपर्यन्तसमष्टिरूपेण परिणामो विवक्षितः । उपरि व्यष्टिसृष्टि. ।

उत्पत्तिरहिता काञ्चन कश्चिदविद्वान् उत्पत्तिराहित्येन तत्समान एव सन् तत्राहंबुद्ध्या सेवमान तामनुसृत्य शेते तिष्ठति। अपरो विद्वान् कश्चित् काल भुक्त्वा उत्पन्नवैराग्य त्यजतीत्यर्थ ।

न-वस्मिन्नजामन्त्रे स्वरसत एतावान् अर्थ प्रतीयते — काञ्चित् छागीं त्रिवर्णां स्वसरूपबहुप्रकाराम् (प्रजाकरीम् ?) एकश्छाग प्रीयमाणोऽनुवर्तते , अन्य तामुपभुक्ता त्यजतीति। कथं भवदुक्तप्रकृतिरूपार्थग्रहणम् ? यदि चाध्यात्मशास्त्रे लौकिकार्थप्रतिपादनानौचित्यात् आध्यात्मिकार्थे पर्यवसान कर्तव्यमिति, तर्हि 'द्वा सुपर्णा' इति मन्त्रे वृक्षसुपर्णपिप्पलशब्दे शरीरजीवकर्मफलाना गौण्या वृत्त्या ग्रहणवत् , 'गौरनाद्यन्तवती' इत्यत्र गोशब्देन गौण्या वृत्त्या प्रकृतिग्रहणवत् इहापि अजाशब्देन गौण्या वृत्त्या प्रकृतिग्रहण युक्तम् , न तु यौगिकार्थ ग्रहणम् । रूढिपूर्वकलक्षणाविशेषरूपगौणपेक्षया योगदौर्बल्यस्य प्रोद्गात्रधिकरणे स्थितत्वात्। इतरथा, 'प्रैतु होतुश्चमस प्रोद्गातॄणाम्' इत्यत्रापि यौगिकवृत्त्या उद्गात्रादीना चतुर्णां ग्रहण स्यादिति चेन्न —

मुख्यार्थानुपपत्तौ हि गौणार्थाश्रयण युज्यते। उपपद्यते चाजाशब्दे यौगिकार्थस्य मुख्यस्य ग्रहणम् । न चैव प्रोद्गातृन्यायविरोध । तत्र पाश-न्यायेन बहुत्वाविवक्षा नास्ति , प्रोद्गातृशब्दयौगिकार्थबहुत्वस्य सभवात्। 'अदिति पाशान् प्रमुमोक्तु' इत्यत्र रूढ्यर्थस्य वा यौगिकार्थस्य वा पाशशब्दार्थस्य बन्धनसाधनस्यासभवात् बहुत्वाविवक्षा। इह तु तत्सभवात् नाविवक्षत्येव (व ?) तदधिकरणस्थिति। न हि रूढिपूर्वकलक्षणापेक्षया योगस्य जघन्यत्वमित्यपि। नन्वेव सुब्रह्मण्यस्यापि गानकारितया

योगार्थत्वात् तस्यापि ग्रहणप्रसङ्ग इति चेन्न—तस्य सदसि स्थित्यभावेन तत्साधारण्याभावात्। मीमांसकैकदेशिभिः तत्साधारण्यस्याभ्युपेतत्वाच्च।

ततश्च यौगिकार्थस्य मुख्यस्याजाशब्दार्थस्य संभवे पररीत्या छागत्वरूपेण गौणवृत्त्याश्रयणमयुक्तम्। 'गौरनाद्यन्तवती' इत्यत्र गोशब्दे यौगिकार्थास्फुरणात्, 'सर्वकामदुघाम्' इति दोहनस्य गोशब्दरूढार्थग्रहणनियामकस्य सत्त्वाच्च तत्र तथा, इह तु योगार्थस्फूर्तेः, रूढार्थग्रहणनियामकशब्दान्तरसमभिव्याहाराभावाच्च यौगिकार्थ एव ग्राह्यः।

किञ्च इह रूढार्थग्रहणे समभिव्याहृतानाम्, 'बह्वीः प्रजाः सृजमानाम्' इत्यादीनां संकोचः स्यात्। छागया प्रकृतिवत् सकलप्रजासृष्ट्यासंभवात्। सकलप्रजासर्गकरप्रकृत्यामल्पप्रजासर्गकारिच्छागीत्वपरिकल्पनस्य विच्छित्तिविशेषाहेतुत्वात्। न चैवम्, 'आत्मानं रथिनं विद्धि' इत्यादौ आत्मशरीरादौ रथित्वरथत्वादिकल्पनमपि न विच्छित्तिविशेषजनकं स्यादिति वाच्यम्, तत्र रूप्यरूपकयोरविसदृशधर्मवत्त्वेन, वशीकार्यतामतीत्युपयुक्ततया च रूपणमतीव विराजते। प्रकृते तु रूप्यरूपकयोर्विसदृशधर्मश्रवणात्, तद्द्वारकयोगाभावाच्च न छागत्वपरिकल्पनम्। 'द्वा सुपर्णा' इति मन्त्रेऽपि वृक्षादिशब्दैः यौगिकवृत्त्याऽर्थग्रहणं युक्तम्। समासो

---

तत्साधारण्यस्याभावादिति। अत एव तस्य गानकाले सदस्यन्तर्गतत्वेऽपि गानकर्तृत्वरूपयोगार्थवत्त्वमपि नास्तीति भावः। एकदेशिभिरिति। सूत्रभाष्यस्वरसमननुगतं प्राभाकरैरित्यर्थः। ३ ५ ७ श्लोकार्थविवरणे इदं द्रष्टव्यम्।

यौगिकार्थस्य मुख्यस्येति। अन्यथा, 'अजोऽपि सन्नव्ययात्मा' इत्यादावपि छागस्य कथमपि ग्रहणं दुर्वारं स्यादिति भावः।

त्या अर्थान्तरस्फूर्त्या विच्छित्तिविशेषोऽस्तीत्येतावन्मात्रम् । यदि च न वृक्षादिशब्दैः (ब्दे ?) यौगिकार्थग्रहणम्, तर्हि, 'गौरनाद्यन्तवती' इतिवदस्तु । प्रकृते तु अजाशब्दे यौगिकार्थस्य स्फुटप्रतीतेः योग एव ग्राह्यः । एतत् सर्वम्, "कल्पनोपदेशात्" इति सूत्रभाष्यश्रुतप्रकाशिकयोः स्पष्टम् । अनेन प्रकृतिस्वरूपं बद्धमुक्तस्वरूपञ्चोक्तम् ।

नन्वजाशब्देन अकार्यत्वप्रतिपादनात् सृजमानामिति कर्त्रर्थशानचा स्वातन्त्र्यलक्षणकर्तृत्वप्रतीतेः अब्रह्मात्मिकैव प्रकृतिरनेन मन्त्रेणाभिधीयतामिति चेत्—एवमेव समन्वयाध्याये पूर्वपक्षे प्राप्ते उच्यते—"चमसवदविशेषात्" । 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः तस्मिन् यशो निहितं विश्वरूपम्' इति मन्त्रे, 'अर्वाग्बिलश्चमसः' इति ऊर्ध्वबिलतिर्यग्बुध्नप्रसिद्धचमसव्यावर्तकस्य शिरसश्चमसत्वप्रत्यायकस्य वाक्यशेषस्य सद्भाववत् इह अस्वतन्त्रप्रकृतिव्यावर्तकस्य सांख्याभिमतस्वतन्त्रप्रकृतिप्रतिपादकस्य वाक्यशेषस्याभावेन स्वतन्त्रा प्रकृतिरिहाभिधीयत इति निर्णयासंभवात् । ब्रह्मात्मकत्वेऽपि जनिराहित्यस्योपपत्तेः । परतन्त्रेऽपि तक्षादौ, 'तक्ष्णोति काष्ठम्' इति कर्त्रर्थप्रत्ययदर्शनेन तावन्मात्रेण अपर-

---

योग एव ग्राह्य इति । रूढार्थग्रहणे अजेयं संगमादिविस्थापना या अन्या या । अन्त्ये, एकोऽजो न जुषमाणोऽनुशयीत । आद्ये, तामन्योऽजः, इयं प्राग् भुक्तभोगा, तस्मान्माऽस्तु इति जुगुप्सया त्यजतीति लोके किं दृष्टम्? प्रयत्नेनार्जितं स्पर्धितुमशक्त्या नु त्यजेत् । अतो न रूढ्यर्थान्वय इत्यभिप्रायः ।

परतन्त्रेऽपि तक्षादाविति । भृतिलिप्सया परप्रेरणावशादेव हि स तक्ष्णोति । तथापि तस्य श्रुतवाक्यान्तरव्यापारानधीनव्यापारशालि-

सन्त्रप्रकृतित्वनिश्चयासभवात् ।

ननु ब्रह्मात्मकप्रकृतिग्रहणेऽपि नियामकाभावात् सदेह एव स्यात् । तत्राह, "ज्योतिरुपक्रमा तु तथा ह्यधीयत एके" । 'अथ यदत परो दिवो ज्योतिर्दीप्यते'इत्यादौ ज्योतिश्शब्देन ब्रह्मनिर्देशदर्शनात् इह सूत्रेऽपि ज्योतिश्शब्देन ब्रह्मोच्यते । उपक्रमशब्द कारणत्वार्थकस्सन् आत्मत्व लक्षयति । मृत्कारणकस्य घटादे मृदात्मकत्वदर्शनात् । तथाच (ततश्च) ज्योतिरुपक्रमा—ब्रह्मात्मिकेत्यर्थ । ब्रह्मात्मिकैवाजेह मन्त्रे ग्राह्या । उपक्रमे 'देवात्मशक्ति स्वगुणै निगूढाम्'इति ब्रह्मात्मकाजाया एव प्रतिपादितत्वात् । तैत्तिरीये, 'अणोरणीयान् महतो महीयान्'इति ब्रह्म प्रस्तुत्य, 'सप्त प्राणा प्रभवन्ति तस्मात्'इति प्राणोपलक्षितसकलप्रपञ्चोत्पत्ति मभिधाय निर्विकारस्य ब्रह्मणोऽपरिणामित्वया सकलप्रपञ्चोपादानत्व न सभवतीति शङ्कावारणाय पठितस्यास्य मन्त्रस्य ब्रह्मात्मकप्रकृतिपरत्वस्य वक्तव्य तया इहापि तथात्वावश्यम्भावाच्च ब्रह्मात्मिकैव प्रकृतिरजामन्त्रप्रतिपाद्या ।

---

स्वरूपपरत्वविवक्षा निराबाधा । तथैवेहापीति भाव ।

उपक्रमे इति । अनेन ज्योति उपक्रमे यस्या , यन्निरूपणारम्भविषयीभूत ज्योति ज्योतिरुपक्रम तन्मुखेनैव निरूपितेय प्रकृतिरित्यपि सूत्रार्थवर्णन सूचितम् । ब्रह्मोपादानक चेन ब्रह्मात्म कत्वमिति । ननु यत् यदुपादानकम्, तत् तदन्तर्यामिकमिति व्याप्त्यभावात् कथमिदमिति चेत्—ब्रह्मात्मकत्व नाम तदपृथक्सिद्धत्वमित्यभिप्राय, मृदात्मको घट इति मृदुपादानके तदात्मकत्वव्यवहारवत् अय व्यवहार इति बुद्ध्या शङ्का अपृथक्सिद्धाधारत्वप्रतिबोधनेन परिहार इति । यद्वा ज्योतिरुपक्रमेति पद ब्रह्मोपादान-

नन्वाकाशादीनां ब्रह्मोपादानकत्वेन ब्रह्मात्मकत्ववत् प्रकृतेरपि ब्रह्मोपादानकत्वेन ब्रह्मात्मकत्वस्य वक्तव्यतया अनुत्पन्नायाश्च तस्याः ब्रह्मोपादानकत्वासंभवेन ब्रह्मात्मकत्वासंभव इत्याशङ्क्याह, "कल्पनोपदेशाच्च मध्वादिवदविरोध."। कल्पनं सृष्टि.। 'धाता यथा पूर्वमकल्पयत्' इति प्रयोगदर्शनात्। 'अस्मान्मायी सृजते विश्वमेतत्' इति मायाशब्द शब्दितप्रकृतेः ब्रह्मोपादेयप्रपञ्चसृष्टौ हेतुत्वावेदनादित्यर्थः। प्रकृतेरब्रह्मात्मकत्वे च तस्याः, 'अस्मान्मायी सृजते विश्वमेतत्' इति प्रतिपादितब्रह्मोपादानतानिर्वाहकत्वाभावात् तस्याः ब्रह्मात्मकत्वं सिद्धम्। अपृथक्सिद्धाधारत्वमात्रेणाप्यात्मत्वोपपत्त्या अजन्याया अपि प्रकृतेः ब्रह्मात्मकत्वे संभवत्येवेति ब्रह्मात्मकत्वमविरुद्धम्। मध्वादिवत्। अत्र मधुशब्देन, 'असावादित्यो देवमधु' इति निर्दिष्ट आदित्य उच्यते। आदित्यवदित्यर्थः। यथा आदित्यस्य, 'नैवोदेता नास्तमेता' इत्यकार्यतया श्रुतस्यैव, 'य आदित्ये तिष्ठन्' इत्यादिना ब्रह्मात्मकत्वञ्च, एवमनादेरप्युपपद्यते ब्रह्मात्मकत्वमिति स्थितम्। प्रकृतमनुसराम। (५)

---

फलार्थकं सत् ब्रह्मात्मकत्वलक्षकमित्युक्तम्। अजायमानायाश्च प्रकृतौ ब्रह्मोपादानकत्वाभावात् तन्मुखेन ब्रह्मात्मकत्वमत्र कथमुच्यत इति शङ्का। परिहारस्तु—ज्योतिरुपक्रमात्वं नाम ज्योतिरधीनोत्पत्तिकत्वम्। तत् प्रकृतेरक्षतम्, महदादिरूपेण परिणामरूपोत्पत्तिमत्त्वात्। तथाच अजागतं लोहितादिरूपबहुप्रजारूपजननम् यजामन्त्रोक्तं ब्रह्माधीनमिति सौत्रेण ज्योतिरुपक्रमेति पदेनोच्यत इति। इयञ्च ज्योतिरधीना उत्पत्तिः कारणावस्थायामपि ब्रह्मात्मकत्वं गमयतीति अब्रह्मात्मकाजापक्षः सांख्यसंमतः शमितो भवतीति। (५)

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति ॥ ६ ॥**
**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।**

---

प्रकृतिसम्बन्धाविशेषेऽपि जीवस्य भोक्तृत्वम्, न परमात्मन इत्येतत् दृष्टान्तमुखेन प्रदर्शयति **द्वा सुपर्णेति**। युज्यत इति युक्शब्दो गुणपरः । "समानगुणकः सयुक्' इति व्यासार्यैर्विवृतत्वात् । **सखायौ** परस्पराविनाभूतौ गमनसाधनत्वेन **पर्ण**शब्दितपक्षसदृशज्ञानादिगुणवन्तौ **समानम्** एकं **वृक्षं** वृक्षवत् छेदनार्हं शरीरं समाश्रितौ । तयोर्मध्ये एको जीवः परिपक्वं **पिप्पलम**श्वत्थफलसदृशं कर्मफलमश्नाति । इतरस्तु परमात्मा अनश्नन्नेव अपहतपाप्मत्वादिमहामहिमशाली वर्तत इत्यर्थः । अत्र शरीरतदाश्रयजीवपरवाचिशब्दनिगरणेन विषयिवाचकवृक्ष—सुपर्णादिशब्दैः वृक्षत्वाद्यध्यवसानलक्षणा रूपकातिशयोक्तिर्विच्छित्तिविशेषायेति केचित् । **वृक्षा**दिशब्देन योगवशाच्छरीरादिप्रतीतिः, न तु रूपकातिशयोक्तिरित्यन्ये।

**समान इति** । **अनीशया** भोग्यभूतया प्रकृत्या **मुह्यमानः**, 'पराभिध्यानात्तु तिरोहितम्' इति सूत्रोक्तन्यायेन तिरोहितपरमात्मशेषत्वज्ञानानन्दलक्षणस्वस्वरूपस्सन् वृक्षवच्छेदनार्हे एकस्मिन् शरीरे जीवः, 'स्थूलोऽहम्'

---

यद्दमुक्तवैलक्षण्यमुक्तम् जीवब्रह्मवैलक्षण्यमुच्यते द्वा इति । ज्ञानशक्ती पर्ण । शक्तिश्च बद्धे कर्मवासनादिरूपा । अश्वत्थफलेति । कर्मफलस्य क्षयित्वात् श्वो न स्थास्यतीति युज्यते अश्वत्थत्वम् । तादृशेऽप्यहो स्वादुतावुद्धिर्बद्धस्य । (६)

अस्य वद्धस्य, 'जहात्येनां भुक्तभोगाम्' इत्युक्तावस्थालम्भनार्थमेव स इहाभिचाकशीतीति स द्रष्टव्य इत्युच्यते समान इति ।

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ ७ ॥
ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते ॥ ८

'कृशोऽहम्' इति तादात्म्यबुध्या पांसूदकवत् तदेकतामापन्नस्सन् तत्संसर्गकृतानि दुःखान्यनुभवति। यदा असौ जीवो निमग्नात् स्वस्मात् धारकत्वनियन्तृत्वशेषित्वादिना विलक्षणं स्वकर्मभिः प्रीतं परमात्मानम्, अखिलजगदीशनलक्षणमस्य महिमानञ्च पश्यति, तदा वीतशोको भवतीत्यर्थः । केचित्तु-**अनीशया** अनीशत्वेन असमर्थत्वेन शोचन् स्वोद्धरणसमर्थं स्वयं पश्चादावनिमग्नं स्वस्मिन् प्रीतिमन्तं तदुद्धरणसामर्थ्यलक्षणमहिमानञ्च दृष्ट्वा वीतशोको भवति। तत्समाधिरत्रानुसन्धेयः। "अनीशया प्रकृत्या" इति भाष्यमप्यर्थतो व्याख्यानपरम्। न त्वनीशाशब्दार्थतयेति वदन्ति ।

**ऋच** इति । न क्षरतीत्यक्षरम् । तादृशे, **ऋचः** ऋक्छन्दोपलक्षितवेदजातस्य **परमे व्योमन्** परमाकाशे परमतात्पर्यविषये यस्मिन्नक्षरे सर्वे देवाः समाश्रिताः, तत् अक्षरं यो न वेद, सः अधीतेन ऋग्वेदादिना किं करिष्यति ? 'स्थाणुरयं भारवाह.(हार.) किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम् ।', 'यो वा एतदक्षरं गार्गि अविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि,

जुष्टमिति । तस्य प्रीतिः अस्य तस्मिन् प्रीतिरूपापन्नदर्शनायत्ता । दर्शनस्य प्रीतिरूपापन्नता च महिम्नो वेदने निरतिशयैश्वर्यादिना सर्वप्रकारानन्दरूपत्वस्य तस्मिन् भानाद् भवतीति ज्ञापनार्थं महिमानमित्यधिकमुक्तम्। एतन्मन्त्रद्वयविवरणं मुण्डकेऽपि द्रष्टव्यम्। (७)
ऋचोक्षर इति तज्ज्ञानातिरिक्तोपायनिषेधपरं वा वीतशोकत्वं

छन्दाँसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः ॥ ९॥

अन्यदेवास्य तद् भवति' इति श्रुते । ये च तदक्षरं जानन्ति, ते निरस्तप्रतिकूला सुखमासत इत्यर्थ । इमं मन्त्र विश्वदेवशब्दितनित्यसूर्याश्रय॰ परमस्थानपरतयापि योजयन्ति ; 'तदक्षरे परमे व्योमन्' इत्यस्य वेदार्थसंग्रहे स्थानपरतया योजितत्वात् । (८)

**छन्दांसीति** । वेद वैदिकमर्थजात मायाप्रेरक परमात्मा **अस्मात्** *मायाशब्दितात् साधनात् सृजते । अतश्च अपरिणामिनोऽ*प्युपादानत्वमविरुद्धम् । ननु जीवस्य स्रष्टृत्वं किं न स्यादित्याशङ्क्याऽऽह-**तस्मिंश्चान्यो मायया संनिरुद्धः** । अन्यो जीव तदाश्रितमायामोहित । अत तस्य मायाप्रेरकत्वाभावान्न स्रष्टृत्वमिति भाव । (९)

प्रागुक्तं यत्र देशे सम्यगासिकाया संपद्यते, तद्देशप्रदर्शकं वा ।
तथाच अक्षरपद परमात्मपरं वा स्थानपरं वा । (८)

किमृचा करिष्यतीति भ्रूगादिवैयर्थ्यं वर्णिते, किमर्थं तस्य स्थितिरित्याशङ्का प्राप्ता ; तत्रोच्यते छन्दांसीति । सर्वं निरोधार्थमेव, बन्धनार्थमेवेति भावः । अस्मादित्यस्योपादानपरत्व पञ्चमीस्वारस्यादवगम्यते । उपादनाच्च प्रकृति प्राक् अज्ञाम् अनीशयेति स्त्रीलिङ्गनिर्दिष्टा । अथापि सामान्ये नपुंसकमिहेति सूचयति साधनादिति । ननु ईश एवोपादानभूत॰ अस्मादिति गृह्यताम् । न च तर्हि मायीति निर्दिष्ट तस्मादन्यः प्रसजेदिति वाच्यम्—तथासति तस्मिन् मायया संनिरुद्ध इति प्रयोगस्वारस्यात् तच्छब्दमायाशब्दार्थयोरपि भेदावश्यम्भावादिति चेत—तस्मिन्निति ईशग्रहणे तत्र संनिरुद्धत्ववर्णनायोगात्। एवं वाऽस्तु—अस्मादिति पूर्वोक्तमहिमार्थकम्। महिमबलात् मायी विश्वं सृजति। महिम्नि च जीवो निरुद्धः

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ ७ ॥
ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते ॥ ८

'कृशोऽहम्' इति तादात्म्यबुध्या पांसूदकवत् तदेकतामापन्नस्सन् तत्संसर्गकृतानि दुःखान्यनुभवति। यदा असौ जीवो निमग्नात् स्वस्मात् धारक-स्वनियन्तृत्वशेषित्वादिना विलक्षणं स्वकर्मभिः प्रीतं परमात्मानम्, अखिल जगदीशनलक्षणमस्य महिमानञ्च पश्यति, तदा वीतशोको भवतीत्यर्थः । केचित्तु-अनीशया अनीशत्वेन असमर्थत्वेन शोचन् स्वोद्धरणसमर्थं स्वयं पङ्कादावनिमग्नं स्वस्मिन् प्रीतिमन्तं तदुद्धरणसामर्थ्यलक्षणमहिमानञ्च दृष्ट्वा वीतशोको भवति। तत्समाधिरत्रानुसन्धेयः । "अनीशया प्रकृत्या" इति भाष्यमप्यर्थतो व्याख्यानपरम् । न त्वनीशाशब्दार्थतयेति वदन्ति ।

ऋच इति । न क्षरतीत्यक्षरम् । तादृशे, ऋचः ऋक्छन्दोप लक्षितवेदजातस्य परमे व्योमन् परमाकाशे परमतात्पर्यविषये यस्मि-न्नक्षरे सर्वे देवाः समाश्रिताः, तत् अक्षरं यो न वेद, सः अधीतेन ऋग्वेदादिना किं करिष्यति ? 'स्थाणुरयं भारवाह (हार) किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम् ।', 'एतद्वै तदक्षरं गार्गि अवि-दित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि,

जुष्टमिति । तस्य प्रीतिः अस्य तस्मिन् प्रीतिरूपापन्नदर्शनायत्ता । दर्शनस्य प्रीतिरूपापन्नता च महिम्नो वेदने निरतिशयैश्वर्यादिना सर्वप्रकारानन्दरूपत्वस्य तस्मिन् भानाद् भवतीति ज्ञापनार्थं महिमान-मित्यधिकमुक्तम् । एतन्मन्त्रद्वयविवरणं मुण्डकेऽपि द्रष्टव्यम् । (७)
ऋचोक्षर इति तज्ज्ञानातिरिक्तोपायनिषेधपरं वा वीतशोकत्वं

छन्दाँसि यज्ञा क्रतवो व्रतानि भूत भव्य यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत् तस्मिँश्चान्यो मायया सन्निरुद्ध ॥ ९॥

अ नयदेवास्य तद् भवति' इति श्रुते । ये च तदक्षर जानन्ति, ते निरस्त प्रतिकूला सुखमासत इत्यर्थ । इम मन्त्र **विश्वदेवशब्दितनित्यसूर्याश्रय** परमस्थानपरतयापि योजयन्ति, 'तदक्षरे परमे व्योमन्' इत्यस्य वेदार्थ सग्रहे स्थानपरतया योजितत्वात् । (८)

**छन्दांसीति** । वेद वैदिकमर्थजात मायाप्रेरक परमात्मा **अस्मात् मायाशब्दितात्** साधनात् सृजते । अतश्च अपरिणामिनोऽ प्युपादानत्वमविरुद्धम् । ननु जीवस्य स्रष्टृत्व किं न स्यादित्याशङ्कयाऽऽह **तस्मिंश्चान्यो मायया सन्निरुद्ध'** । अन्यो जीव तदाश्रितमाया मोहित । अत तस्य मायाप्रकरकत्वाभावान्न स्रष्टृत्वमिति भाव । (९)

---

प्रागुक्त यत्र देशे सम्यगासिकाया सपद्यते, तद्देशप्रदर्शक वा । तथाच अक्षरपद परमात्मपर वा स्थानपर वा । (८)

किमृचा करिष्यतीति ऋगादिवयस्य वर्णिते, किमर्थं तस्य स्थितिरित्याशङ्का प्राप्ता ततोच्यते छन्दांसीति । सत्र निरोधार्थमेर, बन्धनार्थमेवेति भाव । अस्मादित्यस्योपादानपरत्व पञ्चमीस्वारस्यादवगम्यते । उपादानञ्च प्रकृति प्राक् अजाम् अनीशयेति स्त्रीलिङ्गनिर्दिष्टा । अथापि सामान्ये नपुंसकमिहेति सूचयति साधनादिति । ननु ईदृश मन्त्रोपादानभूत अस्मादिति गृह्यताम् । न च तर्हि मायीति निर्दिष्ट तस्मादन्य प्रसजेदिति वाच्यम्—तथासति तस्मिन् मायया सन्निरुद्ध इति प्रयोगस्वारस्यात् तच्छन्दमायाशब्दाथ योरपि भेदाद्वयस्याभावादिति चेन्न—तस्मिन्निति ईशग्रहणे तत्र सनि रुद्धत्ववर्णनायोगात्। एत वाऽस्तु—अस्मादिति पूर्वोक्तमहिमा ऽन्यम्। महिमबलात् मायी विश्व सृजति। महिम्नि च जीवो निरुद्ध

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ ७ ॥
ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते ॥ ८

'कृशोऽहम्' इति तादात्म्यबुद्ध्या पांसूदकवत् तदेकतामापन्नस्सन् तत्संसर्गकृतानि दुःखान्यनुभवति। यदा असौ जीवो निमग्नात् स्वस्मात् धारकत्वनियन्तृत्वशेषित्वादिना विलक्षणं स्वकर्मभिः प्रीतं परमात्मानम्, अखिलजगदीशनलक्षणमस्य महिमानञ्च पश्यति, तदा वीतशोको भवतीत्यर्थः । केचित्तु-**अनीशया** अनीशत्वेन असमर्थत्वेन शोचन् स्वोद्धरणसमर्थं स्वयं पश्चादावनिमग्नं स्वस्मिन् प्रीतिमन्तं तदुद्धरणसामर्थ्यलक्षणमहिमानञ्च दृष्ट्वा वीतशोको भवति। तत्समाधिरत्रानुसन्धेयः । "अनीशया प्रकृत्या" इति **भाष्य**मप्यर्थतो व्याख्यानपरम् । न त्वनीशाशब्दार्थतयेति वदन्ति ।

**ऋच** इति । न क्षरतीत्यक्षरम् । तादृशे, **ऋचः** ऋक्छब्दोपलक्षितवेदजातस्य **परमे व्योमन्** परमाकाशे परमतात्पर्यविषये यस्मिन्नक्षरे सर्वे देवाः समाश्रिताः, तत् अक्षरं यो न वेद, सः अधीतेन ऋग्वेदादिना किं करिष्यति ? 'स्थाणुरयं भारवाह (हार.) किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम् ।', 'एतद्वै तदक्षरं गार्गि अविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि,

जुष्टमिति । तस्य प्रीतिः अस्य तस्मिन् प्रीतिरूपापन्नदर्शनायत्ता । दर्शनस्य प्रीतिरूपापन्नता च महिम्नो वेदने निरतिशयैश्वर्यादिना सर्वप्रकारानन्दरूपत्वस्य तस्मिन् ज्ञानाद् भवतीति ज्ञापनार्थं महिमानमित्यधिकमुक्तम् । एतन्मन्त्रद्वयविवरणं मुण्डकेऽपि द्रष्टव्यम् । (७)
ऋचोऽक्षर इति तज्ज्ञानातिरिक्तोपायनिषेधपरं वा वीतशोकत्वे

छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः ॥९॥

---

अन्यदेवास्य तद् भवति' इति श्रुतेः । ये च तदक्षरं जानन्ति, ते निरस्तप्रतिकूलाः सुखमासत इत्यर्थः । इमं मन्त्रं विश्वदेवशब्दितनित्यसूर्याश्रयपरमस्थानपरतयापि योजयन्ति ; 'तदक्षरे परमे व्योमन्' इत्यस्य वेदार्थसंग्रहे स्थानपरतया योजितत्वात् । (८)

छन्दांसीति । येदं वैदिकमर्थजातं मायाप्रेरकः परमात्मा अस्मात् मायाशब्दितात् साधनात् सृजते । अतश्च अपरिणामिनोऽप्युपादानत्वमविरुद्धम् । ननु जीवस्य स्रष्टृत्वं किं न स्यादित्याशङ्कयाऽऽह-तस्मिंश्चान्यो मायया संनिरुद्धः । अन्यो जीवः तदाश्रितमायामोहितः । अतः तस्य मायाप्रेरकत्वाभावान्न स्रष्टृत्वमिति भावः । (९)

---

भागुक्तं यत्र देशे सम्यगासिकायां संपद्यते, तद्देशप्रदर्शकं वा । तथाच अक्षरपदं परमात्मपरं वा स्थानपरं वा । (८)

किमृचा करिष्यतीति ऋगादिवैयर्थ्यं वर्णितं, किमर्थं तस्य स्थितिरित्याशङ्का प्राप्ता । तत्रोच्यते छन्दांसीति । सर्वं निरोधार्थमेव, बन्धनार्थमेवेति भावः । अस्मादित्यस्योपादानपरत्वे पञ्चम्यास्वारस्यादुपपत्ते । उपादानाख्य प्रकृतिः प्राक् अजाम् श्रनीदायेति स्त्रीलिङ्गनिर्दिष्टा । तथापि सामान्ये नपुंसकमिहेति सूचयति साधनादिति । ननु ईश एवोपादानभूतः अस्मादिति गृह्यताम् । न च तर्हि मायीति निर्दिष्टः तस्मादन्यः प्रसजेदिति वाच्यम्—तथासति तस्मिन् मायया संनिरुद्ध इति प्रयोगस्यास्वारस्यात् तच्छब्दमायाशब्दार्थयोरपि भेदाभावप्रसङ्गाच्चेति चेन्न—तस्मिन्निति ईशग्रहणे तस्य संनिरुद्धत्ववर्णनायोगात् । एवं वाऽस्तु—अस्मादिति पूर्वोक्तमहिमार्थकम् । महिमवत्त्वात् मायी विश्वं सृजति । महिम्नि च जीवो निरुद्धः

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ १० ॥

---

माया नाम का ? तत्प्रेरकश्च क इत्यत्राह मायां त्विति । त्रिगुणात्मिकां प्रकृतिं विचित्राश्चर्यसर्गहेतुतया मायाशब्दितां विद्यात् । माया(मायायाः) प्रेरकस्तु महेश्वर इति विद्यादित्यर्थः। न च महेश्वरशब्दो देवतान्तरवाचक इति शङ्कनीयम् —तैत्तिरीयके, 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' इति अकारवाच्यस्यैव नारायणस्य महेश्वरशब्दार्थत्वाभिधानादिति द्रष्टव्यम् । तस्यापृथक्सिद्धविशेषणतया तदंशभूतैर्जीवैः सर्वमचेतनं व्याप्तमित्यर्थः । ततश्च जगदन्तर्गताः तदपृथक्सिद्धविशेषणतया तदंशभूता इत्यर्थः ॥१०॥

---

कुण्ठितप्रवृत्तिः ; तद्वेदनाद् व्यावर्तित इति यावत् । यद्वा, पूर्वं पश्यति, वेद इत्युक्तं वेदनम् अस्मादित्युच्यते । वेदनाद्धेतोः=तदर्थमेव मायी सृजते । अयं [illegible] मायापरवशः श्रुत्यादिदर्शितकल्याविजन्यास्था-स्थिरजगदैश्वर्यनिमग्नो वेदने निरुद्धगतिरित्येवम् । पूर्वार्धोक्त-च्छन्दोयज्ञादिकर्माधीनत्वं वा 'अस्मात्', 'तस्मिन्' इति विवक्ष्येत । वस्तुतः भाष्योक्तमेव श्रीभाष्यानुरोधि (१.४.१)। (९)

या प्राक् अजा उक्ता सैव माया, यश्च प्रागुक्त ईशः स एव मायीत्युच्यते अन्यत्वभ्रान्तिनिवृत्त्यर्थम् मायामिति । त्रिगुणात्मिकेति। पूर्वं लोहितशुक्लकृष्णामित्यनेन सत्त्वरजस्तमोमयत्वस्यापि कथन-संभवात्, 'देवात्मशक्तिं स्वगुणैर्निगूढाम्,' 'दैवी ह्येषा गुणमयी मम माया' इति श्रुतिस्मृत्यनुसाराच्चेदम् । अत्राध्याये, 'य एकोऽ-वर्णः-विदधाति स देवः' इति अकारवाच्यं देवं प्रस्तुत्य तत्संबन्धिनी माया मम मायेति [गीतायां] गायंश्च भगवान् अत्र महेश्वरशब्दस्य स्वार्थकत्वं गमयन् तैत्तिरीयसंवादं द्रढयति । (१०)

यो योनिं यो(नियों)निमधितिष्ठत्येको यस्मिन्निदं सञ्च वि चैति सर्वम् ।
तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति ॥ ११ ॥
यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो(को?) रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यत जायमानं स नो बुद्ध्या शुभया संयुनक्तु ॥ १२ ॥

**यो योनिमिति ।** योनिशब्देन जगद्योनिभूता प्रकृतिरुच्यते इति व्यासार्यैर्व्याख्यातम् । न च तथासति तस्याः एकत्वात् वीप्सानुपपत्तिरिति शङ्क्यम् — महदादीनामपि पञ्चभूतात्मकजगद्योनित्वेन वीप्सोपपत्तेः । ततश्च जगद्योनिभूतान् प्रकृतिमहदादीन् योऽधितिष्ठति, यस्मिंश्च विश्वमेतत् उत्पत्तिकाले वियदादिरूपेण व्येति वैविध्यमेति ; संहारकाले च समेति ऐक्यं गच्छति । तादृशमाश्रिताभीष्टदायिनं तम् एवं दर्शनसमानज्ञानेन विषयीकृत्य रागद्वेषादिविगमभावासहकृतत्वलक्षणात्यन्तिकत्वोपेता श्रुत्यादिसिद्धा सर्वानर्थशान्तिमाप्नोतीत्यर्थः । 'यस्मिन्निदं सञ्च वि चैति सर्वम्' इति प्रतिपाद्यमानमुपादानत्वं निर्विकारस्याऽऽत्मनः कथमिति शङ्कावारणाय, 'योनिं योनिमधितिष्ठति' इति प्रकृत्यादिशरीरकत्वादुपपद्यत इति शिष्यानुग्रहार्थं पुनः पुनः कथनमिति द्रष्टव्यम् । (११)

तज्ज्ञाने तदनुग्रह एव कारणमिति तं प्रार्थयते यो देवाना-

---

अस्मान्मायी सृजते इति निमित्तकारणत्वं ब्रह्मणोऽवगमितम् । उपादानत्वमपि तस्यैवेत्युच्यते यो योनिमिति । वीप्सोपपत्तेरिति । 'अष्टौ प्रकृतयः' इति प्रकृतित्वं तेषामपि हि प्रसिद्धमिति । टीकायां योनिमित्येकपदमात्रव्याख्यानम्, 'यो योनिर्योनिम्' इति पाठानुरोधेनेत्यपि सुवचम् । तदा योनिरिति ब्रह्मविशेषणम् ।    (११)

अद्वारकसमष्टिकारणस्य व्यष्टिहेतुत्वं हिरण्यगर्भद्वारकं प्रमाणान्तरप्रसिद्धमनूद्य बुद्धिप्रार्थना क्रियते यो देवानामिति । उक्तरीत्या

*यो देवानामधिपो यस्मिन् लोका अधिश्रिताः ।*
*य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ १३ ॥*
*सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।*
*विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥ १४ ॥*

---

मिति । यो [देवाना] जायमानं हिरण्यगर्भम्, 'असौ अप्रतिहतज्ञानादि-युक्तस्स्यात्' इति सानुग्रहमैक्षत । स मां वीक्षतामिति भावः । (१२)

यो देवानामधिप इति । सर्वचिदचित्प्रपञ्चशेषिणे सर्वाधार-भूताय सकलनियन्त्रे तस्मै परमात्मने पुरोडाशादिहविषा पूजां कुर्वीमही-त्यर्थः । यज्ञादिभिः तदाराधनं तदुपासनद्वारा तत्प्राप्तिसाधनमिति भावः ॥

सूक्ष्मातिसूक्ष्ममिति । सूक्ष्मवस्तुष्वप्यन्तःप्रवेशयोग्यं कार्ये ब्रह्माण्डमध्ये हिरण्यगर्भप्रजापत्याद्यनेकरूपेणावस्थाय विश्वस्रष्टारं सर्वा-न्तर्यामित्वेऽप्यनवद्यमद्वितीयं परमात्मानं ज्ञात्वा मुक्तो भवतीत्यर्थः ॥ १४

---

देवादिसर्वनिमित्तोपादानभूतः हिरण्यगर्भमुत्पाद्यानुगृह्णाति । तेन न निमित्तमात्रं भवति। अत्रापि रुद्रत्वं न विधेयम्, अनुवादान्तर्गतत्वात्।

ननु निष्कामकर्मकरणात् बुद्धिः शुभा जायते । कर्माणि च नानादेवताप्रीत्यर्थानि। तत् कथं 'स नो देवः' इत्यादि इत्यत्र, सर्वान् देवान् प्रत्यपि तस्यान्तरात्मत्वात् स एव सर्वकर्मसमाराध्य इति शाप्यते यो देवानामधिप इति । अत्र शेषित्वाधारत्वनियन्तृत्वरूपं त्रयमपि आत्मशब्दप्रयोजकमुदितम् । कस्मै इति तस्मै इत्यत्र पर्यव-सन्नम् । ▪ विना अन्यस्मै कस्मै हविषा कर्म कुर्याम्, तस्मै एकस्मै कस्मैचित् सर्वदेवात्मने कुर्यमित्यर्थः । एवञ्च देवानां काम्यकर्मा-राध्यत्वेऽपि निष्कामकर्माराध्यत्वं न भवतीति अत्र सूचितम् । (१३)

सर्वान्तर्यामित्वेऽप्यनवद्यत्वमित्यनुसंधाप्यते सूक्ष्मेति । (१४)

स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः ।
यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥
घृतात् परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १६ ॥
एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये संनिविष्टः ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १७ ॥

---

स एव काल इति । ब्रह्मविदो मुनयो देवताश्च यत्र मनो योजयन्ति, स एव परमात्मा कर्मपरिपाककालविशेषे जगतः गोप्ता संसारमोचकः ; कुतः ? विश्वाधिपः सर्वभूतेषु गूढः । सर्वशेषित्वात् सर्वान्तर्यामित्वाच्चेत्यर्थः । शेषशेषिभावशरीरात्मभावसम्बन्धसत्त्वात् तादृशस्य शक्तस्य मोचकत्वौचित्यादिति भावः । तमेवमिति । अनेनाऽऽकारेण तं जानन् दर्शनसमानाकारज्ञानेन विषयीकुर्वन् मुक्तो भवतीत्यर्थः ॥

घृतादिति । यथा घृतस्य साराशः सूक्ष्मः क्षीरव्यापी, एवं सर्वत्र सूक्ष्मतया दुर्ज्ञानतया, व्याप्य वर्तमानत्वेऽप्यनवद्यतया मङ्गळमूर्तं ज्ञात्वा मुक्तो भवतीत्यर्थः ।    (१६)

एष देव इति । विश्वं कर्म—क्रियत इति कर्म—कार्यं यस्य स तथोक्तः । जगत्कर्तेत्यर्थः । इतरत् उक्तार्थम् ।    (१७)

---

घृतात् परमिति । क्षीरदध्यादौ सूक्ष्मं सत् व्याप्तमेव मण्डं भूया घृतं भवति । अतो 'घृतात् परम्' इति क्षीरादिव्यापनक्षमात् घृतपरिणामादप्युत्कृष्टा पूर्वावस्थोच्यते ।    (१६)

अन्यदुक्तार्थमिति । तृतीये त्रयोदशमन्त्र इति शेषः ।    (१७)

एवं बहुभिर्मन्त्रैः तज्ज्ञानस्यैवामृतत्वहेतुत्वमुपवर्ण्य संध्योपास्ति-

यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः ।
तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ॥ १८ ॥

गायत्रीप्रतिपाद्यत्वमपि तस्यैवेत्याह यदा तम इति । यस्मिन् काले सदसच्छब्दितमूर्तामूर्तप्रपञ्चं दिवारात्रविभागश्चान्तरेण तमोमात्रमवस्थितम्, तस्मिन् काले, ब्रह्मादिषु प्रलीनेषु नष्टे स्थावरजङ्गमे । [आभूतसंप्लवं प्राप्ते प्रलीने प्रकृतौ महान् ।] एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुः' इत्युक्तरीत्या ज्ञानसंकोचलक्षणाशुभमन्तरेण केवलं शुभतयाऽवस्थितम्; तदेव क्षरणशून्यं वस्तु; सवितृमण्डलमध्यवर्ति;

प्रभृतिसर्वकर्माराध्यत्वात् तस्य, तस्य प्रीतस्य शुभबुद्धिप्रेरकत्वं प्रागुक्तं युक्तमिति निगम्यते यदेति । 'यदा तमः' इत्यत्र नञः अभावात् न प्रलये तमोनिषेधः । अत इदं तमः प्रागुक्ता मायेति ज्ञायते । स्पष्टमिदं सुबाले । मूर्तामूर्तब्राह्मणे बृहदारण्यकगते सदिति तेजोबन्नरूपं मूर्तं गृहीत्वा तदन्यस्य वायोरन्तरिक्षस्य चामूर्तत्वमुक्तम् । तदत्रानुसंधापयति मूर्तामूर्तेति । यदेत्यस्य तदिति प्रतिसंबन्धि । अत्र, यदा तमः, तदा दिवारात्रादिकं विना केवलः शिवः स्थित इत्यर्थस्य वर्णनीयत्वेऽपि यच्छब्दघटितवाक्ये न दिवेत्याद्यंशार्थवर्णनं भाष्ये कृतं तमश्शब्देन स्थूलावस्थारहितस्य तमस एव ग्राह्यत्वज्ञापनाय । न दिवेत्यादिना जडप्रपञ्चस्य तदा निषेधवत् जीवप्रपञ्चस्यापि तदा निषेधार्थं शिव एव केवल इति । शिवः केवलः स्थितः ; अशिवः दुःखाक्रान्तो व्यष्टिजीवप्रपञ्चो नासीदित्यर्थः । अस्य वाक्यस्य शिवसद्भावविधौ न तात्पर्यम्; किंतु विवक्षितनिषेधे । एवकारस्वरसे वाक्यस्य तदर्थविधानपरत्वात् । अतश्च यः शिवः प्रमाणान्तरतः प्रलयस्थिततयाऽवधारितः, स इह ग्राह्यः । स च प्राक्, 'सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिवः' इत्यादिना अनुवादरूपेण वदु-

नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्।
न तस्य प्रतिमा अस्ति यस्य नाम महद् यशः ॥ १९ ॥

---

चरणीयं भजनीयञ्च तदेव । तस्मादेव हेतोः सृष्टिकाले प्रजानां संकुचितज्ञानस्य नित्यस्य प्रसरणमिति भावः । प्रज्ञा च तस्मादित्यनेन, 'धियो यो नः प्रचोदयात्' इत्यंशप्रतिपाद्यत्वमपि तस्यैवेत्युक्तं भवति ॥

नैनमिति । ऊर्ध्वस्थाण्वादिरूपतया, पश्वादितिर्यग्रूपतया, तदुभयविलक्षणमनुष्यादिरूपतया स तन्मध्येन कोऽपि जनः परितः सम्यक् समन्तात् न जग्रभत् नाग्रहीत् । यद्वा ऊर्ध्वदेशादिषु न कोऽपि ज्ञातवान् । तस्य विभुत्वादिति भावः । यस्य महद्यश इति नाम— यस्यापरिच्छिन्नकीर्तिः प्रसिद्धा, तस्य सदृशं किमपि वस्तु नास्तीत्यर्थः ॥

---

इत्थं शिवशब्देनैव अनन्तरं महात्मा य उक्तः स एव केवल-शिवः प्रसिद्धशिवादिविलक्षणः परब्रह्मपरमात्मशिवः, सदाशिवो रुद्रो महान् इति न पूर्वसन्दर्भानुसन्धायिना देवतान्तरप्रसक्तिः परिहार्येति ध्येयम्। एतेन केवलपदमपि सार्थकम्। ततः केवल-शिवम्। नपुंसकनिर्देशः सावित्र्या तच्छब्दग्राह्यस्यैतस्य बुद्धि-स्थत्वात्। तत् सवितुः सवितृसम्बन्धि। तद्विवरणम्, सवितृमण्डल-मध्यवर्तीति। 'धियो यो नः प्रचोदयात्' इत्यत्र पुंल्लिङ्गयच्छब्दस्य सवितृशब्दवाच्यसूर्यपरत्वेऽपि न तदर्थेन धीप्रेरकत्वं विवक्षितम्, किन्तु तदन्तर्वर्तिनः परमात्मन इति ज्ञापनाय, प्रज्ञा च तस्मादिति। पुराणी अनादिर्नित्या, 'अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा' इति धर्मभूतज्ञानस्य नित्यत्वश्रुतेः। तादृशी प्रज्ञा तस्मात् परमात्मन एव हेतोः—तदनुग्रहादेवेति यावत्—प्रसृता प्रसरणं विकासम् अवस्थाविशेषं प्राप्नोतीति। (१८)

स्वरूपतो गुणतश्चापरिच्छिन्नत्वमुच्यते नैनमिति। (१९)

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥ २० ॥
अजात इत्येवं कश्चिद्भीरुः प्रपद्यते ।
रुद्र यत् ते दक्षिणं मुखं तेन मां पाहि नित्यम् ॥ २१ ॥

---

................................................................(२०)

**अजात इति ।** हे संसाररुद्रावक ! त्वम् । **अजातः** जननादिलक्षणसंसारहीन इति मत्वा **कश्चित्** पुरुषापशदोऽहं दाक्षिण्यशालि 'उदग्र पीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम्, प्रबुद्धमुग्धाम्बुज चारुलोचनं सविभ्रमभ्रूलतमुज्ज्वलाधरम्, शुचिस्मितं कोमलगण्डमुन्नसं ललाटपर्यन्तविलम्बितालकं' मुखे **प्रपद्यते** प्रपद्ये=ध्यायामि । **प्रपद्यत**

---

विग्रहतः स्वरूपतश्चाचाक्षुषत्वमुच्यते न संदृश इति । एतद्व्याख्यानमिह न लक्ष्यते ; कठोपनिषदि (६.९.) द्रष्टव्यम् । (२०)

ध्यानस्यैवं मोक्षसाधनत्वावगमात् ध्यानं कुर्वन् फलमर्थयते अजात इति । जन्मप्रबन्धरूपसंसाराद् भीतः जन्मरहितं भगवन्तं प्रपद्ये, तत्क्रतुनयेन जन्मराहित्यरूपसाधर्म्यसंपत्त्यै इति भावः । स्वस्य, अहमित्यनिर्दिश्य कश्चिदिति निर्देशः नैच्यानुसंधानेन अनहङ्कारस्य विनयस्याऽऽविष्करणाय ; तदाह पुरुषापशद इति । एवमपि तेन मामिति वक्ष्यमाणानुसारेण कश्चिदहं प्रपद्ये इत्युक्तावपि नैच्यलाभात्, कश्चिदित्यनेन स्वान्यस्य ग्रहणं मा भूदिति कश्चिदहमित्येव वक्तुमुचितमित्याशयेन पुरुषव्यत्ययश्छान्दस इत्युक्तम् । मुखस्य रक्षणसाधनत्वकथनं न स्वरसम् । तदपेक्षया प्रपद्यत इति पद्लृधातोः गत्यर्थस्य ध्यानार्थत्वं युक्तमिति मुखस्य तत्कर्मत्वविवक्षया तृतीयपादस्य पूर्वार्धेऽन्वयः स्वीकृतः । अतश्च यदित्यस्य यस्मादिति, तेनेत्यस्य

**मा नस्तोके मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।**
**वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदसि त्वा हवामहे ॥ २२**
**इति श्वेताश्वतरोपनिषदि चतुर्थोऽध्यायः ॥**

---

इति पुरुषव्यत्ययः छान्दसः । तेन **ध्यानेन मा निरयं पाहि** निरस्तसंसारं कुर्वित्यर्थः । स्तनन्धयप्रजाया अवतरणमुखमूतस्तनवत् अवतरणमुखमूतं चरणारविन्दं मपच इति वाऽर्थः ।                (२१)

**मा नस्तोक** इति । अपत्यपुत्रायुर्गवाश्वादिप्रवणतया मा मा हिंसी । 'रिष हिंसायाम्' इति धातुः । हे ससाररुद्रावक ! त्वम् असदपचारेण **भामितः** कुपितस्सन् वीर्ययुक्तान् ज्ञानवैराग्यादीन् मोक्षौपयिकान् **मा वधीः** मा हिंसीः । त्वत्पूजोपकरणपुरोडाशादिलक्षणहविरादियुक्ताः सन्तः त्वा सदसि **हवामहे** आराधयाम । इदित्यवधारणे । त्वामेवेत्यर्थः ।                (२२)

इति चतुर्थाध्यायप्रकाशिका ।

---

चार्थ इष्टः । पूर्णध्यानासमर्थस्य अवयवध्यानमप्यलमिति मुखमित्युक्तम् ।                (२१)

भक्तिनिष्पत्तये परिकरान् अपेक्षमाणस्य पुंसः काम्यकर्माराध्योऽपि भवति स इति बोध्यते मेति । पूर्वार्धे प्रतिमाड पदं रीरिष इति सम्बध्यते । 'सदमित् त्वा' इति पाठे सदमित्यस्य सदेत्यर्थः । सदसीत्येव वा । त्वा हवामहे इत्यनेन काम्यस्यापि भगवदाराधनत्वेन करणमुचितमिति ज्ञाप्यते; अन्येषामपि भक्तानामाराध्येषु देवेषु भगवच्छेषत्वधियः सत्त्वात् ।                (२२)

अथ पञ्चमोऽध्यायः

ननु अहं ब्रह्मास्मीत्यनुसंधानरूपत्वात् ब्रह्मोपासनस्य जीव-

अथ पञ्चमोऽध्यायः ॥

द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे ।
क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः ॥ १ ॥

---

पुनरपि ब्रह्ममाहात्म्यं (तादात्म्यं) चिदचिद्विवेकञ्च प्रपञ्चयति । द्वे अक्षरे इति । ब्रह्मपरे ब्रह्माराधनरूपे अनन्ते असङ्ख्यातव्यक्तिके नित्या नित्यफलसाधनतया [१क्षरामृतशब्दिते] विद्याविद्याशब्दिते(त१) ज्ञान कर्मरूपे[द्वे१]यत्र अक्षरे आत्मनि गूढे दुर्मोचतया लग्ने, [सोऽन्यः। यस्तु द्वे ईशते१] सोऽप्यन्यः । आभ्यां समाराध्यमानः तत्फलप्रदश्चान्य इत्यर्थः ।

---

ब्रह्मैक्यमेवाध्यमिति भ्रमापनुत्तये बृहदारण्यकादौ देवानामृष्यादीनाञ्चोक्तम् अहं ब्रह्मास्मीत्युपासनमपि जीवाभिन्नब्रह्मोपासनमेवेति संसूच्य ब्रह्मणो महत्त्वम्, जीवस्यात्यन्त तद्वैलक्षण्यञ्चाणुत्वादिरूपं निरूपयितुं पञ्चमोऽध्याय आरभ्यते । तमवतारयति पुनरपीति । अक्षरे इत्येतत् द्वे इत्येतत्समानाधिकरणं न भवति । ब्रह्मभिन्नाक्षरद्वयाभावात् । 'क्षरं प्रधानममृताक्षरं हरः' इति प्रागुक्तरीत्या क्षरामृतशब्दाभ्यां प्रकृतिपुरुषयोर्ग्रहणेन विद्याविद्याशब्दयोरपि ज्ञानस्वरूपजडात्मकनिरुक्तचिदचित्परत्ववर्णनसम्भवेऽपि द्वे अक्षरे इति हि न तद्ग्रहणसंभवः । क्षरत्वेन वर्णनाधमस्य पत्र प्रकृतेरक्षरत्वकथनानौचित्यात् । अत अन्यथा व्याकुर्वन् पूर्वार्धं जीवपरम्, उत्तरार्धञ्च ब्रह्मपरमाह द्वे इति । अक्षरे इति सप्तम्यन्तं जीवपरं यत्रेत्येतेन समानाधिकरणम् । विद्याविद्यापदे ज्ञानकर्मपरे । पूर्वार्धेऽपि जीवपरतया सोऽन्य इत्यस्योत्तरार्धगतस्यापकर्षः स्वरससिद्ध इत्यभिसन्धायाह ब्रह्माराधनेत्यादि । गूढे निहिते इत्यस्य विवरणं दुर्मोचतया लग्ने इति । एवं यच्छब्दद्वयस्यार्थभेदे तु तदोऽस्वारस्यम् । अस्तु वा द्वयमपि ब्रह्मपरम् अक्षरञ्च ब्रह्मैवेत्येव भाष्याशय इति । (१)

यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः ।
ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ॥ २ ॥
एकैकं जालं बहुधा विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष देवः ।
भूयस्सृष्ट्वा पतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥

---

**यो योनिमिति** । सर्वाणि समष्टिव्यष्टिरूपाणि तत्तद्योनीश्च सर्वा योऽधितिष्ठति, यस्तु अग्रे सृष्टिपूर्वसमये प्रसूतं कपिलं ज्ञानादियुक्तं **बिभर्ति** कृतवान्, जायमानदशायाश्च सानुग्रहमैक्षत, सोऽन्यत्र इति पूर्वेण संबन्धः । (२)

**एकैकमिति** । यस्मिन् क्षेत्रे प्रकृतिरूपे जालवद् बन्धकं महदादिकार्यवर्गं विविधतया कुर्वन् पुनश्च संहरति, तस्मिन्नेव प्रकृतिरूपे क्षेत्रे **भूयः** कल्पान्तरेऽपि प्रजापत्युपलक्षितं प्रपञ्चं सृष्ट्वा सर्वदा सर्वेषां नियन्तृतयाऽऽस्ते यतोऽसौ, [ततो ?] महामहिमशाल्यात्मेत्यर्थः । (३)

---

ब्रह्मान्येन शंसयमानात् कपिलादितोऽप्यन्यतया स्थितस्य परब्रह्मणः श्रुतस्तत्तं जीवैन्यमिति बुबोधयिषया कपिलादिर्द्वितीयमन्त्रे प्रस्तुतः । योनिं योनिमिति समष्टिसमष्टिग्रहणम् । विश्वानि रूपाणीति नामरूपे व्याकरोदित्युक्तसर्वव्यष्टिरूपग्रहणम् । योनीश्च सर्वा इति समष्टिव्यष्टिसर्वकारणभूतकालस्वभावादिकारणग्रहणम् । जायमानञ्चेति प्रसक्तकपिलमात्रग्रहणौचित्यात् पश्येदित्यस्य अपश्यदित्यर्थ उक्तः । अन्यथा सकलजायमानपुरुषदर्शनस्य तत्क्रियमाणत्वाभावेन जायमानञ्च पश्येदिति सामान्योक्त्ययोगात् । (२)

अनन्तब्रह्मरूपकारणत्वादस्य चतुर्मुखाद्यतिशायिनं माहात्म्यमित्युच्यते एकैकमिति । जालं-समष्टिवर्गं विकुर्वन्-व्यष्टिरूपेण कुर्वन् । तथा-एवम् । भूयः महाप्रलयात् पश्चात् । पतय इति द्वितीयार्थे प्रथमा ।

सर्वा दिश ऊर्ध्वमधश्च तिर्यक् प्रकाशयन् भ्राजते यद्वनड्वान् ।
एवं स देवो भगवान् वरेण्यो योनिस्वभावान् अधितिष्ठत्येकः ॥ ४ ॥
यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान् परिणामयेत् यः ।
सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान् विनियोजयेत् यः ॥५॥
तद् वेदगुह्योपनिषत्सु गूढं तद् ब्रह्मा वेदते ब्रह्मयोनिम् ।
ये पूर्वं देवा ऋषयश्च तद्विदुस्ते तन्मया अमृता वै बभूवुः ॥ ६ ॥

---

नन्वेत(क?)स्य कथं युगपत् सर्वयोन्यधिष्ठातृत्वमुपपद्यत इत्यत्राह **सर्वा दिश** इति । कालचक्रपरिवर्तनहेतुतया अनड्वच्छब्दवाच्यः सूर्य तिर्यगूर्ध्वमधश्च युगपद्भासयन् यत्—यथा भासते, तथा मुमुक्षुभिर्वरणीयः भजनीयो भगवानेक एव सर्वयोन्यधिष्ठाता भवतीत्यर्थः । (४)

यच्चेति । यच्चेति लिङ्गव्यत्ययश्छान्दसः । सर्वेषामग्निजलादिवस्तूनाम् उष्णानुष्णस्वभावं **पचति** संकल्पलक्षणपाकेन निर्वर्तयति, यश्च **पाच्यान्** परिणामयोग्यान् परिणमयति । सत्त्वश(सत्त्वा)-दींश्च गुणान् प्रवर्तयति, परमात्मा सर्वप्रकृत्यधिष्ठातेत्यर्थः । तद्वेदेति । तेषु प्रसिद्धेषु वेदेषु गुह्योपनिषत्सु [च] तात्पर्यविषयतया प्रतिपाद्य ब्रह्मणो वेदस्य योनिभूतं तत् परं ब्रह्म सकलवेदप्रवर्तकः ब्रह्मा चतुर्मुखः वेदते

---

तद्द्वारा प्रजापत्युपलक्षितमिति । प्रजापतयः चतुर्मुखदक्षादयः मतं । २

कालचक्रेति । अनड्वान् हि शकटस्य युगं चक्रपरिवर्तनहेतुः । तथा सूर्यः दिनमासर्त्वयनादिकालात्मकचक्रपरिवर्तकत्वादनड्वानिति ।

'काल स्वभावो नियति'रित्यादिमाशुक्तस्वभावादीनामेतदधीनत्वजिज्ञापयिषयोच्यते यच्चेति । ईदृशब्रह्मवेदनात् मुक्तिः चतुर्मुखादीनां देवानामृषीणाञ्चेति अस्योपास्यत्वमुच्यते तद्वेति । अत्र बृहदा-

गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता ।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः ॥ ७ ॥
अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः ।

---

जानाति । अतादृशो न जानाति । ये च पूर्वे देवा ऋषयश्च तत् ज्ञातवन्त, ते सर्वे स(तत्स ?)मानाकारा मुक्ता बभूवुरित्यर्थ । ५-६

एवं परमात्मस्वरूप तज्ज्ञानस्यामृतत्वसाधनत्वञ्चोक्त्वा जीवस्वरूपं शोधयति गुणान्वय इति । सत्त्वरजस्तमोगुणानामन्वयो यस्य स तथोक्तः । सत्त्वादिगुणान्वितस्सन् यत् फलसाधनभूतं कर्म य करोति, स एव तस्यैव फल भुङ्क्ते । एव नियतकर्तृत्वभोक्तृ त्वशाली स्थावरनरपश्व्यादि-रूपयुक्त कामक्रोधलोभरूपगुणत्रययुक्तो देवयानपितृयाणकष्टगतिरूप-*मार्गत्रययुक्तः प्राणसहचरितस्सन् कर्मपाशबद्ध सञ्चरतीत्यर्थ ।* (७)

अङ्गुष्ठमात्र इति । बुद्धेः अन्त करणस्य सत्त्वरजस्तमोलक्षणगुण-

---

रण्यस्थितम्, 'योयो देवाना प्रत्यबुध्यत, अहं ब्रह्मास्मीति, तथर्षीणां तथा मनुष्याणां स एव तदभवत्' इत्यादि वाक्यमनुसंधेयम् । ५-६

एव देवैः ऋषिभिश्च क्रियमाणम् अह ब्रह्मास्मीत्युपासनं न जीवब्रह्माद्वैतपरम्, ब्रह्मणा महता जीवस्यात्यन्ताणोः ऐक्यायोगात् । किंतु शरीरात्मभावायत्तविशिष्टैक्यपरमिति व्युत्पादयितुं जीवाणुत्व-मुपदिश्यते गुणान्वय इत्यादिना । तत्र परमात्मवत् अस्य विभुत्वं न स्वीकार्यम्, कर्मफलभोगार्थोत्क्रान्त्यनेकलोकगत्यागतीना संप्रति-पन्नत्वादिति परममहत्त्वनिरासः प्रथममन्त्रेण क्रियते । (७)

भवतु तर्हि मध्यमपरिमाण । न च तदा सावयवत्वादनित्य-त्वापत्तिरिति वाच्यम्—श्रीवैकुण्ठनगर-गोपुर-परविग्रहादीनामिव सावयवत्वेऽपि प्रमाणबलेन नित्यत्वस्य संभवात् । अणोर्महतश्चैव

बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः ॥ ८ ॥

---

कारितेन आत्मधर्मभूतनानाविधार्थविषयकाध्यवसायेन युक्त तत्कार्येण तत्तत्फलसङ्कल्पेन, 'आढ्योऽभिजनवानस्मि' इत्यहङ्कारेण [च?] युक्तस्सन् आत्मवत् स्वप्रकाश, 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इत्युक्तरीत्या अङ्गुष्ठपरिमाणः शास्त्रेषु दृष्टः । ततोऽपि अवरः हीन-परिमाणः **आराग्रमात्र** इत्यपि दृष्टः—शास्त्रेषु दृष्ट इत्यर्थः । (८)

---

अन्यविधपरिमाणकस्यापि प्रमाणतो निरवयवत्वस्वीकारसंभवादित्यत्र तत् परिमाणं प्रत्यग्वस्तुनः श्रूयमाणमव्यवस्थितं काल्पनिकमित्युच्यते अङ्गुष्ठेति । 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इत्येतादृश-प्रमाणानुसारादङ्गुष्ठमात्रत्वस्येव, आराग्रमात्रत्वादेरपि प्रामाणि-कत्वादेकतरपरिशेषे न किञ्चिन्नियामकमिति भावः । रवितुल्यरूप इति । स्वप्रकाशोऽयं यदि मध्यमपरिमाणतयाऽपि प्रकाशमानः स्यात्, तदा तत् स्वाभाविकं स्यात्; न त्वेवमिति सूचनायैतदुक्तिः । अङ्गुष्ठमात्रत्वं न वास्तवम्, किन्तु हृदयस्याङ्गुष्ठपरिमाणत्वात् हृदय-परिच्छिन्नत्वप्रयुक्तमिति दर्शयितुं बुद्धेर्गुणेनेत्युक्तम् । नन्वत्यन्ताणोः हृदयकुहरकोणनिलीनस्य स्थूलं हृदयमादाय तत्परिमाणत्ववाचो-युक्तिरपि कथमित्यत्र जीवधर्मभूतज्ञानविकासस्य प्रसृमरस्य हृदय-परिच्छिन्नत्वादिति ज्ञापयितुम् आत्मगुणेन चैवेति । आराग्रमात्रोऽ-ह्यवरोऽपि दृष्ट इति । आरा चर्मसूची । तदग्रमात्रोऽपीत्यन्वयः । नर-हृदयस्याङ्गुष्ठमात्रतया तत्र स्थितिदशायां जीवस्यातथात्वसंभवेऽपि मशकपिपीलिकाद्यणुदेहगतस्य आराग्रमात्रत्वादिकमप्येष्टव्यं हीति भावः । नहि यथायथं संकोचविकासभाविनस्तद्विधपरिमाण एवाय-मस्तु इति चेन्न—तथासति देहसमानपरिमाणत्वादिजैनमतावतारात् । निरवयवत्वनिर्विकारत्वश्रुतिविरोधात् तदयोगादिति । (८)

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ९ ॥

नैव स्त्री न पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेनतेन स युज्यते ॥ १० ॥

---

स्वमतमुपन्यस्यति वालाग्रेति । वालाग्रशतांशशतांशतुल्यपरिमाण एव जीवो मोक्षे धर्मभूतज्ञानविकासेन विभुत्वलक्षणानन्त्याय प्रभवतीत्यर्थः ।

स्त्रीपुंनपुंसकत्वादिकमपि तस्य तादृशशरीरसंबन्धकृतम् ; न [तु] स्वाभाविकमित्याह नैव स्त्रीति । स्पष्टोऽर्थः ।    (१०)

---

अतोऽयमत्यन्ताणुरिति सिद्धान्त उच्यते वालेति । शतभागस्येत्यादिकमत्यन्ताणुत्वनिर्भागत्वनिरूपणेदम्परम् । एवम्भूतस्य आराग्रमात्रत्वाङ्गुष्ठमात्रत्वयोरुपपादनं नाशक्यम् । मुक्तावानन्त्यस्यापि संमतेः, तदुपपादनं यत् धर्मभूतज्ञानमादाय, तदेवादाय एतयोरप्युपपादनं शक्यम् अवस्थाविशेषग्रहणेनेति सूचयितुं स चानन्त्याय कल्पत इत्युक्तम् । आनन्त्याय च—अपरिच्छिन्नत्वाय च । धर्मभूतज्ञानस्य सर्वव्यापी विकासो मुक्ताविति तद्द्वारा जीवस्यानन्त्यमिति व्यक्तं भाष्यादौ । स विज्ञेय इत्यनेनाणुत्वविधाने नैर्भर्याविष्करणात् अणुत्वस्य काल्पनिकत्वम्, आनन्त्यस्य वास्तवत्वञ्चात्र नैव वक्तुं शक्यम् । उभयस्वीकारे निर्विकारत्वभङ्गः स्यात् ।    (९)

ननु जीवस्य स्त्रीपुंनपुंसकात्मना त्रैविध्यस्य प्रसिद्धत्वात्, स्त्रीत्वादेश्चावयवसंनिवेशविशेषादिनैवोपपाद्यत्वात् सावयवत्वमावश्यकमिति कथमयमत्यन्ताणुरिति शङ्कायाम्—स्त्रीत्वादिकं शरीरगतम्, न त्वात्मगतमिति परिहारः क्रियते नैव स्त्रीति । एक एव जीवः कालभेदेन स्त्री च भवति, पुरुषोऽपि भवतीति दृष्टम् । अतः

सङ्कल्पन-स्पर्शन-दृष्टि-होमैर्ग्रासाम्बुवृष्ट्याऽऽत्मविवृद्धजन्म ।
कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसंप्रपद्यते ॥ ११ ॥

---

देहप्राप्तौ हेतुमाह संकल्पनेति । पुण्यविषयकसंकल्प-गङ्गादि-लक्षणपुण्यवस्तुस्पर्श-तादृशवस्तुदर्शन-यागहोमादिभिरात्मनो विवृद्धियुक्तं जन्म-उत्कृष्टं जन्मेति यावत्-अनेन क्रमेण (?) कर्मानुसारीणि रूपाणि

---

स्त्रीजीव एव स्त्री, पुरुषजीव एव पुरुष इति न निर्बन्धः। एवञ्चापृथक्सिद्धशरीरगतस्त्रीत्वादिनैव व्यवहारनिर्वाहे, (माध्वमत इव) जीवेऽपि साक्षात् तदङ्गीकारे न किञ्चित् प्रमाणम्। किमुत मुक्तकण्ठमिह निषेधे सति ।

एवंरूपशरीरग्रहणे कारणमुच्यते संकल्पनेत्यादिना । आत्मसंबन्धि यत् विवृद्धमुत्कृष्टं जन्म, तत् संकल्पनादिभिर्भवतीत्यर्थः। अनेन निकृष्टजन्मकारणमेतद्विपरीतरूपमित्यर्थसिद्धम् । विवृद्धिजन्मेति पठित्वा विवृद्धिश्च जन्म चेति द्वयमात्मनः संकल्पनादिभिरिति परे व्याचक्षते । विवृद्धिपदम् 'अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः' इत्युक्तभावविकारान्तराणामुपलक्षणमिति च । एवञ्च पुण्यापुण्यजन्मद्वयस्यापि सुग्रहतया संकल्पनेत्यादिकमपि उभयसाधारणम् । अतः पुण्यविषयकसंकल्पादिपरमिव पापविषयकसंकल्पन-पतितादिस्पर्शनाभिचारहोमादिपरमपीष्यते । अत्र ग्रासाम्बुवृष्ट्येत्यस्य विज्ञानभगवत्कृतं व्याख्यानमन्यापेक्षया आदरणीयमस्ति । तद् यथा—'उत्कृष्टदेशकालपात्रेषु अन्नाम्बुनोरत्यादरेण दानमतिदानं पुण्यहेतुर्भवति ; विपरीतेष्वतिदानं पापहेतुः । अथवा योग्यायोग्येषु ग्रासप्रदानं पुण्यपापहेतुर्भवति, अम्बुदानञ्च । तथा वृष्टिः । ओ वृश्चू छेदने । अनर्थनामनर्थोच्छेदनं पुण्यहेतुर्भवति ; अर्थनामर्थोच्छेदनं पापहेतुः'—इति । (११)

स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति ।
क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः ॥ १२ ॥
अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥
भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् ।

---

तेषु तेषु ब्राह्मणादिषु योनिषु [अनुक्रमेण ?] पर्यायेण प्रपद्यत इत्यर्थः ॥
**स्थूलानीति ।** मशकमातङ्गादिस्थूलसूक्ष्मशरीराणि बहुविधान्यपि तत्तत्फलाभिसन्ध्यादिलक्षणरागादिरूपात्मगुणप्रयुक्तयागादिरूपक्रियालक्षणैर्गुणैर्हेतुभिर्भजते । तादृशात्मगुणयोगे च पूर्वपूर्वं कर्मैव हेतुर्दृष्ट इत्यर्थः ।
**अनाद्यनन्तमिति ।** कलिलस्य कार्यस्य मध्ये स्थित्वा हिरण्यगर्भप्रजापत्याद्यनेकरूपतया विश्वस्य स्रष्टारमित्यर्थः । शिष्टं पूर्ववत् । (१३)
**भावेति** भावग्राह्यं भक्तिग्राह्यम् अनीडत्वेन अनिलयत्वेन

---

मशकमातङ्गेति । मातङ्गमशकेति भाव्यम् । एतदुपपत्त्यनुगुण क्रियाविशेषो य कश्चिदपि यागादीस्त्र विवक्षित । (१२)
एवमणु च—सृज्यमानत्वाभ्या जीव निरूप्य स्रष्टृत्वमहत्त्वाभ्या परमात्मन तद्वैलक्षण्य व्यनक्ति अनादीति । विश्वस्य परिवेष्टितार मिति परममहत्त्व ज्ञाप्यते । (१३)
'ये पूर्वं देवा ऋषयश्च तद् विदु , ते तन्मया अमृता वै बभूवु ' इति पूर्वं बहूनामेतदुपासनान्मुक्तिरासीदिति यदुक्तम् , तत् एवम्भूत जीवविलक्षणोपासनादेवेति निगमयति भावेति। 'भक्त्येन लभ्ये पुरुषे पुराणे' इत्युक्तरीत्या बाह्यकरणमप्रतीक्ष्य भक्तिमात्रेण सुग्रहत्व भावग्राह्यत्वम् । अनाधारेति । आधार शरीरादि । नीडपर्याय कुलायशब्द शरीरे प्रयुक्त 'बहिष्कुलायादमृतश्चरित्वा' इति । कला सर्गकर्तारमिति 'स प्राणमसृजत प्राणाच्छ्रद्धाम्—' इति प्रश्नषष्ठ-

कलासर्गकरं देवं येविदुस्ते जहुस्तनुम् [ति जहुस्तनुम्] ॥ १४ ॥

इति श्वेताश्वतरोपनिषदि पञ्चमोऽध्यायः ॥

अथ षष्ठोऽध्यायः ॥

स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये परिमुह्यमानाः ।

---

अनाधारत्वेनाऽऽरुयायमानं विश्वस्य भावाभावकरं सर्गसंहारकारकं सर्वदा अनुभास्पृष्टं विद्यासर्गकारणं(कारिणं ?) ये पूर्वं ज्ञातवन्तः, ते प्रकृतिविनिर्मुक्ता बभूवुरित्यर्थः । [द्विरुक्तिरध्यायसमाप्त्यर्था ।] (१४)

इति पञ्चमाध्यायप्रकाशिका

पुनरपि परमात्मनो गुणान् वक्तुमध्यायान्तरारम्भः । स्वभावमिति । केचन लोकायतिकाः जगच्चक्रपरिवृत्तिहेतुं स्वभावं वदन्ति ।

---

षण्डोक्तप्राणादिकलाषोडशकस्रष्टृत्वं सुविवक्षम्। तेन षोडशकलजीववैलक्षण्यं वेदितं भवति । अथापि भावाभावकरमिति सर्वसृष्टिसंहारोक्त्या अर्थान्तरमाह विद्यासर्गेति । पूर्वमर्थसृष्टिरुक्ता, अनेन शब्देन च शब्दसृष्टिरिति विभागे तात्पर्यम् । विदुरिति पाठे, 'ये पूर्वं देवा ऋषयश्च तद् विदुः' इत्यत्रेव वर्तमानार्थाविवक्षा । अस्तु वेह अविदुरिति पदच्छेदः । जहुरिति भूतकालनिर्देशात् । अविदुः= अजानन् । (१४)

अन्तिमेऽस्मिन् षष्ठेऽध्याये पञ्चाध्याय्युक्तार्थानुवादपूर्वकं परमात्मगुणा अपि विशिष्य निर्दिश्यन्ते, 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', 'धर्मावहं पापनुदं भगेशम्', 'एको देवः सर्वभूतेषु गूढः–' इत्यादिना । तदाह पुनरपि परमात्मनो गुणान् वक्तुमिति । भगवतः प्रपत्तिमात्रवशीकार्यत्वौपयिकं परमदयालुत्वादिकमप्यन्ते दृढाऽऽविष्क्रियते, यो ब्रह्माणं......'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति । तत्र प्रथमेऽध्याये, 'कालः स्वभावो नियतिर्यदृच्छा...

देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥ १ ॥
येनावृतं नित्यमिदं हि सर्वं ज्ञः कालकालो गुणी सर्वविद्यः ।
तेनेशितं कर्म विवर्तते ह पृथ्व्याप्यतेजोनिलखानि चिन्त्यम् ॥ २ ॥

---

अन्ये भगवन्मायामोहिताः कालकर्मादिकं वदन्ति । तदिदमौपनिषद्‌परमपुरुषवरणीयताहेतुभूतगुणविशेषविरहिणा जल्पितम् । परमात्ममहिम्नैव ब्रह्माश्रितं जगच्चक्रं बम्भ्रमीतीत्यर्थः । अथवा — ब्रह्म प्रकृतिः । प्रकृतिप्राकृतचक्रं बम्भ्रमीतीत्यर्थः । (१)

येनावृतमिति । यो नित्यः सर्ववस्तुव्यापकः सर्वज्ञः, 'कालः स पचते तत्र न कालस्तत्र वै प्रभुः' इत्युक्तरीत्या कालस्यापि पाचकः, 'तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः', सज्ञानप्रकार(प्रकारज्ञान ?)वान्, तेनेशितं कर्म विवर्तते । क्रियत इति कर्मेति कार्यतया कर्मशब्दितं पञ्चभूतात्मकं जगत् तेन परमात्मना, स्यादिति सङ्कल्पमात्रविषयीकृतं सत् विवर्तते निष्पद्यत इत्येतदेव हृदि चिन्तनीयमित्यर्थः ।

---

चिन्त्यम्' इत्युक्तमिह प्रथममुपपाद्यते स्वभावमित्यारभ्य चिन्त्यमित्यन्तेन । तत्र प्रथममन्त्रेण कालः, स्वभाव इत्यनयोर्जगत्कारणत्वपक्षः प्रतिक्षिप्यते । देवस्यैष महिमेति । देवस्वरूप एव मुख्यं कारणम् । स्वभावादिकं तु तदधीनमिति भावः । (१)

अथ नियतिरपि देवप्रेरितेत्युच्यते येनेति । सर्वविद्य इत्यस्य सर्वा विद्या यस्य स इत्यर्थः । अथवा सर्ववित् यः इति च्छेदः । ज्ञः सर्वविदिति च, 'यः सर्वज्ञः सर्ववित्' इतिवदपुनरुक्तं भाव्यम् । तेनेशितं कर्मेत्यादि । कर्म जीवगतं पुण्यपापात्मकं नियत्याख्यं तेन देवेन प्रेरितं सत् पृथ्व्यादिरूपेण विवर्तते । ह = प्रसिद्धमेतत् इत्यप्यर्थो घटते । कर्मशब्दस्य पृथ्व्याप्येत्यादिपदसामानाधिकरण्यात्यन्तसाम

तत्कर्म कृत्वा विनिवर्त्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम् ।
एकेन द्वाभ्यां त्रिभिरष्टभिर्वा कालेन चैवाऽऽत्मगुणैश्च सूक्ष्मैः ॥ ३ ॥
आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान् विनियोजयेद् यः ।
तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्त्वतोऽन्यः ॥ ४ ॥

तत्कर्मेत्यादि । 'तत्त्वं नारायणः' इति श्रुतेर्नारायण एव तत्त्वम् । ततश्चायमर्थः — इतरेभ्यो विनिवर्त्य तत्त्वस्य भगवतः समाराधनं नित्यनैमित्तिकलक्षणं कर्म भूयः कृत्वा, एकेन जायमानदशाप्रसूतभगवत्कटाक्षेण, द्वाभ्याम्, 'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ' इत्युक्तरीत्या देवगुरुभक्तिभ्याम्, त्रिभिः बाल्यपाण्डित्यमौनैः, अष्टभिर्योगाङ्गैश्च... ¹ सहितस्सन् तत्त्वेन परमात्मना शेषत्वज्ञानलक्षणयोगं प्राप्य प्रारब्धत्वगुणयुक्तानि कर्माण्यवलम्ब्य वर्तमानान् सर्वान् भावान् कामान् तस्मै विनियोजयति=भुङ्क्ते । स तेषां कर्म

क्षस्यसपिपादयिषया ॥ नियत इति कर्मेति व्युत्पत्तिराहृता, "यस्य वैतत् कर्म" इति श्रुताविव । पृथ्व्याद्येति पदेन भूतानि स्वतन्त्राणि जगत्कारणमिति पक्षोऽपि व्युदस्तो भाव्य । चिन्त्यमित्यस्य इति निर्णयमित्यर्थः । (२)

तत्कर्मेत्यादिना, 'स तत्त्वतोऽन्यः' इत्यन्तेन जीवापरपर्यायस्य पुरुषस्य कारणत्वपक्षो व्युदस्यते । शाङ्करीत्या ॥ तत्कर्मेति श्लोक उत्तरश्लोकानन्वित पृथग्वाक्यम् । तदर्थरीतिरेव परिष्करणीया— तत् पूर्वोक्तं कर्म समष्टिकार्यजातं पृथ्वीपर्यन्तं कृत्वा विनिवर्त्य समष्टिकरणादात्मानं निवर्त्य एकस्य तत्त्वस्य सूक्ष्मापरेण तत्त्वेन योगं समायेति । कतिभिस्तत्त्वैरिति विचारे पञ्चीकरणवत् अपीकरणप्रक्रिया वक्तुम् एकेन द्वाभ्यां त्रिभिरित्यन्वयतोऽनुवादपूर्वकम् अष्टभिर्वेति अष्टानां प्रकृतीनां मिथस्समेलनरूपाणीकरणपक्षे आदरः प्रदर्श्यते

आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः ।
तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम् ॥ ५ ॥

---

फलभोगानामवसाने फलपर्यवसितया कर्मणा नाशात्, 'तस्य तावदेव चिरम्' इत्युक्तरीत्या कर्मक्षये ब्रह्म याति प्राप्नोति । स तत्त्वतः परमात्मनोऽन्य एव । अतो नैक्यशङ्का कार्येति भावः । (३)

परमात्मोपासनमपि स्वात्मोपासनपूर्वकं कर्तव्यमित्याह आदिरिति । सः पूर्वमन्त्रोक्तजीवः संयोगे समीचीनपरमात्मयोगे तत्प्राप्तौ

---

एव कालेन कारणभूतेन आत्मगुणैश्च रागद्वेषादिभिः सहायैः व्यष्टि कुरुते देव इति ।

विज्ञानभगवतोऽत्र व्याख्यानशैली प्रायोऽसङ्गाप्यानुरोधिन्येव लक्ष्यते । तत्कर्मेत्यस्य तदर्थं कर्म तत्कर्म भगवदाराधनरूपं कर्मेति तत्र व्याख्यानम् । एवमपि सुवचम्—तत् पूर्वोक्तं पृथ्व्यादिजगद्विवर्तोपयोगि भोगप्रदं काम्यं कर्म बहोः कालात् कृत्वा, भूयः पश्चात् तादृशकर्मकरणादात्मानं विनिवर्त्य, आत्मनस्तस्य प्रकृतत्वेन योगं शेषशेषिभावात्मकं बुद्ध्वा, अन्यविधानि सात्त्विकत्यागरूपगुणान्वितानि आरभ्य सर्वं तत्रोपयोजयेत् यः इत्येवम् ।

रूक्षित्तु, 'एकेन द्वाभ्यां त्रिभिरष्टभिर्वा जन्मभिर्यथायथं तत्तद्भाग्यपरिपाककालानुरोधेन' इति एकेनेत्यादिना व्याख्याति ।

कृतकर्मनाश इत्यस्य कृतः=एव निष्पादितः कर्मनाशो येनेति विग्रहेण स इत्येतद्विशेषणत्वं भाव्यम् । स तत्त्वतोऽन्य इत्यनेन, एवमज्ञो भूत्वा सांसारिकं कर्म कृत्वा क्लेशमनुभूय चिरज्य सत्कर्मचरणेन भगवत्तत्त्वमाराध्य मुक्तिं प्राप्तुं प्रयस्यतः पुरुषस्य कथं जगत्कारणतत्त्वतासंभव इति प्रदर्शितमिति ध्येयम् । (३ ४)

आदिरित्यादेः परमात्मपरतया योजना एवं भवेत्—'संयोग एषां न त्वात्मभावात्' इति प्रागुक्तनया संयोगनिमित्ततयाऽभि-

स वृक्षकालाकृतिभिः परोऽन्यो यस्मात् प्रपञ्चः परिवर्ततेऽयम् ।
धर्मावहं पापनुदं भगेशं ज्ञात्वाऽऽत्मस्थममृतं विश्वधाम ॥ ६ ॥

---

आदिः कारणम्–प्रधानहेतुरिति यावत्–, कालत्रयपरिच्छिन्नात् परत्वेन भिन्नत्वेन निरवयवत्वेन शास्त्रदृष्टः । तं कर्मवशादनन्तशरीरं भवभूतं भवं संसारं भूतं प्राप्तम्–संसारिणमिति यावत्–, ईड्यं स्तुत्यम्–अपहतपाप्मत्वादिगुणकमिति यावत्—, अत एव देवं द्योतमानं स्वप्रकाशज्ञानानन्दरूपं स्वहृदयस्थं प्रथमत उपास्य—,

स वृक्षेति । यस्मादयं चिदचित्प्रपञ्चः परिवर्तते, स वृक्षकालाकृतिभ्यः परः उत्कृष्टः—वृक्षशब्देन छेदनार्हप्रकृतिप्राकृतमुच्यते— आ समन्तात् कृतिः यत्नो यस्येति आकृतिः कर्ता जीवः । प्रकृतिकालजीवेभ्य उत्कृष्ट इत्यर्थः । ज्ञानोत्पत्तिप्रतिबन्धकपापानि अपनुद

---

मतानामपि आदिहेतुर्देव एव कालत्रयपरिच्छिन्नादन्योऽव्ययश्च इति । तथासति तं देवं पूर्वमुपास्य, तदनन्तरं विश्वधाम आत्मस्थं ज्ञात्वेति उपरितनवाक्यार्थान्वयः प्रसजति । अतः आदिरिति मन्त्रः पूर्वप्रकृतजीवपरतयैव व्याख्यातः । कठोपनिषदि (१·१७) 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इत्यत्र, "जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्य" इति भाष्यकृता व्याख्यानात् तद्रीत्या इहापि ईड्यं देवमिति ब्रह्मात्मकत्वविवक्षाऽपि भवेत् । (५)

एवं स्वभावकालकर्मपञ्चभूतजीवेभ्यः प्रस्तुतेभ्योऽन्यः परमात्मा ज्ञातव्य उच्यते स वृक्षकालाकृतिभिरिति । वृक्षेति 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः' इति कठोक्तं प्रत्यभिज्ञाप्यते। आकृतिशब्दस्याऽऽकाररूपार्थविवक्षायां वैयर्थ्यात् प्रकृतजीवपरतया संभवति सार्थक्ये तत्त्यागायोगाच्च तदुचितमर्थमाह आ समन्तादिति। तृतीया, 'अन्यदेवाहुर्विद्यया' इत्यादाविव पञ्चम्यर्थे । ज्ञात्वेत्यस्य

तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम् ।
पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम् ॥ ७ ॥

तदनुकूलपुण्यप्रवर्तकम्, भगेशम्—"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इत्युक्तानां ज्ञानादीनामीश्वरं विश्वस्य धामभूतमाधारभूतं मरणाद्यवद्यशून्यं स्वात्मनि अन्तर्यामितया वर्तमानं ज्ञात्वा मुक्तो भवतीत्यर्थः । (५-६)

**तमीश्वराणा**मिति । विदामेति ज्ञानप्रार्थना । शिष्टं स्पष्टम् ।(७)

उत्तरमन्त्रे विदामेत्यत्रान्वयो न भवति । ज्ञानवेदनकर्मणोरेकत्वेन ज्ञानवेदनयोरप्यैक्यात् क्त्वाप्रत्ययानुपपत्तेः । न च ज्ञानमिदं वाक्यार्थज्ञानमात्रम्, वेदनं तु ध्यानमिति वक्तव्यम्; वाक्यार्थज्ञाने जीवोपासनानन्तरभावित्वनियमाभावेन पूर्वमुपास्येत्युक्तानन्तर्यानन्वयात् । अतो मुक्तो भवतीत्यध्याहृत्य पृथग्वाक्यकरणम् ।

ननु आदिरित्यादि सर्वं परमात्मपरमेवास्तु । तत्र स्वचित्तस्थत्वेन तस्य (विग्रहविशिष्टस्य) उपासनं पूर्वमुच्यते । अथ आत्मस्थत्वेन सर्वविभूतिविशिष्टतया वेदनं परज्ञानरूपं मुक्तिप्राक्कालिकं प्रार्थ्यते । तथाच मुक्तो भवतीति मा भूदध्याहारः । अथवा ज्ञात्वेति ज्ञानं आलम्बनसंशीलनरूपमस्तु, विदामेति चोपासनमिति चेत्—किमनेन प्रश्नेन? यत्र सौष्ठवम्, तदाद्रियतां सम्यग् विमृश्य । (६)

महेश्वरमिति न रूढ्यर्थरुद्रविवक्षासंभवः, तदा पौनरुक्त्यात् । देवतामध्ये परमदेवतात्वस्य पतिमध्ये परमपतित्वस्य चेव ईश्वरमध्ये परमेश्वरत्वस्यात्र कथ्यमानतायाः साहचर्यबलसिद्धतया परममहेश्वरपदान्तर्गतेश्वरशब्दस्य यौगिकत्वावधारणादिति हि श्रुतप्रकाशिकोक्तमुपरि अनुवदिष्यति । महेश्वरमित्यत्र महत्त्वम् अविवक्षितं वस्तुस्थित्यनुवादमात्रम् । अस्तु वा ईश्वराणामिति पदं महेश्वराणामित्यर्थकम् । 'ईश्वराणां मध्ये परमत्वात् महेश्वरः,

न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ८ ॥
न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ ९ ॥
यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः ।
देव एकः समावृणोति स नो दधाद् ब्रह्माप्ययम् ॥ १० ॥

---

न तस्येति । कार्यं शरीरम् । कारणम् इन्द्रियम् । ज्ञानबलाभ्यां सहिता सृष्टिसंहारादिलक्षणक्रिया ज्ञानबलक्रिया । शिष्टं स्पष्टम् । (८)

न तस्य कश्चिदिति । लिङ्गं ज्ञापकहेतुः । करणाधिपः— जीवः । शेषमतिरोहितार्थम् । (९)

य इति । लूताख्यः कीटविशेषः स्वसंनिहितजन्तुविशेषं यथा तन्तुभिरावृणोति, एवं प्रकृतिजैः प्राकृतैः तत्त्वैः स्वभावतः स्वेच्छातः चिद्वर्गमावृणोति लुप्तज्ञानं करोति [यः ?], स देवोऽस्माकं ब्रह्मणि अप्ययम् आत्यन्तिकं लयं करोतु । मुक्तस्य ब्रह्मण्यप्ययो नाम भेदकाकारास्फुरणम् ।

---

देवतानां मध्ये परमत्वात् दैवतभूतः ; देवतैव दैवतमिति व्युत्पत्त्या अस्य देवतात्वं नियतम् ; अन्येषां तु मनुष्यादिकिञ्चिदपेक्षया देवतात्वम्, उत्कृष्टापेक्षा च तदभावः ; अस्यापि चेति देवतात्वं न नियतमिति वाक्यार्थवर्णनेऽपि, महेश्वरपदस्य महांश्चासौ ईश्वरश्च महेश्वर इति योगार्थ एव विवक्षितो भवतीति ध्येयम् । (७)

यस्तन्तुनाभ इवेति तन्तुनाभदृष्टान्तेन—जन्तूनां स्वात्मनि लयसंपादनायैव तन्तुनाभः तन्तून् निर्माय वितनोति यथा, तथा देवोऽपि अन्ततो जीवानां स्वात्मनि अप्ययरूपमोक्षप्रापणाय स्वशरीरात् प्रधानात् तन्तुतुल्यानि महदादीनि कार्याणि सृष्ट्वा विस्तृणातीति दर्शितम् ।

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ ११ ॥
एको वशी निष्क्रियाणां बहूनामेकं बीज बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥
नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।

**एको देव** इति । सर्वभूतेषु इतरानिदिततया वर्तमान, सर्वव्यापितया **सर्वभूतात्मा**, तच्छरीरेष्वनुप्रविष्ट, कर्मसु प्रेरक, **चेता**— 'चिञ् चयने' इति हि धातु —सकलप्रपञ्चनिर्माता, त(अ)थापि गुणत्रयवश्यत्वाभावात् फलाभिसन्धिपूर्वककर्तृत्वाभावेन [च ?] (?) केवलोदासीन, ईश (?), (**देव एकः** ?) 'अपहतपाप्मा दिव्यो देव एको नारायणः' इति प्रसिद्धो दिव्यो देव एक एवेत्यर्थ ।    (११)

**एको वशीति** । **निष्क्रियाणां** स्वत प्रवृत्तिरहितानां सर्वचेतनानां **वशी**-स्वाधीनसर्वचेतनवर्ग इति यावत्—, एक जगद्बीजम व्यक्तलक्षणं महदहङ्कारादिरूपेण यो बहुधा करोति, त स्वान्तर्यामिण ये जानन्ति, त एव मुक्ता भवन्तीत्यर्थ ।    (१२)

**नित्य** इति । अनित्यानां चेतनानां बहूनां नित्य एक एव चेतनस्सन् [य, ?] कामान् विदधाति, तज्ज्ञानं मुक्ति [हेतु ?] रित्यर्थ । अत्र नित्यचेतनानामनित्यत्व धर्मभूतज्ञानसङ्कोचादिधर्मयोगादिति द्रष्टव्यम् । नित्यानां मध्ये नित्य अत्यन्तनित्य, चेतनानां मध्ये चेतन-

*नित्यो नित्यानामित्यत्र नित्यानामिति पदच्छेद एव भगवद्भाष्यकारदर्शितः । तथैव च कठोपनिषदि एषां व्याख्यानमपि । इह तु, स नो दद्यात् ब्रह्माप्ययमिति जीवानामप्ययस्योक्तत्वात् किञ्चिद्रूपेण*

तत् कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥१३॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १४ ॥

एको हंसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्टः ।
तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १५ ॥

---

परमचेतनः इत्यर्थाश्रयणेऽपि न दोषः । नित्यत्वचेतनत्वतारतम्यस्य विवक्षाविशेषेण द्रष्टव्यम् । **सांख्ययोगाधिगम्यं** सांख्ययोगशास्त्रयोः तात्पर्यविषयभूतम् । 'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि' इत्युक्तेरिति भावः । (१३)

न तत्रेति । अयं मन्त्रोऽन्यत्र बहुकृत्वो व्याकृतः । (१४)

एक इति । भुवनस्य चिदचित्प्रपञ्चस्य मध्ये, पक्षिसंघे राजहंसवत् विराजमानः । 'यमन्तस्समुद्रे कवयो वदन्ति' इति समुद्रसलिलसंनिविष्टः । स एव अग्निः अग्रनेता मोक्षप्रदः, संसारपाशदाहक इति वाऽर्थः । शिष्टं स्पष्टम् । (१५)

---

अनित्यत्वस्य जीवेषु वर्णनसंभवात् पराभिमतस्य अनित्यानामिति पदविभागस्य स्वीकारेऽपि नातीव हानिरिति व्युत्पादनाय प्रकारान्तरेण व्याख्यानमिति ध्येयम् । अप्ययश्रवणादनित्यं च न मन्तव्यमिति श्रुतिर्नित्यानामिति नित्यत्वं वक्तीत्यपि स्यात् ।

सांख्ययोगाधिगम्यमित्यस्य ज्ञानयोगकर्मयोगाभ्यामधिगम्यमित्यप्यर्थः स्यात् । 'सांख्ययोगौ पृथग्बालाः ' इत्यादौ गीतासु तथा प्रसिद्धेः । परंतु तदा जीवसाक्षात्कारद्वारा तत् निर्वाह्यम् । (१३)

न तत्र सूर्य इति मन्त्रः कठवल्ल्यां मुण्डके च श्रूयते । (१४)

स विश्वकृत् विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥

स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता ।
य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ॥ १७ ॥

---

**स विश्वेति** । विश्वकृत् सर्वकर्ता, विश्ववित् सर्वं प्राप्तः,— विदिर्लाभ इति हि धातुः । **आत्मयोनिः** –आत्मा योनिः स्थानं यस्य स तथोक्तः । जीवान्तर्यामीत्यर्थः । **ज्ञः** सर्वज्ञः, **कालकालः** कालस्यापि नियन्ता, **सर्वविद्यः** सर्वविद्याप्रवर्तकः, **प्रधानक्षेत्रज्ञपतिः** प्रकृतिजीवयोः शेषी, **गुणेशः** ज्ञानादिषाड्गुण्यपरिपूर्णः, संसारस्य प्रकृति-संबन्धलक्षणस्य मोक्षे च तत्स्थितौ च हेतुरित्यर्थः । (१६)

**स तन्मय इति** । **सः** परमात्मा **तन्मयः** तत्प्रचुरः । तदात्मक एव, नान्यात्मकः । अनन्यप्रेर्य इति यावत् । **अमृतः** असंसारी । **ईशे** ईशनव्यापारे सम्यक् स्थितिर्यस्येति तथोक्तः । **य ईशे** यो नित्य-मीष्टे । यस्य चेतनमनन्यहेतुकं *नित्यम्* । मोक्षदशायामप्यनपायीत्यर्थः । शिष्टं स्पष्टम् । (१७)

---

संसारमोक्षस्थितिबन्धहेतुरिति । संसारेति पदं स्थितावप्यन्वेती-त्याशयेन संसारस्येति संबन्धसामान्यषष्ठीविग्रहादरणम् । अर्थस्तु संसारान्मोक्षे, संसारस्थितिरूपे सर्गकालिकावस्थाने, प्रलय-साधारणे बन्धे च हेतुरिति , (१६)

तन्मय इत्यत्र तच्छब्दः स इत्युक्तपरामर्शी भवतु अत्यन्त-संनिहितत्वादित्यभिसंधायाह तदात्मक एवेति । व्यवहितग्रहणेऽपि तु प्रधानक्षेत्रज्ञमय इत्येवरीत्याऽपि व्याख्यानं भवति । (१७)

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तँ ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ १८ ॥
निष्कलं निष्क्रियँ शान्तं निरवद्यं निरञ्जनम् ।

---

'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति वशीकार्य-परम्पराविश्रान्तिभूमिभूतभगवद्वशीकरणोपायभूतप्रपदनमन्त्रमाह — **यो ब्रह्माणमिति** । यः स्वनाभिपद्मे ब्रह्माणमुत्पाद्य तस्य वेदप्रदानेन जगत्सर्ग-शक्तिमाहितवान्, तं स्वविषयबुद्धिप्रकाशहेतुं मुमुक्षुरहं शरणं प्रपद्य इत्यर्थः । आत्मबुद्धेः प्रकाशो यस्मात् स **आत्मबुद्धिप्रकाशः** । तद्विषयबुद्धिस्फुरणस्य तदनुग्रहायत्तत्वादित्यर्थः । (१८)

उक्तब्रह्मज्ञानाभावे मोक्षसंभावनैव नास्तीत्याह **निष्कलमिति** मन्त्रद्वयेन । आकाशस्य चर्मकटादिवत् वेष्टनं यदा अल्पशक्तयो मनुष्याः करिष्यन्ति, तदा **निष्कलं** निरवयवं **निष्क्रियं** कृतकृत्यं **शान्तम्** अशनायाद्यूर्मिषट्करहितं **निरवद्यम्** आश्रितपराङ्मुखत्वाद्य-

---

भक्त्या भगवतः प्राप्यत्वमेतावदुक्तम् । प्रपत्त्याऽपि प्राप्योऽय-मिति रहस्योपदेशः क्रियते यो ब्रह्माणमिति । प्रपदनमन्त्रमिति । मन्त्ररत्नवत् अस्यापि प्रपद्ये इति उत्तमपुरुषवर्तमानापदेशघटितत्वात् प्रपदनेकरणमन्त्रत्वम् । भक्त्यङ्गस्तत्त्वोभयविषयप्रपत्तिपरमिदम-विशेषादिति स्तोत्रभाष्यादितो ज्ञेयम् । आत्मबुद्धिप्रकाशमिति पदेन मधुकैटभापहृतवेदपुनरर्पणविहितोऽनुग्रहोऽपि सूच्यते । आत्मपदं स्वपर्यायत्वात् देवपरम् । यथायथं ज्ञानदर्शनप्राप्तिहेतुर्हि सः ॥

यथा भक्त्यभावेऽपि प्रपत्तिरवान्मुक्तिरधिकारिविशेषे, तथा तदभावेऽपि ज्ञानात्मकोपायनिरपेक्ष एव केष्वचित् स मुक्तिप्रदः स्यात्; अन्यतोऽपि वा मुक्तिः स्यादिति कश्चिन्मन्येत । तन्निरसनाय

अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥ १९ ॥
यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ २० ॥
तपःप्रभावाद् देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।
अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम् ॥ २१ ॥
वेदान्ते परमं गुह्यं पुरा कल्पे प्रचोदितम् ।
नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥ २२ ॥

---

वयरहितं निरञ्जनम् असङ्गस्वभावम् अमृतस्य मोक्षस्य परं मुख्यं दग्धेन्धनानलवत् स्वप्रकाशकं देवमविज्ञाय दुःखस्य नाशो भवति । यथा आकाशस्य चर्मवत् वेष्टनमसंभावितम्, एवं परमात्मज्ञानमन्तरेण मोक्षोऽसंभावित इत्यर्थः । (१९-२०)

तप इति । 'मनसश्चेन्द्रियाणाञ्च ऐकाग्र्यं परमं तपः' इत्युक्त-चित्तैकाग्र्यलक्षणतपःप्रभावाच्च[त् परमात्मानुग्रहाच्च ।] संपन्नब्रह्मविज्ञानः श्वेताश्वतरनामा ऋषिः अत्याश्रमिभ्यः—अति पूजायाम्—पूज्याश्रमयुक्तेभ्यः परमहंससंन्यासिभ्यः, ऋषिसंघैः वामदेवादिभिः जुष्टं सेवितं परमं पवित्रं ब्रह्म प्रोवाचेत्यर्थः । (२१)

वेदान्त इति । वेदान्तेष्वतिरहस्यतया निगूढं पुरा कल्पे ब्रह्मणे उपदिष्टमेतत् विज्ञानं शान्तेभ्यः पुत्रेभ्यः शिष्येभ्य एव ब्रूयात्; नान्येभ्यः इत्यर्थः । (२२)

---

निष्कलमित्यादिमन्त्रद्वयम् । अविज्ञायेत्यत्र समानकर्तृकत्वाविवक्षा ।
अत्याश्रमिभ्य इत्यस्य अतिशयिताश्रमशालिभ्य इत्यर्थः। 'अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विजः' इति अनाश्रमावस्थानस्य निषिद्धतया तादृशानामुत्तमपात्रतया ग्रहणायोगादित्याशयेन अति पूजायामित्युक्तम्।

यस्य देवे परा भक्तिः यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः प्रकाशन्ते महात्मनः इति ॥
॥ ओं 'पूर्णमदः,' 'भद्रं कर्णेभिः,' 'सह नाववतु' इति शान्तिः ॥
। इति श्वेताश्वतरोपनिषदि षष्ठोऽध्यायः ।
॥ इति श्वेताश्वतरोपनिषत् ॥
शुभमस्तु

---

भगवद्विषये गुरुविषये च उत्कृष्टभक्तिशून्यानाम् उक्तार्थाः उपदिष्टा अपि दुर्ज्ञाना इत्याह यस्य देव इति । यस्य भगवत्युत्कृष्टा भक्तिः, तत्तुल्या गुरावपि भक्तिः, तस्यैव महात्मन एते अर्थाः भासन्ते; नेतरेषामित्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था [आदरार्था च] ।

एतदध्यायान्तर्गतवाक्यविषयमधिकरणं लिख्यते—

तृतीयाध्याये उभयलिङ्गपादे—, वेदान्ते जगत्कारणतया प्रतिपाद्यमानस्यात्मनः, 'अथ य आत्मा स सेतुर्विधृतिः' इति सेतुत्वश्रवणात् सेतोश्च प्राप्यान्तरप्रापकत्वस्यैव दर्शनेन ब्रह्मणोऽपि प्राप्यान्तरप्रापकत्वैव [प्रतीयते] ; न तु स्वयं प्राप्यता । किञ्च-'एतं सेतुं तीर्त्वा' इति तरितव्यत्वाभिधानेन एतस्य प्राप्यत्वाभावाविष्करणात् वेदान्तेषु, 'चतुष्पात् ब्रह्म षोडशकलम्' इत्युन्मानश्रवणात् नेदमपरिमितम्, अपरिमितस्यो-

---

मूले हीति पद्यार्थे । तेन तस्यैवेत्यर्थलाभः । एतदनुसारेण व्यतिरेकमुखेनावतरणं कृतम् । कथिता इत्यस्य अत्रोपनिषदि उक्ता इत्यर्थः । अकथिताः साक्षादाचार्यानुक्ता अर्थाइत्यर्थोऽपि अत्रेष्यते । अनुग्रहमात्रेणार्थस्फुरणात् । भक्तिमात्रेण च एकलव्यस्य फलसिद्धिः ।

षोडशकलमिति । नेदं श्रौतं पदम् । किंतु सत्यकामं प्रत्युपदिष्टायां षोडशकलब्रह्मविद्यायां चतुरः पादान् प्रदर्श्य प्रतिपादं

न्मानासम्भवात् । अतो वेदान्तेषु अपरिमितत्वेन प्रतीयमानमन्यदेवेति प्रतीयते । किञ्च—'अमृतस्य परं सेतुम्' इति अमृतस्य वस्त्वन्तरस्य प्राप्यप्रापकत्वलक्षणः सम्बन्धः षष्ठ्या प्रतीयते । न हि स्वस्मिन्नेव प्राप्यप्रापकत्वलक्षणः सम्बन्धः सम्भवति । किञ्च—'तेनेदं पूर्णं पुरुषेण सर्वम्' इति प्रतिपादितपुरुषादपि, 'ततो यदुत्तरतरम्' इत्यधिकस्य निर्देशात् परस्मादपि ब्रह्मणः परमन्यद् व्यपदिश्यते । अत एभ्यो हेतुभ्यः परस्मादपि ब्रह्मणः अन्यत् परमभ्युपगन्तव्यमिति, "परमतः सेतून्मान-सम्बन्धभेदव्यपदेशेभ्यः" इति सूत्रेण पूर्वपक्षे प्राप्ते उच्यते—

'सामान्यात्तु' । 'य आत्मा सेतुः' इति व्यपदेशः, 'एषां लोकानामसम्भेदाय' इति वाक्यशेषश्रुतासंकरकारित्वलक्षणधर्मसामान्यनिबन्धनः, न तु प्राप्यान्तरप्रापकत्वलक्षणधर्मनिबन्धनः । 'एतं सेतुं तीर्त्वा' इत्यत्र तरतिश्च प्राप्तिवचनः, वेदान्तं तरतीतिवत्, नोल्लङ्घनवचनः ।

यदुक्तमुन्मानव्यपदेशादस्य परिमितत्वं प्रतीयत इति, तत्राह, "बुद्ध्यर्थः पादवत्" । यथा 'मनो ब्रह्मेत्युपासीतेत्यध्यात्मम्', 'तदेतत् चतुष्पाद्

---

चतुष्कलत्वमुक्तमिति अर्थसिद्धकथनमेतत् । वस्त्वन्तरस्येति । वस्त्वन्तरं प्रतीत्यर्थः ।

मनसो वागादिपादत्वासम्भवादिति । निखिलजगत्कारणस्य ब्रह्मणो वागादिमात्रपादायोगात् इदं चतुष्पात्त्वं तस्य नूनमुपासनार्थमिति निश्चितम्, तथैव षोडशकलत्वस्थलेऽपीति भाष्यादितो ज्ञायते । अत्र तु मनो ब्रह्मेत्युपासीतेति वाक्ये ब्रह्मणीव मनस्यपि चतुष्पात्त्वं न वास्तवम्, किंतु उपासनार्थं कल्पितमित्यधिकमुक्तमिति ध्येयम् । अन्ततो भाष्यतात्पर्यमप्येतदेव वा ।

ब्रह्म । वाक् पाद प्राण पाद चक्षु पाद श्रोत्र पाद इत्यध्यात्मम्' इत्यत्र ब्रह्मप्रतीकभूतमन आदौ वागादिपादत्वव्यपदेश उपासनार्थं, न तु तात्त्विक, मनसो वागादिपादत्वासंभवात्—एकमपरिच्छिन्नस्य ब्रह्मण, 'प्राची दिक् कला, प्रतीची दिक् कला, दक्षिणा दिक् कला, उदीची दिक् कला । एष वै सोम्य चतुष्कल पादो ब्रह्मण प्रकाशवान् नाम' इत्युक्तदिगादिलक्षणचतुष्कलपादसन्धासंभवादुपासनार्थं एव ।

ननु स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मानप्रतीति । तत्राह, "स्थानविशेषात् प्रकाशादिवत्" । यथा प्रकाशाकाशादेरपरिच्छिन्नस्यापि वातायनाद्युपाधिवशेन परिच्छिन्नत्वानुसन्धानम्, एवमिहापि अभिव्यक्तिस्थानभूतप्रा(वा ?)गाद्युपाधिवशेन उन्मितत्वानुसन्धानमुपपद्यते ।

• यदुक्तम्, 'अमृतस्य पर सेतुम्' इति सबन्धव्यपदेशेन अमृतात् भेदोऽवगम्यत इति । तत्राह, "उपपत्तेश्च" । 'यमेवैष वृणुते तेन लभ्य' इति 'स्वप्राप्ते स्वयमेव साधनतया जोघुष्यमाणे ब्रह्मणि स्वेनैव प्राप्यप्रापकत्वलक्षणसबन्धव्यपदेशस्यापि नानुपपत्ति ।

---

वातायनादीति । प्रकाशस्य वातायनेन परिच्छिन्नत्वम्, आकाशस्य च घटादिना । अभिव्यक्तिस्थानभूतवागाद्युपाधीति पाठो युक्त न तु प्रागादीति । श्रुतप्रकाशिकायाम्, 'ध्यानभूतवागादिविषयमिद सूत्रम्' इत्युक्तत्वात् । षोडशकलत्वादिकं ब्रह्मणि उपासनार्थमुक्तम्, वागादिपादत्वादित्युक्त कथमुपपद्यत, अनुन्मितवागादिपादो मानस्याप्ययोगादिति शङ्कापरिहारार्थं सूत्रमिति तदर्थं ।

यमेवैष इति । ननु यमेवैष इति वाक्य निर्गतिशयप्रीतिरूपपद्मध्यानाभ्यन्तरस्य ब्रह्मणि बोधनार्थमिति जिज्ञासाधिकरणभाष्ये

यदुक्तम् 'ततो यदुत्तरतरम्' इति अधिकं वस्तु प्रतिपाद्यत इति, तत्राह, "तथाऽन्यप्रतिषेधात्"। 'यस्मात् परं नापरमस्ति' इति तदतिरिक्तोत्कृष्टवस्तुनो निषेधेन तद्विरुद्धतया, 'ततो यदुत्तरतरम्' इति वाक्ये तदधिकवस्तूपदेशासंभवात्, ततो यदुत्तरतरमित्येतत् पूर्वोप-(पूर्ववनि)पादितस्य पुरुषपारम्यस्य उपरि उपसंहाररूपम्। एतच्च पूर्वत्र तन्मन्त्रव्याख्यायां स्पष्टीकृतम्।

"अनेन सर्वगतत्वमायामशब्दादिभ्यः"। अनेन=ब्रह्मणा सर्वगतत्वं=सर्वस्य जगतो व्याप्तत्वम् आयामशब्दादिभ्योऽवगम्यते। आयामशब्दस्तावत्—'तेनेदं पूर्णं पुरुषेण सर्वम्', 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इत्यादि। आदिशब्देन, 'ब्रह्मैवेदं सर्वम्' इत्यादयो गृह्यन्ते। अतो न परब्रह्मणोऽन्यत् प्राप्यमस्तीति स्थितम्॥

अस्याश्चोपनिषदः कृत्स्नाया भगवत्परत्वं सर्वव्याख्यानाधिकरणे

---

स्पष्टमिति कथमस्यानन्योपायत्वमनेन बोध्यत इत्युच्यत इति चेत्—तृतीयपादेन प्रीतिरूपापन्नभक्तिलभ्यत्वमुक्तम्। यमेवेति एवकारेण वृतेनैव लभ्य इति कथनात् वरणाभावे अलभ्य इति ज्ञापनात् वरणकारणजिज्ञासायां प्रियतमत्वस्य वरणहेतुताया आनुभविकत्वात् प्रियतमत्वं प्रति प्रीत्यतिशयमात्रस्य हेतुत्वमित्यस्य गीतन्यायप्रीतिरूपापन्नध्यानलाभात्। प्राप्यमपि प्रापकस्यास्यैव प्राप्यत्वमपि लभ्य इति पदेन दर्शितमेव। स्पष्टीकृतञ्चेदं चतुर्थपादेन 'तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यनेनेत्याशयात्।

समन्वयाध्यायनाधिकरणटीकायामस्या अप्युपनिषदो भगवत्परत्व-स्थापनं रुद्रपरत्वभ्रमव्युदासाय कृतं जिज्ञासुशिक्षणसौकर्याय प्रायः शब्दतः पदानुपदिन्तुमारभते अस्याश्चेति॥

व्यासार्यैः समर्थितम् । तदुच्यते—प्रथमद्वितीयखण्डयोः, **देवात्मशक्तिम्**, **व्यक्ताव्यक्तं भरते विश्वमीशः**, **यदात्मतत्त्वेन तु ब्रह्मतत्त्वम्**, **ज्ञात्वा देवम्**, **एष हि देवः प्रदिशोऽनु सर्वाः** इति देवात्मेशब्रह्मशब्दैः परमात्मा निर्दिश्यते । ते च शब्दाः 'अपहतपाप्मा दिव्यो देव एको नारायणः', 'विश्वं नारायणं देवम्', 'आत्मा नारायणः परः', 'अङ्गुष्ठमात्रः पुरोऽङ्गुष्ठञ्च समाश्रितः । ईशः सर्वस्य जगतः', 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यादिवाक्यगतनारायणप्रत्यभिज्ञापकाः । अत्रेशशब्दश्च न रूढ्या प्रयुक्तः; अपितु गुणयोगात् । **'अनीशश्चात्मा'**, **'ज्ञाज्ञौ द्वावजावीशनीशौ'**, **'ईशः सर्वस्य'** इति निर्देशस्य सप्रतिसंबन्धितया अवयव (वार्थ?) विवक्षाज्ञापकत्वात् । **अनन्तश्चात्मा विश्वरूपो ह्यकर्ता** इत्यत्रानन्तशब्दो योगरूढः । रूढ्यविवक्षानिमित्तसप्रतियोगिकनिर्देशाभावात् ।

तृतीये च खण्डे, **य एतद्विदुरमृतास्ते भवन्तीत्यनेन**, 'अम्भस्यपारे' इत्यनुवाकः प्रत्यभिज्ञाप्यते । स हि परमपुरुषविषयः । एवमुपक्रमो भगवत्परः । **एको हि रुद्र इत्यस्यानन्तरम्**, **विश्वतश्चक्षुरुत विश्वतोमुख** इति मन्त्रश्च भगवत्प्रत्यभिज्ञापकः । तस्य विद्युद्वर्णपुरुषविषयत्वात् । **द्यावाभूमी जनयन् देव एकः** इति च, 'शीर्ष्णो द्यौः समवर्तत, पद्भ्यां भूमिः' इत्यस्य प्रत्यभिज्ञापकम् । **यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम्** इत्येतत्तु यच्छब्दयोगादनुवादरूपतया प्रमाणान्तरसापेक्षतया दुर्बलम् । इदं रुद्रस्य बह्वृचशतपथब्राह्मणावगतहिरण्यगर्भजन्यत्व-

विरोधि हिरण्यगर्भजनकत्व न प्रतिपादयितुं प्रभवति । बह्वृचे, 'तदिदास भुवनेषु ज्येष्ठ यतो जज्ञे उग्रस्त्वेष नृम्ण । सद्यो जज्ञानो निरिणाति शत्रून्' इति हिरण्यगर्भसृष्टत्वं रुद्रशब्दरुद्ध्यर्थस्य प्रतिपाद्यते । सुबालोपनिषदि, 'ललाटात् क्रोधजो रुद्र' इति नारायणादुत्पन्नत्वं प्रतीयते ; महोपनिषदि, 'सोऽन्य कामं मनसा ध्यायीत । तस्य शूलपाणि. पुरुषोऽजायत' इति । नारायणोपनिषदि, 'नारायणाद्रुद्रो जायते' इति । बृहदारण्यके, 'ब्रह्म वा इदम्' इति ब्रह्म प्रस्तुत्य, 'इन्द्रो वरुण सोमो रुद्र पर्जन्य' इतीन्द्रादितुल्यतया रुद्रस्यापि ब्रह्मण सकाशादुत्पत्ति प्रतिपाद्यते । शतपथे अष्टमूर्तिब्राह्मणे, 'भूताना च प्रजापति संवत्सरमुषसि रेतोऽसिञ्चत् । संवत्सरे कुमारोऽजायत । सोऽरोदीत् । तं प्रजापतिरब्रवीत्, कुमार ! किं रोदिषीति । सोऽब्रवीत्, अनपहतपाप्मा वा अहमस्मीति अनाहितनामा, नाम मे धेहि पाप्मनोऽपहत्या इति । स पुन प्रजापतिरब्रवीत्, रुद्रोऽसीति' इत्यादिना रुद्रस्य चतुर्मुखजन्यत्वम् अनपहतपाप्मत्वादिकमावेद्यते । तथा शैलान्त्रिब्रह्मणे चतुर्मुखसृष्टत्व रुद्रस्य प्रतिपाद्यते । सामे च 'विरूपाक्षाय दन्ताञ्जये (दन्ताञ्जलये) ब्रह्मण पुत्राय' इति ब्रह्मण पुत्रत्व प्रतीयते । सोऽब्रवीत् , वर वृणे । अहमेव पशूनामधिपतिरसानीति । तस्माद्रुद्र पशूनामधिपति' इति वरदानलब्धपशुपतिभाव श्रूयते, 'विष्णोरेपम्य[1] प्रभृथे हविर्भि । विदे हि रुद्रो रुद्रियं महत्त्वम्' (गी. स र)इति विष्ण्वाराधनलब्धमहिमत्व रुद्रस्य श्रूयते । अतो हिरण्यगर्भजन्यत्वेन नारायण

1 एपस्येत्यादेरर्थ- गीतार्थसंग्रहरक्षा–श्रुतप्र–टिप्पण्यादौ द्रष्टव्यः ।

जन्यत्वेन च अनपहतपाप्मत्वेन कर्माधीनैश्वर्यवत्त्वेन च श्रुतस्य रुद्रस्य तद्विरुद्धहिरण्यगर्भजनकत्वस्य अवतारस्पोत्पत्तिरिति विरोधपरिहारस्य वा असंभवात्। कल्पभेदेन एकस्यैव रुद्रस्य हिरण्यगर्भरूपात् स्वस्मात् स्वयं, कल्पान्तरे रुद्ररूपात् तस्मात् हिरण्यगर्भरूपनयोत्पत्तिरिति कल्पनस्यापि, कार्यत्वेन कर्मवश्यत्वेन [च?] प्रतिपादिते तस्मिन् असंभवात्। इन्द्रादीनामपि तथात्वापाताच्च। तस्य विश्वाधिकत्वरूपविशेषणासंभवाच्च। ततश्च रुद्रशब्दस्य कार्यरुद्रव्यतिरिक्तविषयत्वे सति, अस्य वाक्यस्यानुवादरूपतया, 'नारायणाद् ब्रह्मा जायते' इत्यादियोगार्थप्रापकवाक्यानुगुण्येन भगवत्परत्वनिश्चय। 'रुद्रस्य हिरण्यगर्भजनकत्वाभावेन रूढ्यर्थत्यागे स्वीकार्ये हिरण्यगर्भशब्दस्य रूढिं परित्यज्य स्कन्दपरत्वमाश्रीयताम्। प्रसिद्धस्य रुद्रस्य स्कन्दजनकत्वसंभवात्' इत्यपि शङ्का निरस्ता, विश्वाधिकत्वादिविशेषणाना रुद्रे असंभवात्। अतो रुद्रशब्दो भगवत्पर, 'रुद्रो बहुशिरा' इति सहस्रनामपाठात्।

या ते रुद्र शिवा तनूरित्यस्यानन्तरम्, ततः परं ब्रह्म परं बृहन्तमिति वाक्यम्, 'नारायण परं ब्रह्मे'ति महोपनिषत्प्रत्यभिज्ञापकम्। ईशं तं ज्ञात्वा अमृता भवन्तीत्यत्र ईशशब्द यौगिक। वेदरूप्यायोगात्। 'वेदाहम्' इत्यनन्तरवाक्यस्यैतच्छब्दः पूर्वरुद्रशब्दवाच्यस्य महापुरुषत्वमवगमयति प्रकृतपरामर्शित्वात्। ततो यदुत्तरतरमिति वाक्यमपि, "परमत सेतून्मान" इत्यत्रोपपादितरीत्या

---

विरोधपरिहारस्य वा असंभवादित्यादिकं 'न प्रतिपादयितुं प्रभवति' इति प्रागुक्त प्रति हेतु। मध्ये बह्वृचे इत्यारभ्य, 'श्रूयते। अत' इत्यन्तेन तत्र हेतुरुक्त। बह्वृचादौ पञ्चमेवश्रवणादिति तदर्थ।

महर्षिसंहारपरम् । सर्वाननशिरोग्रीवत्वञ्च पुंसूक्तार्थस्मारकम् । सर्वव्यापिपदं तु, 'व्याप्य नारायण.' इत्येतत् स्मारयति । भगवच्छब्दस्तु, 'भगवान् पवित्रं वासुदेव पवित्रम्', 'परं पवित्रं भगवान् वासुदेव.', 'ये भगवन्तं वासुदेवमेव विदु ' इति वासुदेवासाधारण. । अत एव हि स्मर्यते, 'एवमेष महाशब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यग.' इति । सत्त्वस्यैव प्रवर्तकः इति सत्त्वप्रवर्तकत्वञ्च भगवत इति स्थितम् ; 'यो ह खलु वा अस्य सात्त्विकोंऽश. सोऽसौ ब्रह्मचारिणः योयं विष्णु ' इति मैत्रायणीयश्रुते. । अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मेति अन्तरात्मत्वञ्च सुबालोपनिषत्प्रत्यभिज्ञापकम् । हृदा मनीषेति तु विष्णुसूक्तपुरुषस्मारकम् । अनन्तरम्, सहस्रशीर्षेत्यादिपुरुषसूक्तमन्त्रद्वयमधीतम् । सर्वस्य प्रभुमीशानमित्येतत् नपुंसकत्वात् यौगिकमेव । न तु रूढम् ; पुलिङ्गनामसत्त्वात् । सर्वस्य शरणं सुहृत् इत्येतत्तु, 'निवास शरणं सुहृद् गतिर्नारायण ' इति श्रुतिप्रत्यभिज्ञापकम् । तमाहुरग्र्यं पुरुषं महान्तमिति महापुरुष एव स्पष्टमुक्त । धातुप्रसादमपि महापुरुषशब्देनार्थयति अणोरणीयानिति मन्त्र ।

चतुर्थे च खण्डे, 'द्वा सुपर्णा' इत्यादिवाक्यद्वयम् मुण्डकोपनिषत्का[illegible] परमपुरुषपरम् । अत्र मायिनं तु महेश्वरमित्यत्र महेश्वरशब्दो मायाधीशपर । 'सर्वलोकमहेश्वरम्', 'सर्वोदयोऽस्मि [illegible]' इत्यादिन, [illegible] महेश्वर[illegible] अवगम्यते प्रकृत. । येनेदं [illegible] इति सर्वमिति [illegible] तमीशानं वरदमित्यत्रोक्त [illegible]

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मेति पुरुषस्योक्तत्वात् । तत्र च, **ईशानो भूतभव्यस्येति** श्रुत्यन्तरप्रसिद्धेशानशब्दस्य प्रतिसंबन्ध्यभिधानेन रूढिविरहावगमात् भूतभव्यशब्दनिर्दिष्टस्यैवेह सर्वशब्दप्रतिपन्नत्वाच्च तद्वदेव रूढिविरह सिद्धः । **य ईशेऽस्य द्विपदश्चतुष्पदः क(क ?)स्मै देवाय हविषा विधेम'** इत्यत्र, 'हिरण्यगर्भ' इत्यष्टर्चतुरयविषयत्वं प्रतीयते । तच्च भगवत्परमित्युपपादितम् । एवं भगवत्परानेकोपनिषदैकार्थ्यप्रतीते, **ज्ञात्वा शिवम्, शिव एव केवलः** इति शिवशब्दद्वयं तत्परम् । एवं मुहुरभ्यस्यमानस्यापि शिवशब्दस्य, 'आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान्' इत्यत्र अभ्यस्ताकाश [शब्द ?] स्येव रूढार्थत्याग उपपन्नः । किञ्च **सर्वव्यापी च भगवान् तस्मात् सर्वगतः शिवः** इत्ययं शिवशब्द प्राकरणिकशिवशब्दानां माहात्म्यपरत्वमेव सूचयति । सर्वगतत्वेऽपि भगवच्छब्दवाच्यत्वात् निर्दोष इति हि तस्य वाक्यस्यार्थः । अन्यथा सर्वव्यापिसर्वगतपदयोः पुनरुक्तिप्रसङ्गात् । तदक्षरं तत् सवितुर्वरेण्यम् इत्यनेन 'अक्षरं प्रभुम्', 'तत् सवितुर्वरेण्यं ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धाम' इतिश्रुतिद्वयैकार्थ्यमवगम्यते । **हृदा मनीषेति** वाक्यम्, **नैनमूर्ध्वं न तिर्यञ्चमिति** मन्त्रद्वयमध्यगतवाक्यस्थशिवशब्दस्य परमपुरुषविषयता गमयति । तदि सर्वं रुद्राम्भर्मीति विष्णुद्वर्णपुरुषविषयम् । अतः, **'मा नस्तोक'** इति मन्त्रस्थरुद्रशब्दोऽप्यवयवशक्त्या अपर्यवसानवृत्त्या वा भगवद्विषय।

[अत. ?] पञ्चमखण्डे, **'भावाभावकरं शिव'मिति** शिवशब्दो

षष्ठे च—**यः कालकालः** इति कालस्यापि परिच्छेदक काल उक्त । नायमन्तक । भगेशमित्यनेनापि भगवच्छब्दवाच्यानामैश्वर्यादीना षण्णामीश्वरत्वमेव प्रतीयते । ऐश्वर्यनिरङ्कुशत्वमेवोक्तम्, **तमीश्वराणां परम महेश्वरमिति** । ईश्वराणामिति प्रतिसम्बन्धिनिर्देशात् महेश्वरपदे रूढिर्न शक्यशङ्का । **देवतानां परम च दैवतमित्यन**न्तरनिर्देशवत् । तद्धि वाक्य देवतापारम्यपरम् । तत्र च **दैवतपति** शब्दो न कश्चित् देवताविशेषे रूढो । तत्स्थानीयश्च महेश्वरशब्द । अतो न रूढ्युन्मेष । **न तत्समश्च, पराऽस्य शक्तिरि**त्यादिभिश्च तत्पारम्योपपादनम् । 'एको देव', 'एको नारायण' इत्यनेनैकार्थ्यात् । **न तत्र सूर्यो भातीति** मन्त्रश्च कठवल्लयधीतत्वात् विष्णोर्मत्यभिज्ञापक । **नान्यः पन्था** इति पुरुसूक्त स्मारयति । ईशादिशब्दाना यौगिकत्वम्, ईशानत्वस्य निरुपाधिकत्वञ्च दर्शयति **स ईशोऽस्येति** । '**यो ब्रह्माण विदधाति पूर्वम्, शरण प्रपद्ये, अमृतस्य पर सेतुमिति** निर्देशाश्च नारायणत्वसाधका । य इत्यनुवादरूपत्वात्, ब्रह्मणो भगवत्ताभिसम्भव[त्वे] त्य प्रमाणप्रतिपन्नत्वात्, '**निवास शरण सुहृत्**' इति श्रुते, 'अमृतस्यैष सेतु' इति मुण्डके श्रवणात् । यदा चर्मवदिति वाक्यम् उपायान्तराभावपरम्, **नान्यः पन्था** इत्युक्तार्थविवरणरूपम् ।

---

बृहदारण्यकान्ताना वेदान्ताना परिष्कृतिम् ।
विधायैव सभाष्याणा दशानामथ तत्समम् ॥
श्वेताश्वतरमुख्येषु ये श्रीभाष्याद्युदाहृता ।
आरेभे कृतभाष्याश्च प्राच्यैस्तेषामपि क्रमात् ॥

श्रीः

## श्वेताश्वतरोपनिषद्विषयसूची

पराधिकरणम् 439

श्वेताश्वतरोपनिषदः श्रीपत्येकपरत्वं व्यासार्यवर्णितम् 442-447

## शारीरके श्वेताश्वतराद्युपनिषद्वाक्यस्थलसूची

| श्वे | शा. | श्वे | शा. |
|---|---|---|---|
| १—६. | ४-१-३. | ५—८, ९. | २-३-२१. |
| २—१०. | ४-१-११. | ४—१०; ६-१९. | १-४-२३. |
| ३—९, १०. | ३-२-७. | ३—३५; ५-८. | १-३-२३. |
| ४—५. | १-४-८. | | |

## ऋष्यादिनाम

श्वेताश्वतरः अत्याश्रमिणः ऋषिसंघः 437

## श्वेताश्वतरोपनिषदर्थसंग्रहकारिकाः

१. बृहदारण्यकान्तासु गतास्वीशादिषु क्रमात् ।
श्वेताश्वतरमन्त्रोपनिषदेकादशी स्थिता ॥

२. भोक्तृभोग्यात्मचिदचिदन्तरात्मैव कारणम् ।
अष्टाङ्गयोगतो जीवं समीक्ष्यैष निरीक्ष्यते ॥

३. एकोऽसौ भगवान् मुक्तेः पन्था जन्मलयादिकृत् ।
अकारार्थोऽयमग्न्यादिदेवतादिजगन्मयः ॥

४. कर्माहिपरतन्त्राणुजीवतत्त्वविलक्षणः ।
ब्रह्मादिकृत् प्रपत्त्येकवश्यो विश्वफलप्रदः ॥

५. श्वेताश्वतरखण्डानां षट्केनेत्थं समीक्षितः ।
शिवरुद्रादिशब्दोक्त्या भगवान् पुरुषोत्तमः ॥

शुभमस्तु

—:**:—

श्री

[अथर्ववेदीयोपनिषच्छान्तिपाठः —

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ओंशान्तिश्शान्तिश्शान्तिः ]

---

श्री श्रीनिवासपरब्रह्मणे नमः

[येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥]

## श्रीरङ्गरामानुजमुनिविरचिता अथर्वशिखाप्रकाशिका ।

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
कुर्वेऽथर्वशिखाव्याख्यां विदुषां तोषहेतवे ॥

---

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

## अथर्वशिखोपनिषद्भाष्यपरिष्कारः

ईशानः शम्भुः शिवशब्दसमीरितोऽपि
मुक्त्यर्थभक्तिविषयः पुरुषः स विष्णुः ।
इत्यादिशत् स्फुटमथर्वशिखेति तत्त्वं
बुद्धं यतो भवतु तेभ्य इदं नमो नः ॥

# अथर्वशिखोपनिषत्

प्रथमः खण्डः हरिः ओम् ।

१. अथ हैनं पैप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणमुवाच-

२. (१) किमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्, (२) किं [तद्]

---

ध्येयं निर्धारयितुमाख्यायिकामाह—अथ हैनम्.........।
पिप्पलादसुतश्चाङ्गिराश्च ब्रह्मपुत्रश्च (१) सनत्कुमारश्चाथर्वाणं गुरुमुपेत्य ऊचु । उवाचेति प्रत्येकाभिप्रायेणैकवचनम् ।

२. ध्यायते अनेनेति ध्यानं ध्यानकरणम् । उपासनस्याऽऽदौ

---

ध्येयं निर्धारयितुमिति । ध्यानकरण—ध्यान—ध्यातृ—ध्येय रूपांशचतुष्टयविषयप्रश्नोत्तररूपाया अप्यस्या उपनिषदो ध्येयदेवताविशेषनिर्धारणैदम्पर्यम्, 'न कारणं कारणानाम्' इत्यादिना परनिषेधपूर्वं तदंशस्थापनोपपादनादवगम्यते । अत एवमुक्तिः ॥ (१)

सनत्कुमारोऽपि कश्चित् पिप्पलादसुत इति भ्रान्तिव्युदासायाह ब्रह्मपुत्र इति । ऊचुरिति वचनम् उपरि, 'एभ्योऽथर्वा प्रत्युवाच' इति वाक्ये प्रतिपाद्यपुरुषस्य बहुवचनान्तेदम्पदश्रवणात् प्रष्टारो बहव इति निश्चित्य । एवञ्च पैप्पलादोऽन्यः, अङ्गिरा अन्य इति मन्तव्यम् । पिप्पलादोऽङ्गिरा इत्यपि श्रुतिं पठन्ति केचित् । तदा स्पष्टं बहुत्वम् । पिप्पलादः पैप्पलादोऽङ्गिरास्सनत्कुमारश्चेति पाठः श्रुतिभाष्ययोः स्यादित्यपि विमृश्यम् ॥ ध्यानकरणमन्त्रः क इत्येतावन्मात्रप्रश्ने ध्यायितव्यमिति पदं व्यर्थम् । ध्यानध्यात्रोः किंदेवतारूपेण ध्यातव्यावित्येवोपरि प्रश्नः क्रियते ; न तु किं नाम ध्यानस्वरूपम्, को नाम ध्यातेति । उपरि तैलधारावदविच्छिन्नस्मृतिसंततिर्ध्यानम्, कर्मज्ञानयोगसंस्कृतान्तःकरणो ध्यातेत्येवंरूपोत्तराभावात् । ध्यानं विष्णुः, ध्याता रुद्र इति देवतारूपत्वस्यैव कथनाच्च । अतो ध्यानकरणमन्त्रोऽपि किंरूपो ध्यातव्य इत्येव प्रथमप्रश्नोऽपि स्यात् । एवञ्च—ध्यानकरणमन्त्रः प्रणवः । स च नानाक्षरसमुदायात्मकः । तत्र समुदायः ब्रह्मत्वेन भाव्यः । अक्षरमात्राश्च लोक-

ध्यानम्, (३) को वा ध्याता, (४) कश्च ध्येय इति ।

२ स एभ्योऽथर्वा प्रत्युवाच–(१)ओमित्येतदक्षरमादौ प्रयुक्त ध्यान ध्यायितव्यमिति, एतदक्षर पर ब्रह्म । ४ अस्य पादाश्चत्वारो वेदा । ५ चतुष्पादिदमक्षर पर ब्रह्म ।

६ पूर्वाऽस्य मात्रा पृथिव्यकार स ऋग्भि ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्य । ७ द्वितीयाऽन्तरिक्ष स उकार स यजु-

---

प्रयुक्तो ध्यानकरणभूतो ध्यातव्यो मन्त्र क इत्यर्थ । क मन्त्र ध्यात्वा आदावुच्चार्य ध्यान कर्तव्यमित्यर्थ । तथा ध्यानक्रिया किंदेवतारूपा ध्यातव्या । ध्याता किंदेवतारूपो ध्यातव्य । ध्येयो देवताविशेष क इत्यर्थ ।

३ एतदक्षर पर ब्रह्म । अस्मिन्नक्षरे परब्रह्मबुद्धि कर्तव्येत्यर्थ ।

४ अस्य ओंकारस्य अकार-उकार-मकार-अर्धमात्रारूपेषु चतुर्ष्ववयवेषु चतुर्वेदबुद्धि कर्तव्येत्यर्थ । ५ एतस्मिन् ओमित्यक्षरेऽभ्यस्त पर ब्रह्म प्रतीकस्य चतुष्पात्त्वेन स्वयमपि चतुष्पादित्यर्थ ।

६-७ अकार-उकार-मकार-नादरूपार्धमात्रात्मकान् ओंकारावयवान् पृथिव्यन्तरिक्षद्युलोकसोमलोकत्वे, ऋग्यजुस्सामाथर्वणत्वे, ब्रह्मविष्णुरुद्रसंवर्तकाग्नित्वे, वसुरुद्रादित्यमरुत्त्वे, गायत्रीत्रिष्टुब्जगती

---

वेदतत्तद्देवतादिरूपेणेति उपरितनवर्णनोपपत्ति । अत किं ध्यायितव्यमित्यस्य केन रूपेण ध्यातव्यमित्यर्थो वर्णनीय । तस्मात् भाष्ये क ध्यात्वेति किंरूप ध्यात्वेत्यर्थकम् । तुरीयप्रश्ने तु ध्येय किंरूपण ध्येय इत्युक्तावपि ध्येयगोचरदृष्टिविधेर्मोक्षार्थविधायाप्रयोगात् ध्येयतत्त्वमेव पृष्ट भवतीति 'ध्येयो देवताविशेष क' इत्येव प्रश्नपर्यवसानम्। तद्ध्यानमिति। तत् ध्यानमिति पूर्वप्रयुक्तकरणार्थक ल्युडन्तघटकधातुक ध्यानमित्यर्थ ।

र्भिर्यजुर्वेदो विष्णू रुद्रास्त्रिष्टुप् दक्षिणाग्निः । तृतीया द्यौः स मकारः सामभिः सामवेदो रुद्र आदित्या जगत्याहवनीयः । याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः साऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिः ।

८. भास्वती स्मृता प्रथमा रक्तपीता महद्ब्रह्मदे( दै )वत्या ।

९. द्वितीया विद्युमती कृष्णा विष्णुदेवत्या ।

---

विराड्रूपैः, गार्हपत्यदक्षिणाग्न्याहवनीयैकर्षित्वैः स्तौति–पूर्वाऽस्य. ....। ऋग्भिः ऋग्वेदः । ऋङ्मन्त्रोपेतः ऋग्वेद इत्यर्थः । एवमुत्तरत्रापि । सूर्यलोकलक्षणद्युलोकापेक्षया चन्द्रलोकस्योर्ध्ववर्तित्वम् (त्वात् !) सोमलोकस्य द्युलोकापेक्षया पृथङ्निर्देशोपपत्तिः । आथर्वणिकानामेकाग्नित्वात् गार्हपत्यदक्षिणाग्न्याहवनीयाभावात् तस्यैवैकाग्नेरेकर्षिशब्दितस्य गार्हपत्यादिस्थानविवेश उपपद्यते ॥ नन्ववसाने श्रूयमाणनादात्मिकाया अर्धमात्रायाः, "अर्धमात्रात्मको नादो ब्रह्मनादैकविग्रहः" इति प्रमाण प्रतिपन्नाया ओंकारभिन्नत्वात् कथमस्या अर्धमात्राया ओंकार इत्युक्तिरिति चेत्– 'अर्धमात्रात्मको नादो ब्रह्मनादैकविग्रहः' इत्योंकार प्रस्तुत्य, 'ततोऽभूत् त्रिवृदोंकारः' इति ओंकारप्रकृतित्वस्य श्रवणात् तस्य ओंकाराभेदव्यपदेश इति द्रष्टव्यम् ॥

८. प्रथमा अकाराख्या अर्ध (!) मात्रा भास्वतीनाम्नी रक्तपीतवर्णा महत्त्वगुणकब्रह्मदेवत्या ।

९. विद्युमतीति स्मृता कृष्णवर्णेत्यर्थः ।

---

भास्वतीः स्मृताः इति पृथग्वाक्यपाठस्सर्वत्र । (८-१३) तात्पर्य: चन्द्रिकायामपि इममंशं परित्यज्य प्रथमेत्यादिवाक्यमुपात्तम् । एवं

१०. तृतीया शुभाशुभा शुक्ला रुद्रदेवत्या । ११. याऽवसानेऽस्य चतुर्थ्यर्धमात्रा विद्युमती सर्ववर्णा पुरुषदेवत्या ।

१२. स एष ह्योंकारश्चतुरक्षरश्चतुष्पादश्चतुश्शिरश्चतुरर्धमात्रः (श्चतुर्धमात्रः) । १३. स्थूलमेत सत् (स्थूलमेतत्) ह्रस्वदीर्घप्लुत-

---

१०. शुभाशुभेति मसिद्धा शुक्लवर्णेत्यर्थ । ११. अत्र पुरुष शब्देन वासुदेव उच्यते ।

"भगवानिति शब्दोऽय तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥"
"पुरुषञ्ज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरि ।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥"
"स्त्रीप्रायमितरत् सर्वं जगत् स्थावरजङ्गमम् ।
ऋते तमेक पुरुषं वासुदेव सनातनम् ॥"
"ब्रह्माद्या सकला देवा यक्षगन्धर्वकिंनरा ।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति ॥"

इति स्मरणादिति द्रष्टव्यम् ।

१२. चतुर्थी अर्धमात्रा यस्य स तथोक्त । पूरणप्रत्ययाभावात् (थ) छान्दम । १३-१४. स्थूलमेत मत ह्रस्वदीर्घप्लुतमिति ।

---

नृसिंहतापनीयेऽपि । तद्धि माण्डूक्याथर्वशिखाथर्वशिरोवाक्यानि बहुलमनूद्य वर्णयति । (८)

त्रिवृदोंकारं प्रति नादस्य प्रकृतित्ववत् पुरुषस्य वासुदेवस्य त्रिमूर्तिप्रकृतित्वमिति देवतात्वोपपत्तिः । (११)

स्थूलमेत सदिति पाठमादृत्य आङ्पूर्वकइण्धातोः क्तप्रत्यये एतमिति मिलितमित्यर्थकमुक्तमिति ज्ञायते । स्थूलमेतदित्येव

मिति। १४. ओं १ ओं २ ओं ३ [सः।]

१५. इति त्रिरुक्त्वा चतुर्थःशान्त आत्मा प्लुत[प्रणव]प्रयोगेण समस्तमोमिति प्रयुक्त(ज्य) आत्म (प्रयुक्तमात्म) ज्योतिः सकृदावर्तते।

---

स्थूलं मिलितं सत् ह्रस्वदीर्घप्लुतभेदेन त्रिविधमित्यर्थः। तदेव प्रदर्शयति ओं १. ओं २. ओं ३.। न च एचो ह्रस्वाभावात् कथमोंकारस्य ह्रस्वमिति शङ्क्यम् — न्यूङ्खेषु ह्रस्वस्यापि प्रयोगदर्शनात्।

एवमुक्तप्रकारेण अकार-उकार-मकारात्मकावयवत्रयप्राधान्येन ब्रह्मविष्णुरुद्ररूपदेवतानुसंधानपूर्वकं ह्रस्वदीर्घप्लुतरूपेण त्रिरुक्त्वा, चतुर्थः तुरीयमात्रार्धभूतः पुरुषशब्दितो वासुदेवः शान्तावयवो महात्मा चतुर्मात्रप्लुतप्रयोगेण अनुसंदधान(धीयमान ?)स्सन् सकृत् एकरूपतया

---

पाठश्चेत्, स्थूलपदमेव मिलितार्थकं नेयम्; अक्षराविभागात्। प्रश्नोपनिषदि तु ह्रस्वदीर्घप्लुतानां मात्रापदेन ग्रहणम्। न्यूङ्खेष्विति। न्यूङ्खः ओकारषोडशकादि व्याकरणे वाचस्पत्यादौ च द्रष्टव्यम्। (१३)

१५. इति त्रिरित्यत्र इतीत्यस्य एवमित्यर्थः। तद्विवरणम् उक्तरूपेणेति। समस्तमिति क्रियाविशेषणम्। कृत्स्नतयेत्यर्थः। समस्तम् ओमिति प्लुतप्रयोगेण प्रयुक्त इत्यन्वयः। प्रकर्षेण युक्तः योगविपर्यीकृतः अनुसंहितः। प्रयुक्त इति आत्मविशेषणम्। आत्मपदात्मज्योतिःपदद्वारस्यादेवं व्याख्यातम्। अन्यथा पुनः—चतुर्थः नादरूपः, शान्त आत्मा विना प्रणवं प्रयोगानर्हस्वरूपः प्लुतप्रणवविशिष्टतयैव समस्ततया ओमिति प्रयुज्यमानः स्वात्मस्वरूपं प्रकाशयन् सकृदुक्तो भवति। एषा ह्रस्वदीर्घप्लुतानां पृथक् पृथक् प्रयोगानन्तरं प्लुतस्य (सनादस्य) पुनरेकवारमावृत्तिः समस्तप्रणवप्रयोगः इति वाक्यार्थो वक्तव्यः। मात्रार्धेति वासुदेवे शान्तात्मनि चतुर्थ इति

१६. प्राणान् सकृदुच्चारितमात्रस्स एष ऊर्ध्वमुन्नमयतीत्योंकारः। प्राणान् सर्वान् प्रलीयत इति प्रलयः।

१७. प्राणान् सर्वान् परमात्मनि प्रणामयतीत्येतस्मात् प्रणवः। चतुर्धाऽवस्थित इति

१८. सर्ववेददेवयोनिः, सर्वमन्यञ्च(क्यवस्तु)(च्यवस्तु)प्रणवात्मकम्।

इत्यथर्वशिखायां प्रथमः खण्डः।

---

स्वात्मज्योतिः स्वप्रकाशज्ञानमयः आवर्तते आ=समन्तात् हृदये वर्तत इत्यर्थः। चतुर्थार्धमात्रयाऽनुसंहितः परमात्मा हृदये प्रतिष्ठितो भवतीत्यर्थः।

ओंकारादिनामानि निर्वक्ति— १६ ऊर्ध्वलोकमुन्नमयति प्रापयति। तस्मादोंकार इत्यर्थः।

१७-१८ सर्वेन्द्रियाणि परमात्मप्रवणानि करोतीति प्रणव इत्यर्थः। चतुर्धाऽवस्थितः। प्रणव उक्तरीत्या अकार-उकार-मकार नादात्मना चतुर्धा अवस्थित इत्यर्थः। तस्यैवोंकारस्यावयवभूतानां पादानां ऋग्यजुस्सामाथर्ववेदरूपत्वात्, (१), ब्रह्मविष्णुरुद्रसंवर्तकाभिरूपत्वात्, वसुरुद्रादित्यमरुद्रूपत्वाच्च, गायत्र्यादिच्छन्दोरूपत्वाच्च सर्ववेददेवयोनित्वमोंकारस्य। अत एव सर्वमपि वाक्यं प्रणवात्मकमि(१)त्यर्थः।

---

चतुर्थार्धमात्राऽभेदारोपः। उक्तत्रिमूर्त्यधिकत्वाद्वा चतुर्थता। 'चतुर्थं मन्यन्ते स आत्मा' इति माण्डूक्येऽप्युक्तम्। अत्र अकारादौ क्रमेण ब्रह्मविष्णुरुद्रत्वोक्तिः, माण्डूक्ये क्रमेण अनिरुद्धप्रद्युम्नसंकर्षणत्वोक्तिश्च अविरुद्धा, चतुर्मुखस्य जागरस्वप्नदृप्रनिरुद्धाधीनत्वात्, रुद्रस्य च संहारे संकर्षणाधीनत्वात् अत्रापि माण्डूक्योक्त एव तात्पर्यात्।

१७-१८. गायत्र्यादीति पञ्चम्यन्तं वेदरूपत्वादित्येतत्समनन्तरमेव

१. देवांश्च समुद्धर्ता सर्वेभ्यो दुःखभयेभ्यस्संतारयतीति तारणात् तारः। २. सर्वे देवा अस्मिन् विशन्तीति विष्णुः। ३. सर्वाणि बृंह(ब्रह्म)यतीति ब्रह्म। सर्वस्यान्तःस्थाने ध्यायिभ्यः प्रदीपवत् प्रकाशयतीति प्रकाशः [प्रकाशः] प्रकाशेभ्यः। ४. सदा ओमित्यन्तश्शरीरे विद्योतयति (विद्युद्वद् द्योतयति) मुहुर्मुहुरिति

ख. २.

१. देवान् सत्त्वप्रकृतिकान् समुद्धर्ता। तदेव विवृणोति—सर्वेभ्यः—तारः। अतः प्रणवस्य तारशब्दितत्वमित्यर्थः। २. सर्वे देवाःब्रह्माद्या अवयवत्वेनोंकारे प्रविष्टा इति ओंकार एव विष्णुरित्यर्थः।

३. सर्वाणि स्वानुसंधातृभूतानि ज्ञानानन्दादिगुणैः बृंह (ब्रह्म) यति वर्धयतीति ब्रह्म। सर्वस्यान्तःस्थाने ध्यायिभ्यः प्रदीपवत् प्रकाशयतीति प्रकाशः—(?) प्रकाशेभ्यः। सर्वस्य ध्यातृजनस्यान्तःस्थाने हृदये वर्तमानस्सन् ध्यायिभ्यः स्वेन ब्रह्मध्यायिभ्यः प्रदीपवत् ध्येयं प्रकाशयतीति प्रकाशः प्रकाशेभ्यः प्रकाशेभ्योऽपि सूर्यादिभ्य अतिशयिततया प्रकाशयतीति प्रकाश इत्यर्थ। ४. सदा ओमिति अन्तःशरीरे हृदयस्थाने मुहुर्मुहुस्तत्त्वे विद्योतयतीति विद्युदिति

स्यात्?। सर्ववाच्यवस्तु प्रणवात्मकमिति शङ्करानन्दपाठः। वाच्यं=नाम। वस्तु=रूपम्। सर्वमपि नामरूपं ब्रह्मात्मकमिति तदुक्तोऽर्थः। सर्ववाच्यवस्तु प्रणवात्मकमिति अष्टोत्तरशतोपनिषत्कोशे। सर्ववाक्यञ्च प्रणवात्मकमिति पाठेऽपि सर्वस्यापि वैदिकवाक्यस्य मन्त्रादेश्च प्रणवपूर्वमेव प्रयोगात् प्रणवात्मकत्वं विवक्षितं स्यात्?।

ख. २.

प्रकाशः प्रकाशः प्रकाशेभ्य इति द्विरावृत्तपाठो भाष्येऽपि संमतो वेति विमृश्यम्।

विद्युदिति प्रतीयात् । ५. दिशं दिशं भित्वा सर्वान् लोकान् व्याप्नोति व्यापयतीति व्यापनात् व्यापी महादेवः ।

६. पूर्वाऽस्य मात्रा जागर्ति जागरितम् । ७. द्वितीया स्वप्नम् । तृतीया सुषुप्तिः । चतुर्थी(र्थः)तुरीयम् ।

८. मात्रा मात्राः प्रतिमात्रा गताः । ९. सम्यक् समस्तानपि वादान् जयतीति स्वयं प्रकाशः स्वयं ब्रह्म भवतीत्येष सिद्धिकरः ।

---

प्रतीयात् विद्युदात्मकतया जानीयादित्यर्थः । दिशं भित्वा=दिक्कृत-परिच्छेदमन्तरेण सर्वदिग्देशवर्तिव्यापकतया व्यापित्वम् । व्यापित्वादेव महादेवत्वम् ; व्यापित्वस्यैव महत्वा (स्वरूपत्वा ?) दिति भावः ॥

एवमनुस्मरणार्थं नामानि निरुच्य, अथ 'एतदक्षरं परं ब्रह्म' इति प्रक्रमोपदिष्टं ब्रह्मध्यानसाधनत्वं निरूप्यते—**पूर्वाऽस्य मात्रा जागर्ति ।** "जागरिते ब्रह्म" इति श्रुतेः जाग्रद्दशासंपादकत्वादकारस्य ब्रह्मणो जागर्तीत्युक्तिः । अतः पूर्वमात्रैव जागरितम् । **तुरीयम्** मोक्ष इत्यर्थः । ब्रह्मविष्णुरुद्रपुरुषशब्दितानां चतुर्णाम् अकार–उकार–मकार–अर्धमात्रार्थानां जागरितस्वप्नसुषुप्तिमुक्त्यवस्थासंपादकत्वात् तदभिमानित्वाच्च । ' जागरिते ब्रह्मा ; स्वप्ने विष्णुः ; सुषुप्ते रुद्रः ; तुरीयं परमक्षरम्" इति श्रुत्यन्तरात् ।

**[मात्रा ?]** एवं प्रमात्रा = एवमवगच्छतेत्यर्थः । **मात्राः** चतस्रोऽपि मात्राः **[प्रतिमात्राः गताः ?]** प्रतिनियतार्थतया अवगता भवन्तीत्यर्थः । ९. समस्तान् ब्रह्मवादान् जयतीत्यर्थः । **स्वयं ब्रह्म भवति**—आविर्भूतब्रह्मरूपो भवतीत्यर्थः । **एषः ओंकारः सर्वसिद्धि-**

१०. एतस्माद् ध्यानादौ प्रयुज्यते। ११. सर्वकरणोपसंहारत्वात् धार्यधारणाद् ब्रह्म तुरीयम्॥

१२. (२) सर्वकरणानि मनसि संप्रतिष्ठाप्य ध्यानं विष्णुः।

---

कर इत्यर्थः। **एतस्मात् ध्यानादौ प्रयुज्यते**। एतस्माद्धेतोः ध्यानादौ *प्रणवः प्रयुज्यत इत्यर्थः*। **सर्वकरणोपसंहारत्वात्** *सर्वेन्द्रिय* वशीकरणहेतुत्वादित्यर्थः। **धार्यस्य** अवधारणीयस्य ब्रह्मणोऽवधारण हेतुत्वाच्च, ब्रह्मप्राप्तिसाधनत्वाद् ब्रह्मप्रतीकत्वाद् ब्रह्मगुणयोगाच्चैतदेव ब्रह्मेत्यर्थः॥ (११)

१२. एवं प्रथमप्रश्नस्योत्तरमुक्त्वा द्वितीयप्रश्नस्योत्तरमाह-**सर्व करणानि....विष्णुः**। सर्वाणि बाह्येन्द्रियाणि मनसि विलीनानि कृत्वा क्रियमाणं ध्यानम्। तद् **विष्णुः**। विष्णुरूपस्य ध्यानं कर्तव्यमित्यर्थः।

---

*ब्रह्मगुणेति*। परस्य ब्रह्मणो बृहत्त्वमप्यस्ति। प्रणवे तदभावेऽपि पूर्वोक्तं बृंहणत्वमस्तीति भावः।

ध्यानं विष्णुरिति। अत्र ज्ञानस्य स्वयंप्रकाशतया मितिमातृमेय-रूपत्रिपुटीभाननैयत्येऽपि निर्विकल्पसमाधौ, "दयाशिशिरिताशाया मनसि मे सदा जाग्रतुः श्रियाऽध्युषितवक्षसः...संविदः" इति श्रीदेशिकोक्तदिशा मितिमेयमेदापरिस्फूर्त्या मेयमात्रशेषणात् ध्यानं केवलं ध्येयविष्णुमयमेव भवति। तदेवंध्यानं श्रेष्ठमिति दर्शितम्। अनेनैव ध्येयो विष्णुरिति सिद्धम्। ध्याता रुद्रः। विष्णूपासकेषु योगिषु मध्ये सर्वज्ञो रुद्र एव सम्यक् परमात्मनो ध्यातेति स्वस्मिन् रुद्रभावना ध्यातृध्याननिष्पत्त्युपयोगिनीति भावः। अनेन पर-मैकान्तिनोऽपि रुद्रे गौरवातिशयः, न तावता मुक्त्यर्थमुपास्यत्वमिति च दर्शितम्॥ अत्र प्रथमवाक्ये सर्वकरणानां मनसि प्रतिष्ठापनम्,

द्वितीयवाक्ये प्राणस्यापि मनसि प्रतिष्ठापनम्, तृतीयवाक्ये मनसीव परमात्मनि प्रतिष्ठापनञ्च क्रमेणोक्तमस्ति। तथाच प्रत्याहार, प्राणायाम, ध्यानधारणादि च क्रमेणोक्तमिति प्रतीयते। तत्रैतद्वाक्य-त्रयमुख्यार्थभूतेषु, 'ध्यान विष्णु,' 'ध्याता रुद्र,' 'ध्यायीतेशान प्रध्यायितव्यम्' इत्येतेषु प्रत्याहाराद्यर्थत्रयक्रमस्य न कश्चित् प्रतिनियत उपयोगो लक्ष्यते। अत तत्तद्शब्दव्युत्पादनमात्रे श्रुतेस्तात्पर्यम्, सर्वं सर्वत्र विवक्षितमेव इत्यभिप्रेत्य द्वितीयवाक्य एव, 'परमात्मनि सम्प्रतिष्ठाप्य' इति परमात्मघटन कृत भाष्ये। प्राणायामस्य च प्रत्याहारापेक्षया पूर्वाङ्गतया अष्टाङ्गयोगे परिगणनात् पूर्ववाक्ये करणप्रतिष्ठापने कथिते प्राणायामोऽपि कथितप्राय इति प्राणपद जीवपर स्वीकृतम्। अथवा ध्यानस्य विष्णुमात्रगोचरत्व विषयान्तर-भूतदेवमनुष्यादित करणाना प्रत्याहारे सत्येवेति पूर्ववाक्ये ताव-दुक्तम्। ध्यातु रुद्रतादात्म्यभावना च रुद्रवत् स्वात्मन परमात्मनि प्रतिष्ठापने कृत एव भवितुमर्हतीति द्वितीयवाक्ये यथाभाष्य तद् विवक्षितम्। मोक्षार्थध्येयेशानध्यानञ्च नादान्ते परमात्मनि प्रतिष्ठान एव, न पुन नादार्थपरिचये इति तृतीयवाक्ये दर्शितमिति प्रति नियतनिदर्शोपपत्तिर्विमृश्या। तृतीयवाक्यस्य वेदार्थसमाहवर्णितोऽर्थ उपरि दर्शयिष्यते। एव, 'न कारणम्' इत्यस्य श्रुतप्रकाशिकोक्तोऽर्थोऽपि।

नन्वस्तु नाम विष्णोर्जन्म अवतारभूतम्। अथापि तस्य रुद्रादि वदुपास्यत्व न भवति, सर्वकारणस्य पुरुषस्य परवासुदेवस्यैवो पास्यत्वविधानादिति चेन्न-विष्णुपुराणे, 'नैसर्गिको न वै बोधस्तेषा-मप्यन्यतो यत' इत्येव परब्रह्मोपासनस्यैव मोक्षहेतुत्ववर्णनात्। विष्णोर्वासुदेवाभिन्नतयाऽनुपास्यत्वायोगाच्च। अत एव, 'ध्यान विष्णु' इति परध्यानस्य विष्णुरूपत्वमत्रैवोक्तम्। 'विभवार्चनात् व्यूह प्राप्य व्यूहार्चनात् पर ब्रह्म वासुदेवाख्य प्रतिपद्यन्त' इतिवत् विष्णूपासन क्रमिकमुक्तिहेतुरपि स्यात्। तथा फलान्तरहेतुरपि;

१३. (३) प्राणं मनसि सह करणैः संप्रतिष्ठाप्य ध्याता रुद्रः।
१४. (४) प्राणं मनसि सह करणैर्नादान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायितव्यम्। १५. सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते

---

तृतीयस्योत्तरमाह—प्राणं.........रुद्रः। मनसि प्रविलापितैरिन्द्रियैस्सह प्राणमपि जीवमपि, "यच्छेद्वाङ्मनसी प्राज्ञस्तद् यच्छेत् ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत् तद् यच्छेच्छान्त आत्मनि" इत्युक्तरीत्या परमात्मनि संप्रतिष्ठाप्य ध्याता पुमान् रुद्ररूपः। ध्याता रुद्रबुद्ध्या ध्यातव्य इत्यर्थः।

कथ ध्येय इति चतुर्थस्योत्तरमाह--प्राणं--प्रध्यायितव्यम्। **नादान्ते** अर्धमात्रावसाने परमात्मनि जीवं संप्रतिष्ठाप्य तच्छेषतैकप्रवणं कृत्वा प्रकर्षेण ध्यातव्यमीशानं ध्यायीतेत्यर्थ.। एवञ्च ईशानशब्दितो देवताविशेषो ध्यातव्य इत्युक्तं भवति। **प्रध्यायितव्यम्** इति आत्वाभावेडागमौ छान्दसौ। तस्यैव प्रकर्षेण ध्यातव्यत्वे युक्तिमाह **सर्वम्**—। सर्वमिदं चिदचिदात्मकप्रपञ्चभूतं प्रसिद्धाः ब्रह्मविष्णुरुद्रेन्द्राः भूतेन्द्रियैस्सहोत्पद्यन्ते। अत उत्पत्तिमत्त्वादेषां न प्रकर्षेण

---

परोपासनं पुनः साक्षान्मुक्तिहेतुरिति तत्र श्रुतेरादरः। किञ्च यथा परिच्छिन्नविभवः प्रतीयते विष्णुः, तथा तस्य मुक्तयेऽनुपास्यत्वमेव। परवासुदेवाभिन्नतया ताद्रूप्येणोपासनं तु नासंमतम्। ब्रह्मरुद्रादीनामपि हि ताद्रूप्येणोपासनमिष्टम्। परंतु ताद्रूप्यमिदं प्रमाणवलात् तत्र शरीरात्मभावरूपम्, विष्णुविषये तु साक्षादभेद इति विशेषः। अत एव, 'विष्णोः सकाशादुद्भूतं जगत् तत्रैव च स्थितम्' इत्यादिः विष्णुपदघटितैव परमर्षिपराशरसूक्तिरिति।

[सर्वे] संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः । १६. न कारणं कारणानां धाता ध्याता । १७. कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशमध्ये[1] ।

---

ध्यातव्यत्वमित्यर्थः । ननु सर्वकारणत्वेन प्रसिद्धयोः ब्रह्मरुद्रयोः कुतो न प्रध्यातव्यत्वमित्यत्राह न कारणं....॥ धाता ब्रह्मा पूर्वत्र 'ध्याता रुद्रः' इति ध्यातृत्वेनोक्तश्च रुद्र जगत्कारणो भूतोऽपि जगत्कारणकारणं न भवतीत्यर्थ । पुन किं ध्येयमित्यत्राह कारणं तु .. । कारणं चेतनाचेतनात्मकप्रपञ्चकारणभूत सर्वेश्वरः सर्वनियन्ता सर्वैश्वर्यसंपन्नः सर्वेण=सर्वविधेन ऐश्वर्येण=शेषित्वेन, मातापितृनृपलोकपालादिनिष्ठेनापि शेषित्वेन, संपन्न , मातापित्रादिरूपेण च य स एव, शं भवत्यस्मादिति शम्भुः मोक्षप्रद इत्यर्थ । स एव हृदयाकाशमध्ये ध्यातव्य ; न त्वीशानशब्दवाच्य संहर्ता रुद्र इत्यर्थ । ["इति नारायण शम्भुः भगवान् जगता पति । संदिश्य विबुधान् सर्वान् अजायत यदो कुले ॥"] इति शम्भुशब्दस्य भगवत्परतायां तदुत्पत्तेरवतारत्वरूपतायाश्चोपबृंहितत्वादत्रत्यशम्भुशब्दोऽपि भगवत्पर । ब्रह्मविष्णुरुद्रेन्द्रा इति श्रूयमाणाऽपि विष्णोरुत्पत्तिरवताररूपेति द्रष्टव्यम् ।] [2]'अजायमानो बहुधा विजायते', 'पिता पुत्रेण पितृमान् योनियोनौ' इत्यादिश्रुतिरप्यत्रानुसंधेया ।

---

1. आकाशमध्य इत्येतदनन्तरं पुनर्ध्यायत् नास्तीति श्रुतप्रकाशिकाशैल्याऽप्यवगम्यते, कारणंत्वित्यारभ्य वाक्यैक्यात् ।

2. अजायमान इति वाक्यमिदं—, सर्वव्यापकत्वनाधिकरणश्रुतप्रकाशिकायामथर्वशिखानिर्वाहे एतद्वाक्योपादानस्थल इव अत्रापि, विष्णूत्पत्तेरवताररूपत्वस्थापनार्थमेव प्रवृत्तम् । अन्यथा असंगतेरिति।

१८. ध्रुवं स्तब्ध्वाऽधिकं क्षणमेकम्, क्रतुशतस्यापि चतुस्सप्तत्या यत् फलम्, तदाप्नोति कृत्स्नमोंकार[1]गतिश्च सर्वध्यानयोगज्ञानानां यत् फलम्।

१९. ओंकारो वेदपर ईशो वा। २०. शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य। २१. समाप्ताऽथर्वशिखेति।

---

एकं क्षणमात्रं वा, ध्रुवं=स्थिरं परमात्मानं स्तब्ध्वा नैश्चल्येन ध्यात्वा क्रतुशतचतुस्सप्ततिफलमाप्नोति कृत्स्नम् ओंकारगति ओंकार प्राप्यं फलञ्चाऽऽप्नोतीत्यर्थः। सर्वध्यानयोगज्ञानानां यत् फलम्, तत् फल माप्नोतीत्यर्थः। उक्तं ध्यानकरणमोंकारं स्तौति ओंकारः– सर्वस्माद्वेदात् ओंकार श्रेष्ठ इत्यर्थः। सर्वफलप्रदाने ईशः शक्तश्चेत्यर्थः। वाशब्दश्चार्थे॥

ध्येयमुपसंहरति–शिवः ....परित्यज्य। अन्यत् सर्वं परित्यज्य।!

इति नारायण शम्भुर्भगवान् जगतां पति . विष्णोरु पतिरवतार-रूपेति द्रष्टव्यम्। शिवकरः शिवकर. मोक्षपदश्शिव एव ध्येय। अत्रत्यशिवकरशब्द प्रसिद्धशिवव्यावृत्त्यर्थं॥ वक्तव्यशेष (शे?) किमपि नावशिष्टमिति स्वयमेव श्रुतिराह – समाप्ताऽथर्वशिखेति।

---

कोशेषु लिखितुर्वाक्यन्यास्यानानन्तरनिविष्टोऽपि "इति नारायणः शम्भुः" इत्यादिः 'द्रष्टव्यम्' इत्यन्तः कुण्डलितो ग्रन्थोऽत्रैव भाष्य इति अत्रैव मुद्रितः। शम्भुशब्दस्याप्यत्रैव सत्त्वात् उपरि तद्ग्रन्थानन्वयाच्च।

1. ओंकारगतमिति क्वचित् पाठः।

अत्रेदमथर्वशिखारहस्यम्–कश्च ध्येय इत्यस्य साक्षात् समानाकारमुत्तरम्—कारणं तु ध्येय इति। न चैवतया प्रवृत्ते, 'ध्यायीतेशानं प्रध्यायितव्यम्' इति वाक्ये इदमुच्यते—ईशानं ध्यायेत्। कीदृशमीशानम्? न रुद्राभिधमीशानम्, किंतु प्रध्यातव्यम्, प्रकर्षेण ध्येयतया विधिप्राप्तमीशानम्। प्रकृष्टध्यानं नाम मोक्षार्थध्यानम्।

प्रसिद्धेशानव्यावर्तनाय प्रध्यातव्यमिति प्रयुज्य, कुतः स रुद्र ईशानः प्रध्यातव्यो न भवतीत्याशङ्कां परिहर्तुं सर्वमिदमिति वाक्यं प्रवर्तितम्। सर्वस्यैव प्रपञ्चस्य, ब्रह्मरुद्रादेरपि कार्यत्वात्, "आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः", "ब्रह्माद्यास्ते समस्तास्तु देवाद्याः कर्मयोनयः" । इत्युपबृंहितरीत्या न मुमुक्षुध्येयत्वमित्युक्तं भवति । ननु जगत्संहारकारणत्वेन प्रसिद्ध ईशानः कथं संप्रसूयते इत्यत्राह न कारणमित्यादि । अत्र धातुर्ब्रह्मण उपादानं रुद्रपितुर्ब्रह्मण एव कार्यत्वे अध्येयत्वे च सति किमुत रुद्रस्येति द्योतये । एतेन ईशानशब्दस्य रूढत्वे रुद्र एव ध्येयः, यौगिकत्वे चतुर्मुखोऽपीति शङ्काऽपि शमिता, तयोः व्यष्टिगतयोः कारणभूतसमष्ट्यादिकारणत्वाभावात् । अतः कारणकारणत्वादिविशिष्टो यः शम्भुः स ध्येयः, न तु कार्यभूतोऽनीश्वरशम्भुरिति । आकाशमध्य इति वात्सल्यातिशयेन विशेषानुग्रहाय अजहत्स्वस्वभावतया हृदयकुहरेऽवतीर्णत्वं प्रदर्श्यते । तेन हार्दवितारवत् विष्ण्वाख्योऽवतारोऽपि कश्चिदिति नानावताररूपसंप्रसूतिरैश्वर्यघातिनीति गमितम्। तर्हि विष्णोरिव ब्रह्मरुद्रयोरपि प्रसूतिरवतार एवास्त्विति शङ्काशमनाय ब्रह्मविष्णुरुद्रेन्द्रा इति इन्द्रस्य सह पठनम् । तथासति इन्द्रादिजन्मान्यवताराः स्युरिति प्रतिबन्दिः । अहेन्द्रस्य, सर्वमिदमित्युक्तप्रपञ्चस्येव कर्मवश्यत्वम्, अनुग्रहाय अन्तर्दर्शनमर्नाक्षत्वमुपासनमहिमलब्धानेकगात्रश्लेषणादिरुक्षेन्द्रप्राणाधिकारणसिद्धम्।तथाच जन्मसामान्यं कर्मकृतमित्युत्सर्गः। अकर्मवश्यतया, 'न चास्य कश्चिज्जनिता न चाधिपः' इति अकारणकतया, विशेषवचनबलाच्च विष्णुप्रसूतिरैच्छावताररूपेति । तत् सिद्धं प्रसिद्धरुद्रव्यावर्तनेन अर्धमात्रादेवताभूतः पुरुषः परमात्मा श्रीमन्नारायण एव रुद्रतुल्येन ध्यातः सर्वेश्वरशिवपितामहशिवशंकरशम्भुरत्र ध्येयतया प्रतिपाद्यत इति ॥

अत्र पाठभेदादेस्सुगमत्वाय आनन्दात्मशिष्यशङ्करानन्दकृत-प्रतिपदव्याख्यातालङ्कोशग्रन्थात् कतिपयांश उद्ध्रियते–अर्धमात्रा= अर्धं बिन्दुः। तद्रूपा मात्रा । संवर्तकोऽग्निः संकर्षणमुखानलः। भास्वतीः स्मृताः। भास्वत्यो विचित्रवर्णाः प्रकाशादिकाः; स्मृताः चिन्तिताः। महत् महदाख्यम्। शुभाशुभा पुण्यपापरूपा, एतन्नाम्नी च। चतुष्पादः ऋग्वेदादिचतुष्पादः। चतुश्शिराः ब्रह्मविष्णुरुद्र-पुरुषरूपशिरस्कः। चतुश्शिरा एव चतुश्शिरः । चतुरर्धमात्रः। गार्हपत्याद्यग्नय एवार्धमात्रा इति। प्लुतप्रयोगेण—प्लुतातीतत्वेन प्रणवस्य प्रयोगेण। प्राणानुद्दिश्य प्रलीयते—लयं याति; प्राणान् स्वस्मिन् लयं नयतीति वा। प्रणामयति–प्रकर्षेण प्रापयति। चतुर्धाऽ-धस्थितः पृथिव्यादिरूपैश्चतुष्प्रकाराधस्थितः। इति=अस्मात् कारणात् सर्ववेददेवयोनिः। सर्ववाच्यवस्तु=सर्वनामरूपम् प्रणवात्मकम्= प्रणवस्वरूपम्। देवाश्चेति देवादयोऽपि प्रणवात्मका इत्यनेन प्रकारेण। संधत्ताम्=संधत्त–सम्यग् ध्यानं कुरुत। स्थानेभ्यः=स्थानशब्दाभि-धेयेभ्यः। ध्यायिभ्यः=ध्यानशीलेभ्यः (चतुर्थी) [अत्र 'सर्वेभ्योऽन्तः-शरीरे स्थानेभ्यः प्रकाशयतीति प्रकाशः प्रकाशः प्रकाशेभ्यः। सद्यो-मिति विद्युमद् द्योतयति मुहुर्मुहुरिति विद्युद्वत् प्रतीयात् इति पाठः। दिशं दिशामिति द्विः पाठो नास्ति। व्याप्नोति व्यापयतीति पाठः] जागर्ति जागर्ति जागरणं करोति। तेन सा जागरणम्। [अत्र मात्रे-त्यादेः कमप्यर्थमबुध्यमानेन, 'मात्राचतुष्टयाधारभूतमित्यर्थः' इति भावो वर्णितः।] सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रात्मकम्। ते ब्रह्मादयः संप्रसूयन्ते स्वामिन्नं सर्वमिदमुत्पादयन्ति। [अत्रापि सर्वं इति पदं न] किमीश्वर-स्वरूपमिन्द्रियभूतमायाख्यातरूपम्, अन्यच्चेत्यत्राह सर्वाणि चेति। कारणमिति मायोच्यते। इन्द्रियादि न ध्येयमित्यर्थः। किंतु कारणमेव ध्येयम्। कारणमिह मायाया अप्याश्रयः [सर्वैश्वर्यश्चेति चकारसहित-पाठः] शम्भुः सुखकारणम्। आकाशमध्य इति उपर्यन्तेति।

आकाशमध्यं स्तम्भनां नीत्वेत्यर्थः । ओंकारो यत् फलं वेद जानाति, तद्प्याप्नोति । पर ईशो वा = परः ईश एवेति ॥

—:*:—

वेदार्थसंग्रहे, 'प्राणं मनसि सह करणै' इत्यादिवाक्यस्य अथर्वशिखागतस्यार्थ एवं सगृहीत —। अतः 'प्राणं मनसि सह करणै' इत्यादिवाक्यं सर्वकारणे परमात्मनि करणप्राणादि सर्वं विकारजातमुपसंहृत्य तमेव परमात्मानं सर्वस्येशानं ध्यायीतेति परब्रह्मभूतनारायणस्यैव ध्यानं विदधाति । 'पतिं विश्वस्य' इति, 'न तस्येशे कश्चन' इति च तस्यैव सर्वस्येशानता प्रतिपादिता । अत एव, 'सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येय' इति नारायणस्यैव परमकारणस्य शम्भुशब्दवाच्यस्य ध्यानं विधीयते । 'कश्च ध्येय' इत्यारभ्य, 'कारणं तु ध्येय' इति कार्यस्याध्येयतापूर्वकारणैकध्येयतापरत्वाद् वाक्यस्य ।" इति ।

"उपसहृत्य = परमात्मनि विकारजातोपसंहारमनुसंधाय" इति वेदार्थसंग्रहव्याख्या तात्पर्यदीपिका । तुरीये सर्वकरणोपसंहारत्वस्य प्राक् श्रुत्युक्तत्वात् तदनुगुणमिदम् ।

'न कारणम्' इत्यत्र पूर्ववाक्यात् 'समभूयत' इति विपरिणम्यानुषङ्गेण, *जगत्कारणं नोत्पाद्यत इत्यर्थ उक्तः श्रुतप्रकाशिकायाम्* । तदनुरोधेन भावप्रकाशिकायाम्, 'धाता ध्याता' इत्यस्य जगतः स्रष्टा तदर्थमादिसर्गसंकल्पकर्तेत्यर्थो वर्णितः । उपनिषद्भाष्योक्तार्थश्चाक्लिष्टः ।

शम्भुशब्दार्थश्च श्रीसहस्रनामभाष्ये एवं भाषितः —, "स्वसौन्दर्यसौशील्यादिगुणाविष्कारेण शं सुखं भावयतीति शम्भुः" इति ।

२३ एतामधीत्य द्विजो गर्भवासात् विमुक्तः; विमुच्यते, एतामधीत्य द्विजो गर्भवासाद्विमुक्तो विमुच्यत इति[ओं सत्यमित्युपनिषत्]
इति द्वितीय (?) खण्डः । आ भद्रं कर्णेभिरिति शान्ति ।
इत्यथर्वशिखोपनिषत् ॥

---

एताम । एतामुपनिषदमधीत्य पूर्वोऽपि जनो विमुक्तः; अद्याप्यधीयानो विमुच्यत इत्यर्थः । द्विरुक्तिरुपनिषत्समाप्त्यर्था ॥

क्षेमाय य करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारां ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमत्तातार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्य
पादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य,
परकालमुनिपादसेवासमधिगतपारमहंस्यस्य
श्रीरङ्गरामानुजमुनेः कृतिषु
अथर्वशिखोपनिषत्प्रकाशिका सपूर्णा ।

---

विमुक्तपदं कठोपनिषदि, 'विमुक्तश्च विमुच्यते' इत्यत्रेव रागद्वेषादिविमुक्तिपरम्, गर्भवासादिति श्रवणात् । अत एव व्याख्यातम् । एतद्विद्यया पुनर्जन्मरहित एव सन् अस्मिन्नेव जन्मनि मुक्तो भवतीत्यर्थस्तु कामं गृह्यताम् । वस्तुतस्तदा विमुक्त इति पुनरुक्तमेव ।
इत्यथर्वशिखाभाष्यपरिष्कारो व्यतन्यत ।
ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ॥

इति श्रीवेदान्तरामानुजयतीन्द्रपदाब्जमधुव्रतस्य श्रीरङ्गरामानुजमुनि
चरणाम्बुजसेवासपादितसर्ववेदान्तार्थस्य वात्स्यसचक्रवर्तिनो
वीरराघवाचार्यस्य कृतिषु
अथर्वशिखाभाष्यपरिष्कारः
श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः ।
शुभमस्तु

## अथर्वशिखासारसंग्रहकारिकाः ।

अङ्गिरःप्रभृतिप्रश्ने प्राहाथर्वा चतुष्टयम् ।
ध्यानस्य कारणं ध्यानं ध्याता ध्येय इति क्रमात् ॥
ओंकारः करणं ब्रह्म चतुष्पाच्चतुरक्षरम् ।
प्रत्यक्षरं लोकवेददेवच्छन्दोग्निभावना ॥
ब्रह्मा विष्णू रुद्र एवं पुरुषो देवताः क्रमात् ।
ह्रस्वदीर्घप्लुतात्मा स प्लुतरूपः प्रयुज्यताम् ॥
नाना नामानि चान्वर्थान्येतस्येत्युक्तमादिमम् ।
अथ द्वीप्यस्य च ध्यानं योगे विष्णुतया स्थितम् ॥
ध्याता रुद्रतया भाव्यो ध्येयस्तु शिवता परः ।
भूतेन्द्रियादिवद् ब्रह्मरुद्राद्यपि हि सूयते ॥
अतो यो मोक्षसुखदः समस्तेरपि कारणम् ।
स ध्येय ईश्वरो नान्य इत्यथर्वशिखाश्रुतिः ॥

पुरुषनामानि— पैप्पलाद अङ्गिरा सनत्कुमार अथर्वा.

### विषयाः



॥ शुभमस्तु ॥

श्रीः

उपनिषत्परिष्कारान्तर्गतः

# अथर्वशिरस्सारः

अखिलमनुवदिष्यन्नर्थमार्यैस्तु पूर्वैः
अभिहितमिह किञ्चिद्वाक्यमात्रार्थमात्रम् ।
उपनिषदि विवक्षाम्यत्रमा सर्ववाक्य-
स्फुटगतिविरहेपि स्यात् परिष्कारभाक् धीः ॥

अथर्वशिरसि पदवाक्यानुपूर्व्यामभ्यधिकाः विपर्यासा व्यक्त लक्ष्यन्ते । उत्तरदेशीयदेवनागरीमुद्रणेषु महीशूरपुरान्ध्रलिपिमुद्रणे च महद् वैषम्यम्। पूर्वत्र मुद्रणे अथर्वशिरसि अथर्वशिखोक्तप्रणवमात्राभेद तद्देवतावर्णादेरीषद्विशदं वर्णनमपि लक्ष्यते । उत्तरत्र न तत्प्रस्तावः । पूर्वत्र ओङ्कारनाम्ना बहुना परिगणने रुद्रेशानभगवन्महेश्वरनाम्ना निर्देश ; उत्तरत्र महादेवनामापि ओङ्कारनामतया अन्ते समगणि, निरवाचि च । स्थूलमिदं प्रदर्शनम् , आसित आ अवसानात सन्ति असंख्या भेदा । तत्र अत्रोपात्ता· पूर्वाचार्यग्रन्था प्रायो महीशूरमुद्रणदृष्टानुपूर्वीमेवानुरुन्धत इति तत्रतत्रोद्धृतवाक्यांशनिरीक्षणाध्यवसीयते । श्रीवेंकटेशप्राच्यविद्याविमर्शालयकोश प्रायो महीशूरमुद्रितसमान एव। अतो बहुविवादग्रस्तानुपूर्व्यतया, आनुपूर्व्या किञ्चिद्व्याख्यानस्यासदीयादतस्य अलाभेन च अथर्वशिरोमूलमुद्रण नात्र क्रियते । अथापि पूर्वाचार्यैस्तदर्थस्य निष्कृष्टत्वात् तदनुवादमत्र कर्तुं प्रवृत्त तच्छेषतया तदुपक्रमभाग. किञ्चिद्विशदं प्रकाश्य तत्तत्खण्डगतकतिपयवाक्यशकलमात्रमर्थवैशद्यायात्र निवेश्यते । अत्रैवमथर्वशिरस उपक्रमः—

हरिः ओं । देवा ह वै स्वर्गं लोकमायन् । ते रुद्रमपृच्छन् को भवानिति ॥ सोऽब्रवीत्, अहमेकः प्रथममासं वर्तामि च भविष्यामि च ; नान्यः कश्चिन्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशत् । दिशश्चान्तरं प्राविशत् । सोऽहं नित्यानित्योऽहं व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्चोदञ्चोऽहम् अधश्चोर्ध्वश्चाहं दिशश्च प्रदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं गायत्र्यहं सावित्र्यहं त्रिष्टुप्जगत्यनुष्टुप्चाहं छन्दोऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं सत्योऽहं गौरहं गौर्यहम् ऋगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहम्

यो मा वेद स सर्वान् देवान् वेद सर्वांश्च वेदान् साङ्गानपि
ब्रह्म ब्राह्मणैश्च गा गोभि   धर्मेण धर्मं तर्पयामि स्वेन तेजसा ।

ततो ह वै ते देवा रुद्रमपृच्छन् । ते देवा रुद्रमपश्यन् । ते देवा रुद्रमध्यायन् । ततो देवा ऊर्ध्वबाहवो रुद्रं स्तुवन्ति इति ।

ननु देवैः, 'क परम्' इति वा, साक्षादेव 'क परमात्मा' इति वा प्रश्नः कृत्वा, को भवानिति प्रश्नः कुतः कृत इति चेत्— अत्रोक्तं श्रुतप्रकाशिकायाम्—'देवतान्तरे साक्षात्येऽपि प्रभावातिशयदर्शनेन संदेहाद् देवा अपृच्छन्' इति । अयं भाव —तत्त्वनिर्दिभिर्देवै स्वयमुपेन्द्रकिङ्करे कदाचित् वैष्णवत्वविशेषाद् [illegible] असाधारणादिरूप रुद्रेऽपि दृष्टवद्भि , 'अस्य साक्षात्त्वादनेनापि हि विष्णुकिङ्करेण भाव्यम् । तत् कथमीश्वर एव ?' इति आश्चर्यवद्भि, तथापि प्रभावातिशय-दर्शनेन किमयं स्वतन्त्र इति सन्देहाने पृष्टम् 'को भवान्' इति । स चाऽऽत्मदर्शी प्रत्युवाच, अहमेक इत्यादिना । तथा च— अहमपि वैष्णव एव । जानाम्येव सर्वान्तर परमात्मानम् । ममाऽनुमीयमानप्रभाव तदुपासनाविशेष , यत्र मे वेदादिकमपि पदिति बोधितं भवति । तदस्ते तद् विज्ञाय तं तुष्टुवु । तदेतत् तदीयमुपासनमथर्वशिरसि प्रतिपादन

इति । अयमर्थोऽस्माभिर्वेदान्तपुष्पाञ्जलौ प्रदर्शित इत्थम्—
"रुद्रो प्रसाद्धताङ्गो त्रिपदक् अनिमिषैर्विसिनैः को भवानि-
त्युक्तः स्वं माधुवृत्तं गमयितुमगदत् नित्यसर्वात्मतां स्वाम् ।
स स्वसान्तरं त्वामपि बहिरखिलात् वीक्ष्य लक्ष्मीश ! सोऽहं
सर्वोऽप्यन्योन्यमिस्रोऽहमिति स्ववतिरन्वेथ वेद्यं स्वमाह ॥" इति।

श्रुत्यर्थः—देवानां प्रश्नाशयं विज्ञाय रुद्रः एवं प्रत्युवाच अहमेक इत्यादि। कालत्रयवृत्तिरेकोऽहमित्यर्थः। य. प्रलयेऽपि बिना विलयं वर्तमान एक. प्रसिद्धः परमात्मा सोऽहम् ; स मदन्तर्यामी ; तच्छेष एवाहमिति यावत् । मत्तः —मदन्तर्यामिभूतात् परमात्मनो व्यतिरिक्त –पृथग्भूतः नान्यः कश्चित् । यो यो भिन्न इह लक्ष्यते, तस्य सर्वस्य हि स आत्मेति वास्त.ार्थः ।

'जीवान्तरवत् परमात्मनोऽन्यो रुद्रः कथमेवं स्वात्मानं परमात्मत्वेनाऽऽह ? किं पौण्ड्रकादिवत् अभिमानेन' इति शंकायां श्रुतिस्तच्यमसभ्यमुपदेष्टुम् , इतीति तद्वाक्यं निगमय्य स्वयमाह सोऽन्तरादिति। सः रुद्रो जीवः अन्तरात् देहाद्यपेक्षया सूक्ष्माज्जीवात् अन्तरं सूक्ष्मं परमात्मानं प्राविशत् । तद्विषयकान्तरात्मत्वधीसंपन्न आसीदिति यावत् । दिशश्चान्तरं प्राविशत् । सर्वचेतनान्तर्यामित्वान्तर्याम्यैक्य ज्ञानवाश्चासीदिति ।

एवमसभ्यमुपदिश्य पुनस्तदीयवाक्यान्यपि श्रुतिरनुवदति सोऽहमित्यादिना । मदन्तर्यामी स एव नित्यानित्यादिसर्वान्तर्यामीति सर्ववाक्यार्थ.। एवमेव हि प्रह्लाद-वामदेवादिभिरनुसंहितमिति "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति ब्रह्मसूत्रे प्रत्यपादि । एवम्भूतविवेकशालिना

स्वेन ब्रह्मादिजङ्गमस्थावरचेतनाचेतनमन्तर्यामी स तत्तदर्हंस्तुत्यनुष्ठाप नेन स्वधर्मेण तर्प्यते चेति स्वस्य धर्मान्यस्याभज्जत्वानन्तरमध्याह ब्रह्म ब्राह्मणैरित्यादिना। ब्रह्मादिद्वितीयान्तपदानि तत्तदर्थान्तर्यामिणमित्यर्थकानि। ब्राह्मणादितृतीयान्तपदानि तत्तदर्हधर्मपराणि। तत्तद्वस्तु यथावत् उपयोज्य कर्तुं शक्य तदाराधनं सर्वं कुर्वन्तमीत्यर्थ । ततो ह वै इति । रुद्रस्य भगवति भगवद्धर्मे च निष्ठाऽस्ति न वेति जिज्ञासितत्वादेव को भवानित्यपृच्छन् । यो वै रुद्र स भगवान् यश्च ब्रह्मा तस्मै वै नमोनम । यो वै रुद्र स भगवान् यश्च स्कन्दस्तस्मै वै नमोनम । यो वै यश्चेन्द्र यश्चाग्नि इत्यादि । रुद्रस्य भगवत्त्वात् ब्रह्मस्कन्देन्द्रादित्वमप्यस्ति । रुद्रशब्दस्य ब्रह्मस्कन्दादिशब्दानाञ्च भगवदभेदान्वयार्हत्या तदन्तर्याम्यर्थकत्वात्, अभेदान्वयोपपत्ति भगवत्पर्यन्तभावनया नमस्कार्यत्वोपपत्तिश्चेति भाव ।

अथायमेवयवाद शरीरात्मभावनिबन्धन इति प्रदर्श्य सर्वस्य तद्विभूतित्वमाहुर्देवा , ' भूस्ते आदि , मध्यं भुव , स्वस्ते शीर्षम् । विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा वृद्धिस्त्वं शान्तिस्त्वम् "इत्येवम् ।

अथ तस्योपसंहर्तृत्वं प्रस्तुत्य ओंकारस्य प्रणवादीनि बहूनि नाम धेयानि निर्दिश्य तेषामर्थवर्णनञ्च पश्चात् , अथ कस्मादुच्यते ओंकार इति, कस्मादुच्यते प्रणव इत्येवम् । अथ तस्यैव संसाररुद्रावकत्वमुच्यते, "एको रुद्रो न द्वितीयाय तस्थे" इति । तच्चोपासनादिति, "तमीशान पुरुषं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति" इति मन्त्रेणोक्तम् । अथास्य प्रणवमात्राणां ब्रह्मविष्णुरुद्रदेवताकत्वमुपवर्ण्य फलभेदश्च श्रावित । "या सा प्रथमा मात्रा ब्रह्मदेवत्या यस्तां ध्यायते नित्यं स गच्छेत् ब्रह्मपदम् । या सा द्वितीया मात्रा विष्णुदेवत्या गच्छेत् वैष्णव

पदम्। या सा तृतीया मात्रा ईशानदेवत्या गच्छेदैशान पदम्।" इत्येवम्। अथ, या सा अर्धचतुर्थी मात्रेत्यारभ्य, 'यस्ता ध्यायते नित्य स गच्छेत् पदमनामयम्' इति मोक्षफलमुक्तम्। तत् किमिति न विवृतम्। अनेन पूर्वोक्ताना त्रिमूर्तिपदाना सावयवत्वमवगम्यते। "अय पन्था विहित उत्तरेण येन देवायान्ति परमपर परायणञ्च" इति तस्य देवयानमार्गगम्यत्वमुक्तम्। स च पन्था अर्चिरादिरेव। तेन अर्धचतुर्थमात्रोपास्य वस्तु अर्चिरादिमार्गगम्य ब्रह्मैवेत्यवधृतम्।

तत पशुपाशविमोक्षणाय पाशुपतं व्रत घोषयता, 'अग्निरिति भस्म' इत्यारभ्य 'भस्मना अङ्गानि सस्पृशेत्' इति अङ्गेषु भस्मधारण विहितम्। इदञ्च प्रकरणात् अथर्वशिर-उपदिष्टमोक्षार्थरुद्रशरीरकपरमात्मोपासन रूपभक्तियोगाङ्गमिति सुस्पष्टम्। तेन ऊर्ध्वपुण्ड्रधारणपूर्वकभक्तियोगवत् ईदृशभक्तियोगो मोक्षसाधनमिति निश्चीयते। रुद्रशरीरकतया परमात्मोपासन कार्यमिति प्रक्रमवाक्यात् विशदमेव विज्ञायत इति न तत्र विवाद। अत इद मोक्षस्थान रुद्रस्थान न भवितुमर्हति। तदिदमन्तर्यामि पुनरपि विशेषतो वर्ण्यते, "योऽसौ रुद्रो योऽप्सु" इत्यादिभिर्मन्त्रै। तत उपनिषदुपसहार। एवमथर्वशिरोर्थसग्रह॥

एतदथर्वशिरोर्थसग्रहश्च वेदार्थसग्रहे—, "यत् पुनरथर्वशिरसि रुद्रेण स्वसर्वैश्वर्यं प्रपञ्चितम्, तत् 'सोऽन्तरादन्तर प्राविशत्' इति परमात्मप्रवेशादुक्तमिति श्रुत्यैव व्यक्तम्" इति। व्याख्यातमिदमित्थ **तात्पर्यदीपिकायाम्** — रुद्रेण को भवानिति पृष्टेन प्रथमम्, अहमेक प्रथममास वर्तामीत्यादिना स्वस्य सर्वात्मकत्वे उक्ते, 'परमात्मनो हि

सर्वात्मकत्वम्, कथं तद् भवत" इत्यपेक्षायाम्, इत्थमिति प्रकारार्थोऽयम् इतिशब्दः। सोऽन्तरादन्तरमिति वक्ष्यमाणप्रकारेणेत्यर्थः। यद्वाऽत्र इतिर्हेतौ। 'सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं स प्राविशत्' इति परमात्मानुप्रवेशात् सर्वात्मकत्वमित्यर्थः। इतिशब्दस्य हेतुपरत्वमभिप्रेत्य परमात्मप्रवेशादित्युक्तम्। यद्यपि इतिशब्दस्य समाप्तिरेवार्थः, अथापि रुद्रवाक्यावसानेऽन्वयकल्पनं न्याय्यम्, न त्वप्रयुक्तपदान्तराध्याहार इति रुद्रवाक्यमेवेदम्। स इति परमात्मोच्यते, बुद्धिस्थत्वात्। स अन्तरादन्तरं शरीरादन्तरस्य प्राणादेरप्यन्तरं जीवं प्राविशत्। दिशश्चान्तरम्। दिक्छब्देन समस्तजगद्वर्तिवस्तुजातं लक्ष्यते। सर्वपदार्थानामन्तरं जीवात्मवर्गं प्राविशत्। सर्वसामानाधिकरण्यस्य वक्ष्यमाणत्वात् तदुपपत्तये तस्य सर्वजीवानाश्च परमात्मानुप्रवेश उक्तः। एवं रुद्रवाक्यत्वमेव युक्तम्॥ यद्वा श्रुतिवाक्यमस्तु। तदाऽयमर्थः— सः रुद्रः अन्तरादन्तरं जीवादन्तरं परमात्मानं प्राविशत् बुद्ध्या अगाहत। अनुप्रवेशशब्दस्य सम्यग्बोधनार्थत्वं लोकसिद्धम्। तथा चाणक्यप्रयोगश्च—"यस्ययस्य हि यो भावस्तेनतेन हि तं नरम्। अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्" इति। सः रुद्रः स्वान्तर्यामिणं परमात्मानं तच्छरीरकं बुद्ध्याऽनुसहितवानित्यर्थः। एवं निर्वाहद्वयमभिप्रेत्य परमात्मप्रवेशादित्युक्तम्। परमात्मनः प्रवेशादिति षष्ठीसमासः। परमात्मकर्तृकप्रवेशात् परमात्मकर्मकप्रवेशाच्चेति भावः" इति। अत्र इतिशब्दस्य हेतुपरत्वे परमात्मप्रवेशादित्युत्तरवाक्येऽन्वय इव पूर्व-

वाक्यान्वयोऽपि दर्शित सर्वत्र्याख्यानाधिकरणश्रुतप्रकाशिकायाम्-, मद्व्यतिरिक्ताभावात् अहमेव प्रथममासं वर्तामि च भविष्यामि चेति ।

अथोपरितनखण्डार्थसंग्रहोऽपि (श्रुतप्र), "द्वितीयखण्डो रुद्र-वाक्यानुवादेन स्तुतिपरत्वात् तदन्तर्यामिपरमात्मविषय । यो वै रुद्रः स भगवानिति । यो रुद्रान्तर्यामी स वासुदेव इत्यर्थः । भगवच्छब्दस्य वासुदेवासाधारणत्वात् । तच्च दर्शितम् । यो वै रुद्र स भगवान् यश्च विष्णुरिति अन्तर्यामिण एवावतारस्पविशिष्टत्वमुक्तम् । तृतीये तु परमात्मनो वैभवम् । तद्वाचकस्य ओंकारस्य नामधेयानि चतुर्थे । तन्निर्वचनं पञ्चमे । षष्ठे तु, *'तदेतदुपासित यम्,' 'निचाय्य त शान्तिमत्यन्तमेति' इति रुद्रशरीरकपरमात्मोपासन साङ्गमुक्तम् । व्रतमेतत् पाशुपतमिति । पशुपतिरूपपरमात्मोपासनाङ्गतया पशुपतिसंबद्ध पाशुपतम्, न तु पाशु-पतागमप्रतिपाद्यम्, तद्विरुद्धयकल्पकाभावात् । भस्मस्नमसितस्पर्शन तु प्रकरणगृहीतत्वात्न सन्त प्राप्नोति दर्शपूर्णमासप्रकरणगृहीनप्रयाजवत्, सौत्रामणीप्रकरणगृहीतसुराग्रहवच्च । तस्मादथर्वशिरसि रुद्रान्तरात्मा नारायण एव प्रतिपाद्य, यथा प्रतर्दनविद्यायामिन्द्रान्तर्यामी । " इति ।

सर्वमिद तदाचार्यपादैः श्रीवात्स्यवरदगुरुभिरेव निवेचित तत्त्वसारे, "यद् देवैरनुयुक्त उवाच्युशन् रुद्रो विभृत्यात्मनि

व्याजह्रे महतीमधीश्वरधुरामाथर्वणे मूर्धनि ।

स प्रादुर्भवदन्तरात्मभगवद्भूमाऽऽफणत 'सोऽन्तरात्

अन्त प्राविशत्' इत्यधीतविधया तद् वामदेवादिवत् ॥८०॥

---

*एव श्रुतिवाक्यपाठो महीशूरमुद्रणे द्रष्टव्यः ।

'नान्यः कश्चिन्मत्त' इत्युपनावयादूर्ध्वं नेतिशब्दः समाप्तिं ब्रवीति[1] ।
प्रागस्त् पश्चादुपनावयानुवृत्ते 'सोऽहं नित्योऽनित्य' इत्यादिभङ्ग्या ॥
सोऽसौ हेतुं [2]वक्ति, नेति प्रकारं प्रह्लादोक्तौ हेतुरन्तःप्रवेशः ।
प्रह्लादोक्तिः 'सर्वगत्वादनन्तस्ये' ति व्यक्ता वैष्णवाख्ये पुराणे ॥८२॥
[3]अथवेतिपदेन हेतुरत्र व्यतिरेकोऽकथि नान्य इत्यधीतः ।
अहमेक इतीरितान्वयस्य [4]प्रतिपत्तुं सुकरः प्रकारपक्षः ॥ ८३ ॥
रुद्रस्योक्तिः 'सोऽन्तरा'दित्यतोऽसौ तस्मादन्यः कोऽपि तस्यान्तरात्मा ।
अन्येप्याख्येत्युच्यते 'सोन्तरा'दित्युक्त्या रौद्रया सोऽपि विष्णुः प्रसिद्धः ॥
[5]इत्युक्तिर्वा समाप्तिं वदतु हरगिरः 'सोऽन्तरा'दित्यतोऽसौ
मा भूद् रुद्रोक्तिरित्यसति न विघटना किंचिदस्मन्मतस्य ।
रुद्रः स्वात्मात्मभूतं हरिममलधिया ■ प्रविष्टश्चिकीर्षुः
मेधावीव स्वरस्य नरमपरमिति व्यज्यते वेदवाचा ॥ ८५ ॥

---

श्लोकानामर्थं दर्शिततात्पर्यदीपिकायां अवधानवता सुगमः ।
'नान्यः कश्चिन्मत्तो व्यतिरिक्त इति' इति 'नान्य' इति वाक्योपरि श्रूयमाण इति न समाप्त्यर्थं, तावति रुद्रस्य वचनसमाप्त्य-भावात् । 2 स इति अन्तःप्रवेश हेतुतया वक्ति । . इतिशब्द पूर्ववाक्यार्थस्य हेतुपरोऽपि सुवच इत्याह अथवेति । अहमेक इत्युक्तस्यान्वयस्य यो व्यतिरेकः नान्य इति स हेतुरित्यर्थः ।
4 अथ इतिशब्दस्य प्रकारार्थकत्वमपि स्वीकरानि प्रतिपत्तुमिति ।
5 अस्तु वा इतिशब्दः समाप्त्यर्थक इत्यर्थः । समाप्त्यर्थकत्वेऽस्य सर्वरुद्रवाक्यान्ते योजनेति कश्चित् पक्षोऽस्ति । तमप्यस्वीकृत्य, एत-दुत्तरवाक्यस्य रुद्रवाक्यत्वाभावादेवात्र इतिशब्द इति स्वीकारेऽपि न दोष इत्यर्थः । मेधावीवेति । उक्तं चाणक्यवाक्यमिह विवक्षितम् ।

अथ द्वितीयतृतीयचतुर्थपञ्चमखण्डविषयश्लोकाः । तदन्ते—

उदितमुपासनद्वयमथर्वशिरश्शिखयोः स्फुटमपुनर्भवाय पुरवैरिकलेवरिणः ।
कमलदृशः [1]क्वचित् क्वचन कारणतत्त्वपरश्रुतिविहितस्य हार्दसुषिमध्यजुषो विदुषः ॥ ९२ ॥

ईशाद्युपनिषद्व्याख्यापरिष्कारविधायिना ।
इत्यथर्वशिरस्सारः प्राच्योक्तिकलनात् कृतः ॥

श्रीमते भगवद्रामानुजाय नमः । श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ।

1. क्वचित् क्वचनेत्यस्य तत्रतत्र श्रुत्यन्तरेष्वित्यर्थं वर्णयन्ति । एवञ्च अत्र विदुषा स्वहृदयसुषिवर्तिपुण्डरीकाक्षमूर्त्यनुसंधानमेव कार्यम् ; तत्रेह रुद्रान्तर्यामित्वमपि परमात्मन्यनुसंधेयमिति भावो वक्तव्यः । वस्तुतस्तु प्रतर्दनविद्यायामिन्द्रेणेव अथर्वशिरसि रुद्रेण शास्त्रदृष्ट्या व्यवहारात्, देवैश्च तथैव स्तवनात्, (ओंकारे ईशान-महेश्वरमहादेवनामघटनात्) रुद्रासाधारणमसाधारणस्य विद्याङ्गत्व-श्रवणाच्च रुद्रान्तर्यामित्वमप्युपास्याकारोऽस्तु । अथाप्यथर्वशिखायां तत् कुतः? । तथाच क्वचिदिति अथर्वशिरसीत्यर्थकं पूर्वेणान्वेति । क्वचनेति अथर्वशिखायामित्यर्थकमुत्तरेणान्वेति । तथाच शिखायां न रुद्रान्तर्यामित्वमुपास्याकारः । 'अत एव उपासनद्वयम्' इति भेदः प्रदर्शितः । तात्पर्यचन्द्रिकायामपि (८.१३.) अथर्वशिरःप्रस्तावमाले, 'अत्र प्रकरणादिवशात् प्रतर्दनविद्यावत् अन्तरितं शासनमनुसंधेयम्' इत्युक्तम् । कारणतत्त्वपरश्रुतिविहितस्येत्यनेन शिखायां 'कारणं तु ध्येयः' इत्यत्र न कारणत्वविधिः ; किंतु श्रुत्यन्तरतः कारणत्वेन प्रसि-द्धस्य ध्यानविधिरिति वेदार्थसंग्रहाद्युक्तमनूदितम् ।

इति वात्स्यवीरराघवाचार्यकृतिषु अथर्वशिरस्सारः ॥
श्रीरस्तु. शुभमस्तु.

श्रीः

# कौषीतकिब्राह्मणोपनिषत्

['वाङ्मे मनसि—' इति शान्तिः]

हरिः ओम् । चित्रो ह वै गार्ग्यायणिर्यक्ष्यमाण आरुणिं वव्रे ॥

---

श्रीमते रामानुजाय नमः

[येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥]

श्रीमद्रङ्गरामानुजमुनीन्द्रानुगृहीता

## कौषीतक्युपनिषत्प्रकाशिका

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥

व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
कौषीतकि(की)श्रुतिव्याख्यां करवाणि यथामति ॥

अर्चिरादिगतितत्प्राप्यदेशविशेषतद्विशिष्टब्रह्मानुभवप्रकारोपदेशाय

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

## कौषीतक्युपनिषद्भाष्यपरिष्कारः

विद्वद्भिश्चन्द्रमासीदपि विदितमतैः सेव्यपर्यङ्करूपः
प्राणादौ यत्पदमूले वशयितुमुचितश्चेन्द्रमुख्याननयत्ना ।
धाम स्वापादियन्तुः इननिखिलजगद् यो हि कौषीतकिस्थः
श्रीमान् श्रीवेदमार्गेश्वर इह वितनोत्वञ्जसैव श्रियं नः ॥

कौषीतकिब्राह्मणोपनिषदि चतुरध्याय्यां प्रथमेऽध्याये पर्यङ्क-

स ह पुत्रं श्वेतकेतुं प्रजिघाय, याजयेति.॥ २ ॥

तं ह्यासीनं पप्रच्छ, गौतमस्य पुत्र! अस्ति संवृतं लोके यस्मिन् मा धास्यस्यन्यमहो वाऽध्वा तस्य [यस्मिन्?] लोके धास्यसीति ॥३॥

स होवाच, नाहमेतत् वेद, हन्ताचार्यं पृच्छानीति। स ह

---

आख्यायिकेयमारभ्यते चित्रो ह....वव्रे । नाम्ना चित्र. गार्ग्यस्यापत्यं **गार्ग्यायणिः** क्षत्रिय. आरुणिं गौतमं याजनाय प्रार्थितवानित्यर्थः ॥१

**स...याजयेति**। स तु श्वेतकेतुनामानं पुत्रम्, त्वमेव गत्वा याजयेति प्राहिणोत् = प्रेषितवानित्यर्थ· ॥ २ ॥

**तं....धास्यसीति** । हे गौतमपुत्र! यस्मिन् लोके मा वा अन्यं वा यज्ञाद्यनुष्ठापनेन स्थापयिष्यसि, तस्मिन् लोके रहस्यमुपदेश्यं किञ्चिदस्ति किम्? यस्मिन् लोके मां स्थापयिष्यसि, स्थापयितुमिच्छसि, तत्प्राप्त्या वा कश्चिदस्ति किमित्यर्थ ॥ ३ ॥

---

विद्या प्रस्तूयते। सेयं परमपदे पर्यङ्के समुपासीनस्य भगवतो वासुदेवस्य ध्यानरूपा । तामिमां प्रस्तोष्यता प्रथमतः चन्द्रं प्राप्तैरपि पूर्वानुष्ठितविधिः परमपदं सुखलभ्यमिति कयाचिदाख्यायिकया प्रदर्श्यते। तत्र चित्रनामा क्षत्रियः स्वयं पर्यङ्कविद्यावित् मुमुक्षुर्यष्टुं प्रवृत्ते। याजकस्तु ब्राह्मणः यागेनानेन अयं चन्द्रमण्डलं प्राप्य भोगान् अनुभूय पुनर्निवर्तिष्यते यथालोकमित्येव मेने। यतः स न विजज्ञौ काम्यकर्मकरतेभ्यो ऽन्येभ्योऽस्य यष्टुर्विशेषम्। तदेव क्षत्रियः याजकस्य यथा नास्थितबुद्धिपूर्वकमनुष्ठापकत्वे सत्येव वर्मसादृगुण्यं मन्वानः याजकमागतं रहस्यमर्थं पप्रच्छ, अथ चाविदुषे तद्रहस्यमुपदिदेशेत्युच्यते चित्र इत्यादिना। भक्त्या सह काम्यस्य, मुक्त्या भुक्तेश्च समाहरणादयमन्वर्थनामा चित्रः। (१)

अन्यमहोवाऽध्वा इत्यत्र अहो इत्येतत् आहो इत्येतदर्थकम् ।

पितरमासाद्य पप्रच्छ ॥ ४ ॥

इति ह माऽप्राक्षीत्; कथं प्रतिब्रवाणीति ॥ ५ ॥

स होवाच, अहमप्येतन्न वेद । सदस्येव वय स्वाध्यायमधीत्य हरामहे यन्नः परे ददति, एह्युभौ गमिष्याव इति ॥ ६ ॥

स ह समित्पाणिश्चित्रं गार्ग्यायणिं प्रतिचक्रमे, उपायानीति ॥

तं होवाच—ब्रह्मार्घ्योऽसि गौतम ! यो न मानमुपागाः । एहि व्येव त्वा ज्ञपयिष्यामीति ॥ ८ ॥

---

स...पप्रच्छ । स्पष्टोऽर्थः ॥

इति ह...प्रतिब्रवाणीति । इतीत्येतत् उक्तार्थप्रकारवचनम् । एवंप्रकारेण मा पृष्टवान् कथमस्योत्तरं वदामीति ॥ (४-५) ॥

स ह गमिष्याव इति अहमपि न जाने । गुरु रहसि गत्वा रहस्यान् अर्थान् [अपृ] पृष्ट्वा सदस्येव स्वाध्यायमधीत्य परे यजमानाय यत् द्रव्य होतव्यमिति प्रयच्छन्ति, तत् जुहुम । अस्माकं रहस्यार्थपर्यन्तज्ञानं नास्ति । त्वमप्यागच्छ । आवाभ्यां गत्वा स प्रष्टव्य इत्यर्थः ॥६॥

स...उपायानीति । समिद्धारहस्तस्सन् चित्रनाम्नः क्षत्रियस्य समीपं, शिष्यस्सन् उपगच्छामीति प्रवृत्ते ॥ ७ ॥

तं ज्ञापयिष्यामीति । यस्त्वमभिमान गोपागाः=त्यक्ताभिमान एव सन् शिष्योऽहमित्यागतोऽसि, स त्वं ब्रह्मार्घ्योऽसि । ब्रह्मत्वेन=ब्राह्मणत्वेन अर्घ्योऽसि पूज्योऽसि । ब्राह्मणस्त्वं क्षत्रियेण मया

---

संवृतं किञ्चिदस्ति आहो न; अन्या वा कश्चिदस्ति, आहो नेत्यर्थः । यद्वा अहो इत्याश्चर्ये । तव लोके किञ्चित् रहस्यमस्ति, अहो अत्याश्चर्यं तत् । तत् किं ज्ञायते, अन्या वा किं ज्ञायत इति प्रश्नार्थः । (3)

स होवाच—ये वै के चास्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति ॥ ९ ॥

उपनीय शिष्यभावं प्रापयितुमयोग्यः । तूष्णीमेवाऽऽयाहि, त्वां ब्रह्म विज्ञापयिष्यामि इति ॥ ८ ॥

स ह...गच्छन्तीति । ये केचन इष्टापूर्तादिकारिणः विद्वांसश्च, ते सर्वे चन्द्रमसं गच्छन्तीत्यर्थः । इयांस्तु विशेषः—इष्टादिकारिणस्तु धूमरात्र्यपरपक्षदक्षिणायनपितृलोकाकाशक्रमेण चन्द्रमसमायान्ति । विद्वांसस्तु अर्चिर्दिनपूर्वपक्षोदगयनसंवत्सरवायुलोकादित्यक्रमेण चन्द्रमसमुपयान्तीति ।

इदञ्च वाक्यं तृतीयाध्याये वैराग्यपादे चिन्तितम् । तत्र हि—"अनिष्टादिकारिणामपि च श्रुतम्" । 'ये वै के चास्माल्लोकात् प्रयन्ति

---

९. यत्र लोके धास्यसि तत्र रहस्यं जानासि किमिति पृष्टवानयं राजा, धास्यसीति पदं प्रयुञ्जानः, 'त्वं स्थापयितुं तत्रेच्छसि । अहं तु न तत्र स्थास्यामि' इति सूचयतीव । तदयं, किं, सर्वेषामिष्टापूर्तादिकारिणामिव स्वात्मनोऽपि चन्द्रमण्डलगमनं संमन्यसे, आहो नेति गौतमः संदिदेह । तत्र राज्ञा स्पष्टमुत्तरं दत्तम्, 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति । इष्टापूर्तादिकारिणां मध्ये केचिद् गच्छन्ति, मादृशा न गच्छन्तीति न । सर्वेऽपीष्टादिकारिणो गच्छन्त्येवेत्यर्थः । अत्र पूर्वं यागस्य प्रस्तुतत्वात्, तस्य लोकविशेषलाभार्थतायाः 'यस्मिन् लोके धास्यसि' इत्यवगमितत्वात् लोकार्थमिष्टादिकारिणो ये, त एव सर्वे इति पदेन प्रकरणवशाद् गृह्यन्ते । न तु इष्टादिकारिव्यतिरिक्तानामप्यविशेषाद् ग्रहणम् । कतिपयेष्टादिकारिपुरुषाग्रहणशङ्कापरिहारार्थतया सर्वपदसार्थक्यात् । अर्चिरादिमार्गगामिनामिव अन्येषामपि इष्टादिकारिव्यति-

चन्द्रमसमेव ते सर्वे गच्छन्ती'त्यविशेषश्रवणात् इष्टादिकारिणामिव अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्त्येवेत्यर्थ । तर्हि सुकृतकारिणां दुष्कृतकारिणाञ्च चन्द्रप्राप्तिसत्त्वे, को विशेष इत्यत्राह "संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्" । तुशब्द. शङ्कां व्यावर्तयति । संयमने = यमशासने सति इतरेषाम् अनिष्टादिकारिणां यमयातना. अनुभूय चन्द्रारोहावरोहौ । 'अय लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे' इति अनिष्टादिकारिणां यमवश्यतादर्शनात् । "स्मरन्ति च" । 'सर्वे चैते वशं यान्ति यमस्य भगवन् किल' इति यमवश्यतास्मरणात् । 'अपि सप्त' पापकृतां गन्तव्यत्वेन रौरवादीन् सप्त नरकानपि स्मरन्ति । ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिः ? तत्राह — "तत्रापि तद्व्यापारादविरोधः" । तेष्वपि सप्तसु यमाज्ञयैव गमनादविरोधः । अत अनिष्टादिकारिणामपि यमलोकं प्राप्य स्वकर्मानुरूपं यातनाश्चानुभूय पश्चात् चन्द्रारोहावरोहौ स्तः ।

---

रिकाणां चन्द्रमण्डलारोहावरोहाभावाच्च । अयमर्थः अनिष्टादिकार्यधिकरणेऽपि निरूपितः । तथाच श्रीभाष्यम्, "सर्वे गच्छन्तीत्येतदपि वचनम्, ये इष्टादिकारिणः ते सर्वे इति परिणेयम्" इति । परञ्चैतदुपनिषद्भाष्ये, ये केचन इष्टापूर्तादिकारिणो विद्वांसश्च ते सर्वे चन्द्रमसं गच्छन्तीति विदुषामपि सर्वपदेन ग्रहणेनार्थवर्णनम्, प्रश्नस्य पर्युच्छिन्नस्य विदुषोऽपि अविद्वद्रूपेष्टादिकारिण [illegible] सर्वपदेन ग्रहणमस्तीत्याशयेनेति द्रष्टव्यम् । इष्टादिकारिभिन्नस्य विदुषोऽपि सर्वपदग्राह्यत्वे श्रीभाष्याभिमते [illegible] 'विद्याकर्मणोरिति तु, प्रकृतत्वात्' इति सूत्रस्य, 'विद्यायाः कर्मणश्च फलभूता चन्द्रलोकप्राप्तिः नानिष्टादिकारिणो भवति' इत्येवार्थो भावितव्यः स्यादिति ध्येयम् ।

इति प्राप्ते उच्यते---"विद्याकर्मणोरिति तु प्रकृतत्वात्" । तु शब्दः शङ्कानिवृत्त्यर्थः । देवयानपितृयाणे हि फलभूते विद्याकर्मणो रित्यवसीयते । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति,' 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति' इति विद्याकर्मणी प्रकृत्य हि देवयानपितृयाणे आम्नायेते । अतो विद्याकर्मविधुरेष्वनिष्टादिकारिषु देवयानपितृयाणा-संभवात् न चन्द्रप्राप्तिः । 'ये वै केचास्माल्लोकात् प्रयन्ति' इति वचनम् इष्टादिकारिसर्वविषयं नेतव्यम् ।

---

अत्रेदं बोध्यम्—उपरि, 'तेषां प्राणैः पूर्वपक्ष आप्यायते' इति वाक्ये तेषामिति इष्टादिकारिणामेव ग्रहणम् । न तु तद्भिन्नानां विदुषाम्; तेषामर्चिरादिमार्गे चन्द्रप्राप्तिसत्त्वेऽपि चन्द्रस्य तदा तदधीनवृद्ध्यभावात् । स्वर्गानुभवार्थं गच्छतामेव सोमराजभावस्य प्रामाणिकत्वात् । विदुषां तु आतिवाहिकान्तरैरिव चन्द्रेणापि सोपचारं स्वस्थानादतिवहनमात्रम्; न तु तत्र सर्वथा स्थापनादि । एवञ्च तत्पूर्ववाक्येऽपि ते सर्वे इति इष्टादिकारिमात्रग्रहणमेव युक्तम् । ननु तर्हि इष्टादिकारिषु केषांचित् चन्द्रेण विसृज्यमानत्व-मर्चिरादिगमनञ्च कथ्यमानं कथं घटत इति चेत्—उच्यते । अत्रेष्टादिकारी विद्वान् अविद्वांश्चेति द्विविधः । अविद्वानिव विद्वानपि कश्चित् चन्द्रमण्डले भोगं कञ्चित् कालमनुबुभूषुरिष्टादिकार्यपि भवति चेत्, स तद्भोगावसाने चन्द्रेण पृथग्वता मोक्षायातिसृज्यत इति । तत्रायं कर्मफलस्यानुभूतत्वात् विद्याफलानुभवायार्चिरादि-मार्गं प्रविशति । न त्वयमर्चिरादिद्वारा प्राक् चन्द्रमण्डलं प्राप्तः । चन्द्रप्राप्तेर्विद्याफलत्वे हि अर्चिरादिमुखेन सा स्यात् । इष्टिफल-

न ह्यनिष्टादिकारिणा चन्द्रप्राप्त्यभावे पञ्चमाहुत्यसंभवात् शरीरारम्भ एव नोपपद्यते । तत्राह "न तृतीये तथोपलब्धेः" । 'तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्' इति तृतीयस्थानशब्दितानामनिष्टादिकारिणां क्षुद्रजन्तूनां न पञ्चमाहुत्यपेक्षा । तथा ह्युपलभ्यते, 'तेनासौ लोको न संपूर्यते' इति । तृतीयस्थानेन हि (?) असौ चन्द्रलोको न प्राप्यत इति हि तदर्थः । "स्मर्यतेऽपि च लोके" । केषांचित् पुण्यकर्मणामपि द्रौपदीधृष्टद्युम्नप्रभृतीनां पञ्चमाहुत्यनपेक्षयैव देहारम्भो भारतादिषु स्मर्यते । "दर्शनाच्च" । "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजम् उद्भिज्जम्" इति श्रुत्युपात्ताण्डजजीवजोद्भिज्जलक्षणभूत-

---

त्वात्तु धूमादिमार्गेण चन्द्रगमनमेव युक्तम् । तत्र भोगानुभवात् पश्चादेवार्चिरादिगमनम् । तदेवोच्यते, 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति' इत्यादिना । न च तर्हि, 'यथाकर्म यथाविद्यं तमागतं पृच्छति' इति विद्याफलतया चन्द्रगमनवर्णनं कथं घटत इति वाच्यम्—तस्य वाक्यस्य विद्याफलत्वप्रतिपादने तात्पर्याभावात्, केवलकर्मी विद्वांश्च स्वस्वेष्टादिक्रियानुसारेण ■ आगच्छति तमित्यत्रैव तात्पर्यमित्येषा निरूपणसरणिः । अन्या तु—धूमादिमार्गेणेव अर्चिरादिमार्गेणापि चन्द्रगमनसद्भावात् तदेव यथाकर्म यथाविद्यमिति विवक्षितम् । एवञ्च ते सर्वे गच्छन्तीत्येतत् इष्टादिकारिविषयं विद्वद्विषयमपि । ततश्च चन्द्रगमनमिदं विद्याफलभूतमेव । न चैवमर्चिरादिमार्गेण प्राप्तचन्द्रस्य पुनः, 'अग्निलोकमागच्छति' इत्यादिना आदितो गमनवर्णनं कथं घटत इति वाच्यम्—तस्य वाक्यस्य चन्द्रप्राप्त्यनन्तरमर्चिरादिगतेरादितः प्राप्तिवर्णने तात्पर्याभावात्, केवल-

जाति (त !) मध्ये केषाञ्चिदुद्भिज्जानां वृक्षादीनां पञ्चमाहुत्यनपेक्षा लोके दृष्टा । ननु, 'तेषां खल्वेषां भूतानां त्रीण्येव' इत्यवधारणं नोपपद्यते । स्वेदजानामत्रानुपात्तत्वात् । तत्राह—"तृतीयशब्दावरोधः संशोकजस्य" । संशोकजस्य = स्वेदजस्यापि 'आण्डजं उद्भिज्जम्' इत्यत्र तृतीयेनोद्भिज्जशब्देनावरोधः = संग्रहो विद्यत इत्यर्थः । अतः केवलपाप-

---

मर्चिरादिमार्गसत्तामात्रे तात्पर्यात् । यथा तत्र वायुलोकवरुणलोकादीनामत्र स्थितः क्रमः अविवक्षितः, तथा चन्द्रलोकप्राप्त्यनन्तरमग्निलोकगमनवर्णनमप्यविवक्षितमेव । इष्टिविशेषं कृत्वा विद्यामनुतिष्ठन् चन्द्रमस्संवादक्रममपि करिष्यमाणं गतिमिव चिन्तयन्नास्ते यः, स यथाकर्म यथाविद्यं विद्याफलतया अर्चिरादिमार्गप्रवेशमेव प्रथमं प्राप्य चन्द्रं प्राप्नोति । स चातिसृज्यत इति । तृतीया तु—चन्द्रमस्संवादचिन्तासद्भावात् विद्याकर्मोभयफलतया अर्चिरादिमुखेनैव चन्द्रप्राप्तिरस्तु । अवश्यगन्तव्यमार्गमध्यगतस्य मार्गान्तरेण गमनकल्पने गौरवाच्च । अथापि ते सर्वे इत्यत्र श्रीभाष्यस्वारस्यात् इष्टादिकारिव्यतिरिक्तस्य विदुषोऽनिष्टादिकारिण इवाग्रहणमेवेति । अत्र अधिकरणसारावलिश्लोकोऽप्यनुसंधानमर्हति—

> पूर्वं धूमादिमार्गे सुकृतिषु कथिता चन्द्रमःप्राप्तिरन्या
> सायुज्यं न्यासविद्याप्रकरणपठितं चान्द्रमन्यादृगुक्तम् ।
> अन्याऽत्रार्चिर्मुखानामतिवहनरतामप्तमस्याप्तिरिन्दोः
>
> इत्थं सुस्था व्यवस्था प्रणिहितहृदयैरेवमन्यच्च सूह्यम् ॥ (५०८)

इति । अत्र चतुर्थपादान्ते प्रणिहितहृदयैरित्यादिकं नूनं प्रकृतकौषीतक्युक्तचन्द्रमस्संवादाभिप्रायेणेवेति ज्ञायते । पूर्वदर्शितत्रिविधचन्द्रप्राप्तिप्रकारवत् अयं चतुर्थोऽपि प्रकारः इष्टिसहकृतविद्याफलभूतः, यः खलु न्यासविद्याप्रकरणपठितवत् न दक्षिणायनमृतमात्र-

तेषां प्राणैः पूर्वपक्ष आप्यायते । तानपरपक्षेण प्रजनयति ॥ १० ॥

कर्मणा चन्द्रप्राप्तिर्न भवतीति स्थितम् । प्रकृतमनुसराम ॥

तेषां...प्रजनयति । तेषाम् इष्टादिकारिणां प्राणैः इन्द्रियैः मनोहस्तादीन्द्रियजन्यदानहोमादिभिः पूर्वपक्षे चन्द्रः आप्यायते संवर्ध्यते । "ओ प्यायी वृद्धौ" इति हि धातुः । 'अग्नौ हुतश्च दत्तश्च सर्वं सोमगतं भवेत्' इति स्मरणात् । तान् इष्टादिकारिणः अपरपक्षेण पञ्चदशभिर्दिनैः प्रजनयति प्राहयति । स्वावयवभूता कला आशय तीत्यर्थः । कलाभिस्तर्पणं करोतीति यावत् । 'पुरोवातो गाः प्रजनयति' इत्यत्र प्रजनयतीत्यस्य गन्धं ग्राहयतीत्यर्थपरत्वदर्शनादिहापि प्रजनय तीत्यस्य ग्राहयतीत्यर्थ उपपद्यते । अपरपक्षेनेति पाठे णत्वाभावश्छन्दसः ॥

---

विषयकः, किंतु अन्यादृशः संवादपूर्वमतिसर्गसंपादकश्चेति । अत्र अर्चिरादिमार्गेण चन्द्रं गत्वा संवादो विवक्षित इति श्रीभाष्यतोऽपि ज्ञायते । तथा ह्यानुपक्रमाधिकरणे, 'उपलभ्यते हि देवयानेन पथा गच्छतो विदुषः, 'तं प्रतिब्रूयात्–' इति चन्द्रमसा संवादवचनेन शरीरसङ्गावः" इति । न ह्यत्र गच्छत इत्यस्य गमिष्यतः स्थूलदेहात् उत्क्रान्तस्येत्यर्थवर्णनं रुचिरम् । अतः इह अर्चिरादिक्रमेण चन्द्रम – प्राप्तिवर्णनं सुस्थमिति ।

ननु 'यक्ष्यमाण आरुणि वव्रे' इत्युपक्रमबलात् चन्द्रलोकप्राप्तेः यागफलत्वावसायात् कथमर्चिरादिना तत्प्राप्तिरिति चेत्—उपरि यथाकर्म यथाविद्य तमागतमिति विद्याफलभूतमागमनमिति वर्णनात् तस्य चागमनस्य अर्चिरादिमार्गेणैव युक्तत्वात् उपक्रमबलेन चन्द्रलोक लभ्यफलस्य यागसाध्यत्वेऽपि तदर्थमागमनं न यष्ट्रन्तराणामिव धूमादिमार्गेण, किंतु प्रधानभूतविद्याफलभूतमोक्षार्थोपनतार्चिरादि-

एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमाः ॥ ११ ॥

तं यः प्रत्याह, तमतिसृजते। य एनं न प्रत्याह, तमिह वृष्टिर्भूत्वा

---

एतद्वै....यश्चन्द्रमाः ।...स्वर्गस्य लोकस्य भगवल्लोकस्य द्वारं दौवारिकप्राय इत्यर्थः ॥ ११ ॥

तं यः प्रत्याह तमतिसृजते । य एनं न...प्रत्याजायते । चन्द्र. स्वप्रश्नस्य यः सदुत्तरं प्रयच्छति, तमतिसृजते भगवल्लोकगमनाय समनुजानाति । यस्तु प्रतिवक्तुमशक्तः, तम् अविद्वांसम्, 'यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुम् । वायुर्भूत्वा धूमो भवति । धूमो भूत्वा अभ्रं भवति । अभ्रं भूत्वा मेघो भवति । मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते । तद्य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । य इह कपूयचरणा अभ्याशो ह यत् ते कपूयां

---

मार्गेणैवस्यवसीयत इति । अत एवोपक्रमेऽपि अध्वा वा तस्येति प्रकृतस्य विदुषो वक्तुः यद्गन्तरगम्यादध्वनो विलक्षणोऽध्वा चन्द्रलोकफलात् प्रागेवेति ज्ञायत इति सुवचम् । न च आतिवाहिकान्तरैरिव चन्द्रेणापि सोपचारं सगौरवं प्रत्युद्गम्य गृहीतो मुमुक्षुः कथं तेन, 'कोऽसि' इति पृच्छ्यत इति वाच्यम्–अमुमुक्षुवत् अर्वाचीनावान्तरफलानुभवनिमग्नतादशायां कोऽसीति पृच्छ्यमानत्वे बाधकाभावात् । अमुमुक्षुतुल्यदशामुपेक्ष्य मोक्षत्वरासंपादकतयाऽनुकूलत्वाच्च । तमागतं पृच्छतीति । आगत्यानुभूतफलं तं पृच्छतीत्यर्थः । प्रतिब्रूयादित्यत्र य इति शेषः । अस्य प्रतिसंबन्धि तमतिसृजत इति वक्ष्यमाणतत्पदम् ।

चर्यैति । स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान् वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रत्याजायते॥१२॥

यथाकर्म यथाविद्यं तमागतं पृच्छति, कोऽसीति । तं प्रतिब्रूयात् ॥ १३ ॥

विचक्षणादृतवो रेत आभृतं पञ्चदशात् प्रसूतात् पित्र्यावतस्तस्मात् ॥ १४ ॥

---

योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इति श्रुत्यर्थोऽत्रानुसन्धेयः । परस्वान् पशुविशेष. । एतेषु स्थानेषु जायते ॥

यथाकर्म... कोसीति । इष्टादिकर्मानुसारेण वा ब्रह्मविद्यानुसारेण वा आगतं पुमांसं पृच्छति कोऽसीति । तं प्रतिब्रूयात् । तं वक्ष्यमाणप्रकारेण यः प्रतिब्रूयात्, तमतिसृजत इत्युत्तरेणान्वयः ॥१३॥

प्रतिवचनप्रकारमाह विचक्षणात्....तस्मात् । मासादिकालपरिच्छेदकत्वात् चन्द्रस्य ऋतुशब्देन संबोधनम् । एकस्मिन् औपचारिको बहुवचनप्रयोग । दिवसपूर्वपक्षोत्तरायणादिलक्षणकालाभिमानिदेवतासाहित्याभिप्रायेण वा ऋतव इति बहुवचनप्रयोगः । हे ऋतवः ! कालप्रवर्तका इत्यर्थः । पित्र्यावतः पितुः कर्म पित्र्यं निषेकादि । तद्वान् । छान्दसो मतौ दीर्घ निषेकादिकर्तु विचक्षणात् तस्मात् प्रसूतात् । प्रसूतम् उत्पन्नम् । 'सुपां सुलुक्' इत्यादिना आदेशः । पञ्चदशम्=पञ्च दशाः—अवस्थाः यस्य तत् पञ्चदशम् । श्रद्धासोमवृष्ट्यन्नरेतोरूपावस्थापञ्चकयुक्तम् आभृतं शोणितेन संभृतं रेतोऽस्मि । रेतश्शरीरकोऽहमित्यर्थः । अनेन पञ्चाग्निविद्याप्रकारोपन्यासात् स्वस्य प्रकृतिविविक्तात्मस्वरूपमुपन्यस्तं भवति ॥ १४ ॥

पुंसि कर्तरि मेरयध्वम् । पुंसा कर्त्रा मातरि मा निषिक्तम्(क?)॥
स जायमुपजायमानो द्वादशत्रयोदशोपमासः ॥ १६ ॥
द्वादशत्रयोदशेन पित्राऽऽसं तद्विदेऽहं प्रति तद्विदेऽहम्॥१७॥

---

**पुंसि...मा निषिक्तम्** (क?) । हे ऋतवः ! यूयमितः परं निषेककर्तरि पुंसि रेतोरूपतया अवस्थाना **मेरयध्वम्** मा प्रेषयत । प्रेषणं मा कुरुतेत्यर्थः । उत्तरत्र मा इत्यस्य अत्राप्यनुषङ्गः । पुंसा निषेककर्त्रा मम शरीरपरिग्रहाय मातरि मा निषिक्तम् (क?) निषेकं मा कुरुत । छान्दसः शपो लुक् ॥ १५ ॥

**स जायम्....मासः** । सोऽहं जायं जनित्वा—आभीक्ष्ण्ये णमुल्—गर्भे गर्भे जनित्वा जनित्वा **उपजायमानः** गर्भात् निर्गच्छन् द्वादश त्रयोदशो वा उपमासः अन्तिममासो यस्य सः **द्वादशत्रयोदशोपमासः** — यद्यपि मनुष्याणां गर्भे दशैव मासाः, अथापि योनिविशेषेषु द्वादशत्रयोदशमासपर्यन्तस्थितिरस्तीति तथोक्तम् द्वादश वा त्रयोदश वा मासान् गर्भे उषित्वेत्यर्थः ॥ १६ ॥

**द्वादश....तद्विदेऽहम्** । अहं द्वादशेन वा त्रयोदशेन वा मासेन पित्रा आसं मातुरासम् । पितृशब्दो मातुरप्युपलक्षकः । **तद्विदे प्रति तद्विदे** । अत्र तच्छब्दः पूर्वोक्तरेतःपरामर्शी । तद्विदे रेतस्विने ।

---

१५. उत्तरत्र मा इत्यस्येति । निषेधार्थकमाशब्दस्येव मामित्यर्थेऽपि शब्दस्यापेक्षितत्वात् उत्तरत्र श्रुतं मेतिपदं मामित्यर्थकमिहानुषञ्जनीयम् । तत्रापि निषेधार्थकमाशब्दोऽयमनुषञ्जनीय इत्यर्थः । पूर्वत्र तस्मादिति पदस्थाने तन्मा इति पाठे तु तत्रत्यो माशब्दो मामित्यर्थक इहान्वेतीति ध्येयम् ।

तन्मा ऋतवो मर्त्यव आभरध्वम् ॥ १८ ॥
तेन सत्येन तपसर्तुरस्म्यार्तवोऽस्मि कोऽस्मि त्वमस्मीति ॥१९॥
तमतिसृजते ॥ २० ॥

तद्विदे तद्विदे प्रति = प्रतिरेतस्सिक्पुरुषमित्यर्थः । चतुर्थी तादर्थ्यार्था । तेषा पितॄणा शेषभूत एवासमित्यर्थः ॥ १७ ॥

तन्मा ऋतवो मर्त्यव आभरध्वम् । हे ऋतव इति पूर्ववत् सबोधनम् । तत् तस्मात् कारणात् मर्त्यवे मृत्यवे जननमरणलक्षणससाराय मा आभरध्वम् – इत पर मा समर्पयत ॥ १८ ॥

तत्र हेतुमाह तेन सत्येन ... त्वमस्मीति । 'तस्मान्न्यासमेषा तपसामतिरिक्तमाहु'रिति श्रुते तच्चरणवरणलक्षणेन तपसा प्रसन्नेन तेन सत्येन परमात्मना अनुगृहीतस्सन् ऋतुरस्मि मासर्तुसवत्सरयुगात्मककालरूपोऽहमस्मि । आर्तवोऽस्मि तत्कार्यर्तिपदार्थरूपोऽप्यहमस्मि । कोऽस्मि चतुर्मुखोऽप्यहमस्मि । त्वमस्मि त्वमप्यहमेवास्मि । अत्र अहशब्द , 'अह मनुरभव सूर्यश्च' इति वामदेववाक्यवत् , 'त मा मायुरमृतमित्युपास्स्व' इति इन्द्रवाक्यवच्च स्वात्मभूतपरमात्मपर ॥ साक्षात्कृतसर्वकात्म्योऽहमस्मीत्यर्थ ॥ १९ ॥

तमतिसृजते । एव ■ प्रतिब्रूयात् , त ब्रह्मवित्त्वेन ब्रह्मलोकगमनार्हता ज्ञात्वा गमनाय अनुजानातीत्यर्थ ॥ २० ॥

एव ब्रह्मविच्चन्द्रमस्सवादप्रकार प्रदर्श्य आदित आरभ्य अर्चि-

ब्रह्मविदा चन्द्रप्राप्ते प्रागेव देवयानगताग्निलोकादे प्राप्तत्वात् प्रश्नप्रतिवचनानन्तर देवयानोपन्यासायोगात् अग्निलोकादिकीर्तनम्पान्यमादाय दर्शयति आदित आरभ्यार्चिरादीति । अत्र, 'मुमुक्षुरय

स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं

रादिगतिक्रममुपदिशति स एतं....आगच्छति । सः ब्रह्मवित् देह वियोगकाल एव सुकृतदुष्कृते विधूय देवयानमार्गमापद्य अवलम्ब्य अग्निलोकमागच्छति । 'तेऽर्चिषमभिसंभवन्ति' इति अर्चिश्शब्दिनस्याग्नेः देवयानमार्गप्रथमपर्वत्वश्रवणात् प्रथमतः अग्निलोकप्राप्तिरुपपन्ना । स वायुलोकम् । यद्यप्यत्राग्निलोकानन्तरं वायुलोक श्रूयते, तथापि श्रुत्यन्तरे, 'अर्चिषोऽहरह्न आपूर्यमाणपक्षमा पूर्यमाणपक्षात् यान् षण्मा-

चन्द्रलोकफलानन्तरमेव देवयानं प्रति आयाति । पूर्वं तु मार्गान्तरेण चन्द्रं प्राप्तः । अतो देवयाने यावत् उपरितननलोकस्थितेन गन्तव्यम्, तावतो यत्नेन एव तं प्रति अध्वता' इति न मन्तव्यम् । अग्निलोकादिक्रमध्वनेन प्रागप्तमेवेति ज्ञापयितुमेवं वाक्यमिति भावः । तथाच आगच्छतीति वर्तमानकालो न विवक्षित इति । अत्र एतमिति देवयानविशेषणात्, 'अग्निलोकमागच्छति स वायुलोकं-स ब्रह्मलोकमिति श्रुतिप्रसिद्धमेतं देवयानं पन्थानं स आपद्य' इत्यन्वयोऽपि स्यात् । तदा एतदुपरि, 'यतेन' इति शेषो वा, वाक्यस्यास्य तमित्यंयित् आगच्छतीति वक्ष्यमाणैकवाक्यता वा भवितुमर्हति । अत्रोपनिषदि यथायथमन्वयस्तं "छन्दत उभयाविरोधात्" इति सूत्रेण दर्शितमेव । अर्चिरादिमार्गे कतिपयमात्रनिर्देशो ऽयमन्योपलक्षकः । तथाच अग्निलोकानन्तरं वायुलोकात् प्राक् दिवसज्योत्स्नापक्षोत्तरायणवत्सराणां ग्रहणम् । वायोरनन्तरं वरुणात् प्राक् आदित्यचन्द्रवैद्युतानां ग्रहणम् । एवञ्च वरुणलोकानन्तरमादित्यलोकपाठोऽत्र कृतो नैव क्रमसाधकः । स पूर्वमाकृष्य:, प्रमाणान्तरानुसारात् । अतैतम्, स आदित्यलोकमिति पाठः किं सर्वकोशेषु, उतान्यथाऽपि पाठ इति विचारो वर्तितो भावप्रकाशिकायाम् । वरुणाधिकरणे तु श्रीभाष्ये अत्र श्रुतानां निवेशक्रमयाथात्म्यं यथापाठं प्रकृतवाक्यग्रहणेनेत्थं

**स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् ॥ २१ ॥**

---

सानुदङ् आदित्य एति मासेभ्यो देवलोकम्' इति देवलोक [शब्द ?] निर्दिष्टस्य वायुलोकस्य उदगयनादूर्ध्वं श्रवणात् उदगयनादूर्ध्वमेव वायुलोको निवेश्य·। तत्राप्युदगयनादूर्ध्वं छान्दोग्ये, 'मासेभ्य संवत्सरम्' इति श्रवणात्, अधिककालाना न्यूनकालादूर्ध्वं निवेशस्य, 'अह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति' इत्यत्र दृष्टत्वात् उदगयनापेक्षया अधिककालस्य संवत्सरस्य तदूर्ध्वनिवेश सिद्धः।

**स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकमि**तीदं वाक्यं अर्चिरादिपादे चिन्तितम्। 'संवत्सरात् आदित्यमादित्याच्चन्द्रमसम्' इति छान्दोग्ये, 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुलोकमागच्छति। स तत्र विजिहीते, यथा रथचक्रस्य खम्। तेन स ऊर्ध्वमाक्रमते। स आदित्यमागच्छति। तस्मै स तत्र विजिहीते यथा डम्बरस्य खम्। तेन स ऊर्ध्वमाक्रमते। स चन्द्रमस

---

शोधितमस्ति, "अत्राग्निलोकशब्दस्यार्चिःपर्यायित्वेन प्राथम्यमविगीतम्। वायोश्च संवत्सरादूर्ध्वं निवेश उक्तः। आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन, 'देवलोकादादित्यम्' इति वाजसनेयकोक्तश्रुतिक्रमात् देवलोकशब्दाभिहितात् वायोरुपरि निवेशः सिद्ध.। इदानीं वरुणेन्द्रप्रजापतिषु चिन्ता" इति।

तत् सिद्धम्—उपासकस्य चन्द्रलोकात् प्रागेव देवयानमार्गप्रविष्टतया नेदं चन्द्रवृत्तातिसर्गानन्तरं देवयानप्रथमप्रवेशबोधकमिति, नापि यथावस्थितातिवाहिकक्रममनुरुध्य प्रवृत्तमिति च।

मागच्छति' इति बृहदारण्यके च श्रुतत्वात् संवत्सरादूर्ध्वं चन्द्रमसः प्रा आदित्यस्य निवेशः सिद्धः। तत्र च वरुणेन्द्रप्रजापतीनामपि पठितानां पाठार्थवत्त्वाय क्वचिन्निवेशो कर्तव्ये, वायुलोकं वरुणलोकमिति पाठक्रमानुसारेण वायोरूर्ध्वं वरुणो निवेशयितव्यः। इन्द्रप्रजापती अपि तदनन्तरं निवेशयितव्यौ। न च, आदित्यलोकम्, इन्द्रलोकं प्रजापतिलोकमिति पाठक्रमादादित्यादूर्ध्वं चन्द्रात् प्रागेव निवेशोऽस्त्विति वाच्यम्—'आदित्याच्चन्द्रमसम्' इति आदित्यादूर्ध्वं चन्द्रस्य श्रवणेन तत्क्रमबाधप्रसङ्गात्। न च चन्द्रादूर्ध्वं तयोर्निवेशोऽस्त्विति वाच्यम्—'चन्द्रमसो विद्युतम्' इति श्रुतिक्रमबाधप्रसङ्गात्। ननु 'देवलोकादादित्यम्' इति देवलोकशब्दितवायोरादित्यस्य च क्रमस्य श्रुतत्वात् तत्रेन्द्रप्रजापत्योर्निवेशे तत्क्रमभङ्गः स्यादिति चेन्न—वाय्वादित्ययोरन्तराले वरुणस्य निवेशनीयतया तेनैव वाय्वादित्ययोरानन्तर्यस्य तन्नैवेन्द्रप्रजापत्योरपि निवेशः। अतश्च वरुणेन्द्रप्रजापतीनां त्रयाणामपि वाय्वादित्ययोरन्तराल एव निवेशोऽस्त्विति प्राप्ते—

उच्यते—"तटितोऽधि वरुणः संबन्धात्।" तटित ऊर्ध्वं वरुणस्य निवेशः। कुतः? संबन्धात्। विद्युद्वरुणयोः द्वयोरपि मेघोदरवर्तित्वरूपसंबन्धसत्त्वात् विद्युत ऊर्ध्वं वरुणस्य निवेशः। ततः परस्तात् इन्द्रप्रजापत्योर्निवेशः। तथा हि सति, 'देवलोकादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' इति निबद्धोऽपि क्रमो न बाधितो भवति। न चैवं विद्युत ऊर्ध्वं वरुणेन्द्रप्रजापतीनां निवेशे तेषामेव ब्रह्मगमयितृत्वेन, 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति'इति वैद्युतपुरुषस्य गमयितृत्वं

तस्य ह वा एतस्य ब्रह्मलोकस्यारो ह्रदः । मुहूर्ता यष्टिहाः ॥ २२ ॥ विरजा (जरा) नदी ॥ २३ ॥ तिल्यो वृक्षः ॥ २४ ॥ सालज्यं संस्थानं ॥ २५ ॥ अपराजितमायतनम् ॥ २६ ॥

---

श्रुतं विरुद्धचेतेति वाच्यम्—वरुणेन्द्रप्रजापतीनाम [त्व॰] गमयितृत्वेऽपि वैद्युतपुरुषस्याप्यनुग्राहकतया गमयितृत्वसंभवादिति स्थितम् । प्रकृतमनुसरामः ॥ २१ ॥

**तस्यारो ह्रदो मुहूर्ता यष्टिहाः ।** तस्य ब्रह्मलोकस्य समीपे अरसंज्ञको ह्रदः । छान्दोग्ये, 'अरश्च ण्यश्चार्णवौ ब्रह्मलोके ऐरम्मदीयं सरः' इति सरस्त्वयमुक्तम् । ततः परस्तादविदूरे मुहूर्तसंज्ञकाः यष्टिहाः । यष्टिभिः अब्रह्मविदो गत्वा घ्नन्तीति यष्टिहाः ॥ २२ ॥

[1]**विजरा नदी ।** विजरेति संज्ञावती नदी । विरजा नदीत्यपि पाठोऽस्ति । जरारजोविरोधित्वात् विजरा विरजेत्यु(ति चो॰)च्यते ॥२३

**तिल्यो वृक्षः ।** ततोऽविदूरे तिल्यसंज्ञिको वृक्षः । छान्दोग्ये, 'तदश्वत्थः सोमसवन' इति सोमसवनसंज्ञकोऽश्वत्थो वृक्ष उक्तः ॥ २४ ॥

**सालज्यं संस्थानम् ।** सालज्यनामकं संस्थानं=स्थानीयम् । 'स्थानीयं निगमोऽन्यत्तु यन्मूलनगराद्बहिः.' इत्यमरः । सालेषु प्राकारेषु ज्या युद्धसाधनं यस्य तत् सालज्यम् ॥ २५ ॥ **अपराजितमायतनम् ।** 'अपराजिता पूः ब्रह्मणः' इति श्रवणात् अपराजितसंज्ञकमायतनं पुरमित्यर्थः । अब्रह्मविद्भिर्न जीयत इत्यपराजितम् ॥ २६ ॥

---

उपासकस्योपासनफलं ब्रह्मलोकप्राप्तिपर्यन्तमेतावतोक्तम्, अथ ब्रह्मपर्यङ्कारोहणान्तं तद् वक्ष्यते; यदनन्तरमेवास्य परिपूर्णब्रह्मानुभवः। तदर्थमत्र स्थितान् विशेषान् निर्दिशति तस्येत्यादिना ।

इन्द्रप्रजापती द्वारगोपौ ॥ २७ ॥ विभुप्रमितम् ॥ २८ ॥
विचक्षणा आसन्दी ॥ २९ ॥ अमितौजाः पर्यङ्कः ॥ ३० ॥
प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्यपचयतः(?) ॥ ३१ ॥
यतो वै च जगत्यम्बाश्चाम्बावयवा(सा)श्चाप्सरसोऽम्बया नद्यः ।
तमित्थंविदागच्छति ॥ ३२ ॥
तं ब्रह्माह—अभिधावत मम यशसा विरजां (विजरां) वाऽयं नदीं

**इन्द्रप्रजापती द्वारगोपौ** । इन्द्रप्रजापतिसंज्ञकौ पट्टणद्वारपालकौ ॥ **विभुप्रमितम्** । अत्र मण्टपमिति शेषः । विभुत्वेन अतिविस्तृतत्वेन प्रमितं हिरण्मयमण्टपमित्यर्थः । 'प्रभुविमितं हिरण्मयम्' इति छान्दोग्योक्तेः ॥ २८ ॥ **विचक्षणा आसन्दी** । विचक्षणसंज्ञिका आसन्दी धर्मादिपीठमित्यर्थः ॥ २९ ॥ **अमितौजाः पर्यङ्कः** । अमितौजा नाम योगपर्यङ्कः ॥ ३० ॥ **प्रिया च...अपचयतः ?** । मनोधिष्ठात्री नाम्ना प्रिया च, चक्षुरधिष्ठात्री नाम्ना प्रतिरूपा च पुष्पाणि अपचयतः (?) कुसुमानि देव्यौ ॥ ३१ ॥

**तमित्थंविदागच्छति** । तादृशब्रह्मलोकमेतादृशस्वरूपविदागच्छति॥

तं ब्रह्माह...जिगीष्य(?)तीति । यूयं तं ब्रह्मविदमागच्छन्त **मभिधावत** अभिगच्छत = प्रत्युत्थानं कुरुत । मम यशसा ममानुग्रहेणायं ब्रह्मवित् **विरजां नदीं** विरजानदीसमीपं प्राप्तवान् । विर-

अपचयत इति : चिञ् चयने । चुरादिः । नित्करणसामर्थ्यात् णिज्विकल्पः। यतो वै इत्यादिभागस्य भाष्यं न दृश्यते। तदर्थश्च प्रियादिवत् यत्र सर्वजगदम्बाभूता अन्याश्च स्त्रियः सन्ति, तथा तदंशाभूताः अम्बया मुख्यभूतया नद्यः प्रमोदकोलाहलं कुर्वत्यः अप्सरसश्च सन्तीति। तमित्यादि। तमित्यस्य तं प्रति-तद्विषये इत्यर्थ उचितः। अन्यथा अमि-

प्रापत्। स वाऽयं जिगीष्यतीति (जरयिष्यतीति) ॥ ३३ ॥

तं पञ्च शतान्यप्सरसां प्रतिधावन्ति, शतं मालाहस्ताः, शत-म(मा)ञ्जनहस्ताः, शतं चूर्णहस्ताः, शतं वासोहस्ताः, शतं फणहस्ताः, तं ब्रह्मालङ्कारेणालंकुर्वन्ति। स ब्रह्मालङ्कारेणालंकृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति ॥ ३४ ॥

---

जानदी [समीपदेश ?] संबन्धात् इतः परं विरजामेष्यतीति परमात्मा अप्सरसः प्रतिपदतीत्यर्थः ॥ ३३ ॥

---

धावतेममिति स्यात्। अत्र नदीं प्रापदिति प्रयोगात् मुक्तस्य विरजा-नदीप्राप्त्यनन्तरमेव ब्रह्मणा अप्सरसां प्रेरणमिति ज्ञायते। अप्सरोभिः क्रियमाणोऽलङ्कारश्च मुक्तस्याप्राकृतविग्रहे, न तु प्राकृतभूतसूक्ष्मे। एवं ब्रह्मालङ्कारेणालङ्कृतो ब्रह्मैवाभिप्रैतीत्युक्तम्; न तु, अलंकृत आगच्छत्यरं ह्रदमिति। अतः तं ब्रह्माहेत्यतः प्रागेव स आगच्छत्यरं ह्रदमित्यादिः तां मनसैवात्येति इत्यन्तो भागो योज्यः, अर्थक्रमा-नुसारात्। यस्तु तदुपरि तत् सुकृतदुष्कृते धूनुते इत्यादिः, विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैतीति भागः, स स्वस्थानेऽन्वितः। सुकृत-दुष्कृतधूननादेः विरजानद्यतिक्रमणपश्चाद्भावित्वाभावात्, स्थूलदेह-वियोगकालिकत्वात्, स एतं देवयानं पन्थानमापद्येति प्रथमश्रुत-वाक्यात् प्राक् स घटनीय इति साम्परायाधिकरणे, "छन्दत उभया-विरोधात्" इति सूत्र एव स्थितम्। स आगच्छति तिल्यं वृक्षमिति तदनन्तरश्रुतवाक्यार्थस्तावत् ब्रह्मालङ्कारेणालङ्करणानन्तरमेव भवतु। अस्तु वा तिल्यवृक्षप्राप्त्यनन्तरमेव अप्सरसां प्रत्युद्गताना प्राप्तिः। अत्र छान्दोग्योक्तयोरैरम्मदीयसरस्सोमसवनाख्याश्वत्थयोरपि यथा-यथं घटनं युक्तम्। सोऽश्वत्थ एवायं तिल्य इत्यपि विमृश्यम्। सर्व-मिदं सूक्ष्मं विभाव्यैव श्रीमति रहस्यत्रयसारे, गतिविशेषाधिकारे, 'विरजापारं प्राप्य अप्राकृतशरीरं प्रदाय ऐरम्मदीयं सरः संगमय्य

स आगच्छत्यरं ह्रदम् । तन्मनसाऽत्येति । तमृत्वा संप्रतिविदो मज्जन्ति ॥ ३५ ॥

तं पञ्च शतानि....अभिप्रैति । फणः भूषणम् । ब्रह्मैवाभिप्रैति । ब्रह्मदर्शनोत्सुक एव भवति ; नाप्सरस्संभाषणवासोभूषणादिषु सादर इत्यर्थः । शिष्टं स्पष्टम् ॥ ३४ ॥

स आगच्छति....मज्जन्ति । तमृत्वा तं ह्रदं प्राप्य संप्रति इदानीमपि विदः ज्ञानिनः मज्जन्ति स्नान्तीत्यर्थः ॥ ३५ ॥

सोमसवनाख्यमश्वत्थमुपगमय्य मालाञ्जनादिहस्ता अप्सरसः प्रत्युद्गमय्य ब्रह्मालङ्कारेणालङ्कार्य ब्रह्मगन्धरसतेजांसि प्रवेश्य' इति क्रमः श्रीवैदिकचरणैर्दर्शित इति तदनुधानेनेहार्थक्रमविन्यासो भाव्यः । विरजां नदीं प्रापदित्यस्य प्रकृतभाष्योक्तरीत्या विरजानदीसमीपं प्राप्तवानिति समीपदेशप्राप्तिरूपार्थविवक्षया स आगच्छति विरजां नदीमित्यादिवक्ष्यमाणवाक्यसामञ्जस्यसंपादनेऽपि अत्राप्सरःक्रियमाणालङ्कारादिवर्णनं हि न प्राकृतशरीरे घटते इति ध्येयम् ।

संप्रतिविदो मज्जन्तीति । सम्प्रतिशब्दस्य सम्यगित्यर्थः श्रुतिप्रसिद्धः, छान्दोग्ये वैश्वानरादिविद्यासु दृष्टश्च । अतो यथावस्थितपरावरतत्त्ववेदिन इति संप्रतिविद इत्यस्यार्थः स्यात् । अस्तु तावत् कोऽप्यर्थः । के ते मज्जनकर्तारः । न हि नित्यमुक्तानां मज्जनं पावनमपेक्षितम् ; न च विरजादि नेदिष्ठं विहायात्र मज्जने विशेषगमकं किञ्चिदिति चेत्-सन्त्वेते संप्रतिविदः सनकसनन्दनादिसमाः माहात्म्यबलात् केनापि मार्गेण प्रकृतिमण्डलमतिक्रम्य तत्संनिहितेऽत्रारे शुद्ध्यर्थं तदा तदा समागत्य मज्जनकर्तारः । ततः परं तु परमपदे न ते गन्तुं प्रभवन्ति, यत्र मुक्ताः यथेष्टा अमानवानानीतप्रतिपेदारो जाग्रति । पञ्चाग्निविद्यानिष्ठा वा ब्रह्मप्राप्तेः प्राक् कञ्चित् कालं कैवल्यभुजस्तत्र गन्तुं शक्ताः ।

स आगच्छति मुहूर्तान् यष्टिहान् । तेऽस्मादपद्रवन्ति ॥ ३६ ॥
स आगच्छति विरजा नदीम् । ता मनसैवात्येति । तत् सुकृतदुष्कृते

स आगच्छति मुहूर्तान् अपद्रवन्ति । तमनिरुन्धाना दूरतो गच्छन्तीत्यर्थ ॥ ३६ ॥

तत् सुकृतदुष्कृते धूनुते । तत् तदैवेत्यर्थ । अयञ्च तच्छब्द नाऽव्यवहितविरजानद्यतिक्रमणकालवाची । अपि तु, 'ये वै के चास्माल्लोकात् प्रयन्ति' इति वाक्यनिर्दिष्टप्रयाणकालवाची ।

इदञ्च वाक्य गुणोपसहारपादे चिन्तितम्—

कौषीतकिनामुपनिषदि, विरजा नदीं मनसा अत्येति तत् सुकृतदुष्कृते धूनुते' इति विरजानद्यतिक्रमणहेतुतया तदनन्तरभावि सुकृतदुष्कृतधूननश्रवणात्, 'अश्व इव रोमाणि विधूय पाप चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृत कृतात्मा ब्रह्मलोकमभिसभवानि' इति, 'तस्य पुत्रा दायमुपयन्ति सुहृद साधुकृत्या द्विषन्त पापकृत्याम्' इति च श्रुत्या देहवियोगसमकालतया सुकृतदुष्कृतहानसक्रमणयो श्रवणात् कर्मैकदेशस्य देहवियोगकाले नाश, शेषस्य विरजानद्यतिक्रमणानन्तर नाश इति प्राप्ते उच्यते—"साम्पराये तर्तव्याभावात् तथा ह्यन्ये" । साम्पराये—देहापक्रमणकाल एव सुकृतदुष्कृतविनाश । तत ऊर्ध्वं तत्साध्यस्य तर्तव्यस्य—प्राप्तव्यस्य सुखदु खानुभवरूप

---

तत् सुकृतदुष्कृते धूनुत इत्यादिक, स एत देवयानमिति वाक्यात् प्राक योजनीयमिति प्रागेवोक्तम् । अस्यात्र पाठस्तु, विरजातिक्रमणानन्तरभावि ब्रह्मालङ्कारार्हमस्य शरीर न कर्माधीनम्, किंतु अप्राकृतमिति ज्ञापनार्थं ।

फलस्याभावात् । तथा ह्यन्ये शाखिनः ब्रह्मविदः शरीरपरित्यागानन्तरं ब्रह्मप्राप्तिव्यतिरेकेण कर्मफलानुभवाभावमधीयते, 'तस्य तावदेव चिरम्, यावन्न विमोक्ष्येऽथ संपत्स्ये' इति । "छन्दत उभयाविरोधात्" । अर्थस्वाभाव्यात् देहवियोगकाल एव कर्मनाश इति निश्चिते तयोरविरोधाय, 'विरजां नदीं मनसा अत्येति तत् सुकृतदुष्कृते धूनुते' इत्यस्य वाक्यस्य तच्छब्दस्य छन्दतः यथेष्टमन्वयोऽङ्गीकर्तव्य ।[शंकते?]"गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः" । सुकृतदुष्कृतैकदेशस्य देहवियोगकाले हानिः, शेषस्याध्वनि हानिरित्यभ्युपगम एव देवयानगतिश्रुतेरर्थवत्त्वम् । इतरथा हि देहवियोगकाल एव सर्वकर्मक्षये सूक्ष्मशरीरस्यापि नाशेन केवलस्याऽऽत्मनो देवयानासंभवेन देवयानश्रुतेरर्थशून्यत्वमेव स्यादित्यर्थः। [अत्र?] उत्तरमाह—"उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" । देहोत्क्रान्तिकाल एव सर्वकर्मक्षय उपपन्नः । क्षीणकर्मणोऽपि विदुषो विद्यामाहात्म्यात् सूक्ष्मदेहानुवृत्तिसंभवेन देवयानगमनसंभवात् । यथा लोके सस्यादिसमृद्ध्यर्थमारब्धेऽपि तटाकादिके, सस्यादिसमृद्धीच्छायां तटाकादिनिर्माणहेतुभूतायां नष्टायामपि, पानीयपानाद्यर्थतया तटाकादिः स्थाप्यते, एवं कर्महेतुकसूक्ष्मदेहो नष्टेऽपि कर्मणि विद्याफलाय स्थाप्यत इत्यर्थः । ननु देहवियोगकाल एव कर्मनाशे ब्रह्मविदां वसिष्ठावान्तरतप प्रभृतीनां पुनर्जन्मादिनिमित्तसुखदुःखानुभवो न स्यादित्यत्राह—"यावदधिकार-

---

सूक्ष्मदेहानुवृत्तीति। ननु सस्याद्यर्थतया समारब्धस्य तटाकस्य पानीयाद्यर्थतया पश्चात् स्थापनवत् किमर्थमारब्धः सूक्ष्मदेहो विद्यामाहात्म्यात् स्थाप्यते? न च वेदान्तिमते सांख्यमत इव सकल-

धूनुते । तस्य प्रिया ज्ञातय सुकृतमुपयन्ति, अप्रिया दुष्कृतम् ॥३७॥

मवस्थितिराधिकारिकाणाम्' । आधिकारिकाणा वसिष्ठादीना यावद धिकार कर्मावतिष्ठते, प्रारब्धस्य भोगैकनाश्यत्वादिति स्थिति (तम्?) । प्रकृतमनुसराम । तस्य दुष्कृतम् । ब्रह्मविद इष्टानिष्टफलदित्सालक्षण-परमात्मप्रीत्यप्रीतिरूपसुकृतदुष्कृतयोश्चतस्रोऽवस्था श्रुता — विनाश-अश्लेष धूननम् उपायनञ्चेति। विनाश पूर्वाघविषय। कर्मफलदित्सामति-बन्धलक्षणोऽश्लेष उत्तराघविषय । तौ च—यद्यदुपासक प्रक्रान्त-मुपासन समापयेत्, पूर्वोत्तरयो कर्मणो फल न दास्यामीत्येव भगव त्सकल्परूपौ । उत्तरपूर्वाघाश्लेषविनाशौ दर्शनसमानाकारज्ञानारम्भ एव "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ "इति सूत्रोक्तन्यायेन भवत । अन्तिमप्रत्ययपर्यन्तोपासननिवृत्त्यनन्तरम्, विनष्टाश्लिष्टयोरेव कर्मणो,

सृष्टिकालिकशरीरानुवृत्त सूक्ष्मशरीर किञ्चिदस्ति, तदभावस्याधि-करणसारावली स्पष्टमुक्ते । यथा,

> स्वादौ भूतसूक्ष्मप्रभृतिभिरुदित यत्प्र कल्पान्तनाश्य
> प्रत्येक प्राणिभेदे नियतमनियतस्थूलदेहानुयायि ।
> लिङ्गाख्य भक्तिकान्त पदमवदधस्थायि सांख्यै प्रगीतम्
> सूक्ष्मांश पूर्वभूतरुपरितनतनोर्वर्जिमव्यते तत् ॥(४८६) इति,

इति चेत्—उच्यत । कर्मफलानुभवार्थ कल्पित यत् चरम स्थूलशरीर मुमुक्षो प्रस्थानात् पश्चाद् भस्मादिभावमापत्स्यमानम्, तस्य कश्चिदश पूर्वं स्थूलशरीरे फलानुभवायतनतयोपयुक्त सप्रति गत्यौपयिकतया विद्यया स्थाप्यते स्थूलदेहेन सह भसताद्यनापाद-नेन । अयञ्च चरमशरीराश न कस्यचिद्देहस्य बीजभूत, उपरि प्राकृत-देहप्रसक्त्यभावात् । अतोऽय सूक्ष्माशो न भाविफलानुभवोपयोगीति ।

[तत्] यथा रथेन धावन् रथचक्रे पर्यवेक्षते, एवमहोरात्रे पर्यवेक्षते। एवं सुकृतदुष्कृते, सर्वाणि च द्वंद्वानि ॥ ३८ ॥

स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति ॥३९॥

स आगच्छति तिल्यं वृक्षम्; तं ब्रह्मगन्धः प्रविशति। स आगच्छति सालज्यं संस्थानम्; तं ब्रह्मरसः प्रविशति। स आगच्छति अपराजितमायतनम्; तं ब्रह्मतेजः प्रविशति। स आगच्छतीन्द्रप्रजापती द्वारगोपौ; तावस्मादपद्रवतः। स आगच्छति विभुप्रमितम्; तं ब्रह्मयशः प्रविशति ॥ ४० ॥

---

फलं नैव दास्यामीति संकल्परूपं विधूननं देहवियोगकाले भवति; तस्मिन्नेव समये एतदीयप्रियाप्रियजनेषु एतदीयसुकृतदुष्कृतानुरूपेष्टानिष्टफलदित्सालक्षणमुपायनञ्च भवति ॥ ३७ ॥

**यथा....द्वन्द्वानि।** यथा रथेन धावन् पुरुषः स्वयं निर्व्यापार एव सन् व्याप्रियमाणरथचक्रादिकं साक्षितया पश्यन् गमनक्रियाजनितशरीरायासादिशून्यस्सन् हृष्टो भवति। एवं प्रवर्तमानकालचक्रं सुकृतदुष्कृतसाध्यद्वन्द्वपरम्परां स्वानन्विताेव पश्यन् निर्दुःखसुखमास्ते ॥३८

**स एषः....अभिप्रैति।** स्पष्टोऽर्थः ॥ ३९ ॥

**स आगच्छति....।** यथा प्रभाते अनुकूलं आदित्यादिसामीप्यातिशयकृतं प्रकाशाधिक्यम्, एवं देशविशेषविशिष्टब्रह्मसान्निध्यातिशयानुकूलसमेधमानविकासावस्थाविशेषाः ब्रह्मगन्धब्रह्मरसादिशब्दैरभिलप्यन्ते। ब्रह्मणः सर्वगन्धत्वादेः, 'सर्वगन्धस्सर्वरसः' इति प्रतिपन्नत्वात् यथाश्रुतार्थग्रहणेऽपि न दोषः। अपद्रवतः तस्मै मार्गं प्रयच्छत इत्यर्थः॥

---

एवमहोरात्रे इति। रथेन गच्छतः रथचक्राधीनभ्रमणानाश्रयत्ववत् अहोरात्रादिद्वन्द्वव्यापारानालीढत्वमस्येति भावः।

स आगच्छति विचक्षणामासन्दीम्, बृहद्रथन्तरे सामनी पूर्वौ पादौ । श्यैतनौधसे चापरौ पादौ । वैरूपवैराजे शाक्वररैवते तिरश्ची । सा प्रज्ञा । प्रज्ञया हि विपश्यति ॥ ४१ ॥
स आगच्छत्यमितौजसं पर्यङ्कम्, स प्राण ॥ ४२ ॥
तस्य भूतं च भविष्यच्च पूर्वौ पादौ । श्रीश्च इरा चापरौ ॥ ४३ ॥
बृहद्रथन्तरे अनूच्ये ॥ ४४ ॥ भद्रयज्ञायज्ञीये शीर्षण्ये ॥ ४५ ॥
ऋचश्च सामानि च प्राचीनातानम् ॥ ४६ ॥
यजूंषि तिरश्चीनानि ॥ ४७ ॥ सोमांशव उपस्तरणम् ॥ ४८ ॥
उद्गीथ उपश्रीः ॥ ४९ ॥ श्रीरुपबर्हणम् ॥ ५० ॥

तस्मिन् ब्रह्मास्ते । तमित्थंवित् पादेनैवाग्र आरोहति । तं ब्रह्माह, कोऽसीति । तं प्रतिब्रूयात् ॥ ५१ ॥

---

सा प्रज्ञा प्रज्ञाधिष्ठात्री देवता । तत्सम्बन्धादयं सर्वं पश्यतीत्यर्थः ॥
प्राणः प्राणाभिमानीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ४२ ॥
तस्य पर्यङ्कस्य चतुरोऽपि पादानाह तस्य...अपरौ ।
भूतभविष्यत्कालैश्वर्यान्नाभिमानिदेवताश्चत्वारः पादाः ॥ ४३ ॥
**बृहद्रथन्तरे अनूच्ये ।** बृहद्रथन्तराख्ये सामनी अनूचीनदारुणी इत्यर्थः ॥४४॥ **भद्र शीर्षण्ये ।** भद्रयज्ञायज्ञीयाख्ये सामनी तिरश्चीनदारुणी ॥४५॥ **प्राचीनातान** पर्यङ्कायतदीर्घा तान्तवरज्जुविशेषाः ॥४६
**तिरश्चीनानि** तिर्यक्तरज्जुविशेषाः ॥४७॥ **सोमांशव उपस्तरणम् ।** चन्द्रकिरणा एवाऽऽस्तरणम् ॥ ४८ ॥ **उद्गीथ उपश्रीः** श्रीसमीपे वर्तमानमास्तरणमुद्गीथः ॥ ४९ ॥ **उपबर्हणं** पादोपधानम् ॥ ५० ॥
**तस्मिन् प्रतिब्रूयात्** । स्पष्टोऽर्थः ॥ ५१ ॥

---

तं प्रतिब्रूयादिति । एवं प्रतिब्रुवतः —

ऋतुरस्म्यार्तवोऽस्मि ॥ ५२ ॥ आकाशाद्योनेः संभूतो भयायैतत् (भार्यायै रेतः) संवत्सरस्य तेजोभूतस्य भूतस्य भूतस्यात्मा (भूतस्यात्मभूतस्य) त्वमात्माऽसि । यस्त्वमसि सोऽहमस्मीति ॥ ५३ ॥ [आत्मासीति ।] ॥ ५४ ॥ तमाह कोऽहमस्मीति ॥ ५५ ॥

---

ऋतुः... अस्मि । अयञ्च मन्त्रखण्डः प्राग्व्याकृतः ॥ ५२ ॥

आकाशात् योनेः....अस्मीति। 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशम् आकाशाद्वायुम् वायुर्भूत्वा धूमो भवति' इति श्रुत्युक्तरीत्या आकाशवाय्वादिक्रमेणावरुह्य, "योनेश्शरीरम्" इति सूत्रोक्तरीत्या योनेस्संभूतोऽसि । भयायैतत् एतत् भवनमयं (भवनं ?) भयहेतुः । संवत्सरस्य-संवत्सरे, तेजोभूतस्य रेतोभूतस्य भूतस्य भूतस्य सर्वभूतस्य त्वमात्मा पौनःपुन्येन श्रद्धासोमवृष्ट्यन्नरेतोरूपशरीरयुक्तस्य सर्वस्यापि जीवजातस्य त्वमात्मा। [अनेन प्रकृतिवियुक्तत्वं ब्रह्मात्मकत्वञ्च स्वस्योपन्यस्तं भवति।] यदात्मकोऽहमियन्तं कालम्, 'अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् । मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः' इति न्यायेन संसारे पतितोऽस्मीत्यर्थः ॥ ५३ ॥ मम कथमात्मत्वमित्यत्राह— आत्मासि व्यापकोऽसीत्यर्थः । व्यापकत्वादात्मत्वमुपपद्यत इति भावः ॥ ५४ ॥ तमाह— । यस्त्वमसि सोऽहमस्मीत्युक्तम् । अहं त्वा

---

"अनयाऽहं वशीभूतः कालमेतं न बुद्धवान् । उच्चमध्यमनीचान्तां तामहं कथमावसे ॥ [अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् । अनेन साम्यं यास्यामि नानयाऽहमचेतसा ॥ क्षमं मम सहानेन ह्येकत्वं नानया सह ।" इति श्रीमद्रहस्यत्रयसारोद्धृतवचनार्थो मनसि विपरिवर्तत इति मन्तव्यम् ।

सत्यमिति ब्रूयात् ॥ ५६ ॥ किं तत्, यत् सत्यमिति ॥ ५७ ॥

यदन्यत् देवेभ्यश्च प्राणेभ्यश्च, तत् सत्। अथ यत् देवाश्च प्राणाश्च, तत् त्यम् (यम्)। तदेतया वाचाऽभिव्याह्रियते सत्यमिति। एतावदिदम्। सर्वमिदम्। सर्वमसीत्येवैनं तदाह ॥ ५८ ॥

तदेतत् श्लोकेनाप्युक्तम्—

यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः।

स ब्रह्मेति हि विज्ञेयः ऋषिर्ब्रह्ममयो महान् ॥ इति।

तमाह–केन [मे] पौंस्नानि नामान्याप्नोषीति। प्राणेनेति ब्रूयात्। केन स्त्रीनामानीति। वाचेति। केन नपुंसकनामानीति। मनसेति॥५९

---

क इति पृच्छतीत्यर्थः ॥ ५५ ॥ उत्तरमाह—सत्यमिति ॥ ५६ ॥ पुनः पृच्छति किं तत् यत् सत्यमिति ॥ ५७ ॥

यदन्यत्...तदाह। सदित्यनेन देवप्राणव्यतिरिक्तमुच्यते। त्यमित्यनेन देवप्राणाः। अतः सत्यमित्युक्त्या सर्वं संगृहीतं भवति। ततश्च सत्यमसीत्युक्ते सर्वमसीत्युक्तं स्यादित्यर्थः। ततश्च सर्वेषामात्मैव मदात्मेत्यर्थः ॥ ५८ ॥

देहेन्द्रियमनःप्राणज्ञानव्यतिरेकं प्रश्नोत्तरव्याजेन स्पष्टयति तमाह केन मे...। नपुंसकत्वादीनि गुणत्रयोन्मेषविशेषरूपाणि, न [illegible] आत्मस्वरूपगतानि। ततश्च तादृशधर्मयुक्तमनोवाक्प्राणनिष्ठान्येव नपुंसकत्व स्त्रीत्वपुंस्त्वानि। अतः तत्संबन्धादात्मनि लिङ्गसंबन्ध इति भावः।

---

तादृशेति। ननु प्राणादिषु देहातिरिक्तेषु कथं पुंस्त्वादिकम्। प्राणादिशब्दगतमिति चेत्–तथा आत्मज्ञानादिपदेष्वपि सुवचमिति चेन्न; लोके स्त्रीषु वाचः, पुरुषेषु प्राणाख्यबलस्य, क्लीबे अशक्तमनस्योद्रेकदर्शनात् तादृशस्त्रीपुरुषादिविवक्षया वागादिपदप्रयोगात्।

केन गन्धानिति । प्राणेनेति ॥ ६० ॥

केन रूपाणीति । चक्षुषेति । केन शब्दानिति । श्रोत्रेणेति । केन रसानिति । जिह्वयेति । केन कर्माणीति । हस्ताभ्यामिति ।

केन सुखदुःखे इति । शरीरेणेति ॥ ६१ ॥ केनाऽऽनन्दं रतिं प्रजातिमिति । उपस्थेनेति ॥६२॥ केनेत्या इति । पादाभ्यामिति ॥६३ केन धियो विज्ञातव्यं कामानिति ॥ ६४ ॥

प्रज्ञयेति [प्र] ब्रूयात् ॥ ६५ ॥

तमाह—आपो वै खलु मे ह्यसावयं ते लोक इति ॥ ६६ ॥

सा या ब्रह्मणो जितिः या व्यष्टिः, तां जितिं जयति तां व्यष्टिं व्यश्नुते, य एवं वेद य एवं वेद ॥ ६७ ॥

इति कौषीतक्युपनिषदि प्रथमोऽध्यायः ।

---

प्राणादीनां तृतीयानिर्देशेन करणत्वप्रतीतेः स्वस्य कर्तृत्वप्रतीतेश्च मनोवाक्प्राणव्यतिरेकः सिद्धः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ५९ ॥

प्राणेनेति । घ्राणेन गन्धान् जानामीति ब्रूयादित्यर्थः । एवमुत्तरत्रापि यथायोग्यमन्वयः तत्तदिन्द्रियव्यतिरेकश्च बोध्यः ॥ ६० ॥

शरीरेणेति । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति श्रुतेः वैषयिकसुखदुःखयोः शरीरहेतुकत्वात् शरीरस्य च करणतया निर्देशः ॥ प्रजातिः प्रजननम् ॥ ६२ ॥ इत्याः गमनानीत्यर्थः ॥ ६३ ॥ ज्ञातव्यं कामान्–ज्ञानविषयान् इच्छाविषयांश्चेत्यर्थः । ज्ञानेच्छादिकं केनाप्नोषीति पर्यवसितोऽर्थः ॥ ६४ ॥ प्रज्ञया मनसेत्यर्थः ॥ ६५ ॥ तमाह .. लोकोऽसौ अमृतस्य.(?)आपो भुज्यन्ते । तवाप्यसौ लोको भोग्य इत्यर्थः ॥

सा या .. य एवं वेद । अत्र वेदशब्दः उपासनपरः । उक्तपर्यङ्कविद्यानिष्ठो यः, स जितिं जयं व्यष्टिं योगञ्च लभते इत्यर्थः ।

यत्तत्र परे — 'पुण्यपापे विधूय निरञ्जन परम साम्यमुपैति' इति श्रुताया परमसाम्यापत्तौ निरञ्जनस्य गमनासभवात् परमसाम्यापत्ते देशान्तरप्राप्त्यनपेक्षत्वाच्च देवयानस्य पथो नार्थवत्त्वम् । आत्मैकत्व दर्शिनामाप्तकामानामिहैव दग्धाशेषक्लेशबीजानाम् आरब्धदेहकर्माशय क्षपणव्यतिरेकेणापेक्षितव्याभावात् । पर्यङ्कविद्यादिषु ॥ पर्यङ्कारोहणब्रह्म गन्धप्रवेशादीना विशिष्टदेशान्तरप्राप्तिसापेक्षत्वात् तत्रैव पन्था अपेक्षित । न हि ग्रामप्राप्तावपेक्षित पन्था आरोग्यप्राप्तावपेक्षित इति, ' गतेरर्थ वत्त्वमुभयथाऽन्यथा हि विरोध ", "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" इति सूत्राभ्या प्रतिपादितमिति । तथा, 'एवमेवास्य परिद्रष्टु इमाप्षोड-शकला पुरुषायणा पुरुष प्राप्यास्त गच्छन्ति' इति श्रुते ब्रह्मविद् प्राणाना ब्रह्मण्येव लय । 'गता कला पञ्चदश प्रतिष्ठा' इति कलाना पृथिव्यादिस्वप्रकृतौ लयप्रतिपादन तु लौकिकदृष्ट्यभिप्रायमिति कला प्रलयाधिकरणे स्थितम् । सोऽपि कलाप्रलयो निरवशेष इति, भिद्येते तासा नामरूपे पुरुषे, 'स एषोऽकलोऽमृतो भवति' इति, 'अविभागो वचनात्" इत्यत्र प्रतिपादितम् । अतो न मुक्तस्यार्चिरादिमार्गेण गमनमित्युक्तम् —

तन्न — तथासति, "अनियम सर्वेषामविरोध " इत्यधिकरणे — उपकोसलविद्याया पञ्चाग्निविद्यायाश्चार्चिरादिगतेराम्नानात् तद्विद्या निष्ठानामेवार्चिरादिगति , नान्येषामिति पूर्वपक्ष कृत्वा, 'ये इत्थ विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति श्रद्धातप शब्दलक्षित ब्रह्मविद्यान्तरनिष्ठानामप्यर्चिरादियतिश्रवणात् , 'शुक्लकृष्णे गती ह्येते जगत शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुन ' इति अनुमान

शब्दितात् स्मरणाच्च सर्वविद्यासाधारण्यमाश्रयणीयम्, उपकोसलविद्याया पञ्चाग्निविद्यायाश्च द्विराम्नानस्योभयत्रानुचिन्तनार्थत्वेनाप्युपपत्तेरिति अर्चिरादिगते सर्वविद्यासाधारण्यम्, "अनियम सर्वेषामविरोधश्शब्दानुमानाभ्याम्" इत्यधिकरणे प्रतिपादितमिति परैरप्युक्तत्वात तद्विरोध ।

न च सकलसगुणविद्यासाधारण्यमेवास्मिन्नधिकरणे प्रतिपादितम्, न तु निर्गुणविद्यासाधारण्यमिति वाच्यम्, निर्गुणविद्याया एवा प्रामाणिकत्वात् । 'स वा एष महानज आत्मा योऽय विज्ञानमय प्राणेषु य एषोन्तर्हृदय आकाशस्तस्मिन् छेते' इति बृहदारण्यकषष्ठाध्यायगताया निर्गुणविद्यात्वेन पराभिमताया. दहरविद्याया छान्दोग्यगतसगुणविद्यैक्यस्य हृदयायतनत्वसेतुत्वलोकासमेदहेतुत्वादिसामान्येन, "कामादीतरत्र तत्र चायतनादिभ्य" इत्यधिकरणे सूत्रकृतैव समर्थितत्वात् । परैरपि तथा व्याख्यातत्वाच्च । न च निर्गुणायामपि विद्याया ब्रह्मस्तुत्यर्थमेव सगुणविद्यासबन्धिगुणोपसंहार सभवतीति वाच्यम्—निर्गुणस्य परस्य ब्रह्मणो गुणवत्त्वेन अवरब्रह्मत्वेन प्रतिपादनस्य प्रत्युत निन्दात्वेन स्तुतित्वासंभवात् । अत एव, "व्यतिहारो विशिंषन्ति हीतरवत्" इत्यत्र, 'तद्योऽहं सोऽसौ योऽसौ सोऽह त्व वा अहमस्मि भगवो देवते अह वै त्वमसि भगवो देवते' इत्यत्र ससारिण ईश्वरत्वचिन्तने, 'ब्रह्मदृष्टिरुत्कर्षात्" इति न्यायोऽनुगृहीतो भवति । ईश्वरस्य ससार्यात्मत्वचिन्तने निकर्ष प्रसज्येत । अतो द्विरूपा मतिर्न कर्तव्येति पूर्वपक्ष कृत्वा, 'आम्नानबलात् द्विरूपाऽपि मति कर्तव्या ॥ नन्वेवमुत्कृष्टस्यापि निकर्षप्रसङ्ग इत्युक्तम् ॥ तत् किमिदानीं सगुणे ब्रह्मण्युपा

समाने तस्य वस्तुतो निर्गुणस्य निकृष्टता भवति ॥ ननु कस्मैचित् फलाय निर्गुणस्य गुणवत्तया ध्यानमात्रं क्रियते । न तावता तस्य निकृष्टता भवतीति चेत् इहापि व्यतिहारानुचिन्तनमात्रमुपदिश्यते फलाय, न तु निकृष्टता भवत्युत्कृष्टस्य' इत्येवं निर्गुणस्य सगुणत्वे निकर्ष-प्रसक्तिमभ्युपेत्य, वस्तुतो निकर्षो नास्तीति शङ्करभाष्यवाचस्पत्योर्व्याहततरत्वेन निन्दावहस्य गुणकीर्तनस्य स्तुत्यर्थत्वासंभवात् । किञ्च लोके हि स्तुतिर्विधेयरुच्युत्पादनेन सप्रयोजना । न चात्र निर्गुणस्य तज्ज्ञानस्य वा विधेयत्वमस्ति । न वा गुणवत्त्वेन स्तुतेर्निर्गुणप्रतिपत्त्युपयोगोऽस्ति । किञ्च निर्गुणविद्याम्नातवशित्वादिगुणाना न छान्दोग्यगत सगुणविद्यायाम् आध्यानायोपसंहारसंभव । 'यत्र वशित्वादय श्रूयन्ते, तत्रापि तेषा ध्येयत्वेना(त्वान ?)भिधानात् अन्यत्र गतानामपि न ध्येयत्वं संभवति' इति तैरेवोक्तत्वात् । स्तुत्यर्थत्वमपि न संभवति, सत्यकामत्वादिसामर्थ्यादेव सर्वेश्वरत्वसिद्ध्या स्तुते सिद्धत्वेन सत्यकामत्वान्तर्भूतवशित्वकीर्तनेन स्तुतेरसंभवात् । कठवल्लीषु पराभिमतनिर्गुणब्रह्मप्रकरणे, 'शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति उत्क्रान्तिगत्यो· प्रतिपादनात् । निर्गुणविद्यात्वेन पराभिमताया भूमविद्यायाम्, 'स एकधा भवति त्रिधा भवति' इति अनेकशरीरपरिग्रहश्रवणेन निर्विशेषब्रह्मभावापत्तेरप्रतिपादनात् । न चास्य वाक्यस्य सगुण विद्यासु उत्कर्ष कल्पनीय इति वाच्यम्—'सर्वं ह पश्य· पश्यति सर्वमाप्नोति सर्वश ' इति प्राक्प्रस्तुतस्यैव, 'स एकधा भवति'

इति तच्छब्देन परामर्शेन तयोत्कर्षकल्पने प्रमाणाभावात् । तथा निर्गुणविद्यात्वेन पराभिमतप्रजापतिविद्यायाम्, 'एष संप्रसादो ऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति शरीरादुत्क्रान्तेः श्रवणात् । न च शरीरात् समुत्थानं शरीरविविक्तात्मसाक्षात्कार इति वाच्यम्—'अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुः अशरीराणि । यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुप संपद्य स्वेन रूपेणाभिनिष्पद्यन्ते' इति दृष्टान्तानुगुण्येनैव दार्ष्टान्तिकेऽप्यर्थस्य वर्णनीयत्वात् शरीरविविक्तात्मसाक्षात्कारस्यापदार्थत्वादवाक्यार्थत्वात् । तथा निर्गुणविद्यात्वेनाभिमतसद्विद्यायाम्, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति प्रारब्धावसाने ब्रह्मसंपत्तिमुक्त्वा तदुत्तरखण्डे, 'यदाऽस्य वाङ्मनसि संपद्येत मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति ब्रह्मसंपत्त्यर्थतया उत्क्रान्तेः प्रतिपादितत्वाच्च । तथा वाजसनेयके षष्ठे तदभिमतनिर्गुणविद्यायामेव, "अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव । तेन धीरा उपयन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः' इति गतिप्रतिपादनाच्च । "समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य" इति विद्वदविदुषोरुत्क्रान्तिसाम्यस्य सूत्रकृता कण्ठत एव प्रतिपादितत्वाच्च अर्चिरादिगतिः सगुणविद्याविषयेत्येतन्न प्रामाणिकानां हृदयमधिरोहति । "कार्यं बादरिरस्य गत्युपपत्तेः" इति नित्यपरब्रह्मविद एवार्चिरादिगतिरिति बादरिमतस्य, "परं जैमिनिर्मुख्यत्वात्" इति परब्रह्मोपासकानामर्चिरादिगतिरिति जैमिनिमतापेक्षया प्राङ्निर्दिष्टस्य सिद्धान्तसूत्रत्वायोगात् । "चरणादिति चेन्न तदुपलक्ष-

णार्थेति कार्ष्णाजिनि ", "सुकृतदुष्कृते एवेति तु बादरि ", "उत्क्रमिष्यत एवम्भावादित्यौडुलोमि ", 'अवस्थितेरिति काशकृत्स्न ", 'स्वामिन फलश्रुतेरित्यात्रेय ", "आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते" इत्यादिषु सर्वत्र पाश्चात्यस्यैव सूत्रकृदभिमतत्वदर्शनेन, "कार्यं बादरिरस्य गत्युपपत्ते ' इति बादरिमतस्य सिद्धान्तसूत्रत्वाभ्युपगमस्या सगतत्वात्। निर्विशेषब्रह्मभावस्यैव मुक्तिरूपत्वे, "सकल्पादेव तच्छ्रुते " "अभाव बादरिराह ह्येवम् ', "भाव जैमिनिर्विकल्पामननात्", "द्वादशाहवदुभयविध बादरायणोऽत " इत्यादीनाम्, "अनावृत्तिश्शब्दात् " इत्यन्तानामर्थशून्यतैव स्यात् । न च, "सकल्पादेव तच्छ्रुते " इति सूत्रे, "इत उपरि सगुणविद्याफलप्रपञ्च ' इति कल्पतरुकारेणोक्तत्वात् सर्वं सगुणविद्याफलभूतावान्तरमुक्तिविषयमिति वाच्यम्— यदि हि मुक्तिद्वैविध्य सूत्रकृदभिमत स्यात्, तर्हि, 'य आत्मा अपहतपाप्मा' इत्यादिमुक्तौ ब्राह्मरूपाविर्भाववाक्यमवान्तरमुक्तिपरम्, 'एव वा अरेऽयमात्मा अनन्तरोऽबाह्य कृत्स्न प्रज्ञानघन एव' इति निरस्ताशेषप्रपञ्चबोधात्मकत्वेन स्वेन रूपेण निष्पत्तिप्रतिपादक वाक्य तु परममुक्तिपरमिति व्यवस्थाया सुवचतया व्यावहारिकपारमार्थिकत्वाभ्या व्यवस्थाप्रतिपादकत्वेन त्वदभिमतस्य, "एवमप्युपन्यासात् पूर्वभावादविरोध बादरायण " इति सूत्रस्यासगतिप्रसङ्गात् । तथा, 'अशरीर वाव सन्त न प्रियाप्रिये स्पृशत " इति अशरीरत्वप्रतिपादक वाक्य परममुक्तिपरम्, 'स एकधा भवति त्रिधा भवति' इति शरीरयोगप्रतिपादक वाक्यमवान्तर मुक्तिपरमिति व्यवस्थाया वक्तु सुशकत्वेन सत्याभिच्छाया सशरीरत्वम्,

अन्यदा अशरीरत्वमिति व्यवस्थाप्रतिपादकत्वेन त्वदभिमतस्य "द्वादशाहवदुभयविधं बादरायणोऽतः" इति सूत्रस्यासंगतिप्रसङ्गात् । "अत एव चानन्याधिपतिः" इति सूत्रे, "अत एव=सत्यसङ्कल्पत्वात् च शब्दोक्तायाः 'स स्वराड् भवति' इति श्रुतेश्चानन्याधिपतिर्मुक्तो भवति ; नास्यान्योऽधिपतिर्भवतीत्यर्थः ; इदमपि सगुणोपासनया हिरण्यगर्भं प्राप्तस्य" इति यत् परैरुक्तम्–तत् अत्यन्तासंगतम्–तस्य हिरण्यगर्भेश्वररूपाधिपतिसत्त्वेनानन्याधिपतित्वस्य वक्तुमशक्यत्वादित्यलमतिचर्चया । प्रकृतमनुसरामः ॥ ६७ ॥

इति कौषीतक्युपनिषत्प्रथमाध्यायप्रकाशिका ।

---

अथ कौषीतक्युपनिषदि द्वितीयोऽध्यायः

प्राणो ब्रह्मेति ह स्माह कौषीतकिः । तस्य ह वा एतस्य प्राणस्य

---

द्वितीयाध्यायपरिष्कारः

[ द्वितीयस्याध्यायस्य भाष्याभावात् मूलमात्रस्य परिष्कारः क्रियते । ]

प्राणमाहात्म्यमत्र द्वितीयेऽध्याये प्रतिपाद्यते । वाक्प्राणमनश्चक्षुःश्रोत्राणां पञ्चानामुपास्तिप्रकरणतया प्राधान्येन परिग्रहः केनाद्युपनिषत्सु प्रसिद्ध इति यदुवास्माभिर्निर्दिष्टमस्ति । इहापि कौषीतक्युपनिषदि तत्प्रकारेण तत्र प्राणस्य प्राधान्यमन्यथैव प्रतिपाद्यते । तद्ग्रहणानुगुणं वाक्यानि कानिचिदाम्नानान्युपदिश्यन्ते । तत्र प्राणस्य बलिहरणेन अयाच्यत्वसिद्धिफलकं प्राणे ब्रह्मदृष्टिरूपमुपासनं तदनुनिमित्तं द्विप्रकारमुच्यते प्राणो ब्रह्मेतीति । प्राणो राजस्थाना-

ब्रह्मणो मनो दूत चक्षुर्गोप्तृ श्रोत्रं सश्रावयितृ वाक् परिवेष्ट्री । स यो ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वेद, दूतवान् भवति । यश्चक्षुर्गोप्तृ, गोप्तृमान् भवति । य श्रोत्रं संश्रावयितृ, संश्रावयितृमान् भवति । यो वाचं परिवेष्ट्रीम् परिवेष्ट्रीमान् भवति । तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति । एवं हैवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति, य एवं वेद । तस्योपनिषत्, न याचेदिति । तद् यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेत्, नाहमतो दत्तमश्नीयामिति । त एवैनमुपमन्त्रयन्ते, ये पुरस्तात् प्रत्याचक्षीरन् । एष धर्मोऽयाचतो भवति । अन्नदास्त्वेवैनमुपमन्त्रयन्ते, ददाम त इति ॥ १

प्राणो ब्रह्मेति ह स्माह पैङ्ग्यः । तस्य ह वा एतस्य प्राणस्य ब्रह्मणो वाक् परस्तात् चक्षुरारुन्धे, चक्षुः परस्तात् श्रोत्रमारुन्धे, श्रोत्रं परस्तान्मन आरुन्धे, मनः परस्तात् प्राण आरुन्धे, तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति । एवं हैवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति, य एवं वेद । तस्योप

---

एव. मनआदि च तत्परिजनस्थानीयमिति ब्रह्मत्वेन हृदयस्य प्राणस्य मनआदिर्दूतत्वादिना द्रष्टव्यः । परिवेष्ट्री परिवेषणकर्त्री । बलि हरन्तीति । छान्दोग्यार्थो (५) 'यदह तमित्याग्निम इव नद्धसिष्टोऽसि' इत्येव वागादिभिः सम्यगनुगुणार्पण प्राणे नियमाण द्रष्टव्यम् । (१)

पूर्वस्मिन्निर्दिष्टा ब्रह्मदृष्टिरुक्ता । पैङ्ग्यस्तत्र तत्फलविशेषं प्रदर्श्यते । वाक् परस्तात् इत्यत्र विभक्तिः पञ्चम्यो द्रष्टव्य । वाचमतिशेते चक्षुः । वाचोक्तोऽर्थः चक्षुषा दृष्ट एव प्रत्ययदार्ढ्यं भवति, वाचः कर्मेन्द्रियत्वात् चक्षुषः ज्ञानेन्द्रियत्वाच्च । चक्षुरतिशेते श्रोत्रम् ।

अन्यदा अशरीरत्वमिति च्यवनस्याप्रतिपादकत्वेन त्वदभिमतस्य "द्वादशाहवदुभयविधं बादरायणोऽत." इति सूत्रस्यासंगतिप्रसङ्गात् । "अत एव चानन्याधिपतिः" इति सूत्रे, "अत एव=सत्यसङ्कल्पत्वात् च शब्दोक्ताया, 'स स्वराड्भवति' इति श्रुतेश्चानन्याधिपतिर्मुक्तो भवति ; नास्यान्योऽधिपतिर्भवतीत्यर्थ । इदमपि सगुणोपासनया हिरण्यगर्भं प्राप्तस्य" इति यत् परैरुक्तम्-तत् अत्यन्तासंगतम्-तस्य हिरण्यगर्भेश्वररूपाधिपतिसत्त्वेनानन्याधिपतित्वस्य वक्तुमशक्यत्वादित्यलमतिचर्चया । प्रकृतमनुसरामः ॥ ६७ ॥

इति कौषीतक्युपनिषत्प्रथमाध्यायप्रकाशिका ।

---

अथ कौषीतक्युपनिषदि द्वितीयोऽध्यायः

प्राणो ब्रह्मेति ह स्माह कौषीतकिः । तस्य ह वा एतस्य प्राणस्य

---

द्वितीयाध्यायपरिष्कारः

[ द्वितीयस्याध्यायस्य भाष्याभावात् मूलमात्रस्य परिष्कारः क्रियते । ]

प्राणप्राधान्यमत्र द्वितीयेऽध्याये प्रतिपाद्यते । वाक्प्राणमनश्चक्षुःश्रोत्राणां पञ्चानामुपासनोपकरणतया प्राधान्येन परिग्रहः केनाद्युपनिषत्सु प्रसिद्ध इति बहुवाक्याभिर्दर्शितमस्ति। इहापि कौषीतक्युपनिषदि तत्परिष्कारेण तत्र प्राणस्य प्राधान्यमन्यत्रेव प्रतिपाद्यते । तद्ग्रहणानुगुण रहस्यानि कानिचिदुपासनान्युपदिश्यन्ते । तत्र प्राणवत् बलिहरणेन आराध्यत्वसिद्धिफलकं प्राणे ब्रह्मदृष्टिरूपमुपासनं तत्तन्मुनिमतं द्विप्रकारमुच्यते प्राणो ब्रह्मेतीति । प्राणो राजस्थाना-

निषत्, न याचेदिति। तद् यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेत्, नाहमतो दत्तमश्नीयामिति, ▪ एवैनमुपमन्त्रयन्ते, ये पुरस्तात् प्रत्याचक्षीरन्। एष धर्मोऽयाचतो भवति, अन्नादास्त्वेवैनमुपमन्त्रयन्ते, ददाम त इति ॥२॥

अथात एकधनावरोधनम्, यदेकधनमभिध्यायात्, पौर्णमास्यां वाऽमावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्रे एतेषामेकस्मिन् पर्वण्यग्निमुपसमाधाय परिसमूह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्य स्रुवेणाज्याहुतीर्जुहोति, 'वाङ्नाम देवताऽवरोधनी सा मेऽमुष्मादिदमवरुन्ध्यात् तस्यै स्वाहा', 'चक्षुर्नाम देवताऽवरोधनी सा मेऽमुष्मादिदमवरुन्ध्यात् तस्यै स्वाहा', 'श्रोत्रं नाम देवताऽवरोधनी सा मेऽमुष्मादिदमवरुन्ध्यात् तस्यै स्वाहा', 'मनो नाम देवताऽवरोधनी सा मेऽमुष्मादिदमवरुन्ध्यात् तस्यै स्वाहा', 'प्रज्ञा नाम देवताऽवरोधनी सा मेऽमुष्मादिदमवरुन्ध्यात् तस्यै स्वाहा' इति। अथ धूमगन्धं प्रजिघ्राय आज्यलेपेनाङ्गान्यनुविमृज्य वाचंयमोऽभिप्रव्रज्यार्थं ब्रूयात्, दूतं वा प्रहिणुयात्, लभते हैव ॥३॥

---

'चक्षुर्वित्तं मानुषम्, श्रोत्रं दैवम्' इत्युक्तरीत्या आमुष्मिकस्य सर्वस्य श्रोत्रग्राह्यैकवेद्यत्वात्। मनस्तु सर्वग्राहि ततोऽधिकम्। इन्द्रियाणां प्राणाधीनस्थितिप्रवृत्तिकत्वात् प्राणः श्रेष्ठः। (२)

प्राणादिदेवतोद्देश्यकहोमाद्यनुष्ठानेन रिक्तस्य धनिकधनप्राप्तिसौलभ्यमुपवर्ण्यते अथात एकधनावरोधनमिति। एकस्य=कस्यचिदन्यस्य यद् धनम्, तस्यावरोधनम् स्वप्रयत्नेन संग्रहः। अत्र प्रागुक्तेन वागादिना सह प्रज्ञाऽपि काचिद् देवतात्वेनोक्ता। एतेषामेकस्मिन् पर्वणि इति। उक्तानां मध्ये कस्मिंश्चित् काले इत्यर्थः। अर्थं ब्रूयात् इति। साक्षादिति शेषः। स्वयं वा साक्षात् धनिकसविधे ब्रूयात् दूतं वा प्रेषयेदिति। (३)

अथातो दैव स्मर —यस्य प्रियो बुभूषेत्, यस्यै वा, येषा वा, यासा वा, एतेषामेवैकस्मिन् पर्वण्येतयैवाऽऽवृता एता आज्याहुती जुहोति, 'वाच ते मयि जुहोम्यसौ स्वाहा', 'चक्षुस्ते मयि जुहोम्यसौ स्वाहा', 'श्रोत्र ते मयि जुहोम्यसौ स्वाहा', 'मनस्ते मयि जुहोम्यसौ स्वाहा,' 'प्रज्ञा ते मयि जुहोम्यसौ स्वाहा' इति। अथ धूमगन्ध प्रजिघ्रायाज्यलेपेनाङ्गान्यनुविमृज्य वाचयमोऽभिप्रव्रज्य सस्पर्शं जिगमिषेत्, अपि वाताद्वा तिष्ठेत् सभाषमाण, प्रियो हैव भवति, स्मरन्ति हैवास्य ॥४॥

अथात सयमन प्रातर्दनमान्तरमग्निहोत्रमित्याचक्षते— यावद्वै पुरुषो भाषते, न तावत् प्राणितु शक्नोति। प्राण तदा वाचि जुहोति। यावद्वै पुरुष प्राणिति, न तावद्भाषितु शक्नोति, वाच तदा प्राणे जुहोति। एते अनन्ते अमृते आहुती जाग्रच्च स्वपश्च सतत जुहोति।

---

प्राणादिदेवतोद्देश्यकहोमबलेन परेषा स्वस्मिन् प्रीतिपूर्वक-स्मरणसिद्धिरुच्यते। अथातो दैव स्मर इति। परे स्वस्मिन् स्वय प्रीत्यकरणेऽपि प्राणादिदेवकल्पिता भवति प्रीतिरिति अय दैव स्मर। कामो वा काममूलकस्मरण वा। आवृता=उक्तप्रकारेण वाच ते इति। ते इति वशीकार्य पर उच्यते। (४)

अथोक्तप्राणादिपञ्चकमध्ये प्राणस्य वाचश्च परस्परस्मिन् होम भावनया अग्निहोत्रसपत्ति प्रदर्श्यते। अग्निहोत्रदेवतयोर्मध्येऽपि सूर्यस्याग्नौ रात्रौ, अग्ने सूर्ये च दिवा प्रवेश प्रसिद्ध। सयमन प्रातर्दनमिति। प्रतर्दनाख्येन राज्ञा दृष्ट ध्यानमित्यर्थ। जागरकाले व्याहरमाण प्राण किञ्चिदायच्छैव व्याहर्तु पारयति। यदा न व्याहरणप्रसक्ति, तदैव प्राणो यथावदुच्छ्वासनि श्वासौ करोतीति

अथ या अन्या आहुतयोऽन्तवत्यः, ताः कर्ममय्यो हि भवन्ति । तद्ध स्मैतत् पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रुः ॥ ५ ॥

उक्थं ब्रह्मेति ह स्माह शुष्कभृङ्गारः । तत् ऋगित्युपासीत । सर्वाणि हास्मै भूतानि श्रैष्ठ्यायाभ्यर्च्यन्ते । तत् यजुरित्युपासीत । सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते । तत् सामेत्युपासीत । सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते । तत् श्रीरित्युपासीत, तत् यश इत्युपासीत, तत् तेज इत्युपासीत । तद् यथैतत् श्रीमत्तमं यशस्वितमं तेजस्वितममिति शस्त्रेषु भवति, एवं हैव स सर्वेषु भूतेषु श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति, य एवं वेद । तदेतदैष्टिकं कर्ममयमात्मानमध्वर्युः संस्करोति ; तस्मिन् यजुर्मयं प्रवयति ; यजुर्मये ऋङ्मयं

---

सहातद्वा एकस्यान्यत्र हुतत्वम् । स्वापकाले वागादीनां प्राणे विलयश्च प्रसिद्धः । या अन्या आहुतय इति । बाह्यानां सायं प्रातश्च कदाचिदेव भावात् नक्तंदिवं संततत्वाभावात् अन्तवत्त्वं स्पष्टम् । अतिशयितफलत्वाच्चेदमान्तरमग्निहोत्रं श्रेयः । तद्धेति । बाह्याग्निहोत्रात् अस्यातिशयितत्वादित्यर्थः । ऐतरेयेऽपि श्रूयते एवम् । (५)

प्राणादिपञ्चके प्रशस्ततया प्रसिद्धो मुख्यप्राणः शास्त्रेषु अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानरूपेषु प्रशस्तं यदुक्थाख्यं शस्त्रम् तद्रूपेण ऐतरेयादौ श्रुतः । अतः प्राणमेवोक्थमिति गृहीत्वा तत्र ब्रह्मदृष्टिः श्रेष्ठ्यादिफलिका प्रतिपाद्यते उक्थमिति । शुष्कभृङ्गार इति कश्चिदृषिः । अभ्यर्च्यन्ते, युज्यन्ते, संनमन्ते, इति विभिन्नधातुप्रयोगः ऋग्यजुस्सामपदावयवार्थानुगमप्रदर्शनाय । तद् यथैतदिति । प्रसिद्धे हि स्तोत्रशस्त्रे सोमयागाङ्गभूते । प्रगीतमन्त्रसाध्य=गुणिनिष्ठगुणा-

होता ; ऋच्यये साममयमुद्गाता । स एष त्रय्यै विद्याया आत्मा ; एष उ एवैतदिन्द्रस्यात्मा भवति य एवं वेद ॥ ६ ॥

अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति । सर्वजिद्ध स्म कौषीतकिरुद्यन्तमादित्यमुपतिष्ठते—यज्ञोपवीतं कृत्वोदकमानीय त्रिः प्रसिच्योदपात्रम् , 'वर्गोऽसि पाप्मानं मे वृङ्धि' इति । एतयैवाऽऽवृता मध्ये सन्तम् , 'उद्वर्गोऽसि पाप्मानं मे उद्वृङ्धि' इति । एतयैवाऽऽवृताऽस्तं यन्तम् , 'संवर्गोऽसि पाप्मानं मे संवृङ्धि' इति । तद् यदहोरात्राभ्यां पापमकरोत् , सं तद् वृङ्क्ते । तथो एवैवं विद्वान् एतयैवाऽऽवृताऽऽदित्यमुपतिष्ठते, यदहोरात्राभ्यां पापं करोति, सं तद् वृङ्क्ते ॥ ७ ॥

---

मिधानं स्तोत्रम् , अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शास्त्रमिति। तेषु नैरुविधेषु यथा एतत् उक्थं श्रीमत्तत्त्वादिमत् , तथा अयमुपासकः सर्वेषु भूतेषु श्रीमत्तमत्वादिमान् भवतीत्यर्थः । अध्वर्योहोतुरुद्गातुश्च क्रमात् यजुर्वेदर्ग्वेदसामवेदसंबन्धित्वात् तत्तद्विषये यजुर्मयाद्युक्तिः । प्रवयति = प्रकर्षेण संतनोति । (६)

'आदित्यो ह वै बाह्यः प्राण उदयति एष ह्येनं चाक्षुषं प्राणमनुगृह्णानः' (३) इति प्रश्नोपनिषदुक्तरीत्या प्राणादित्यैक्यात् आदित्यविषयकमुपासनमुच्यते अथातः सर्वजित इति । आदित्योपस्थानादीनां वक्ष्यमाणानां सर्वेषामन्ततः प्राणरक्षणार्थत्वाद्वा प्राणाध्याये एतत्सर्वोक्तिरिति ध्येयम् । तत्र वर्गोद्वर्गसंवर्गमन्त्रैः क्रमेण प्रातर्मध्ये सायञ्चादित्योपस्थानमहोरात्रकृतपापवर्जनफलकम् । तद्विषयकं कौषीतक्यनुष्ठानं दर्शयति सर्वजिदिति । सं तद् वृङ्क्ते । कौषीतकिरिति शेषः । अतः शिष्टानुष्ठानात् सर्वैरिदमनुष्ठेयमित्याह तथेति । (७)

अथ मासिमास्यमावास्यायां वृत्तायां पश्चाच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता हरिततृणे वा [चं] प्रत्यस्यति, 'यन्मे सुसीमं हृदयं दिवि चन्द्रमसि श्रितम् । मन्येऽहं मा तद्विद्वांसं माऽहं पुत्र्यमघं रुदम्' इति । न ह्यस्मात् पूर्वा प्रजा प्रैति । इति नु जातपुत्रस्य ॥ अथाजातपुत्रस्य—'आप्यायस्व समेतु ते,' 'सं ते पयांसि समु यन्तु वाजा,' 'यमादित्या अंशुमाप्याययन्ति' इत्येतास्तिस्र ऋचो जपित्वा,

---

'आपोमयः प्राणः' इति प्राणस्याप्मयत्वं श्रुतम् । सोमस्य च तत् प्रसिद्धम् । तथा सोमनामभिः प्राणस्याऽऽमन्त्रणञ्च दृष्टम्, 'बृहन् पाण्डरवासः सोमराजन्' इति । प्राणादित्ययोरैक्यात् सोमस्यादित्याप्याय्यमानत्वाच्च प्राणसोमैक्यं भवितुमर्हति । अतः सोमोपासनमुच्यते । तत्र जातपुत्रस्य स्वमरणात् प्राक् पुत्रामरणफलकं प्रथमम्, अजातपुत्रस्य स्वाप्यायनफलकं द्वितीयम् । पश्चादिति प्रतीच्यामित्यर्थः । इदञ्च शुक्लपक्षे द्वितीयायां चन्द्रकलादर्शनम् । अत एवाद्यत्वेऽपि तादात्विककलादर्शनं स्मृत्याचारसिद्धम् । एतयैवावृतेति । पूर्वोक्तरीत्येत्यर्थः । वैकल्पिकं कर्मान्तरमुपस्थानाङ्गमाह हरिततृणे इति । उदपात्रे तृणद्वयप्रत्यसनं कृत्वा चोपतिष्ठेतेत्यर्थः । 'हरिततृणे वाचं प्रत्यस्यति' इति पाठे तु हरिततृणे स्थितस्सन् वक्ष्यमाणमन्त्ररूपां वाचमुच्चारयेदित्यर्थः । न ह्यस्मात् पूर्वा प्रजा प्रैतीति । एतत्प्रजा एतन्मरणात् प्राक् न म्रियत इत्यर्थः । पूर्वं प्रैतीति प्रयोक्तव्ये पूर्वा प्रैतीति कर्तृविशेषणतया पूर्वादिपदप्रयोगोऽपि श्रुतिशैली । इतिन्वित्यादि । जातपुत्रपुरुषकर्तृकोपस्थानप्रकारोऽयम् । अथाजातपुत्रपुरुषकर्तृकमुपस्थानमुच्यत इत्यर्थः । आप्यायस्वेति प्रतीकत्रयगृहीतमृक्त्रयं तावत्—आप्यायस्व समेतु ते विश्वतः सोम वृष्णियम् ।

'माऽस्माकं प्राणेन प्रजया पशुभिराप्यायिष्ठा, योऽस्मान् द्वेष्टि, यश्च वयं द्विष्म, तस्य प्राणेन प्रजया पशुभिराप्यायस्व' इति । 'ऐन्द्रीमावृतमावर्ते आदित्यस्यावृतमावर्ते' इति दक्षिणं बाहुमन्वावर्तते ॥ ८ ॥

अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता, 'सोमो राजाऽसि विचक्षणः पञ्चमुखोऽसि । प्रजापतिर्ब्राह्मणस्त एकं मुखम्, तेन मुखेन राज्ञोऽत्सि, तेन मुखेन मामन्नादं कुरु । राजा त एकं मुखम्, तेन मुखेन विशोऽत्सि, तेन मुखेन मामन्नादं कुरु । श्येनस्त एकं मुखम्, तेन मुखेन पक्षिणोऽत्सि, तेन मुखेन मामन्नादं कुरु । अग्निष्ट एकं मुखम्, तेनेमं लोकमत्सि, तेन मुखेन मामन्नादं कुरु । त्वयि पञ्चमं मुखम्, तेन मुखेन सर्वाणि भूतान्यत्सि, तेन मुखेन मामन्नादं कुरु । माऽस्माकं प्राणेन प्रजया पशुभिरपक्षेष्ठा । योऽस्मान् द्वेष्टि, यश्च वयं द्विष्मः, तस्य प्राणेन प्रजया पशुभिरपक्षीयस्व' इति । दैवीमावृतमावर्ते आदित्यस्यावृतमन्वावर्ते इति दक्षिणं बाहुमन्वावर्तते ॥९

भरा वाजस्य संगथे ॥ सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥, यमादित्या अंशुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति । तेन नो राजा वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः ॥ इति । ऐन्द्रीमित्यादि । इन्द्रवत् आदित्यवच्च आवर्तमानोऽस्मि स्थिरः इत्यर्थः ।८

शुक्लपक्षप्रथमदृष्टचन्द्रमसोपस्थानमुक्तम् । तत्र पूर्णमायां पूर्णचन्द्रोपस्थानमप्यादित्यफलकमाह अथ पौर्णमास्यामिति । पञ्चमुखोऽसीति । सोमस्य, ब्राह्मणराजश्येनाग्निरूपाणि मुखानि स्वमुखेनेति पञ्च मुखानि । (९)

अथ संवेश्यन् जायायै हृदयमभिमृशेत्, 'यत् ते सुसीमे हृदये श्रितमन्त प्रजापतौ । तेनामृतत्वस्येशाने मा त्वं पुत्र्यमघं निगाः' इति । न ह्यस्मात् पूर्वा प्रजा प्रैतीति ॥ १० ॥

अथ प्रोष्याऽऽयन् पुत्रस्य मूर्धानमभिजिघ्रेत्, 'अङ्गादङ्गात् संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम्' इति ; नामास्य दधाति । 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । तेजो (वेदो) वै पुत्रनामासि स जीव शरदः शतम्' इति ; नामास्य गृह्णाति । अथैनं परिगृह्णाति, 'ये प्रजापति प्रजा पर्यगृह्णात् तदरिष्ट्यै तेन त्वा परिगृह्णाम्यसौ' इति । अथास्य दक्षिणे कर्णे जपति, 'अस्मै प्रयन्धि मघवन्नृजीषिन्' इति । 'इन्द्रश्रेष्ठानि द्रविणानि धेहि' इति सव्ये । 'मा छेत्था मा व्यथिष्ठा शतं शरद आयुषो जीवस्व पुत्र ते नाम्ना मूर्धानमभिजिघ्रामि' इति त्रिरस्य मूर्धानमभिजिघ्रेत् । 'गवां त्वा हिङ्कारेणाभिहिङ्करोमि' इति त्रिरस्य मूर्धानमभिहिङ्कुर्यात् ॥ ११ ॥

अथातो दैव परिमर —एतद्वै ब्रह्म दीप्यते यदग्निर्ज्वलति ; अथैतन्म्रियते, यन्न ज्वलति । तस्यादित्यमेव तेजो गच्छति ; वायुं

---

पर्वं सर्वजितः कौषीतकेरुपासनत्रयमुक्तम् । अथ जायामरणात् प्राक् अपत्यामरणफलं किञ्चिदाह अथ संवेश्यन्निति । संवेश्यन् संवेक्ष्यन्=संगंस्यमानः । (१०)

नामास्य दधातीति । 'जीव शरदः शतम्' इत्येतदनन्तरं पुत्रनामोच्चारयतीत्यर्थः। प्रोषितागतकर्तृकं पुत्रघ्राणादिकमाह अथेति ।(११)

आधिदैविकाध्यात्मिकप्राणविषयिणीं परिमरभावनां परितो द्वेषिमरणफलामाह अथातो दैव इति । (तै) भृगुवल्ल्याम्, 'ब्रह्मणः

प्राणः । एतद्वै ब्रह्म दीप्यते, यदादित्यो दृश्यते ; अथैतन्म्रियते यन्न दृश्यते । तस्य चन्द्रमसमेव तेजो गच्छति ; वायुं प्राणः । एतद्वै ब्रह्म दीप्यते, यच्चन्द्रमा दृश्यते ; अथैतन्म्रियते, यन्न दृश्यते । तस्य विद्युतमेव तेजो गच्छति ; वायुं प्राण । एतद्वै ब्रह्म दीप्यते, यद् विद्युद् विद्योतते ; अथैतन्म्रियते, यन्न विद्योतते । तस्या दिश एव (वायुमेव) तेजो गच्छति ; वायुं प्राण । ता वा एताः सर्वा देवता वायुमेव प्रविश्य वायौ मृत्वा न मूर्च्छन्ते ; तस्मादेव पुनरुदीरत इत्यधिदैवतम् । अथाध्यात्मम् — ॥ १२ ॥

एतद्वै ब्रह्म दीप्यते, यद्वाचा वदति । अथैतन्म्रियते, यन्न वदति । तस्य चक्षुरेव तेजो गच्छति ; प्राणं प्राणः । एतद्वै ब्रह्म दीप्यते, यच्चक्षुषा पश्यति । अथैतन्म्रियते, यन्न पश्यति । तस्य श्रोत्रमेव तेजो गच्छति ; प्राणं प्राण । एतद्वै ब्रह्म दीप्यते, यच्छ्रोत्रेण शृणोति । अथैतन्म्रियते, यन्न शृणोति । तस्य मन एव तेजो गच्छति; प्राणं प्राण । एतद्वै ब्रह्म दीप्यते, यन्मनसा ध्यायति । अथैतन्म्रियते,

---

परिमरः' इत्यत्राप्ययमभूतोऽर्थः परिष्कारे द्रष्टव्यः । वायुं प्राण इति । ज्वलनाद्यभावरूपमरणात् पूर्वम् अग्न्यादीनां ज्वलनाद्युपयोगितया स्थितः प्राणो मरणानन्तरं वायौ लीन इत्यर्थः । वायुदेवता अग्न्यादीं एनं प्राणनव्यापारं तदा त्यजतीत्युक्तं भवति । उदीरते = उद्गच्छन्ति । ईर गतौ । वायुवचनम् । एवमधिदैवतमग्न्यादित्यचन्द्रमोविद्युतां विलय उक्तः । वाय्वधीनं ब्रह्म तद्व्यापारश्च ।

अथाध्यात्मं वाक्चक्षुःश्रोत्रमनसां प्राणे लय उच्यते अथाध्यात्ममिति । वाचा वक्तुमशक्यमपि वदति । द्रष्टुमशक्यमपि

यन्न ध्यायति ; तस्य प्राणमेव तेजो गच्छति ; प्राणं प्राणः । ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे मृत्वा न मूर्च्छन्ते ; तस्मादेव पुनरुदीरते । तद् यदिह वा एवं विद्वांसमुभौ पर्वतौ अभि प्रर्वेतयातां दक्षिणश्चोत्तरश्च तुस्तूर्षमाणौ, न हनं स्तृन्वीयाताम् । अथ य एनं द्विषन्ति, यांश्च स्वयं द्वेष्टि, त एवैन परिम्रियन्ते ॥ १३ ॥

अथातो निःश्रेयसादानम् – एता ह वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुः । तद्धाप्राणत् शुष्कं दारुभूतं शिश्ये । अथैनद् वाक् प्रविवेश । तद् वाचा वदत् शिश्य एव । अथैनच्चक्षुः प्रविवेश । तद् वाचा वदत् चक्षुषा पश्यत् शिश्य एव । अथैनच्छ्रोत्रं प्रविवेश । तद्वाचा वदत् चक्षुषा पश्यच्छ्रोत्रेण शृण्वत् शिश्य एव । अथैनन्मनः प्रविवेश । तद्वाचा वदत् चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा

---

शृणोति, अप्राप्तश्रवणमप्यन्तश्चिन्तयतीत्याशयेन वागादितेजसां चक्षुरादिषु लयकथनम् । प्राणं प्राण इति । तत्तदिन्द्रियप्रेरणव्यापारः प्राणकृतः तदा पृथङ् न तिष्ठतीति यावत् । (१३)

छान्दोग्यबृहदारण्यकादिप्रसिद्धः प्राणप्राधान्यवाद इहापि क्रियते । एतद्विज्ञानफलञ्च देववत् अमृतत्वम् । "सर्वाभेदादन्यत्रेमे" इति सूत्रे अन्वेति इदं कौषीतकिप्रकरणमेव गृहीत्वा छान्दोग्य-बृहदारण्यकश्रुतविद्यैक्यं विचार्य स्थापितम् । परन्तु भावप्रकाशिका-शारीरकशास्त्रार्थदीपिकादौ परानुरोधेनैव वाक्यमिदं कौषीतकि-ब्राह्मणदशमाध्यायगतत्वेन निर्दिष्टमस्ति । तन्नूनं कौषीतकिब्राह्मण-पूर्वभागमेलनेन स्यात् । निःश्रेयसादानम् प्राणादिदेवतानां मध्ये प्राणदेवतया श्रैष्ठ्यस्वीकरणम् । उपवर्ण्यत इति शेषः । अहंश्रेयसे स्वस्येतरापेक्षयोत्कर्षमुद्दिश्य । तद्धाप्राणदिति । तत् शरीरं सर्वासां

ध्यायच्छिश्य एव। अथैनत् प्राणः प्रविवेश। तत् तत एव समुत्तस्थौ। ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा प्राणमेव प्रज्ञात्मानमभिसंभूय सहैवैतैः सर्वैरस्माच्छरीरादुत्क्रामति। स वायुमविष्ट (विष्ट) आकाशात्मा स्वरेति। स तद्गच्छति, यत्रैते देवाः, तत् प्राप्य यदमृता देवाः तदमृतो भवति; य एवं वेद ॥ १४ ॥

अथातः पितापुत्रीयम्, संप्रदानमिति चाचक्षते। पिता पुत्रं प्रेष्यन् आह्वयति। नवैस्तृणैरगारं संस्तीर्याग्निमुपसमाधायोदकुम्भं सपात्र मुपनिधायाहतेन वाससा संप्रच्छन्नः पिता शेते। एत्य पुत्र उपरिष्टादभिनिपद्यत इन्द्रियैरिन्द्रियाणि संस्पृश्य। अपिवाऽस्याभिमुखत एवासीत।

निष्क्रान्तत्वात् निर्वाणं शिश्ये इति। शिश्य पपेति। मुख्यप्राणस्य पुष्कलप्रवेशाभावात् वागादिप्रवेशाधीनव्याहारादिसत्त्वेऽपि नोत्थानसमर्थमासीदित्यर्थः। न च सर्वथा मुख्यप्राणसंबन्धाभावे वागादिव्यापार एव कथमिति शङ्क्यम्–सर्वथा प्राणसंबन्धाभावे शवत्वप्रसङ्गात् पुष्कलतत्प्रवेशाभावस्यैवेष्टत्वात्। प्रज्ञात्मानम् स्वकीयप्रज्ञारूपव्यापारनिर्वाहकम्; यद्वा प्रज्ञजीवरूपनिर्वाहकविशिष्टम्। एतैः सर्वैः दर्शनादिव्यापारैः सह। आकाशात्मानः इति, धूमादिमार्गे आकाशस्य निविष्टत्वात्; अवकाशाभावे गमनायोगेन तदपेक्षत्वाद्वा। (१४)

'अथातः संप्रत्तिः' इति बृहदारण्यकोक्तं संप्रत्तिरूपं प्रस्तौति अथातः पितापुत्रीयमिति। एत्येति। पितृसमीपमागत्येत्यर्थः। उपरिष्टादभिनिपद्यते। शयानेन पित्रोत्तानमुखेन स्वदर्शनानुकूलं समीपेऽवनतस्तिष्ठतीत्यर्थः। पक्षान्तरमाह अपिवेति। उपासिगदः

त्रिशीर्षाणं त्वाष्ट्रमहनम् ॥९॥ अरुन्मुखान् यतीन् सालावृकेभ्य प्रायच्छम् ॥ १० ॥ बह्वीः सन्धा अतिक्रम्य दिवि प्राह्लादीनतृणहम्, अन्तरिक्षे पौलोमान्, पृथिव्यां कालकञ्जान् ॥ ११ ॥

तस्य मे तत्र न लोम चामीयत ॥ १२ ॥

---

तत्कतुन्यायेन स्वोपासकस्य पापाश्लेषं वक्तुं स्वस्य पापाश्लेषं दर्शयति **त्रिशीर्षाणम्** अहनम् । त्रिशिरस्कं त्वष्टृपुत्रं विश्वरूपं हतवानस्मि ॥

**अरुन्मुखान्** प्रायच्छम् । रौतीति रुत् वेद । रुत् मुखे न विद्यते येषां ते अरुन्मुखाः । वेदान्तविमुखान् यतीन् वनश्वविशेषेभ्य खादनाय प्रायच्छम् ॥ १० ॥

**बह्वीः** **अतृणहम्** = न हनिष्यामीति कृता बह्वीः प्रतिज्ञाः अतिक्रम्य दिवि वर्तमानान् प्रह्लादपुत्रान् अतृणहम् । 'तृण (तृहिर ?) हिंसायाम्, इति हि धातुः । अन्तरिक्षे **पौलोमान्** पुलोमसुतान्, पृथिव्यां कालकञ्जाख्यासुरांश्च हिंसितवानस्मि ॥ ११ ॥

---

स्पष्टनिर्देशोऽस्तु इति चेन्न—स्वात्मप्रशंसापरमात्मविशेष्यकोपासनस्य विवक्षितस्य तत्रालाभात् । न च, 'स म आत्मेति विद्यात्' इति वक्ष्यमाणपरमात्मोपासनैकदेशभूतं मामिति स्वात्मोपासनमात्रमेवात्रेन्द्रेणोच्यतामिति वाच्यम्—तन्मात्रोपासनस्य हिततमत्वायोगात् ॥

त्रिशीर्षाणं त्वाष्ट्रमहनमिति । विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयोऽसुराणाम् । तस्य पुरोहितस्य ब्राह्मणस्य वधे ब्रह्महत्यादोषेण भाव्यम् । तदश्लेषो विद्याबलात् ॥ ९ ॥

रौतीति । वक्ति मानान्तरागोचरपरमार्थादिकमिति रौतीत्यस्यार्थः । किमिति यतीनां साधूनां मारणमित्यत्र अरुन्मुखत्वादिति हेतुवर्णनमिदम् । पापप्रयोजककारस्तु यतिवधमेव ॥ १० ॥

आयुः प्राणः । प्राणो वा आयुः, प्राण उ वा अमृतम् । यावद्धि अस्मिन् शरीरे प्राणो वसति, तावदायुः । प्राणेन ह्येवामुष्मिन् लोकेऽमृतत्वमाप्नोति ॥ १५ ॥

---

विशेषरूपप्राणविशिष्टोपासनमाह स **होवाच...उपास्स्व** प्रज्ञात्मा आत्मा प्रज्ञात्मा जीवः । जीवशरीरक इत्यर्थः । जीवशरीरकोऽहम् । **प्राणोऽस्मि**—प्राणशरीरकोऽहमस्मि । तादृशं प्राणशरीरकं माम् आयुरमृतमित्युपास्स्व ॥ १४ ॥

कथं प्राणशरीरकस्यायुष्ट्वामृतत्वे इत्याशङ्क्याह **आयुः... आप्नोति ।** शरीरे प्राणस्थितेरुच्छ्वासादिलक्षणायुस्साधनत्वादायुः प्राणः । लोकान्तरे चिरस्थायित्वरूपामृतत्वप्राप्तेः प्राणाधीनोपायानुष्ठानसाध्यत्वात् प्राणस्यामृतत्वम् । अत आयुष्ट्वामृतत्वे प्राणस्योपपद्येते । तद्द्वारा परमात्मनश्चोपपद्येते आयुष्ट्वामृतत्वाभ्यां प्राणशरीरकब्रह्मण उपासनमुपपद्यते । यद्वा व्यासार्योक्तरीत्या न मामायुरिति वाक्ये मामिति

---

आयुष्ट्वामृतत्वयोः प्राणद्वारैवोपास्ये समन्वयस्यात्र स्पष्टमवगमात् तथैव व्याख्याय व्यासार्यवर्णितमप्याह यद्वेति । अस्मिन् पक्षे, 'प्राणेन ह्यमुष्मिन् लोकेऽमृतत्वमाप्नोति' इति वचनम्, अमृतमित्युपास्स्वेत्युक्तामृतत्वोपपादनपरं नेष्टम् । किंतु आयुः प्राण इत्युक्तायुष्ट्वोपपादनशेषतयैव प्राणे आयुष्ट्वामृतत्वयोः कथनपरं ग्राह्यम् । मुख्यप्राणस्य स्वपरिकरभूतेन्द्रियैः सह ऐश्वर्यरूपैहिकामुष्मिकसर्वपुरुषार्थप्रतिलम्भनायामुत्राप्यनुवर्तमानत्वात् प्राणेनामृतत्वमाप्नोतीत्युच्यते । मोक्षे प्राणस्याननुवृत्तेः जीवस्यैव तत्र भोग्यभोक्तृरूपेण स्थितेः प्रज्ञात्मेत्युक्तप्रज्ञारूपजीवग्रहणेन प्रज्ञया सत्यं सङ्कल्पमेती-

प्रज्ञया सत्य सङ्कल्पमेति ॥ १६ ॥ स यो मामायुरमृतमित्युपास्ते सर्वमायुरस्मिन् लोक एति। आप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके ॥१७॥ तद्धैक आहु एकभूय वै प्राणा गच्छन्तीति ॥ १८ ॥

---

जीवविशिष्टोऽच्यते आयुरिति प्राणविशिष्टता । 'आयु प्राण' इति अनन्तरमेव श्रवणात् आयुरमृतमिति स्वेन रूपेणावस्थिति । अत (एवश्च) अस्मिन्नेव वाक्ये स्वेन रूपेण चिदचिद्विशिष्टतया च त्रिविधोपासन विधीयते । अतो नोपासनात्रयविधिकृतवाक्यभेद इति द्रष्टव्यम् ॥१५॥

प्रज्ञात्मत्वविशिष्टोपासनस्य फलमाह प्रज्ञया एति । अपहत पाप्मत्वादिगुणाष्टकविशिष्ट [स्व ?] लक्षण ब्र(ब्रा ?)ह्मरूपमित्यर्थ ॥

आयुरमृतत्वगुणविशिष्टप्राणोपासनस्य फलमाह—स यो लोके । अक्षिति चिरकालावस्थायित्वम् । ततश्च मधुविद्याया वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तिवत् अस्या अपि विद्यायाश्चिरायुष्पूर्वक चिरकालस्वर्गप्राप्तिपूर्वकब्रह्मप्राप्ति फलमित्युक्त भवति ॥ १७ ॥

उपास्यमानस्य प्राणस्य प्राणान्तरापेक्षया श्रैष्ठ्य वक्तु पूर्वपक्षमाह तद्धैके गच्छन्तीति । मुख्यप्राणश्चेतराणि चेन्द्रियाणि एकैकस्मिन्

---

त्युक्तम् । वाक्यभेद इति । 'मामेव विजानीहि' इत्यत्र चिद्विशिष्टो पासनविधि इह प्राणविशिष्टोपासनविधिरिति उपासनाना पृथक्पृथग्विधिनत्यर्थ ॥ १५ ॥

युगपत् सर्वेन्द्रियकार्यादर्शनात् पृथक्पृथगिन्द्रियाणा स्वस्व कार्ये असामर्थ्यावधारणात् एकेनेन्द्रियेण कार्ये क्रियमाणे अन्येन्द्रियाणि तत्र सहकारीणि भवन्ति, न पृथक् कार्ये क्षमन्त इति सर्वस्य कार्यस्य सर्वाधीनत्वात् प्राणानां समबलत्वमेवेति केषाञ्चित् पक्ष

न हि कश्चन शक्नुयात् सकृद्वाचा नाम प्रज्ञापयितुम्, चक्षुषा रूपम्, श्रोत्रेण [श्रोतु] शब्दम्, मनसा ध्यान(तु)मिति ॥ १९ ॥

---

कार्ये कर्तव्ये परस्परसाह्यलक्षणमेकभावं यान्ति । अतो मुख्यप्राणस्य प्राणान्तरसाम्यमेवेति केचिदाहुरित्यर्थः ॥ १८ ॥

तत्रोपपत्तिरुच्यते न हि... ध्यातुमिति । न हीन्द्रियजातं युगपदेव स्वकार्यं जनयितुमीष्ट इत्यर्थः ॥ १९ ॥

---

स्वयमिन्द्र उपवर्ण्य, एवमु हैतदिति तदिन्द्र उरीकृत्यैवोपरि मुख्यप्राणस्य प्राबल्यं प्रकारान्तरेणाचष्ट। सोऽयमूरीकारः किमेकेन्द्रियकार्यकाले इन्द्रियान्तरकार्याभावमात्रे, उत तत्तदिन्द्रियस्य स्वकार्ये अन्येन्द्रियसहकारित्वेऽपीति विमृश्यमेतत्। अर्थं तावत् चक्षुरादिकं प्रति श्रोत्रादीनां सहकारित्वकल्पनम्। मनसः सर्वेन्द्रियसहकारित्वात्, चक्षुःकार्यकाले मनः तस्यैव सहकारि भवतीति मनोरूपसहकारिविरहादेव श्रोत्रादिकं स्वकार्ये असमर्थमिति सर्वदर्शनसरण्यैवोपपत्तेः। वक्ष्यति चेहापि, 'प्रज्ञया वाचं समारुह्य,' 'न हि प्रज्ञापेता वाङ् नाम किञ्चन प्रज्ञापयेत्' इत्येवं मनसः सहकारित्वम्। किञ्च मुख्यप्राणस्य कार्ये इन्द्रियरूपप्राणानां सहकारित्वमसंभवि; तत्कार्योच्छ्वासनिश्वासादिना सह युगपदेव चक्षुरादिकार्यदर्शनेन तत्कार्ये एतदुपेक्षयाभावात्। एवं चक्षुराद्यभावे प्राणनव्यापारसद्भावस्य वक्ष्यमाणत्वात् मुख्यप्राणव्यापारः प्राणान्तरनिरपेक्ष एव। एवं बधिरादेरपि दर्शनादिकार्यासिद्धेः श्रोत्रादेः चक्षुरादिसहकारित्वं दुर्वचमेव। अतः, 'चक्षुः पश्यत् सर्वे प्राणा अनुपश्यन्ति' इत्यादिवाक्यस्य नेन्द्रियान्तरसहकारित्वे तात्पर्यम्। किंतु एककार्यकाले अन्येषामव्यापृतत्वमात्रे। सर्वथा मुख्यप्राणस्येतरसाम्यमितो न सिद्ध्यति चेति। अत एव पूर्वपक्षमाहेत्यवतारिकाया भाषितम्। अतो नैव केषाञ्चिद् वास्तवः पक्ष इति ॥ १८ ॥

एकभूय वै प्राणा [भूत्वा] एकैकं सर्वाण्ये[वै]तानि प्रज्ञापयन्ति ॥
वाच वदन्तीं (तीं) सर्वे प्राणा अनुवदन्ति ॥ २१ ॥

चक्षु पश्यत् सर्वे प्राणा अनुपश्यन्ति । श्रोत्रं शृण्वत् सर्वे प्राणा अनुशृण्वन्ति । मनो ध्यायत् सर्व प्राणा अनुध्यायन्ति । प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्तीति । एवमुहै [वै] तदिति हेन्द्र उवाच ॥ २२ ॥

अस्ति त्वेव प्राणानां निःश्रेयसम् ॥ २३ ॥

जीवति वागपेत मूकान् हि पश्याम ॥ २४ ॥

जीवति चक्षुरपेत , अन्धान् हि पश्याम । जीवति श्रोत्रापेत , बधिरान् हि पश्याम । जीवति बाहुच्छिन्न , जीवति उरुच्छिन्न इति ; एव हि पश्याम ॥ २५ ॥

---

फलितमाह एकभूय प्रज्ञापयन्ति । तस्मात् सर्वे प्राणा एकत्व प्राप्य एकैक [भूत्वा ?] सर्वाण्येतानि नामरूपशब्दादीनि प्रज्ञापयन्ति ॥

तदेव प्रपञ्चयति वाच अनुवदन्ति । सहायतया तिष्ठन्तीत्यर्थ । एवमुत्तरत्रापि ॥ २१-२२ ॥

अथापि मुख्यप्राणस्य विशेष दर्शयति अस्ति त्वेव । प्राणाना मध्ये मुख्यप्राणस्य श्रैष्ठ्यमस्तीत्यर्थ ॥ २३ ॥

तदेव प्रपञ्चयति जीवति । वागिन्द्रियादिरहितेऽपि शरीर धारणमस्ति , मूकाना दर्शनात् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ २४ ॥

जीवति बाहुच्छिन्नो जीवत्युरुच्छिन्न इति । एव हि पश्याम ।

---

एतद्विद्यान्ते, 'स म आत्मेति विद्यात्' इति असच्छब्दप्रयोगात् इत्थमाऽपि विद्या इन्द्रोक्तिरूपैवेति स्पष्टम् । एवञ्च सति इह मध्ये इति हेन्द्र उवाचेति श्रुतिलेखनम्, मुख्यप्राणश्रैष्ठ्य वदन् इन्द्रोऽपीद साम्यमापदर्शयाचकार हेत्याश्चर्यप्रकटनाय ॥ २२ ॥

अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति ॥ २६॥
तस्मादेतदेवोक्थ (त्थ) मुपासीत ॥ २७ ॥
यो वै प्राणः सा प्रज्ञा । या वै प्रज्ञा, स प्राणः । सह ह्येतावस्मिन्

---

छिन्नोरस्को जीवति, छिन्नबाहुर्जीवतीति । एवं ह्यनुभूयते ॥ २५ ॥

अथ खलु उत्थापयति । अथखलुशब्दः प्रसिद्धौ । मुख्यप्राण एव प्रज्ञात्मा । प्रज्ञाशब्दोऽत्र जीवपरः । स आत्मा सहायो यस्य स प्रज्ञात्मा । जीवसहायको मुख्यप्राण एव मृतप्रायं शयानं शरीरं परितो गृहीत्वा उत्थापयति ॥ २६ ॥

तस्मात् उपासीत । तस्मादितरेन्द्रियाणि परित्यज्य मुख्यप्राणमेवोत्थापयितृत्वगुणविशिष्टमुपासीत ॥ २७ ॥

यो वै सहोत्क्रामतः । अत्रापि प्रज्ञाशब्देन जीव उच्यते । जीवप्राणावस्मिन् शरीरे सह वसतः, सहोत्क्रामतः । ततो

---

अथ खल्वित्यादि । एवं वागाद्यभावकालेऽपि शरीरस्य सम्यक् व्यापृतत्वदर्शनात् प्राणापेतत्वप्रसक्तिकाले शरीरपातस्यैव दर्शनाच्च प्राण एव शरीरं परिगृह्योत्थापयति । तदिदं श्रुत्यन्तरेष्वपि प्रसिद्धं वागादिभिरप्युपेलब्धेति खलुशब्देन सूच्यते । ननिन्द्रियान्तराभाव काल इव प्राणाभावकाले जीवसत्तामात्रेण शरीरस्य व्यापृतत्वसम्भवात् प्राणोऽपि न प्रधानमिति शङ्कानुन्मेषाय प्राणजीवयोः पृथग्भावाभावं वक्तुं प्राणस्य प्रज्ञात्मामेदारोपणम् ॥ २६ ॥

एतद्विवरणमेव यो वै प्राण इत्यादिना । यादृशः प्राणः, तादृशो जीव इति परमार्थः । तद् विम्रियते सह ह्येतावितिति । जीवस्य वासवत्त्वे प्राणोऽपि वासवान् । एकस्योत्क्रमवत्त्वेऽन्योऽप्युत्क्रमवान् । अतः प्राणमात्राभावकालो दुर्वच इति भावः । न केवलमेतत्, प्राण-

शरीरे वसत , सहोत्क्रामत· ॥ २८ ॥

तस्यैषैव दृष्टि एतद्विजानाति (एतद्विज्ञानम्) ॥ २९ ॥

हेतो जीव एव प्राण , प्राण एव जीव , उभावप्येककार्यकरा वित्यर्थ । अत परमात्मन प्राणशरीरकत्वेन जीवशरीरकत्वेन चानुसन्धान युक्तमिति भाव ॥ २८ ॥

तस्यैषैव विजानाति । तस्य मुख्यप्राणस्य ज्ञातृरूप आत्मा दृष्टिः दर्शनसाधनम् । जडस्य प्राणस्य ज्ञातृरूपजीवसाहित्यात् एवोत्थापनादिकार्यकरत्वादिति भाव ॥ २९ ॥

---

जीवयोरुभयोरपि सविषयेन्द्रियैकीभावास्पदत्वस्याविशिष्टत्वादपि साम्यमिति ॥ २८ ॥

एव प्रधानजीवाभिन्नतया निरीक्ष्ये प्राणे कथ नोत्कर्ष इति व्युत्पादयितुम् तस्यैषैव दृष्टिरित्याद्यारम्भ । एतद्विजानातीत्यस्य, यदेतत् जीवतत्त्व विज्ञानवत् एतदेव तस्य दृष्टि. दर्शनसाधकमित्यर्थोऽभिमत । अत्र वागाद्यप्ययकालेऽपि प्राणस्यानप्ययेन स्थितिविषये इद वक्ष्यमाणमेक निदर्शनमिति तस्यैषैव दृष्टिरिति वाक्येनो च्यते । तदेव पुनर्विव्रियते एतद् विज्ञानमिति । विजानातीत्येतस्थाने विज्ञानमिति पाठस्यैव सम्प्रति दर्शनात् । निदर्शनमित्यर्थे प्रज्ञानमिति पदप्रयोगस्य न्यायभाष्यादौ दृष्टत्वात् दृष्टिरित्यस्य विज्ञानमिति पर्यायान्तरेण विवरणम् । प्राणस्यानप्ययेन स्थितिविषये मूर्छारूपनिदर्शनान्तर वक्तु पुन , तस्यैषैव सिद्धिरेतद्विज्ञानमिति वाक्यारम्भ । तदुपरि तस्यैषैव दृष्टिरिति वाक्य तु कोशान्तरेषु नोपलभ्यते । भाष्येऽपि तत्पाठस्थितौ न किञ्चिद् गमकम् । पूर्णमूलखण्डग्रहणपूर्व प्रकाशिकाया क्रियमाणायाम्, तादृशात् तालकोशात मूलभाग पृथक्कृत्य व्याख्याभागमात्र प्रतीकेनापि रहित

यत्रैतत्पुरुषः सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति ॥ ३० ॥

तदैनं वाक् सर्वैर्नामभिः सहाप्येति ॥ ३१ ॥ चक्षुः सर्वै रूपैः

---

यत्र....भवति । यत्र यदा एतत्पुरुषः एष पुरुषः सुप्तस्सन् न कञ्चन स्वप्नं पश्यति, अथ-तदेत्यर्थ.—अस्मिन् प्राणे प्राणशरीरके परमात्मनि अयं सुप्तः पुरुषः एकधा भवति । एकधाभावप्रकारश्चोत्तराध्याये वक्ष्यते ॥ ३० ॥

तदैनं... सहाप्येति । परमात्मनैकीभूते जीवे स्वकार्येण

---

पृथक्छिन्नवेदस्य मुद्रयद्भिः तस्यैषैव दृष्टिरित्यंशस्य मूलत्वकल्पनेन अयथायथं मुद्रणं कृतम् । भाष्ये तु तस्यैषैव सिद्धिरेतद्विज्ञानमिति मूलवाक्यं व्याख्याय तदिदं पूर्वोक्तस्य तस्यैषैव दृष्टिरेतद्विजानातीति वाक्यस्य पुनर्वचनपरमिति बोधयितुं प्रवृत्तमिति । सुषुप्तौ मुख्यप्राणमात्रस्योच्छ्वासनिश्वासरूपेणावस्थितेः प्रत्यक्षत्वात् मूर्च्छायामपि सूक्ष्मरूपेण तत्स्थितेरौष्ण्यादिना गृह्यमाणत्वात् उभयोर्निदर्शनत्वम् । सुषुप्ताविव मूर्च्छायां प्राणस्य विस्पष्टदर्शनाभावादाक्षेपतः सिद्धिमभिप्रेत्य दृष्टिरित्यनुक्त्वा सिद्धिरित्युक्तिः। एतद्रीत्या उत्क्रान्तिकाले मुख्यप्राणे इतरप्राणाप्ययस्य शास्त्रैकवेद्यत्वात् तत्र (४१) तस्यैषैव दृष्टिरित्याद्यनुक्तिः । एवमर्थवर्णनसंभवेऽपि विजानातीति पाठमवलम्ब्य भाष्येऽन्यथार्थवर्णनमिति ध्येयम् । एतद्विजानातीति पाठेऽपि, 'तस्यैषा दृष्टिः यत्रैतदस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाति' इति(३.१३)छान्दोग्यवाक्य इवोक्तरीत्याऽर्थवर्णनं युक्तम्, एतद्विजानातीत्यस्य अनन्तरवाक्यवक्ष्यमाणं विजानातीति यत्, एषैव तस्य दृष्टिरिति व्याख्यासंभवात् ।

वक्ष्यत इति । व्याख्यास्यत इत्यर्थः ॥ ३० ॥

सहाप्येति ॥ ३२ ॥ श्रोत्रं सर्वैः शब्दैः सहाप्येति । मनः सर्वैर्ध्यानैः सहाप्येति ॥ ३३ ॥

स यदा प्रतिबुध्यते—यथाऽग्नेः [ज्वलतो] विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते ; प्राणेभ्यो देवाः; देवेभ्यो लोकाः ॥ ३४ ॥

तस्यैषैव सिद्धिः ॥ ३५ ॥ एतद्विज्ञानम् ॥ ३६ ॥
[तस्यैषैव दृष्टिः ॥] (?)

---

नामाभिलपनेन सह वागिन्द्रियं लीनं भवतीत्यर्थः ॥ ३१ ॥

चक्षुः....अप्येति । अत्र रूपशब्दो रूपज्ञानौपयिकव्यापारपरः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ३२ ॥ श्रोत्रं अप्येति ॥ ध्यानैः ध्यानौपयिकव्यापारैरित्यर्थः । शिष्टं स्पष्टम् ॥ ३३ ॥ स यदा.... लोकाः । प्राणाः जीवाः, देवाः इन्द्रियाणि, लोकाः ज्ञानानि ॥

तस्यैषैव सिद्धिः तस्य एवम्भूतस्य मुख्यप्राणस्य सिद्धिः कार्यसाधकम् एतद्विज्ञानम् एतस्य जीवस्य यत् विज्ञानम्, तदेव साधकम् । अथवा विज्ञानलक्षणमेतदात्मतत्त्व (त्मतत्त्वं ?) साधकमित्यर्थः । प्राणजीवौ एकतामापन्नौ एककार्यसाधकाविति यावत् । "तस्यैषैव दृष्टिः एतद्विजानाति" इत्युक्त एवार्थोऽनेनापि वाक्येन दार्ढ्यायोक्तः ॥३६

---

प्राणाः जीवा इति । 'देवाः श्रद्धां जुह्वति' इत्यादौ देवशब्दस्येन्द्रियेषु प्रयोगप्रसिद्धेः, अपौनरुक्त्याय प्राणा इति इन्द्रियग्रहणायोगात्, अग्निविस्फुलिङ्गसादृश्यस्य परमात्मजीवात्मनोः आत्मनः प्राणा इत्यनेनोक्तौ सामञ्जस्यात्, भूमविद्यायाम्, 'आत्मतः प्राण आत्मत आशा' इति प्राणपदेन जीवग्रहणदर्शनाच्चैवमर्थो वर्णितः ।

यत्रैतत्पुरुष आर्तो मरिष्यन् आबल्यं न्येति (स) मोहं न्येति, तदाहुः उदक्रमीच्चित्तम्। न शृणोति ; न पश्यति, न वाचो वदति— अथास्मिन् प्राण एवैकधा भवति ॥ ३७ ॥

तदेनं वाक् सर्वैर्नामभिः सहाप्येति ॥ ३८ ॥

चक्षुः सर्वैः रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः सहाप्येति। स यदा प्रतिबुध्यते ॥ ३९ ॥

यथाऽग्नेः [ज्वलतो] विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवाः, देवेभ्यो लोकाः॥

---

सुप्तौ मुख्यप्राणस्येतरप्राणाप्ययोद्गमनापादानहेतुत्वमुक्त्वा मूर्च्छायामपि तदाह यत्रैतत्...एकधा भवति। यदा एष पुरुषः व्याध्यादिना पीडितो मरिष्यन् आबल्यम्–अबलस्य भावं आबल्यम् बलराहित्यं न्येति नितरामेति गच्छति मोहं मूर्च्छां न्येति प्राप्नोति, तदा समीपवर्तिन आहुः, चित्तमुदक्रमीत् इति। मनः निलीनमित्यर्थः। तत्र हेतुः न शृणोति न पश्यति न वाचा वदतीति। अथ तदा *अस्मिन् प्राणे प्राणशरीरके परमात्मनि ऐकध्यं भवतीत्यर्थः* ॥३७-३८

स यदा प्रतिबुध्यते। आयुश्शेषोपौषधवशादित्यर्थः ॥ ३९ ॥

*उत्क्रान्तावपि मुख्यप्राणस्य सर्वोपजीव्यतामाह यथाग्नेः...लोकाः॥*

---

अन्यथा तु प्राणपदेनेन्द्रियग्रहणम्, देवपदेन तदधिष्ठातृदेवताग्रहणं तत्कार्यग्रहणं वा, लोकपदेन इन्द्रियकार्यग्रहणं विषयग्रहणं चेति वक्तव्यम्। विमृष्टमिदं श्रुतप्रकाशिकायाम्। एकपुरुषप्रतिबोधवर्णनार्थे वाक्ये बहुजीवविप्रतिष्ठानवर्णनं न रुचिरमिति चेत्–अस्तु कोऽप्यर्थः। किमनेन मुख्यप्रमेयबाधनप्रसङ्गरहितेन ॥ ३५ ॥

इत्युक्त एवार्थ इति। इति पूर्ववाक्याभ्यामुक्त एवार्थः

स यदाऽस्माच्छरीरादुत्क्रामति—

वागस्मात् सर्वाणि नामान्यभिविसृजते ॥४१॥ वाचा सर्वाणि नामान्याप्नोति ॥ ४२ ॥ [स प्राणो वाचा सर्वाणि नामान्याप्नोति] (?)

घ्राणोऽस्मात् सर्वान् गन्धानभिविसृजते । घ्राणेन सर्वान् गन्धानाप्नोति ॥ ४३ ॥

चक्षुरस्मात् सर्वाणि रूपाण्यभिविसृजते । चक्षुषा सर्वाणि रूपाण्याप्नोति । श्रोत्रमस्मात् सर्वान् शब्दानभिविसृजते । श्रोत्रेण सर्वान् शब्दानाप्नोति । मनोऽस्मात् सर्वाणि ध्याना (ता) न्यभिविसृजते । मनसा सर्वाणि ध्याना (ता) न्याप्नोति ।

सैषा प्राणेन सर्वाप्तिः ॥ ४४ ॥

---

स यदा अभिविसृजते । स प्राणः यदाऽस्माच्छरीरात् उत्क्रामति, तदा वागिन्द्रियमेतच्छरीरप्रयुक्तनामाद्यभिलपनं त्यजति ॥

वाचा सर्वाणि नामान्याप्नोति । यत्र प्राणः स्वयं तिष्ठति, तत्रैव शरीरे स्वोपकरणभूतवागिन्द्रियेण सर्वनामाभिलपनरूपं व्यवहारं करोति । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ४२ ॥

घ्राणोऽस्मात् । घ्राणेन सर्वान् गन्धानाप्नोति । घ्राणजन्यज्ञानेन सर्वान् गन्धान् विषयीकरोतीत्यर्थः ॥ ४३ ॥

चक्षुः आप्नोति । सैषा प्राणेन सर्वाप्तिः । सर्वेषां विषयाणां

---

इत्यर्थः । एकोनत्रिंशवाक्ये सर्वं द्रष्टव्यम् ॥ ३६ ॥

वागस्मादिति । पूर्वम् अस्माच्छरीरादिति शरीरस्यैव अस्मादित्युक्त्या इदमप्यस्मात्पदं तत्परमित्यभिसंधाय एतच्छरीरप्रयुक्तेत्युक्तम् । अन्यथा प्राणोऽपि तदर्थः स्यात् । अभिविसृजते अभितस्त्यजति; न सन्यापारे क्षमत इत्यर्थः ॥ ४१ ॥

एवं मुख्यप्राणे सत्येव सर्वेषां कार्यक्षमत्वात् मुख्यप्राणेनैव सर्वमाप्यत इति प्राणप्राधान्यस्योपसंहारः सैषा प्राणेन सर्वाप्तिरिति ॥

यो वै प्राणः सा प्रज्ञा । या वै प्रज्ञा स प्राणः । सह ह्येतावस्मिन् शरीरे वसतः, सहोत्क्रामतः ॥ ४५ ॥

अथ खलु यथा प्रज्ञाया सर्वाणि भूतान्येकीभवन्ति, तद् व्याख्यास्याम —

वागेवास्या एकमङ्गमुदूढम्, तस्यै (स्यै) नाम पुरस्तात्(?) प्रतिविहिता भूतमात्रा ॥ ४६ ॥

---

प्राणाधीनेन्द्रियजन्यज्ञानविषयत्वलक्षणा प्राणकर्तृकसर्वाप्तिरित्यर्थः ॥ ४४

यो वै ... उत्क्रामतः । उक्तोऽर्थः ॥ ४५ ॥

प्राणस्य सर्वभूताश्रयत्वमुक्त्वा प्रज्ञाशब्दितस्य जीवस्य सर्वभूताश्रयत्वप्रकारं कथ्यत इत्याह अथ खलु ... व्याख्यास्यामः ।

वागेव...उदूढम् । अस्याः प्रज्ञाया वागिन्द्रियमेकमङ्गम् उदूढं परिगृहीतमित्यर्थः । उद्वाहकर्मभूतपत्नीवत् परिगृहीतमित्यर्थः ; वस्तुतस्तस्याङ्गाभावात् । तस्यै नाम...भूतमात्रा । तस्यै वाचः पुरस्तात् ग्राह्य वेन विषयत्वेन प्रतिविहिता प्रतिद्वन्द्वितया प्रतिनियततया

---

प्राण एव प्रज्ञात्मेति प्राणजीवाभेदनिर्देशस्य साहचर्यनिबन्धनत्वं दर्शयता प्राणस्य सर्वैकीभावास्पदत्वमेतावतोपपाद्य प्रज्ञाशब्दवाच्ये जीवेऽपि तदुपपादयितुं यो वै प्राण इति पूर्ववाक्यपुनः पाठः । अथोपपादनम् अथ खल्वित्यादिना ।

उदूढमिति । प्रज्ञाया उदूढानि यानि, तत्र वाक् एकमङ्गमित्यर्थः । परस्तादिति सर्वसम्मतः पाठः, न तु पुरस्तादिति । ग्राह्यग्राहकयोरैक्यभ्रान्त्यपोहनाय परस्तादित्युक्तिः । तद्विवरणं प्रतिद्वन्द्वितयेत्यन्तम् । उदूढमित्येतस्थाने अदूदुहदित्येव श्रुतप्रकाशिकापाठोऽपि । अदूदुहत् अपूरयदिति शङ्करविवरणं शाङ्करसूत्रभाष्ये । वाक् प्रज्ञाया एकदेशभूतमिति परमार्थः । एवमग्रेऽपि ॥ ४६ ॥

प्राणमेवास्या एकमङ्गमुदूढम्, तस्य गन्धः पुरस्तात् प्रतिविहिता भूतमात्रा। चक्षुरेवास्या एकमङ्गमुदूढम्, तस्य रूपं पुरस्तात् प्रतिविहिता भूतमात्रा। श्रोत्रमेवास्या एकमङ्गमुदूढम्, तस्य शब्दः पुरस्तात् प्रतिविहिता भूतमात्रा। जिह्वैवास्या एकमङ्गमुदूढम्, तस्यान्नरसः पुरस्तात् प्रतिविहिता भूतमात्रा। हस्तावेवास्या एकमङ्गमुदूढम्, तयोः कर्माणि (र्म) पुरस्तात् प्रतिविहिता भूतमात्रा। शरीरमेवास्या एकमङ्गमुदूढम्, तस्य सुखदुःखे पुरस्तात् प्रतिविहिता भूतमात्रा। उपस्थ एवास्या एकमङ्गमुदूढम्, तस्यानन्दो रतिः प्रजातिः पुरस्तात् प्रतिविहिता भूतमात्रा ॥ ४७ ॥

पादावेवास्या एकमङ्गमुदूढम्, तयोरित्याः (त्या) पुरस्तात् प्रतिविहिता भूतमात्रा ॥ ४८ ॥

प्रज्ञैवास्या एकमङ्गमुदूढम्, तस्यै धियो विज्ञातव्यं कामाः पुरस्तात् प्रतिविहिता भूतमात्रा ॥ ४९ ॥

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति ॥ ५० ॥

---

विहिता भूतमात्रा नाम। एवमुत्तरत्रापि द्रष्टव्यम् ॥ ४६ ॥

प्रजातिः प्रजननमित्यर्थः ॥ ४७ ॥ इत्याः गमनानीत्यर्थः ॥

प्रज्ञैवास्याः...भूतमात्रा। अथ(अत्र?)प्रथमान्त प्रज्ञाशब्दः मनःपरः; अस्या इति प्रज्ञारूपजीवपरः। उत्तरत्र, 'नेत्या विजिज्ञासीत नेतारं विद्यात्' इत्यनन्तरम्, 'न मनो विजिज्ञासीत' इति मनश्शब्दप्रयोगात् स्थानप्रमाणेन प्रज्ञाशब्दस्य मनःपरत्वं। धियो विज्ञातव्यम् मनोजन्यज्ञानविषयमि(य इ?)त्यर्थः। कामाः काम्यमाना इत्यर्थः ॥ ४९

एवं नामगन्धरूपशब्दरसकर्मसुखदुःखानन्दगतिज्ञातव्याः दश भूतमात्राः वाग्घ्राणादिविषयत्वेनोक्त्वा प्रज्ञाशब्दितस्य जीवस्य नामादिदशविधभूतमात्राव्याप्तिप्रकारमाह प्रज्ञया वाचं...। अत्र प्रज्ञाशब्दः

प्रज्ञया घ्राण (प्राण) समारुह्य घ्राणेन (प्राणेन) सर्वान् गन्धानाप्नोति ॥ ५१ ॥

प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति ॥ ५२॥

प्रज्ञया श्रोत्र समारुह्य श्रोत्रेण सर्वान् शब्दानाप्नोति । प्रज्ञया जिह्वा समारुह्य सर्वान्नरसानाप्नोति । प्रज्ञया हस्तौ समारुह्य हस्ताभ्या सर्वाणि कर्माण्याप्नोति । प्रज्ञया शरीर समारुह्य उपस्थेनाऽऽनन्दं रतिं प्रजातिमाप्नोति। प्रज्ञया पादौ समारुह्य पादाभ्या सर्वा इत्या आप्नोति । प्रज्ञयैव धिय समारुह्य प्रज्ञयैव धियो विज्ञातव्य कामानाप्नोति ॥ ५३ ॥

---

अव्यवहितप्रज्ञाशब्दनिर्दिष्टमन पर । ततश्च मनसा वागिन्द्रियमधिष्ठाय तद्द्वारा सर्वाणि नामानि अभिलपनक्रियाद्वारा प्राप्नोति ॥ ५० ॥

प्रज्ञया घ्राण...आप्नोति । मनसा घ्राणेन्द्रियमधिष्ठाय तद्द्वारा सर्वान् गन्धान् आप्नोति-ज्ञानेन व्याप्नोति । एवमुत्तरत्रापि द्रष्टव्यम् , मनसा चक्षुरिन्द्रियमधिष्ठाय तद्द्वारा सर्वाणि रूपाण्याप्नोति ज्ञानेन व्याप्नोतीति ॥ ५१—५३ ॥

---

प्रज्ञया वाचमित्यादिवाक्येषु तृतीयान्त पूर्ववाक्यप्रज्ञामन - परम् । जीवस्तु आप्नोति कर्ता, न करणम् ॥ ५१ ॥

प्रज्ञयैव धिय समारुह्येत्यत्र धियमिति धर्मभूतज्ञानपरम् । मानसकार्याणा सर्वेषा धर्मभूतज्ञानपरिणामत्वात् तदपेक्षाधीन्यात् । प्रज्ञयैव इत्ययमेवकार पूर्वस्थलेषु समारोहसाधनस्य विषयप्रापकस्य करणस्य च प्रज्ञावागादिरूपेण भेदवत् इह भेदो नास्ति; मन एव समारोहि विषयप्रापकञ्चेति प्रसक्ये । अस्तु वा धियमिति मन - परमेव प्राप तथोक्ते ॥ ५३ ॥

न हि प्रज्ञापेता वाक् नाम किञ्चन प्रज्ञापयेत् ॥ ५४ ॥

अन्यत्र मे मनोऽभूदित्याह, नाहमेतन्नाम प्राज्ञासिषमिति ॥

न हि प्रज्ञापेतो घ्राणो गन्धं कञ्चन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह, नाहमेतं गन्धं प्राज्ञासिषमिति । न हि प्रज्ञापेतं चक्षू रूपं किञ्चन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह, नाहमेतद्रूपं प्राज्ञासिषमिति । न हि प्रज्ञापेतं श्रोत्रं शब्दं कञ्चन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह, नाहमेतं शब्दं प्राज्ञासिषमिति । न हि प्रज्ञापेता जिह्वा अन्नरसं कञ्चन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह, नाहमेतमन्नरसं प्राज्ञासिषमिति ॥ ५५ ॥ न हि प्रज्ञापेतौ हस्तौ कर्म किञ्चनप्रज्ञापयेताम् । अन्यत्र मे मनोऽभूदित्याह, नाऽहमेतत् कर्म प्राज्ञासिषमिति । न हि प्रज्ञापेतं शरीरं सुखदुःखे किञ्चन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह, नाहमेतत् सुखदु खे प्राज्ञासिषमिति । न हि प्रज्ञापेत उपस्थः आनन्दं रतिं प्रजातिं कञ्चन प्रज्ञापयेत् । अन्यत्र

---

ननु मनोद्वारा नियमनं किमर्थमित्याशङ्क्याह न हि...प्रज्ञापयेत् । न हि मनोनधिष्ठितं वागिन्द्रियं नामप्रज्ञापनसमर्थं भवतीत्यर्थः ॥ ५४ ॥

अत्र लोकमेव साक्षित्वेनोदाहरति अन्यत्र मे...। लोको हि अन्यत्र मे मनोऽभूदित्युक्त्वा, 'एतन्नाम न प्राज्ञासिषम्' इति ब्राह (इत्याह?) । मनोव्यासङ्गवशात् ज्ञानपूर्वकनामाभिलपनलक्षणवागिन्द्रियव्यापारो नाभूदिति हि लोकः प्रत्येतीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ॥५५-५६॥

---

सर्वकरणानां मनोपेक्षां व्यतिरेकमुखेनोपपादयति न हि प्रज्ञापेतेति ॥ प्रज्ञापयेदिति । ज्ञानेन्द्रियाणां प्रज्ञापकत्वं स्वरसम् । कर्मेन्द्रियाणां तु ज्ञानपूर्वकस्य परज्ञानहेतुभूतस्य च व्यवहारस्य हेतुत्वात् प्रज्ञापकत्ववाचोयुक्तिः ॥ ५४-५६ ॥

मे मनोऽभूदित्याह, नाहमेतमानन्दं रतिं प्रजातिं प्राज्ञासिषमिति । न हि प्रज्ञापेतौ पादाविया काञ्चन प्रज्ञापयेताम् । अन्यत्र मे मनोऽभूदित्याह, नाहमेतामित्या प्राज्ञासिषमिति । न हि प्रज्ञापेता धी. काचन सिद्ध्येत् ॥ ५६ ॥ न प्रज्ञातव्य प्रज्ञायेत ॥ ५७ ॥

न वाचं विजिज्ञासीत, वक्तारं विद्यात् ॥ ५८ ॥

---

एवं प्रज्ञाशब्दितस्य जीवस्य भूतमात्रा यासिप्रकारकथनमुखेन आत्मानात्मविवेकं प्रदर्श्य, 'अन्या वाचो विमुञ्चथ' इत्युक्तरीत्या भूतमात्राशब्दितानात्मविज्ञानं परिहर्तव्यमित्याह न प्रज्ञातव्य प्रज्ञायेतेति । ज्ञात्रात्मव्यतिरिक्तः अनात्मभूतो विषयो न ज्ञातव्य इत्यर्थः ॥

तदेव प्रपञ्चयति न वाचं विद्यात् । अत्र वाक्छब्दः प्रकरणानुगुण्यात् नामपरः । वक्तारम् उक्तरीत्या मनोधिष्ठितवागिन्द्रियजन्याभिलपनक्रियया नामन्यात्मारमात्मानमेव विद्यात् । वक्तृजीवशरीरकं परमात्मानं विद्यादिति यावत् । एमुत्तरत्रापि द्रष्टव्यम् ॥ ५८ ॥

---

न प्रज्ञातव्य प्रज्ञायेतेति । पूर्वं, तस्यै धियो निज्ञातव्यमिति द्वयोः प्रसक्तत्वात् नत्र प्रज्ञाविरहे धियो न भवन्तीतिवत् प्रज्ञातव्यमपि न प्रज्ञायेतेत्युच्यत इति युक्तं व्याख्यातुम् । अथापि तदा, 'प्रज्ञाविरहे' इत्यध्याहारादिगौरवात् वक्ष्यमाणार्थस्य समुदायतो निर्देशः प्रथममिति योजना यक्ष्यन् अवतारयति एवं प्रज्ञाशब्दितेति । तथा च न प्रज्ञायेतेत्येतत् निषेधविधिरूपम्, प्रज्ञातव्य = धियो न प्रज्ञातव्य इति भावः । वस्तुतः पूर्ववाक्येऽपि धिय इति विज्ञातव्यमित्येतद्विशेषणमेव । तस्यै इति धीविशेषणम् । तथा चतुर्थीप्रयोगः श्रुतिशैली ।५७

वक्तृजीवशरीरकेति । यद्यपि वाक्यानीमानि जीवमात्रपराणि ; उपरि तथया रथस्येति परमात्मपरमिति सुवचम् = अथाप्यस्य केवलस्यानादेयत्वात् विशिष्टविवक्षा ।

न गन्धं विजिज्ञासीत, घ्रातारं विद्यात्। न रूपं विजिज्ञासीत, रूपं विद्वांसं (रूपविदं) विद्यात् ॥ ५९ ॥ न शब्दं विजिज्ञासीत , श्रोतारं विद्यात् । नान्नरसं विजिज्ञासीत , अन्नरसविज्ञातारं विद्यात्। न कर्म विजिज्ञासीत, कर्तारं विद्यात् । न सुखदुःखे विजिज्ञासीत, सुखदुःखयोर्विज्ञातारं विद्यात् । नानन्दं न रतिं न प्रजातिं विजिज्ञासीत , आनन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यात् । नेत्यां विजिज्ञासीत , एतारं विद्यात् । न मनो विजिज्ञासीत , मन्तारं विद्यात् । ता वा एता दशैव भूतमात्राः अधिप्रज्ञम् , दश प्रज्ञामात्रा अधिभूतम् । यद्धि(दि) भूतमात्राः न स्युः, प्रज्ञामात्राः न स्युः, यदि(द्वा) प्रज्ञामात्रा न स्युः, न भूतमात्राः स्युः। न ह्यन्यतरतो रूपं किञ्चन सिद्ध्येत् , नो एवैतन्नाना ॥६०

रूपं विद्वांसं रूपं पश्यन्तं विद्यादित्यर्थः ॥ ५९ ॥

**ता वा एताः ... सिद्ध्येत्**। नामगन्धरूपशब्दरसकर्मसुखदुःखानन्दरतिप्रजातीत्याज्ञातव्यलक्षणा दश भूतमात्राश्च, तद्ग्राहिवाग्घ्राणचक्षुश्श्रोत्रजिह्वाहस्तशरीरोपस्थपादमनोलक्षणा दश प्रज्ञामात्राश्चान्योन्याधाराः । वागादीन्द्रियाणामभावे नामादिसिद्धेरभावेन वागादिलक्षणप्रज्ञामात्राधीनसिद्धिकत्वात् नामादिभूतमात्राणाम् , नामादिभूतमात्राणामभावे तद्व्यवहारफलकप्रज्ञामात्राशब्दितेन्द्रियाद्यनिष्पत्तेः । अतो ग्राह्यग्राहकोभयाधीनत्वात् सर्वलोकयात्राया **नो एवैतन्नाना** । नानाशब्दो विनार्थकः। एतत् ग्राह्यग्राहकजातं परस्परविनाभूतमित्यर्थः । न हि ग्राह्येण विनाकृतं ग्राहकं ग्राहकेण विनाकृतं ग्राह्यं कार्यक्षमं भवति। तस्मात् प्रज्ञामात्राशब्दितमति भूतमात्रान्तर्गतमित्यर्थः ॥ ६० ॥

दश प्रज्ञामात्रा इति । अत्र एकादशेन्द्रियमध्ये त्वगिन्द्रियस्य हृदिपद्मभूतस्य स्पर्शस्य च मूले व्यक्तत्वात् दशेत्युक्तिः ॥ ६०

तद् यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः ॥ ६१ ॥

---

तद् यथा रथस्य....प्राणेऽर्पिताः । यथा रथस्य नाभौ रथचक्रमध्यवर्तिसरन्ध्रकाष्ठविशेषे अरशब्दिता अर्पिताः ; अत्र नेमिशब्दितं वलयाकारं काष्ठं यथा अर्पितम्—एवं प्राणशब्दितपरमात्मनि प्रज्ञामात्राशब्दनिर्दिष्टाश्चेतना अर्पिताः । तेषु च भूतमात्राशब्दितग्राह्यग्राहकजातं सर्वं समर्पितमित्यर्थः ।

नन्वत्र प्रज्ञामात्राशब्देन, यद्धि भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः, यदि प्रज्ञामात्रा न स्युः न भूतमात्राः स्युरिति पूर्ववाक्ये प्रज्ञामात्राशब्दनिर्दिष्टानां वागादीनां दशानामेव ग्रहणमुचितम् । न तु प्रज्ञात्मनाशया, 'यो वै प्राणः सा प्रज्ञा' इति व्यवहितकेवलप्रज्ञाशब्दनिर्दिष्टजीवपरत्वमिति चेन्न–पूर्ववाक्ये अन्योन्याधाराधेयभावप्रतिपादनदर्शनात् । तत्र प्रज्ञामात्राशब्दस्य वागादिपरत्वेऽपि इह प्रज्ञामात्राशब्दनिर्दिष्टस्य भूतमात्राधिकरणत्वाप्रतिपादनात् प्राणशब्दितपरमात्माश्रितत्वस्यैव प्रतिपादनात् प्रज्ञामात्राशब्दो जीवपर एव । पूर्ववाक्ये बाधकसत्त्वात् प्रज्ञाशब्दस्य मुख्यार्थत्यागेऽपि इह मुख्यार्थत्यागे

---

प्रतर्दनोपासनोपास्याकाराणां मध्ये मुख्यप्राणस्य निरूपणं प्रथमं कृत्वा अथ जीवं तदन्तर्गतं ग्राह्यग्राहकैकोपाधिमात्रास्पदं निरूप्य तस्येतरवर्जनेनोपास्यत्वमुपपाद्य, तदुपासनमपि तद्विशिष्टपरमात्मोपासनरूपमेव कार्यमिति स्वाभिमतव्यक्तये संप्रति तदधिकं परमात्मानमपि सदृष्टान्तं निरूपयितुमारभते तद्यथेति । 'मात्राशब्दः संपातवदाचर' इति श्रुतप्रकाशिका ॥ ६१.

स एष प्राण एव प्रज्ञात्मा (प्राज्ञ आत्मा) आनन्दोऽजरोऽमृत ॥ ६२॥ स न साधुना कर्मणा भूयान् नो एवासाधुना कर्मणा कनीयान्। ६३ एष ह्येव साधु कर्म कारयति तम्, यमेभ्यो लोकेभ्य उन्निनीषति ॥

कारणाभावात्। यथाऽस्मिन् प्रकरणे, 'यावध्यस्मिन् शरीरे प्राणो वसति तावदायु', 'अथास्मिन् प्राण एवैकधा भवति', 'एतस्मादात्मन प्राणा यथायतन विप्रतिष्ठन्ते' इति त्रिष्वपि वाक्येषु मुख्यप्राणपरमात्म-जीवपरत्वेन भिन्नार्थकत्वम्, एव, 'प्रज्ञैवास्या एकमङ्गमुदूढम्' इत्यत्र (मुदूढम्',१) 'न हि प्रज्ञापेता वाड् नाम किंचित् प्रज्ञापयेत्', 'दशैव भूत-मात्रा अधिप्रज्ञम्' इति वाक्येषु जीवमनइन्द्रियरूपार्थत्वविषये दृष्ट प्रयोगस्य प्रज्ञाशब्दस्य अर्थौचित्यानुसारेणैवार्थस्य वर्णनीयत्वात्। न चैक वचनान्तप्रज्ञाशब्दनिर्दिष्टस्य बहुवचनान्तप्रज्ञामात्राशब्देन परामर्शो न युक्त इति वाच्यम्-सद्विद्यायाम्, 'स्वमपीतो भवति' इत्येकवचनान्तशब्द निर्दिष्टस्य जीवस्य, 'सति संपद्य न विदु' इति बहुवचनान्तशब्देन निर्देशव-दुपपत्ते। एतत् सर्वं श्रुतप्रकाशिकायामिन्द्रप्राणाधिकरणे स्पष्टम् ॥

स एष प्राज्ञ आत्मा आनन्दोऽजरोऽमृतः। प्रज्ञ एव प्राज्ञ। निरुपाधिकसार्वज्ञ्याश्रय निरुपाधिकान दत्वाजरत्वाश्रय ॥ ६२ ॥

स न साधुना - कनीयान्। पुण्यपापकृतोत्कर्षापकर्षशून्य इत्यर्थ ॥

एष ह्येव उन्निनीषति। य पुरुषमेभ्यो लोकेभ्य ऊर्ध्वं भगवल्लोक

---

स एष प्राण एव प्रज्ञात्मेति पाठ एव श्रीभाष्य-भाष्यान्तराधा दृत न तु स एष प्राज्ञ आत्मेति ॥ ६२

एष ह्येवैनमसाधु कर्म कारयति यमधो निनीषति ॥ ६५ ॥
एष लोकपाल एष लोकाधिपतिरेष सर्वेशः ॥ ६६ ॥

---

नेतुमिच्छति, तं पुरुषं भगवल्लोकप्राप्तये साधुकर्म कारयति । कर्मणां भगवल्लोकप्राप्त्युपयोगित्वञ्च तद्धेतुभूतविद्याविरोधिपापनिरसनद्वारा ॥६४

**एष ह्येवैनमसाधु...अधोनिनीषति** : यं पुरुषमेभ्यो लोकेभ्यः अधःपातयितुमिच्छति, तमसाधु कर्म कारयति । यथा साधुकर्मणां ब्रह्मोपासननिष्पादनद्वारा उन्नयनहेतुत्वम्, एवमसाधुकर्मणामप्युपासनप्रतिबन्धद्वारा अधोनयनहेतुत्वम् । उक्तञ्च **भगवता भाष्यकृता**, "पापस्य ज्ञानोदयविरोधित्वम्, 'एष एवासाधु कर्म कारयति तं यमधो निनीषति' इति श्रुत्याऽवगम्यते" इति । विवृतञ्च **व्यासार्यैः**, "कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनयनमुपासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते" इति ॥ ६५ ॥

**एष....सर्वेशः** । **लोकपालः** लोकरक्षकः । अत्र **व्यासार्याः**, "**लोकाधिपतिः** लोकस्वामी । **सर्वेशः** सर्वनियन्ता । ननु 'पा रक्षणे' इति धातोः **पति**शब्दः । तत् कथमत्र शेषिवाचित्वम्? उच्यते—न हि सर्वत्रावयवशक्तिरेव रूढिशक्तिरप्यस्ति । गमेर्डो इति व्युत्पत्त्या **गो**शब्दस्य सकलजङ्गमवाचित्वप्रसङ्गात्; स्थिताया गोः अवाचकत्वप्रसङ्गाच्च । अतः शेषिणि **पति**शब्दो रूढः । अन्यथा, 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इति पितुः संरक्षके पुत्रे पतिशब्दव्यवहारप्रसङ्गात्" इत्यूचुः॥

प्रकरणे परमात्मसंबन्धिना धर्माणां बहुत्वमुपलभ्यते । हिततमोपासनकर्मत्वम्, साध्वसाधुकर्मकारयितृत्वम्, 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः' इति अचेतनवर्गाधारचेतनवर्गाधारत्वमानन्दत्वमजरत्वममृतत्वं लोकाधिपतित्वम् एवमादयो हि धर्माः परमात्मसम्बन्धिन उपलभ्यन्ते । अतो भूयोधर्मानुग्रहायास्य प्रकरणस्य परमात्मपरत्वमेव वक्तव्यम् । तर्हि इन्द्रस्य, 'मामुपास्स्व' इति निर्देशः कथमुपपद्यत इत्यत्राह—"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" । 'य आत्मनि तिष्ठन् आत्मनोऽन्तर' इत्यादिशास्त्रेण परमात्मानं स्वात्मानं दृष्ट्वा शरीरवाचिनाञ्च शब्दानां शरीरिपर्यन्ततां ज्ञात्वा, मामुपास्स्वेत्युपदिष्टवान् । यथा हि साक्षात्कृतस्वात्मभूतपरमात्मतत्त्वो वामदेवः, 'अहं मनुरभवं सूर्यश्च' इति स्वात्मनि मन्वादिभावमुपदिष्टवान्—न हि तत्र मन्वादिभावः स्वस्वरूपगतो वामदेवेनोपदिष्टः ; अपितु स्वात्मभूतपरमात्मगतः — तद्वदेवायमुपदेश इति भावः । "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासनात्रैविध्यादाश्रितत्वादिह तद्योगात्" । त्वाष्ट्रवध-वक्तृत्वादिजीवलिङ्गानाम् आयुःप्रभुत्वशरीरोत्थापकत्वेन्द्रियाश्रयत्वादीनां मुख्यप्राणलिङ्गानां चोपन्यासः किमर्थ इति चेत् — इन्द्ररूपजीवशरीरकतया प्राणरूपाचेतनशरीरकतया स्वरूपेण चोपासनार्थं चेतनाचेतनधर्माणां ब्रह्मधर्माणाञ्च कीर्तनम् । त्रिविधञ्चोपासनं प्रकरणान्तरेष्वप्याश्रितम्, यथा तैत्तिरीयके, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति स्वरूपेण, 'सच्च त्यच्चाभवत्' इति भोक्तृभोग्यलक्षणचेतनाचेतनशरीरकतया चोपासनम् । एवमिहाप्युपासनात्रैविध्यं युज्यत इति स्थितम् ॥ ६७ ॥

इति कौषीतक्युपनिषदि तृतीयाध्यायप्रकाशिका ।

अथ चतुर्थोऽध्याय

गार्ग्यो हवे बालाकिरनूचान सस्पष्ट आस ॥ १ ॥

सोऽवसदुशीनरेषु सत्त्वमत्स्येषु कुरुपाञ्चालेषु काशीविदेहेष्विति ॥

स हाजातशत्रु काश्यमेत्योवाच ॥ ३ ॥, ब्रह्म ते ब्रवाणीति ।

त होवाचाजातशत्रु, 'सहस्र दद्म एतस्या वाचि जनको जनक

---

गार्ग्यो ..आस। बलाकस्यापत्य बालाकि', गोत्रतो गार्ग्यः, अनूचानः अङ्गाध्यायी । 'अङ्गाध्याय्यनूचान ' इति स्मृते । सस्पष्टः सम्यक् विद्यया प्रख्यात —एवम्भूतस्सन् आस बभूव ॥ १ ॥

सो इति । सः बालाकि उशीनरेषु सत्त्वप्रचुरमात्स्य देशेषु कुरुपाञ्चालेषु काशीविदेहेषु उवास (?) उषितवान्। इतिशब्द प्रकारवचन । एवञ्जातीयकेष्वन्येष्वपीत्यर्थ ॥ २ ॥

स...उवाच । अजातशत्रुनामान काशीराजमभिगत्योवाच ॥ किमिति ? ब्रह्म ते ब्रवाणीति ।

त होवाच.. धावन्तीति । एतस्यामेव वाचि निमित्ते गवा

---

समन्वयाध्याये चतुर्थपञ्चमे 'जगद्वाचित्वात्' इति सूत्रेण एत त्कौषीतकिश्रुतिगतस्य, 'यस्य वैतत् कर्म इति कर्मपदस्यार्थनिर्धारि णात् तदधिकरण कौषीतकिबालाक्यजातशत्रुसवादमेव प्राधान्ये-नाधिकृत्य प्रवृत्तम् न तु बृहदारण्यकगत तम् । स तु, 'अपि चैवमेके' इति तत्रैव सूत्रखण्डेन स्पृष्ट ।

अनूचान अङ्गाध्यायीति। अङ्गिभूतस्वाध्यायाध्ययनसमर्थसिद्धम् ॥१

जनको जनक इति द्वि प्रयोगेऽर्थविशेषमभिसहित दर्शयति जनक एव ब्रह्म शुश्रूषु दाता चेति ॥ ४

इति ह वै जना धावन्ति' इति ॥ ४ ॥

स होवाच बालाकिः, 'य एवैष आदित्ये पुरुषः, तमेवाहमुपासे' इति ॥ ५ ॥ तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः ।

---

सहस्रं प्रयच्छामि(म ?)। सर्वेऽपि ब्रह्मविद , जनक एव ब्रह्म शुश्रुषु· दाता चेति जनकस्य समीपमेव धावन्ति । भवास्तु मत्समीपमागत्य, ब्रह्म ते ब्रवाणीत्युक्तवान् । अनेनैव वाक्येन तोषिता वयं सहस्रं प्रयच्छाम इति भाव: ॥ ४ ॥

स . उपास इति । आदित्यमण्डलान्तर्वर्तिन पुरुषं ब्रह्मेत्यह मुपासे । अत त्वमपि तमेवोपास्स्वेति भाव ॥ ५ ॥

त ह ... । मा मा मति एतस्मिन् आदित्यवर्तिपुरुषविषये सवादं मा कारय । अज्ञाते हि विषये सवाद कारयितव्य । अयं तु

---

अब्रह्मत्वेन बालाकिना आदित्यपुरुषाद्यः षोडश क्रमेण ब्रह्मत्वेन कीर्त्यन्ते, य एवैष आदित्ये पुरुष इत्यादिना । ब्रह्म ते ब्रवाणीत्युपक्रमात् तमेवाहमुपासे इति सर्वत्र ब्रह्मत्वेनोपासनं विवक्षितम्। अजातशत्रुस्तु यथावस्थितब्रह्मवेदित्वात् तदनभ्युपगमेन मा मैतस्मिन् संवादयिष्ठाः इत्याह । तदर्थश्च मद्विदितार्थसंवादानुकूलव्यापारवान् मा भूरिति । आदित्यपुरुषादितत्त्वं मया सुज्ञातम् । त्वया च तदन्यथा ज्ञातम् । अतः त्वदीयो वादः मदभिमतस्य संवादो न भवति । संवादापेक्षा च अन्यथा गृहीतार्थत्यागेन वास्तवार्थशिक्षार्थं भवेत् अपेक्षरूस्यास्तवे । अहं तु सम्यग् जानामि; त्वमेव त्वन्यथा गृहीतवानसि । अतो मम संवादसंवत्तये त्वया न व्यापरितव्यमिति भावः । संवादं मा कारयेति । मदर्थस्य संवादः त्वत्तोऽधिगत इति मदुक्तये मा

बृहन् (त्) पाण्डरवासाः अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा अहमेत-मुपासे इति ॥ ६ ॥ स यो हैतमेवमुपास्ते, अतिष्ठाः सर्वेषां भूतानां मूर्धा भवति'। स होवाच बालाकिः, 'य एवैष चन्द्रमसि पुरुषः, तमे-वाहमुपासे' इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। सोमो राजा अन्नस्यात्मेति वा अहमेतमुपास इति। स यो हैतमेव-मुपास्ते, अन्नस्यात्मा भवति' ॥ ७ ॥

स होवाच बालाकिः, 'य एवैष विद्युति पुरुषः, तमेवाहमुपासे' इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। तेज-

---

ज्ञात एव। कथमित्यत्राह, बृहन् पाण्डरवासाः सर्वेषां भूतानां मूर्धेति वा अहमेतमुपास' इति। वेशब्दोऽवधारणे। बृहन् महान्। पाण्डराणि किरणरूपाणि वासांसि यस्य स पाण्डरवासाः। आदित्य-किरणानां नानारूपत्वात् पाण्डरवासस्त्वमिति द्रष्टव्यम्। बृहदारण्यके बालाक्यजातशत्रुसंवादे बृहत्त्वपाण्डरवासस्त्वे चन्द्रधर्मतया उक्ते; इह तु आदित्यधर्मतया उक्ते इति विशेषः। अतिष्ठाः सर्वमपि कार्यमति-क्रम्य तिष्ठतीति अतिष्ठाः। सर्वेषां भूतानां मूर्धा श्रेष्ठः ॥ ६ ॥

तदुपासनस्यानुरूपं फलमाह स यो . भवति। स होवाच . भवति। अन्नस्य व्रीहियवादिरूपौषधिवर्गस्य। आत्मा। प्रिय-त्वाद्वा, चन्द्रमसः सर्वरसात्मत्वेन तस्य रूपत्वाद्वा, अमावास्यायां चन्द्रस्य सर्वौषध्यनुप्रवेशश्रवणाद्वा चन्द्रस्य अन्नात्मत्वम् ॥ ७ ॥

---

यतस्त्वेत्यर्थः। अज्ञाते हीति। अत्र वक्तव्यं बृहदारण्यकपरिष्कारे द्रष्टव्यम्। यद्वा संवादः संमतिः। विषयस्य मया अज्ञातत्वे हि त्वदुपदेश-मङ्गीकुर्याम्; त्वञ्च मामङ्गीकारयेः। ज्ञातत्वात्तु विपरीतार्थं त्वदुक्तं न संमन्येयेत्यर्थः ॥

स्यात्मेति वा अहमेतमुपासे इति। स यो हैतमेवमुपास्ते, तेजस्यात्मा भवति' ॥ ८ ॥

स होवाच बालाकिः, 'य एवैष स्तनयित्नौ पुरुषः, तमेवाहमुपासे' इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। शब्दस्यात्मेति वा अहमेतमुपासे इति। स यो हैतमेवमुपास्ते, शब्दस्यात्मा भवति' ॥ ९ ॥

स होवाच बालाकिः, 'य एवैष आकाशे पुरुषः, तमेवाहमुपासे' इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपासे इति। स यो हैतमेवमुपास्ते, पूर्यते प्रजया पशुभिः। नो एष स्वयम्। नास्य प्रजा पुरा कालात् प्रवर्तते' ॥१०

स होवाच बालाकिः, 'य एवैष वायौ पुरुषः तमेवाहमुपासे इति। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। इन्द्रो

---

**तेजस्यात्मा** तेजस्विस्वरूप इत्यर्थः। **तेजस आत्मेति** पाठेऽपि ॥ एवार्थः ॥ ८ ॥ **शब्दस्यात्मा**। स्तनयित्नुसहितस्य मेघस्य शब्दप्रधानत्वात् शब्दात्मत्वम्। शिष्टं स्पष्टम् ॥ ९ ॥

पूर्णत्वविशिष्टोपासनायाः फलम्, **पूर्यते प्रजया पशुभिरिति**। पूर्णत्वप्रयुक्तनिर्व्यापारत्वलक्षणाप्रवर्तित्वविशिष्टोपासनायाः फलम्, **नो एष स्वयमित्यादि**। स्वयमपि, तत्पुत्रपौत्रादिकं वा न शास्त्रानुशिष्टशतायुष्ट्‌-कालात् प्राक् अस्माल्लोकात् प्रवर्तते। नास्य सन्ततावपमृत्युर्भवतीत्यर्थः॥

**इन्द्रः** ईश्वरः। 'योऽयं पवते एष देवाना गृहाः' इति वायो-

---

पूर्णमप्रवर्तीति। छान्दोग्ये गायत्रीविद्यायां (३-१२) मोक्षफलकं पूर्णत्वाद्युपासनमुक्तम्। तत्राप्याकाशः प्राक् प्रस्तुतः; ब्रह्मतुल्यतया कीर्तितश्च ॥

वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति । स यो हैतमेव-मुपास्ते, जिष्णुर्हवा अपराजिष्णुरन्यतस्त्यजायी भवति' ॥ ११ ॥

स होवाच बालाकिः, 'य एवैषोऽग्नौ पुरुषः तमेवाहमुपासे' इति । स होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । विषासहि-रिति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते विषासहिर्हैव भवति' ॥ १२ ॥

स होवाच बालाकिः, 'य एवैषोऽप्सु पुरुषः, तमेवाहमुपास इति । स होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । नाम्न-स्यात्मेति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, नाम्न-स्यात्मा भवति' ॥ १३ ॥

इत्यधिदैवतम् । अथाध्यात्मम् ॥ १४ ॥ —

स होवाच बालाकिः, 'य एवैष आदर्शे पुरुषः, तमेवाहमुपासे' इति । स होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । प्रतिरूप

---

देवलोकत्वप्रसिद्धे लोकत्वेन वैकुण्ठसादृश्याद्वैकुण्ठत्वम् । भरता गणत्व-प्रसिद्धे सेना । जिष्णुः जयशीलः । अपराजिष्णुः अपराजितः । अन्यतस्त्यजायी । अन्यतो भवा अन्यतस्त्या । शत्रव इति यावत् । तान् जेतुं शीलमस्य । 'सुप्यजातौ' इति णिनि । शिष्टं स्पष्टम् ॥ ११

विषासहिः । सोढुमशक्य शत्रुभिरित्यर्थः । मर्षयितेति पाठे ॥

नाम्नस्त्यात्मा । नामाधिष्ठात्री देवतेत्यर्थः । शिष्टं स्पष्टम् ॥ १३ ॥

इत्यधिदैवतम् । अथाध्यात्मम् । देवतायामुपासनप्रकार उक्तः । आत्मन्युपासनप्रकार उच्यत इत्यर्थः ॥ १४ ॥

प्रतिरूपः । प्रतिबिम्ब इत्यर्थः । अस्य सन्तानोऽप्यनुरूप एव पुत्रो जायते । नाननुरूपः । प्रतिबिम्बस्य कार्यकारणसंघातरूपात्म-

इति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते, प्रतिरूपो हैवास्य प्रजा स्वयमाजायते ; नाप्रतिरूपः' ॥ १५ ॥

स होवाच बालाकिः, 'य एवैष प्रतिश्रुत्कायां पुरुषः, तमेवाह-मुपास' इति। तं होवाचाजातशत्रुः, 'मामैतस्मिन् संवादयिष्ठाः, द्वितीयोऽनपगम इति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते, विन्दते द्वितीयाम् ; द्वितीयवान् भवति' ॥ १६ ॥

स होवाच बालाकिः, 'य एवैष शब्दः पुरुषमन्वेति, तमेवाह-मुपास' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः,

---

शब्दिताभिन्नत्वादध्यात्मान्तर्गतत्वमिति द्रष्टव्यम् ॥ १५ ॥

**प्रतिश्रुत्कायां** प्रतिध्वनौ। **द्वितीयः** पूर्वशब्दापेक्षया द्वितीयः। **अनपगमः** नापगच्छतीत्यनपगमः। **द्वितीयाम्** आत्मापेक्षया द्वितीयां भार्यां **विन्दते** लभत इत्यर्थः। **द्वितीयवान् भवति**। पुत्रेण द्वितीय-वांश्च भवतीत्यर्थः। **विन्दते द्वितीयमिति** पाठे **द्वितीयं** पुत्रं **विन्दते**। अनपगमत्वोपासनाफलमुच्यते **द्वितीयवान् भवतीति** नित्ययोगे मतुप्। नित्यं पुत्रसहितो भवतीत्यर्थ ॥ १६ ॥

**पुरुषमन्वेति**। गुहादौ पुरुषशब्दानुकारिवर्णात्मकः **प्रतिशब्द** इत्यर्थ.। **असुरिति वा अहमेतमुपास इति**। तादृशशब्दस्य प्राणबल-

---

प्रतिरूपो हैवास्य प्रजेति। 'बिम्बादिवोत्थितौ बिम्बौ रामदेहात् तथा परौ' इत्युक्तरीत्या स्वप्रतिबिम्बवत् स्वप्रजा भवतीत्यर्थः। तत्र शरीरसाम्यमात्रं न विवक्षितम् ; किंतु सर्वांशतः इत्याशयेन अनुरूप एव पुत्रो जायते इत्युक्तम् ॥ १५

प्रतिश्रुत्कायामिति । प्रतिश्रुत्कापदेन प्रतिश्रुज्जनकदिग्ग्रहणं युक्तम् ; श्रुत्यन्तरे समानप्रकरणे दिक्षु इति श्रवणात् ॥ १६

असुरिति वा अहमेनमुपासे इति । स यो हैतमेवमुपास्ते, नो एव स्वयम्, नास्य प्रजा पुरा कालात् संमोहमेति' ॥ १७ ॥

स होवाच बालाकिः, 'य एवैष च्छायायां पुरुषः, तमेवाहमुपासे इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । मृत्युरिति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, नो एव स्वयम्, नास्य प्रजा पुरा कालात् प्रमीयते' ॥ १८ ॥

स होवाच बालाकिः, 'य एवैष शारीरः पुरुषः, तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । प्रजापतिरिति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, प्रजायते प्रजया पशुभिः' ॥ १९ ॥

स होवाच बालाकिः, 'य एवैष प्राज्ञ आत्मा येनैतत्सुप्तः स्वप्नयाचरति, तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन्

---

लभ्यतया असुरित्युपासे इत्यर्थः । नो....एति । स्वयं वा तत्सन्ततिर्वा अकाले मूर्च्छां मरणं[वा ?]न प्राप्नोतीत्यर्थः ॥ १७ ॥

मृत्युरिति वा इति । नीलत्वभयङ्करत्वादिमृत्युसादृश्यात् छायापुरुषस्य मृत्युत्वेनोपासनमिति द्रष्टव्यम् ॥ १८ ॥

शारीरः । शरीरे अहमित्यभिमन्यमानः पुरुषः शारीरः । तस्य पुत्रपौत्रादिलक्षणप्रजोत्पादकत्वरक्षकत्वादिना प्रजापतित्वम् । प्रजया पशुभिः प्रजायते । प्रजया पशुभिश्च प्रकृष्टो जायत इत्यर्थः । शिष्टं स्पष्टम् ॥ १९ ॥

स होवाच । प्राज्ञः जाग्रद्दशायां प्रज्ञाशाली अयमात्मा एतत्सुप्तः—एतत् सुप्तं यस्य—एतादृशसुप्तिविशिष्टस्सन्— उपरतवागेन्द्रिय इति यावत्—येन स्वप्नयाचरति येन मनसा विशिष्टस्सन्

संवादयिष्ठाः । यमो राजेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते, सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते' ॥ २० ॥

---

स्वप्नाय प्रवर्तते स्वप्नात् (स्वाप्नान् ?) पदार्थान् पश्यति, तत् मनो ब्रह्मोपास इत्यर्थः । यमः— । सर्वेन्द्रिययमयितृत्वात् मनसो यमत्वम्, श्रैष्ठ्याच्च राजत्व द्रष्टव्यम् । श्रैष्ठ्याय यम्यते । अस्य श्रैष्ठ्याय सर्वमपि भूतजातं यम्यते । यम्त इति यावत् ॥ २० ॥

---

स्वप्नायेत्यत्र स्वप्नयेति पाठान्तरम् । 'शाङ्यजयारामेमुपसंख्यानम्' इति (७-१-३९) पाणिनीयवार्तिकात् स्वप्नेनेत्यत्र स्वप्नयेति भवति ।

तन्मनो ब्रह्मोपास इति । ननु तमेवाहमुपास इति पुलिङ्गतच्छब्दश्रवणात् प्राज्ञस्यात्मनो ग्रहणं युक्तम् । पूर्वोत्तरवाक्येषु च य एवैष इति यच्छब्दगृहीतस्यैव तमेवाहमुपास इति उपास्यत्वेन ग्रहणात् इहापि तादृशस्य प्राज्ञात्मन एवोपासिकर्मत्वे वर्णनीये मनस उपासनवर्णनं कथमिति चेत्—उच्यते । अस्ति विशेषः । तथाहि—सर्वेष्वपि पर्यायेषु पुरुषविशेषाणामुपास्यत्वमुक्तम् । तद्वदिह, 'यः पुरुषस्तमेवाहमुपासे' इति न श्रूयते । प्राज्ञस्यात्मन उपासनान्वयस्तु स्यात्, यदि अनुपपत्तिर्न स्यात् । यद्यय प्राज्ञ आत्मा परमात्मा, तर्हि तस्य ब्रह्मत्वं प्रामाणिकमिति तस्यावज्ञानमजातशत्रुविवक्षितमयुक्तं स्यात् । अथ जीवात्मा, तर्हि, य एवैष शारीरः पुरुष इति पूर्वपर्यायान्नातिरिच्यते । किञ्च य एवैष इति यच्छब्दप्रतिसंबन्धी चेत् तमिति तच्छब्दः, तर्हि येनेत्यस्य कः प्रतिसंबन्धी । अतः य एष प्राज्ञ आत्मा, स एतमुमस्मिन् येन मनसा चरति, तदुपासनमहं करोमीत्युच्यते । तमिति पुलिङ्गनिर्वाहः कथमिति चेत्; मनसो मन पदेनैव ग्रहणनियमाभावात्, येन करणविशेषेणेत्यर्थवर्णनसंभवादनुपपत्त्यभावात् । ननु प्रज्ञाशब्दस्य मनःपरत्वमत्र पूर्वाध्याये

स होवाच बालाकि, 'य एवैष दक्षिणेऽक्षन् पुरुष तमेवाहमुपासे' इति । त होवाचाजातशत्रु, 'मा मैतस्मिन् संवादयिष्ठा । नाम्न आत्मा अग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपासे इति। स यो हैतमेवमुपास्ते, एतेषा सर्वेषामात्मा भवति'।

स होवाच बालाकि, 'य एवैष सव्येऽक्षन् पुरुषस्तमेवाहमुपासे' इति। तं होवाचाजातशत्रु, 'मा मैतस्मिन् संवादयिष्ठा । सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपासे इति। स यो हैतमेवमुपास्ते, एतेषा सर्वेषामात्मा भवति' ॥ २१ ॥

---

स ह आत्मा भवति । दक्षिणाक्षिप्रतिबिम्बे नामाग्निज्योतिरात्मत्वदृष्टौ नामाग्निज्योतिरात्मत्व भवति । स व्याक्षिप्रतिबिम्बे सत्यविद्युत्तेजआत्मत्वबुद्धौ सत्यविद्युत्तेजआत्मत्व भवति ॥ २१ ॥

---

इष्टम् । अत प्राज्ञ आत्मेति मनोधियादेवताविशेषो गृह्यताम् । येनेति पदमपि तत्परमेव । प्राज्ञ आत्मेत्यत्र प्रज्ञात्मेत्यपि पाठ स्यात् । बहुत्र तथाश्रवणात् । तथा च सुप्त येन देवताविशेषेण स्वप्नाय चरति, एष प्राज्ञ आत्मा य तमुपास्ते इत्यर्थोऽस्तु । एवञ्च स इति पदानध्याहार, एतेषा पुरुषाणा वसति वक्ष्यमाणवाक्ये अस्यापि पुरुषत्वेन कीर्तनौचित्यञ्चेति चेत्—अस्तु कामम् । प्रश्नभाष्यस्यापि तदर्थपरतया नातीव क्लेश इति । ननु बृहदारण्यके शारीरात्ममात्र कथितम् , न प्रज्ञात्मदक्षिणवामाक्षिपुरुषत्रयम् । तस्तलोकस्य शारीरात्मन एव चतुर्धा किञ्चिद्रूपेण विभाग इहाभिमतोऽस्तु । अतो न मन परोऽय प्रज्ञात्मपर्याय इति चेत्–न–अयमेवोक्त मेयात्र वक्तव्यमिति निर्बन्धाभावात् । अस्तु वा तमिति पद येनेति प्र गुक्त मनोविशिष्टवेषेण जीवपरम् । तन्मनो ब्रह्मोपास इति भाष्यञ्च पुरुषविशेषणतया मनसोऽपि विवक्षादर्शकम्, न तु पुरुषस्योपास्यत्ववारकमिति ॥ २०

ततो ह बालाकिस्तूष्णीमास ॥ २२ ॥

तं होवाचाजातशत्रुः, 'एतावन्नु बालाके' इति ॥ २३ ॥

एतावद्धीति होवाच बालाकिः ॥ २४ ॥

तं होवाचाजातशत्रुः, 'मृषा वै किल मा संवादयिष्ठाः ब्रह्म ते ब्रवाणीति ॥ २५ ॥

स होवाच, 'यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत् कर्म, स वै वेदितव्यः' इति ॥ २६ ॥

---

तूष्णीमास । उत्तरापरिस्फूर्तेरिति शेषः ॥ २२ ॥

एतावन्नु बालाक इति । हे बालाके ! एतावदेव खलु ते विदितमित्यर्थः ॥ २३ ॥

एतावद्धीति । एतावदेव मे विदितमित्युवाचेत्यर्थः ॥ २४ ॥

मृषा वै.... । ब्रह्म ते ब्रवाणीति मृषोक्त्वा मा मृषैव संवादयिष्ठाः संवादं कारितवानसि। एतावन्तं कालमब्रह्मवाद एव प्रवृत्त इत्यर्थः॥२५॥

तर्हि किं तत् वेदितव्यं ब्रह्मेत्यत्राह स होवाच यो वै... वेदितव्य इति । वैशब्दोऽवधारणे। त्वया ब्रह्मत्वेनोपदिष्टानामादित्यादिपुरुषाणां यः कर्ता = ते यत्कार्यभूता ; किं विशिष्याभिधीयते ; यस्य प्रत्यक्षादिसन्निधापितं चिदचिद्रूपं समस्तं जगत् कर्म कार्यम्— 'क्रियत इति व्युत्पत्त्या कर्मशब्दः कार्यवचनः स एव वेदितव्यः ; न तु त्वदुपन्यस्ता आदित्यादय इति भावः ॥ २६ ॥

---

मृषा वै किलेति । अब्रह्म त्वं ब्रह्मभिन्न इव मत्संमतिं प्रतीक्षितवानिति भावः । २५

एतेषां पुरुषाणां कर्तेत्यनेन सर्वदेवप्रपृक्तमुपब्रह्मणं मा भूदिति त्वयुपर्युक्तमाप्तभूतसर्वप्रपञ्चहेतुपरब्रह्मग्रहणव्यक्तये यस्य वैतत्

तत उ ह बालाकि समित्पाणि प्रतिचक्राम, उपायानीति ॥२७॥
त होवाचाजातशत्रु, 'प्रतिलोमरूपमेव स्यात् यत् क्षत्रियो ब्राह्मणमुपनयेत् (नयीत)। एहि व्येव त्वा ज्ञपयिष्यामीति ॥ २८ ॥
त ह पाणावभिपद्य प्रवव्राज ॥ २९ ॥

---

तत उ उपायानीति। उशब्दोऽवधारणे। हशब्द प्रसिद्धौ। एवमजातशत्रुणोक्तो बालाकि गताभिमानो, 'नीचादप्युत्तमा विद्याम्,' 'आपत्कल्पो ब्राह्मणस्याब्राह्मणात् विद्योपयोग' इति शास्त्रमनुसृत्य क्षत्रियादप्यजातशत्रोर्विद्यामुपादित्सु, 'नानुपसन्नाय ब्रह्मोपदेष्टव्यम्' इति शास्त्र जानन् समिद्धारहस्त शिष्यस्सन्, उपगच्छामीति प्रवृत्त॥२७

प्रतिलोम.. ज्ञपयिष्यामीति। क्षत्रियो ब्राह्मणमुपनयेत्' इति यत्, तत् विपरीतरूपमेव स्यात्। अत एहि त्वामुपनयनमन्तरेणैव ब्रह्म विज्ञापयिष्याम्येव ॥ २८ ॥

त ह प्रवव्राज। त बालाकि पाणौ गृहीत्वा निर्गत इत्यर्थ ॥

---

कर्मेत्युक्तम्। वाशब्द एतेषा पुरुषाणा कर्तेति वाक्यच्छलोपपादनानादर-प्रदर्शनार्थ। वालाक्यधिकरणपूर्वपक्षिपक्षे वाशब्दो न युक्त किं तु चशब्द। पुरुषाणा कर्तेत्युक्तार्थोपपादकपुण्यरूपकर्मसमर्पकपरत्वाद् वाक्यस्य। अत एव तत्र, पुण्यापुण्यलक्षण च कर्म यस्य' इति श्रीभाष्यम्। यस्य कार्यस्य यत्समवेतत्वनिविषयभूतमित्यर्थ। क्रियमाण सृज्यमानमेतत् सर्व यस्येत्यन्वये तु जगत् यच्छेषभूतमित्येव षष्ठ्या शेषत्वाविनिमय ऽपि स्यात्। पूर्वोक्तोऽर्थ स्वरस ॥

प्रतिलोमरूपमिति। पण्डितरूपवेदनीयमित्यादावपि अतिशये रूपप्रत्यय। अतीव प्रतिलोममित्यर्थ। २८

प्रवव्राजेति सन्यासे प्रसिद्धमपीह तावदविवक्षया प्रयुक्तम्। २९

तौ ह सुप्तं पुरुषमीयतुः ॥ ३० ॥

तं हाजातशत्रुरामन्त्रयाञ्चक्रे, 'बृहन् (त्) पाण्डरवासः सोमराजन्निति ॥ ३१ ॥

---

तौ ह सुप्तं पुरुषमीयतुः। तौ बालाक्यजातशत्रू राजभवने सुप्तं कञ्चित् पुरुषं प्रापयन्तावित्यर्थः । बालाक्यधिकरणभाष्ये, 'तौ ह सुप्तं पुरुषमाजग्मतुः' इत्युदाहृतं वाक्यं बृहदारण्यकगतम् ; नैतच्छाखागतम् । अत एव तत्र व्यासार्यैः, "तौ ह सुप्तं पुरुषमीयतुः इति श्रुतिः" इत्युक्तम् ॥

बृहन् पाण्डरवासः सोमराजन् । 'प्राणो वाव ज्येष्ठः श्रेष्ठश्च' इति ज्यैष्ठ्यश्रैष्ठ्यगुणेन प्राणस्य बृहत्त्वात् बृहन्नित्यामन्त्रणम् । पाण्डरवासस्त्वं च प्राणधर्मः । किं मे वासः' इति प्राणेन पृष्टे, 'आपो वासः' इति अपां प्राणवासस्त्वोक्तेः । तासाञ्चापाम्, 'यच्छुक्लम्, तदपाम्' इति शुक्लवर्णाश्रयत्वात् पाण्डरत्वं युक्तम् । सप्तान्नब्राह्मणे, 'अथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्रः' इति प्राणस्य चन्द्रसंबन्धप्रतीतेः लक्षणया सोमेति प्राणस्य संबोधनम् । 'प्राणो वै सम्राट्' इति श्रवणात् राजन्नित्यामन्त्र्यत इति व्यासार्यैरुक्तम् ॥ ३१ ॥

---

ननु बालाक्यधिकरणस्य कौषीतकिश्रुतिविषयकतायाः प्रागेवोक्तत्वात् तत्र च भगवता भाष्यकृता आजग्मतुरित्येव पठितत्वात् कथम् ईयतुरिति पठित्वा व्याख्यायत इत्यत्राह बालाक्यधिकरणभाष्ये इति । ३०

बृहन् पाण्डरवासः सोमराजन् इति । अत्र कर्तव्यो विचारः सर्वैः बृहदारण्यकभाष्यपरिष्कारयोर्द्रष्टव्यः। सम्राट् पदविषयश्च । ३१

स उ ह तूष्णीमेव शिश्ये ॥ ३२ ॥
तत उ हैनं यष्ट्या विचिक्षेप ॥३३॥ स तत एव समुत्तस्थौ ॥३४॥
तं होवाचाजातशत्रुः, 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट? क्व(क्व वा ए) तदभूत्? कुत एतदागात्' इति ॥ ३५ ॥

---

स उ ह तूष्णीमेव शिश्ये । अनुत्थित एव यथापूर्वमशयिष्टेत्यर्थः ॥
तत उ हैनं यष्ट्या विचिक्षेप । सुप्तं यष्ट्या ताडितवानित्यर्थः ॥
स तत एव समुत्तस्थौ । दण्डताडनादेव समुत्तस्थौ । न तु प्राणनामामन्त्रणादिनेत्यर्थः । प्राणनामभिरामन्त्रणेऽप्यनुत्थानप्रदर्शनं प्राणान्यत्वज्ञापनार्थम्। सुषुप्तिदशायामुपरतव्यापारेभ्यः शारीरेन्द्रियेभ्योऽन्यत्वं सुज्ञानमपि, तस्यामपि दशायामनुपरतव्यापारात् प्राणादन्यत्वं ज्ञापनीयमिति । प्राणनामभिरामन्त्रणेऽप्यनुत्थानेन दण्डताडनोत्थानेन च जीवस्य प्राणव्यतिरेको दर्शितः ॥ ३४ ॥

एवं देहेन्द्रियमनःप्राणव्यतिरिक्तं जीवं प्रदर्श्य ततोऽतिरिक्तं परमात्मानं बोधयितुमाह तं होवाच । हे बालाके! एष पुरुषः अशयिष्ट इत्येतत् क्व इति स्वप्नस्थानप्रश्नः । यद्वा, एतच्छब्दः स्वप्नपरः । अशयिष्टेत्येतत् प्रत्ययार्थमात्रपरम् । क्व एतत् स्वप्नमकृतेत्यर्थः । सर्वथा स्वप्नस्थानप्रश्नः । क्व वा एतदभूदिति सुषुप्तिस्थानप्रश्नः । एतच्छब्दस्य नपुंसकलिङ्गत्वेऽपि प्रकृतवाचित्वप्रकृतिस्वारस्यात् प्रकृतपुरुष

---

यष्ट्या विचिक्षेपेति । पाणिनापेषं बोधयाञ्चकार' इति बृहदारण्यकम् । ३३
स्वप्नमनुभूतमिति पाठे, 'सन्ध्यं स्वप्नं तृतीयं स्थानम्' इति श्रुतिदर्शनात् क्लीबस्यापि साधुत्वं द्रष्टव्यम् । ३५

तदु ह बालाकिर्न विजज्ञौ ॥ ३६ ॥

त होवाचाजातशत्रुः, यत्रैष एतद्बालाके पुरुषोऽशयिष्ट, यत्रैतदभूत्, कुत(यत?) एतदागात् ॥ ३७ ॥

हिता नाम हृदयस्य नाड्यो हृदयात् पुरीततमभिप्रतिष्ठन्ति। यथा [च] सहस्रधा केशस्यापि पातः तावदण्व्यः पिङ्गळस्याणिम्ना तिष्ठन्ते शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति। तासु तदा भवति ॥

---

शब्दितजीवपर (रत्वम् ?)। ततश्च क सुप्तोऽभूदित्यर्थ । कुत एत दागादिति । अत्राप्येतच्छब्दो जीवपर एव । प्रबोधकालीनजीवोद्गमनापादान किमित्यर्थ । ततश्च जीवस्य स्वप्नस्थानसुषुप्तिस्थानोद्गमनापादानानि पृष्टानि भवन्ति । यद्वा—त्रिष्वपि प्रश्नेषु एतच्छब्द सप्तम्यत । एतस्मिन् काल इत्यर्थ । 'सुपा सुलुक्' इति सुपो लुक् । एतस्मिन् काले क स्वाप्नमनुभूतम् , एतस्मिन् काले क सुप्त , एतस्मिन् काले कुतो निर्गत इति । एवञ्च त्रयाणामपि एतच्छब्दानामैकरूप्यञ्च सिध्यति ॥

तदु ह बालाकिर्न विजज्ञौ । उत्तर बालाकिर्न ज्ञातवानित्यर्थ.॥

त होवाचाजातशत्रुः यत्रेत्यादि । उच्यत इति शेष ॥३७

स्वप्नस्थानप्रश्न प्रतिवक्ति हिता नाम. तदा भवति । आत्मनो हितावहत्वात् हिता इति प्रसिद्धा हृदयसम्बन्धिन्यो नाड्य हृदयात् पुरीतत पुरीतदाख्य हृदयान्तर्वर्तिमांसपिण्डविशेषमभिप्रस्थिता भवन्ति । हृदये पुरीतति बद्धा भवन्ति । ततश्च यथा केशस्यापि सहस्रधा पात

---

आसु तदा भवतीति । ननु जीवातिरिक्तपरमात्मप्रतिबोधनार्थं प्रवृत्तेन अजातशत्रुणा कैतदभूदित्यादि पृष्ट्वा व्याख्यानं

यदा सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति । तदैनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः

---

*अतिसूक्ष्म, तावदण्व्यः तथा अण्व्यः सूक्ष्मा पिङ्गलस्य शुक्लस्य* कृष्णस्य पीतस्य लोहितस्य अन्यपीतादिरसस्य अणिम्ना लेशेन पूर्णा तिष्ठति । अतिसूक्ष्मत्वात् लेशेनापि पूर्णा भवन्ति । तासु नाडीषु तदा स्वप्नकाले आश्रितो भवतीत्यर्थः ॥ ३८ ॥

सुषुप्तिस्थानप्रश्नस्योत्तरमाह यदा सुप्तः सहाप्येतीति । सुप्तः — वर्तमाने क्तः — स्वपन् सन् यदा उपरतस्वप्नदर्शनो भवति —

---

नियताम् । स्वप्नस्थानं किमिति प्रथमप्रश्नः तद्विवरणञ्च व्यर्थम्, परमात्मनः सुप्तनाधारत्वात्, नाडीनामेव तथात्वात् परमात्मनिरूपणे तदनुपयोगादिति चेत्—उच्यते । 'य एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म' इत्यनेनैव जीवविलक्षणे ब्रह्मणि उपदिष्टे सिद्धे सुप्तप्रतिबोधनाद्यर्था प्रवृत्तिरेव किमर्थेति विचारणीयम् । तदुच्यते । बालाकिः स्वोपासितान् पुरुषान् कीर्तयन् शारीरं पुरुषं *जाग्रन्तं सुप्तञ्च पृथक्पृथक् निर्दिदेश । सुप्तं तु निजघ्नौ । तेनायं* मन्यते—जाग्रतः पुंसः सुप्तोऽन्यः, व्याघ्रवराहाद्यनेकाभिमानशालित्वात् सुप्तस्य । मन्यते हि स्वप्ने, व्याघ्रोऽहम्, महाराजोऽहम्, महाब्राह्मणोऽहमित्येवम् । सुषुप्तिकाले तु जीवस्य लीनत्वात् श्वासप्रश्वासरूपेण तदाऽवस्थितः प्राण एव सुषुप्त स्यादिति तस्य पुरुषत्वाभावादेव सुप्तो न गणनीय इति । अतोऽयं बालाकिः प्रतिबोधनीयः, 'एक एवाऽऽत्मा जागरस्वप्नसुषुप्तीरनुभवति स्थानभेदेन । न च सुषुप्तः प्राणः । तथा सति प्राणनामभिरामन्त्रणे स उत्तिष्ठेत् । न चैवम्' इति । तत्र, 'यत्रैतत् सुप्तोऽभूत्, य एष विज्ञानमय' इति जाग्रत्सुप्तैक्यं दर्शितम् । *जागरस्थानापेक्षयाऽतिरिक्तं नाडीस्थानं प्राप्य स एव* स्वप्नमनुभवति परमात्मानं प्राप्य सुषुप्तिमित्युपदिष्टं भवति । ३८

सहाप्येति ; श्रोत्रं सर्वैः शब्दैः सहाप्येति ; मनः सर्वैर्ध्यानैः सहाप्येतीति ॥ ३९ ॥

स यदा प्रतिबुध्यते, यथा अग्नेर्विस्फुलिङ्गाः विप्रतिष्ठेरन्,

---

यदाशब्दानुरोधात् तदाशब्दोऽध्याहर्तव्यः — अथ तदनन्तरं अस्मिन् प्राणे प्राणशरीरके परमात्मनि एकधा भवति । एकधाभावो नाम— जाग्रदाद्यवस्थाजनितदेहात्माभिमानकृतरागद्वेषादिलक्षणकालुष्यादिराहित्येनावस्थानम् । 'सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति' इत्यादौ प्राणशब्दस्य परमात्मनि प्रचुरप्रयोगात्, वाजसनेयके समानप्रकरणे, 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति आकाशशब्दितस्य सुषुप्त्याधारत्वश्रवणाच्च आकाशप्राणशब्दयोः परमात्मपरत्वमन्तरेणा विरोधासंभवात्, 'सता सोम्य तदा संपन्नो भवति', 'सति संपद्य न विदुः', 'प्राज्ञेनात्मना संपरिष्वक्तः' इति परमात्मनः सुषुप्त्याधारत्वस्य श्रुत्यन्तर(रे?)श्रवणाच्च प्राणशब्दो योगेन वा अपर्यवसानवृत्त्या वा ब्रह्मपरः । परमात्मनो बुद्धिस्थत्वात् अस्मिन् इति निर्देशोऽप्युपपद्यते । अथ (तदा ?) तदुत्तरक्षण एव परमात्मानम् अपियन्तं जीवं वागादीन्द्रियाण्यपि [तत्] स्वकार्येण सहापियन्तीत्यर्थः । नामशब्दो नामाभिलपनपरः । रूपशब्दशब्दौ तज्ज्ञानौपयिकव्यापारपरौ । रूपशब्दादीनां सुषुप्तौ लयासंभवात् । इन्द्रियव्यापारोपरतेरेव सुषुप्तिशब्दार्थत्वात् ॥ ३९

उद्गमनापादानप्रश्नस्योत्तरमाह स यदा... लोकाः । जीवप्रबोध

---

यथाग्नेरिति । अत्र, 'यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गाः' इति श्रीभाष्यपाठः । ४०

एवमेवैतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते । प्राणेभ्यो देवाः। देवेभ्यो लोकाः ॥ ४० ॥ तद्यथा क्षुरः क्षुरधाने अवहितः स्यात्, विश्वम्भरो वा विश्वम्भरकुलाये, एवमेवैष प्राज्ञ आत्मा इदं शरीर-मात्मानमनुप्रविष्टः आ लोमभ्यः आ नखेभ्यः ॥ ४१ ॥

तमेतमात्मानमेते आत्मानोऽन्ववस्यन्ति ॥ ४२ ॥

---

दशाया अग्नेर्विस्फुलिङ्गा इव एतस्मात् परमात्मन प्राणशब्दिता जीवा यथास्थान प्रस्थिता भवन्ति । तेभ्यश्च देवशब्दितानि इन्द्रियाणि, एतेभ्यश्च लोकशब्दितानि ज्ञानानि भवन्तीत्यर्थ ॥ ४० ॥

तद् यथा क्षुरः आ नखेभ्यः । क्षुरो धीयतेऽस्मिन्निति क्षुरधानं क्षुरकोश । तस्मिन् यथा क्षुर अवहितः पिहितप्रविष्ट ,— विश्व बिभर्ति वैश्वानराग्न्यादिरूपेणेति विश्वम्भरोऽग्नि — तस्य कुलाये नीडे — , एवमेवैष परमात्मा इद पुरोवर्तिशरीरम् आलोमभ्य आ नखेभ्य । व्याप्त इत्यध्याहार व्याप्त्या आत्मान जीवात्मानमनु-प्रविष्टः अन्तर्यामितयाऽनुप्रविष्ट इत्यर्थ । तादृशस्य सुषुप्त्याधारत्वो-द्गमनापादानत्वे सम्भवत इति भाव । यद्वा इद वाक्य जीवशरीरपरमेव व्याख्येयम् । आत्मानमिदं शरीरम् आत्मत्वेनाभिमन्यमानमिद शरीरम् आलोमभ्य आनखेभ्य जीवरूपेण प्रविष्ट इत्यर्थ ॥ ४१ ॥

तमेतमात्मानमितर आत्मनोऽन्ववस्यन्ति । एतादृशं पर-मात्मानम् इतरे जीवा अन्ववस्यन्ति अनुवर्तन्ते ॥ ४२ ॥

---

अवहितः अधस्तात् निहित , अन्तर्हित इति वा । शरीर-मात्मानमित्युक्तयोर्भेदात् उभयोः अनुप्रविष्ट इत्यत्रान्वयायोगात् शरीरं व्याप्त आत्मानमनुप्रविष्ट इत्यध्याहारेण प्रथमयोजना ।   ४१

सहाप्येति ; श्रोत्रं सर्वैः शब्दैः सहाप्येति ; मनः सर्वैर्ध्यानैः सहाप्येतीति ॥ ३९ ॥

स यदा प्रतिबुध्यते, यथा अग्नेर्विस्फुलिङ्गाः विप्रतिष्ठेरन्,

---

यदाशब्दानुरोधात् तदाशब्दोऽध्याहर्तव्यः — अथ समानन्तरं अस्मिन् प्राणे प्राणशरीरके परमात्मनि एकधा भवति । एकधाभावो नाम— जाग्रदाद्यवस्थाजनितदेहात्माभिमानकृतरागद्वेषादिलक्षणकालुष्यादिराहित्येनावस्थानम् । 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति' इत्यादौ प्राणशब्दस्य परमात्मनि प्रचुरप्रयोगात्, वाजसनेयके समानप्रकरणे, 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति आकाशशब्दितस्य सुषुप्त्याधारत्वश्रवणाच्च आकाशप्राणशब्दयोः परमात्मपरत्वमन्तरेण विरोधासंभवात्, 'सता सोम्य तदा संपन्नो भवति', 'सति संपद्य न विदुः', 'प्राज्ञेनात्मना संपरिष्वक्त' इति परमात्मनः सुषुप्त्याधारत्वस्य श्रुत्यन्तर(रे?)श्रवणाच्च प्राणशब्दो योगेन वा अपर्यवसानवृत्त्या वा ब्रह्मपर. । परमात्मनो बुद्धिस्थत्वात् अस्मिन् इति निर्देशोऽप्युपपद्यते । अथ (तदा ?) तदुत्तरक्षण एव परमात्मानम् अपियन्तं जीवं वागादीन्द्रियाण्यपि [तत्] सकार्येण सहापियन्तीत्यर्थ । नामशब्दो नामाभिलपनपरः । रूपशब्दशब्दौ तज्ज्ञानौपयिकव्यापारपरौ । रूपशब्दादीनां सुषुप्तौ ल(य)ासंभवात् । इन्द्रियव्यापारोपरतेरेव सुषुप्तिशब्दार्थत्वात् ॥ ३९

उद्गमनापादानपक्षस्योत्तरमाह स यदा .. लोकाः। जीवप्रबोध-

---

यत्राग्नेरिति । अत्र, 'यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गाः' इति श्रीभाष्यपाठः ।

स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ, तावदेनमसुरा अभिबभूवुः । स यदा विजज्ञौ, अथ हत्वाऽसुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्यैत ।

सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति, य एवं वेद । य एवं वेद ॥ ४५ ॥

---

**स यावत्...य एवं वेद** । इन्द्रो ब्रह्मविद्यालाभात् प्रागसुरैः पीडितः *इमां ब्रह्मविद्यां लब्ध्वा असुरहननेन विजयी सर्वदेवाधिपत्यं* सर्वदेवश्रैष्ठ्यं **स्वाराज्यशब्दिताकर्मवश्यत्वलक्षणं** च प्राप । अतोऽन्योऽप्येवं वित् सर्वभूताधिपत्यं सर्वभूतश्रैष्ठ्यं पापाहतिपूर्वकमकर्मवश्यत्वलक्षणं **स्वाराज्यशब्दितं** मोक्षञ्च प्राप्नोतीत्यर्थः ।

व्यासार्यैस्तु....''सर्वान् पाप्मनोऽपहत्येत्यनेनापहतपाप्मत्वादिगुणाष्टकमुक्तम्, जरादीनामपि पाप्मान्तर्गतत्वात् । उक्तं हि वाक्यकारैः, 'स्युः पाप्मानः कालजरामृत्युशोकादयः संख्यातत्वात्' इति । **स्वाराज्यम्** स्वाधीनत्वम् । अतः सत्यकामत्वं सत्यसंकल्पत्वञ्चोक्तं भवति । अतः (तत् ?) स्वाराज्यं संसारिभ्योऽस्य श्रैष्ठ्यरूपम् **आधिपत्यम्** । अधिपतिः परमात्मा, 'सर्वस्याधिपतिः' इति श्रुतेः । तत्संबन्धि **आधिपत्यम्** । गुणाष्टकं हि ब्रह्मसंबन्धितया ब्राह्ममुच्यते, ''ब्राह्मेण जैमिनिः''इति । अतो ब्रह्मसंबन्धितया तत्साधर्म्यरूपं संसारिभ्यः श्रेष्ठतारूपं यत् स्वाराज्यम्, तदेतीति श्रुतेरर्थः ''इत्युक्तम् । [य एवं वेद ।] *अन्योऽपि य एतामुपनिषदं वेद, सोऽपि ईदृशं फलमाप्नोतीत्यर्थः* ॥ ४५

---

अन्योऽपि य एतामिति । इदं च एवं वेदेत्यभ्यासस्यार्थवर्णन-

यथा श्रेष्ठिन स्वा ॥ ४३ ॥

तद् यथा श्रेष्ठी स्वैर्भुङ्क्ते, यथा श्रेष्ठिन स्वाः भुञ्जते—एवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते । यथा श्रेष्ठी स्वै, एव वा एतमात्मानोऽन्ववस्यन्ति ॥ ४४ ॥

---

तत्र दृष्टान्तमाह यथा श्रेष्ठिन स्वाः । यथा श्रेष्ठ्यवन्त स्वा ज्ञातय अनुवर्तन्ते ॥ ४३ ॥

तद् यथा श्रेष्ठी । यथा कश्चित् प्रभु भोगोपकरणभूतै स्वैर्ज्ञातिभि भोगान् भुङ्क्ते यथा स्वाश्च बन्धव त प्रभुमैश्वर्यादि समग्रमनुभूय तद्दत्तानि वित्तादीनि चोपनीय हृष्यन्ति—एवमेवाय परमात्मा स्वोपकरणभूतैर्जीवात्मभिर्लीलारस भुङ्क्ते । ते चाऽऽत्मान परमात्मदत्तभोगोपकरणा सर्वैश्वर्यादिगुणविशिष्ट तमनुभूय हृष्टा भवन्तीत्यर्थ । यथा वा स्वाः श्रेष्ठिन भुञ्जन्तीति पाठे, यथा प्रधानपुरुष स्वकीयैर्भृत्यादिभि भोगसाधनानि उपहरद्भि हेतुभि भोगान् भुङ्क्ते, यथा च भोगसाधनानि उपहरन्त प्रधानपुरुषं पालयन्ति—एवमित्यर्थ । 'भुज पालने' इति भुजे परस्मैपदित्वादिति ध्येयम् । ईदृश भोक्तृत्व जीवद्वारा वा परमात्मनि योजनीयम् ॥ ४४ ॥

---

श्रेष्ठ्यवन्तमिति । श्रेष्ठिपद वैश्ये रूढ तदर्थविवक्षयाऽप्यन्वयमर्हति । अथापि तथा विशेषग्रहणे कारणाभावात् श्रेष्ठ्यवन्तमित्यर्थवर्णनम् । ४३

तद्यथा श्रेष्ठीति । अत्र, तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वा श्रेष्ठिन भुञ्जन्ति, एवमेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते, एवमेवैत आत्मान एत भुञ्जन्ति' इति श्रीभाष्यपाठ । ४४

स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ, तावदेनमसुरा अभिबभूवुः। स यदा विजज्ञौ, अथ हत्वाऽसुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येयाय।

सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति, य एवं वेद। य एवं वेद ॥ ४५ ॥

---

स यावत्...य एवं वेद। इन्द्रो ब्रह्मविद्यालाभात् प्रागसुरैः पीडितः इमां ब्रह्मविद्यां लब्ध्वा असुरहननेन विजयी सर्वदेवाधिपत्यं सर्वदेवश्रैष्ठ्यं स्वाराज्यशब्दिताकर्मवश्यत्वलक्षणं च प्राप। अतोऽन्योऽप्येवं वित् सर्वभूताधिपत्यं सर्वभू-श्रैष्ठ्यं पापाहतिपूर्वकमकर्मवश्यत्वलक्षणं स्वाराज्यशब्दितं मोक्षञ्च प्राप्नोतीत्यर्थः।

व्यासार्यैस्तु...."सर्वान् पाप्मनोऽपहत्येत्यनेनापहतपाप्मत्वादिगुणाष्टकमुक्तम्, जरादीनामपि पाप्मान्तर्गतत्वात्। उक्तं हि वाक्यकारैः, 'सर्वे पाप्मानः कालजरामृत्युशोकादयः सङ्ख्यातत्वात्' इति। स्वाराज्यम् स्वाधीनत्वम्। अतः सत्यकामत्वं सत्यसङ्कल्पत्वञ्चोक्तं भवति। अतः (तत् ?) स्वाराज्यं संसारिभ्योऽस्य श्रेष्ठत्वरूपम् आधिपत्यम्। अधिपतिः परमात्मा, 'सर्वस्याधिपतिः' इति श्रुतेः। तत्सैवन्धि आधिपत्यम्। गुणाष्टकं हि ब्रह्मसम्बन्धितया ब्राह्ममुच्यते, "ब्राह्मेण जैमिनिः" इति। अतो ब्रह्मसम्बन्धितया तत्साधर्म्यरूपं संसारिभ्यः श्रेष्ठतारूपं यत् स्वाराज्यम्, तदेतीति श्रुतेरर्थः" इत्युक्तम्। [य एवं वेद"।] अन्योऽपि य एतामुपनिषदं वेद, सोऽपि ईदृशं फलमाप्नोतीत्यर्थः ॥ ४५

---

अन्योऽपि य एतामिति। इद य एवं वेदेत्यभ्यासस्यार्थवर्णन-

ओं वाङ्मे मनसीति शान्तिः ।

इति ऋग्वेदे कौषीतक्युपनिषदि चतुर्थोऽध्यायः ॥

इति कौषीतकिब्राह्मणोपनिषत् ॥

शुभमस्तु

—:*:—

---

एतत् प्रकरणं समन्वयाध्याये चतुर्थपादे चिन्तितम् । तत्र हि—'यो वै बालाक एतेषा पुरुषाणा कर्ता यस्य वैतत् कर्म स वै वेदितव्य.' इत्यत्र [य· १] आदित्यादिपुरुषाणा कर्ता, तत्कर्तृत्वनिर्वाहकञ्च पुण्य पापादिलक्षणं कर्म यस्यास्ति, स वेदितव्य इत्यर्थप्रतीते, कर्मशब्दस्य पुण्यपापयो· रूढत्वात्, सुप्तपुरुषागमनयष्टिघातोत्थापनादीनाञ्च जीवलिङ्गत्वात्, 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते' इति वाक्यप्रतिपाद्यभोक्तृत्वपरिपाल्यत्वयोर्जीव एव संभवात् जीव एव प्रकरणप्रतिपाद्य इति प्राप्ते—उच्यते, "जगद्वाचित्वात्" । 'यस्य वैतत्कर्म' इत्यत्र कर्मशब्दस्य यद्यपि पुण्यपापादौ रूढिरस्ति—तथापि चलनेऽपि रूढ्यविशेषेण रूढ्योः परस्परकलहायमानत्वेनार्थनिर्णयासामर्थ्यात्, एतच्छब्दस्य प्रत्यक्षादिसन्निधापितजगत्परत्वौचित्येन तत्समानाधिकृतकर्मशब्दस्यापि, क्रियत इति कर्मेति व्युत्पत्त्या जगद्वचनत्वमेवोचितम् । ततश्चायमर्थ —स्वदु-

---

मिव । अभ्यासस्य समाप्त्यर्थत्वं सर्वत्र प्रसिद्धमिहापि संभवति ।

जगद्वचनत्वमेवोचितमिति । नात्र कर्मपदं जगदित्यर्थकम्: अप्रसिद्धेः । अपितु जगति एतत्पदेनोक्ते तद्गतकार्यत्ववाचि । तथा च भाष्यम् "कृत्स्नस्य जगतः कार्यत्ववाचि" इति । एतच्छब्द एव सर्वे-

क्तानामादित्यादिपुरुषाणां य कर्ता, अन्नो गत्वा, सर्वमपि जगत् यस्य कार्यम्, स एव वेदितव्य । ततश्च नात्र जीवस्य प्रसक्ति । यदि हि पुण्यापुण्यलक्षणकर्मसंबन्धी जीवोऽत्र वाक्ये प्रतिपाद्यः स्यात्-- तदा आदित्यादिषु पुरुषवादिनं बालाकिमब्रह्मवादित्वेन प्रत्याख्यातवता अजातशत्रुणा स्वयमब्रह्मण उपदेश्यत्वासंभवात् [असामञ्जस्य स्यात् ?] । अतो नायं कर्मशब्द पुण्यपापवचन अपितु जगद्वचन । "जीवमुख्य-प्राणलिङ्गान्नेति चेन् तद् व्याख्यातम्" । यद्यपि धातोत्थापनभोक्तृत्वादि-जीवलिङ्गात्, 'अथास्मिन् प्राण एवैकधा भवति' इति प्राणशब्देन प्राण-भृतं निर्दिश्य तत्र करणग्रामस्यैकधाभावश्रवणात्, प्राणभृत्त्वस्य जीव-

---

जगत्परः । तद्गतकार्यत्वं कर्मेत्यनेनोच्यते, सर्वं यस्य कार्यमिति । एषप्रकारेण पुण्यापुण्यपरत्वेऽनौचित्यातिशयो ज्ञाप्यते । तत्पक्षे हि पुरुषाणां कर्तृत्वयुक्तं कर्तृत्वं जीवे अस्वरसम्--पुरुषसृष्टिसंकल्पाश्रयत्वा-भावात् ; पुरुषोत्पत्तिपर्यवसायिपुण्यादिकर्मकर्तृत्वस्यैव तत्र सत्त्वात् । तावदर्थविवक्षायां यस्य स्वैतत्कर्मेति पुनरुक्तं स्यात् । यस्य कर्मेत्येवालमिति एतत्पदवैयर्थ्यं च । वाशब्दश्चानन्वितः, चशब्दस्यैव युक्तत्वात् । एवमत्र भाष्ये, 'यद्यपि रूढिरस्ति, तथापि' इति प्रयोग-स्वारस्यात् पुण्यापुण्ययोः रूढावप्यनतिसंमतिराविष्क्रियते ; यत्नेन रूढेरावश्यकत्वेन प्रकरणाद्यनुरोधेन कर्मत्वेन रूपेणैव तद्विशेषग्रहण-संभवादिति ।

प्राणशब्देनेति । अत्र प्रकरणे प्राणनामभिरामन्त्रणरूपं प्राणलिङ्गं प्रथममस्ति । पश्चात्, 'प्राण एवैकधा भवति' इति प्राणशब्दश्च । तत्र प्रथमस्य आत्मनि प्राणव्यतिरिक्तताज्ञापनार्थता पूर्वपक्षिणोऽपीष्टा । तेन प्राणव्यतिरेकसिद्धावपि जीवत्वं न सिद्ध्यति । अतो द्वितीय-

लिङ्गत्वाच्च जीव एवात्र प्रतिपाद्यते । न च प्राणशब्दस्य मुख्यप्राण एवार्थः, प्राणनामभिरामन्त्रणाश्रवणेन मुख्यप्राणव्यतिरिक्तत्वस्य ज्ञापितत्वेन मुख्यप्राणस्य एतत्प्रकरणप्रतिपाद्यत्वासम्भवेन प्राणशब्दस्य प्राणसहचरितजीवलक्षकत्वस्यैव युक्तत्वात् । ततश्च वक्त्रादिजीवलिङ्गात् प्राणशब्दसङ्कीर्तनाच्च प्राणभृत् जीव एवात्र प्रतिपाद्यत इति चेत्—तत्र व्याख्यातम् । प्रतर्दनविद्यायाम्, 'यत्र प्रकरणे ब्रह्मलिङ्गानि चिदचिल्लिङ्गानि चोपलभ्यन्ते, तत्र चिदचिल्लिङ्गानां चिदचिच्छरीरकान्वयसम्भवात् चेतनाचेतनशरीरकब्रह्मोपासनं विधीयते' इत्युक्तत्वात् । इहाप्यन्यथासिद्धजीवलिङ्गमस्ति चेत् —तच्छरीरकब्रह्मोपासनार्थं तन्मध्यवर्तिजीवोपदेशः । अत्र च प्रकरणे उपक्रम एव, 'मृषा वै मा संवादयिष्ठाः' इति अब्रह्मवादप्रत्याख्यानदर्शनात् पाप्मापहतिपूर्वकस्वाराज्यरूपब्रह्मविद्यैकान्तफलेनोपसंहारात् प्रकरणस्य ब्रह्मपरत्वेन निश्चितत्वात् मध्ये जीवोपदेशस्तच्छरीरकतया ब्रह्मोपासनार्थ इत्यध्यवसीयत इत्यर्थः । "अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके" । यष्टिघातेन जीवसम्बोधनं जीवातिरिक्तब्रह्मप्रतिबोधनार्थमिति जैमिनिराचार्यो

---

ग्रहणम् । ननु प्राणशब्दस्य जीवलिङ्गत्वेन वर्णनं पूर्वपक्षीष्टं चेत्, 'जीवलिङ्गान्नेति चेत्' इत्येतावदेव सूत्रमिति चेत्—सत्यम् । सूत्रकार, 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यात्' इति ॥ उक्तसूत्रप्रत्यभिज्ञानसम्पत्तिसौकर्याय पूर्वपक्ष्याशयं जीवमुख्यप्राणलिङ्गादिति पूर्वसूत्रप्रयोगेणानुवदतीति ज्ञेयम् । न हि प्राणस्य प्रकरणप्रधानप्रतिपाद्यता सम्भवति, 'तद्यथा रथस्य' इत्याद्युक्तभोक्तृत्वात्मत्वादेरनन्वयात् ।

जैमिनिराचार्यो मन्यत इति । नन्वत्र पूर्वसूत्रे जीवशरीरक-

मन्यते । 'कुत' प्रश्नव्याख्यानाभ्याम् = प्रश्नप्रतिवचनाभ्याम् । यष्टिघातेनापि जीवप्रतिबोधनानन्तरम्, 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत् कुत एतदागात्' इति जीवसुषुप्त्याधारप्रश्नस्य, 'अथास्मिन् प्राण एवैकधा भवति' इति परमात्मवाचिप्राणशब्देन प्रतिवचनदर्शनाच्च जीवातिरिक्तब्रह्मप्रतिबोधनशेषतयैव जीवोपन्यास । न तु स्वस्यैव शेषितया। ननु, 'क्वैतदभूत्' इत्येतच्छब्देन न जीवोऽभिधीयते, येन तत्प्रतिपादनं परमात्मप्रतिपत्तिशेषभूतं स्यात् । अपि तु एतच्छब्देन करणजातमभिधीयते । एतत् करणजातं सुषुप्तौ क्व लीनम्, प्रबोधदशायां कुत उत्थितमिति प्रश्न –'अथास्मिन् प्राण एवैकधा भवति' इति प्राणशब्दनिर्दिष्टे प्राणभृति लय इति प्रतिवचनतात्पर्यञ्च किं न स्यादिति चेत्, तत्राह, "अपि चैवमेके"। एके—वाजसनेयशाखिन प्रश्नप्रतिवचनयो जीवसुषुप्त्याधारविषयत्व स्पष्टमामनन्ति । 'य एष विज्ञानमय पुरुष क्वैष तदाभूत्' इति, 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति च । अतो जीवप्रतिपादनस्य परमात्मप्रतिपादनशेषत्वात् परमात्मैवास्मिन् प्रकरणे प्रतिपाद्य , न जीव इति स्थितम् ॥ ४५ ॥

---

ब्रह्मोपासनार्थं जीवोपदेश इति स्वमत कथयन् सूत्रकारो यदि जैमिनिमत पश्चात् निर्दिशति, तर्हि कतरदत्र ग्राह्यम् । द्वितीयपादे वैश्वानरविद्यायामग्निशरीरकपरमात्मोपासनार्थमग्निशब्द इ युक्त्वा, 'साक्षादप्यविरोध जैमिनि ' इति योगार्थपक्षमुपचिक्षेप । तत्र सूत्रकारपक्षमेवादृत्य, जैमिनिमतप्रदर्शन सम्भवदुदाहरणान्तरविषयतत्परिग्रहाभिप्रायेणेति वर्णयाम । न ह्यत्रापि तद्वत् स्थलान्तरे जीवोपदेशस्य जीवव्यतिरेकप्रदर्शनार्थताव्युत्पादनायेह जैमिनि-

मतोक्तिरिति शक्यं वक्तुम् ; 'अपि चैवमेके' इति प्रकृतस्थल एव जैमिनिमतग्राह्यतायामुपष्टम्भकवर्णनात्। अत्र जैमिनिमतमेव तन्मतमिति चेत्, तर्हि पूर्वसूत्रमिदं सूत्रञ्च, 'तद् व्याख्यातम्' इति भागत्यागेन एकसूत्रतया प्रणेतव्यं भवेत् इति चेत्—उच्यते। अत्र पूर्वसूत्रेण जीवमुख्यप्राणोभयविषयेऽपि विशिष्टोपासनपक्ष उक्तः, अनेन सूत्रेण विशिष्टोपासनमुपेक्ष्य जीवादिव्यतिरेकप्रदर्शनार्थस्तदुपदेश इति पक्षान्तरमुच्यते इति केषांचिन्निर्वाहः इह प्रकाशिकायामादृतः। नन्वेवं कतरन्मतं ग्राह्यमिति शङ्का परिहार्येति चेत्—उच्यते। जैमिनिमतमेवेह सूत्रकारस्यापि गूढमभिमतम्। पूर्वसूत्रेण पक्षान्तरकथनञ्च तस्यापि स्थलान्तरे समादरणीयत्वमस्तीति ज्ञापनाय। वैश्वानराधिकरणे जैमिनिपक्षग्रहणं स्थलान्तरे उपयोगाभिप्रायेण, इह स्वपक्षग्रहणं तदभिप्रायेणेति विशेषः। तेन चेदृशसमाधानस्य प्रागेवोक्ततया पूर्वपक्षः प्रायो नोदियादिति ज्ञाप्यते। तदनन्तरञ्च तादृशं समाधानमिहासंभावितमिति पुनः पूर्वपक्षिशङ्कायां प्रकारान्तरेण समाधानं दृढतं जैमिनिकण्ठोक्तं प्रदर्श्यते। कथं तदिहासंभावितमिति चेत्—यत्र जीवादौ परमात्मशब्दिशब्दसामानाधिकरण्यादिना परमात्मधर्मान्वयप्रतीतिः, तत्र विशिष्टविवक्षा। इह तु, 'क्वैष तदाऽभूत् कुत एतदागात्', 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते' इति व्यधिकरणनिर्देश एव लक्ष्यते। अतो विशिष्टोपासनमसंभावितमिति। एवं सूत्रद्वयेन पक्षद्वयनिर्देशश्च अधिकरणसारावल्यामपि दर्शितः—

"इत्थं जीवातिरिक्ते प्रकरणनियते तत्र यज्जीवमुख्य-
प्राणाख्यानं न तेन क्षतिरिह च तथा तद्विशिष्टेष्युपास्ता।
प्राणश्च प्राणभाजोऽप्यधिकरणतया वाजिवाक्योक्तरीत्या
ब्रह्मश्रप्त्यै तदन्यप्रकथनमिति हि स्थापना सार्वभौमी॥" इति।

अत्र श्लोके पूर्वार्धेन विशिष्टोपासनमुक्त्वा तद्विवरणमेवोत्तरार्धेन क्रियते । वाजिवाक्यम् अन्तर्यामिब्राह्मणम् । तृतीयपादे, 'ब्रह्मोच्यते' इति शेषः । तथाच अन्तर्यामिश्रुतिरीत्या इह प्राणजीवविशिष्टतया ब्रह्मोच्यत इति तदर्थः । एवं ब्रह्मपरत्वे तदन्यप्रकथनात् प्रतर्दनविद्यायामिवेहापि विशिष्टोपासनसंभवात् एषा स्थापना सार्वभौमीति चिन्तामणिव्याख्यानुसारेणार्थः ।

चिन्तामणौ यथावस्थिततयाऽस्यांशस्य तत्रतत्र वाक्यान्तरप्रक्षेपराहित्ये अविश्वसनीयत्वमाशङ्क्य प्रवृत्तायां पदयोजनायां पूर्वार्धे विशिष्टोपासनरूपमेतदधिकरणद्वितीयसूत्रप्रमेयमुच्यते ; तृतीयसूत्रप्रमेयमुत्तरार्धे । वाजिवाक्यं तावत् 'अपि चैवमेके' इति सूत्रखण्डविवक्षितं वाक्यम् ; न त्वन्तर्यामिब्राह्मणम् । तथाच तत्र प्राणजीवकथनं जीवाधिकरणतया तदन्यभूतं ब्रह्मेति ज्ञापनार्थम् । अयमुत्कृष्टः परिहार इति तदर्थं इत्युक्तम् । तत् सिद्धम् एवमाद्यनुरोधादत्र, 'जीवोपदेशः तच्छरीरकब्रह्मोपासनार्थं इत्यध्यवसीयते' इति यर्ण्यत इति ।

अत्रेदं बोध्यम्—श्रीभाष्ये द्वितीयसूत्रस्य जीवविशिष्टब्रह्मोपासनतात्पर्यकत्वं नैव भाषितम् । प्राणशरीरकब्रह्मोपासनमिह प्रकरणे संभवतीति तेन सूत्रेण कथ्यत इति पुनर्भाष्यसूक्तिमापाततः पठन्तः सर्वे संमन्येरन् । वस्तुतः सूक्तिशैलीमवधानैरिदं सुज्ञानम्, यत् द्वितीयसूत्रभाष्यम् "तत्परतया वर्णनीयानीति" इत्यन्तेन समाप्तम् ; ततः, "प्रातर्दने हि" इत्यादि "इत्यत्राह" इत्यन्तं तृतीयसूत्रावतरणभूतमिति । अतश्च प्राणशरीरकतया ब्रह्मोपासनमपि न भाष्यकृता द्वितीयसूत्रविवक्षिततया कण्ठोक्तम् । किन्तु तृतीयसूत्रोत्थानोपयोगिशङ्कोन्मुखेन संभवमात्रेणाऽऽविष्कृतमित्येतदेव । जीवविशिष्टोपासनं तु सुतराम् । तर्हि द्वितीयसूत्रप्रमेयं किमिति चेत्—न विशिष्टोपासनं वाक्यविवक्षितमिति तत्प्रमेयम् ; किन्तु ब्रह्मपरत्वस्य प्रकरणे निश्चितत्वात् जीवादिलिङ्गं श्रूयमाणमपि तच्छेषतया नेय-

मित्येतदेव। तदेव भाषितम्, "तत्परतया वर्णनीयानि" इति। अत्र च श्रुतप्रकाशिका, "न तूपासनार्थत्वमप्यतिदेष्टव्यमिति भावः" इति। अथ च, शेषतया वर्णनं नाम विशिष्टोपासनपरतया वर्णनाद्यधिकं भवेदिति कृत्वा तस्य प्राणविषये संभवेऽपि जीवविषये असंभवं विमृशता शङ्कायां क्रियमाणायाम् उपासनातिरिक्तप्रकारेण शेषतया वर्णनमुपपादयितुं तृतीयसूत्रमिति।

ननु तर्हि द्वितीयसूत्रे, 'तद् व्याख्यातम्' इति किमर्थम्? तद् विहाय द्वितीयतृतीयसूत्रयोरेकसूत्रतया पठनमेव पर्याप्तम्। न च प्रकृतस्थले प्रकारान्तरेण निर्वाहेऽपि उदाहरणान्तरे विशिष्टोपासनमपि भवतीति ज्ञापनार्थं सूत्रभेद इति वाच्यम्—इन्द्रप्राणाधिकरणे विशिष्टोपासनपक्षस्योक्तत्वात् इह प्रकारान्तरेण निर्वाहे दर्शिते, यत्र यत्संभवः, तत्र तद्ग्रहणमित्यस्य ज्ञायमानतया पृथक्सूत्रवैयर्थ्यात्। अत एव प्राणविषये विशिष्टोपासनसंभवसूचनार्थं पृथक्सूत्रप्रणयनमित्यपि न मन्तव्यम्—इन्द्रप्राणाधिकरणमिदञ्च पश्यतां यथासंभवं तत्तद्ग्रहणस्य स्वतःसिद्धेरिति चेत्—उच्यते। इन्द्रप्राणाधिकरणे, 'उपासात्रैविध्यात्' इत्युपासनपरतया निर्वाहस्य तत्र संभवाभिप्रायेण कथनेऽपि तदधिकरणस्य विशिष्टोपासनेनैव निर्वाहवर्णने न तात्पर्यम्; किन्तु यत्र यथा संभवति तत्र तथा शेषतया निर्वाहवर्णन एवेति ज्ञापनार्थमेव, 'तद् व्याख्यातम्' इति पठित्वा पृथक्कृतम्। अत्र संभवन्निर्वाहप्रकारोपपादनार्थञ्च तृतीयसूत्रम्। 'अन्यार्थं तु' इत्यस्यायमाशयः—प्रकरणस्य जीवपरत्वं शङ्कमानेन यथा तत्र प्राणनामभिरामन्त्रणादेः प्राणलिङ्गस्य प्राणातिरिक्ततया जीवज्ञापनपरत्वमाश्रयते, तथा ब्रह्मपरत्ववादिना जीवलिङ्गस्य जीवातिरिक्तब्रह्मज्ञापनपरत्वं हि सुवचमिति।

एवञ्च, 'अथास्मिन् प्राण एवैकधा भवति' इति वाक्यम् अस्मिन् इति प्रकरणिनं परमात्मानं ब्रुवत् परमात्मनिष्ठ मुख्यप्राणे एकधाभावपरं वा,

प्राणभृति एकधाभावपरं वा प्राणशरीरके परमात्मनि एकीभावपरं वा, 'प्राणस्य प्राणम्' इत्युक्तरीत्या पुष्कलप्राणनव्यापाराश्रये परमात्मनि एकीभावपरं वेति विमर्शे, अत्र स्वप्नोद्गमनयोरिव सुषुप्तावेकधाभावस्यास्य जीवकर्तृकताया एव स्वरसतः, 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यति' इति वाक्यतश्च सिद्धत्वात् करणग्रामस्यैकधाभावो नात्र वर्ण्यत इति जीवकर्तृकएकीभावोऽयं परमात्मन्येवेति निश्चये जाते, प्राणशरीरकपरमात्मपरत्वमप्यौचित्यादुपेक्षितुं युक्तम्। समानप्रकरणे बृहदारण्यके, 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इत्यत्र आकाशशब्दो न हि भूताकाशविशिष्टपरमात्मवाची, भूताकाशे जीवशयनाभावात्। किन्तु आ = समन्तात् काशत इत्युक्तपरमात्मवाची। तद्वदिहापि प्राणशब्दो न मुख्यप्राणविशिष्टवाची;मुख्यप्राणे जीवस्यैकीभावाभावात्। किन्तु प्राणनव्यापारविशिष्टपरमात्मवाचीति पर्यालोचनसंभवात्। अस्मिन् प्राण एवेत्यस्य अस्मिन्नेव प्राणे, न तु मुख्यप्राणे अन्यत्र वेत्यर्थः। प्राणनप्रदे परमात्मनि सुषुप्तत्वादेवायं जागरप्रयासायासपरिहारं लभत इति भावः।

अस्तु तावदिदं कथमपि। सूत्रभाष्ययोराशयस्तावत् प्रागुक्तो धार्यः। एवं 'तद् व्याख्यातम्'इति इन्द्रप्राणाधिकरणातिदेशकरणात् इदमधिकरणं तदुपरि अधिकाशङ्कया प्रवृत्तमित्यपि सूच्यते। अधिकाशङ्कापरिहारप्रकारौ च श्रुतप्रकाशिकायां दर्शितौ, "प्रतर्दनविद्याया-मुपक्रमे जीवलिङ्गावगमः। महावाक्यस्वारस्यं तु परमात्मपरत्वे। इह तूपक्रमोपसंहारमध्येषु जीवलिङ्गावगमात् अत एव परमात्मनः चिदचिद्विशिष्टतापरत्वाभावेनोपासात्रैविध्याप्रतिपत्तेः प्रातर्दनन्यायानवकाश इत्यधिकाशङ्का। त्रिविधोपासनाभावेऽपि जीवातिरिक्तब्रह्मबोधनरूपप्रयोजनसंभवादस्त्यवकाश इत्यनन्तरसूत्रे विवक्षितोऽधिकः परिहारः" इति। दर्शितभाष्यस्वारस्यश्रुतप्रकाशिकाग्रन्थानुरोधेन च अन्यत् वाक्यजातं नेयम्।

नन्वेवं विशिष्टोपासनपरत्वं द्वितीयसूत्रे न विवक्षितं चेत्—अधिकरणसारावल्यां तद्वर्णनं कथम्—उच्यते । बहुषु तालकोशेषु अत्र श्लोके द्वितीयः पाद एवं पठ्यते, "प्राणाख्यानं न तेन क्षतिरिह न तथा तद्विशिष्टेऽप्युपास्ता" इति । व्याख्यानेऽप्यदृष्टोऽपि बहुतालकोशारक्षितः नञ्घटितः पाठः समुचितो न सहसा प्रतिक्षेपमर्हति । तदयमर्थः—जीवापेक्षयोत्कृष्टे परमात्मनि प्रकरणार्थतया स्थिते सति जीवमुख्यप्राणाख्यानं स्थितमपि न क्षतिकरम् । तावता इन्द्रप्राणाधिकरणोक्तरीत्या जीवविशिष्टोपासनं विवक्षितमिति न मन्तव्यम् । तथा च स्वरूपेणोपासनवत् प्रातर्दनोपासनस्य तद्विशिष्टेऽप्युपास्ता नेह भवति । किन्तु वाजिवाक्ये आकाशादिपदघटिते जीवस्य ब्रह्माधारत्वं यथा ज्ञापितम्, तथेहापि प्राणजीवाधारतया ब्रह्मज्ञापनार्थमेव तत्कथनम् । अन्तर्यामिब्राह्मणोक्तरीत्या प्राणजीवाद्याधारतायाः ब्रह्मणि सत्वात् तद्रूपेण ब्रह्मज्ञापनार्थमेव प्राणजीवकथनमिति इन्द्रप्राणाधिकरणार्थस्थापना चेत् क्रियते, सा सार्वभौमी हि । प्रतर्दनविद्याभूमाविव बालाकिविद्याभूमावपि सा सुलभमवतरतीति । श्लोके प्राणस्येत्यादि स्थापनेत्यन्तमिन्द्रप्राणाधिकरणार्थस्थापनापरम् । वाजिवाक्यपदं चिन्तामणिग्रन्थ इवान्तर्यामिब्राह्मणपरम् । सार्वभौमीति प्रकृताधिकरणविषयवाक्येऽपि तदतिदेशसंभव उच्यत इति ।

एवञ्च द्वितीयसूत्रस्य विशिष्टोपासनपरतयाऽत्र योजनं यथाश्रुतानुसारिबहुग्रन्थविमर्शे सारावलिश्रुतप्रकाशिकासारस्ये औदासीन्येन सारावलिप्रसिद्धपाठानुसारेण सुखग्राह्यार्थमात्रसंग्रहदृष्ट्येति ॥

सचन्द्रलोकभोगोक्ता मुक्तिः पर्यङ्कविद्यया ।
ऐहिकामुष्मिकश्लिष्टा मुक्तिः प्रातर्दनीगता ॥
केवला मुक्तिरन्ते च प्रोक्ता बालाकिविद्यया ।
मुख्यप्राणस्य साक्षस्य मध्ये चैवमवीरितम् ॥
इत्थमीशाद्युपनिषत्परिष्कारविधायिना ।
वेदान्तलक्ष्मणार्यस्ययोगीन्द्राद्यग्रजसेविना ॥

क्षेमाय य करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदाराम् ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति

श्रीमत्तातार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनि
पादसेवासमधिगतपारमहंस्यस्य
श्रीरङ्गरामानुजमुनेः कृतिषु
कौषीतकिब्राह्मणोपनिषत्प्रकाशिका सम्पूर्णा ॥
श्रीरस्तु ॥
श्रीमते रङ्गरामानुजमहादेशिकाय नमः

---

रङ्गलक्ष्मणयोगीन्द्रालब्धवेदान्तसम्पदा ।
विविधग्रन्थनिर्माणसिद्धसाधुप्रसक्तिना ॥
वीरराघवसञ्ज्ञेन वात्स्यसत्थकवर्तिना ।
कौषीतकिश्रुतिशिरः परिष्कारः क्रमात् कृतः ॥
इति वात्स्यसत्थकवर्तिवीरराघवाचार्यकृत
कौषीतक्युपनिषद्भाष्यपरिष्कारः
श्रीमते हयवदनपरब्रह्मणे नमः
श्रीरस्तु ॥ शुभमस्तु ॥

---

शारीरके कौषीतक्युपनिषद्वाक्यस्थलसूची

| | | | |
|---|---|---|---|
| १—९ | ३-१-१२ | ३— | २-१-२९—३२ |
| १—३७ | ३-३-२८ | ४— | १-४-१६—१८ |
| २—१४ | ३-३ ११ | | |

श्रीः

# कौषीतक्युपनिषदर्थसंग्रहकारिकाः

—:-:—

कौषीतकिब्राह्मणोपनिषत् ऋग्वेदसंश्रिता ।
अध्यायेषु चतुर्ष्वत्र प्रथमे प्रतिपाद्यते ॥ १ ॥
पर्यङ्कविद्या यत्रिष्ट इष्टिकृच्चन्द्रलोकभाक् ।
अनुभूय फलं चन्द्रविसृष्टस्तत्स्वभाषणात् ॥ २ ॥
देवयानेन संप्राप्य ब्रह्मलोकमरं ह्रदम् ।
विरजां चातीत्य पञ्चशत्या चाप्सरसां तदा ॥ ३ ॥
प्रत्युद्गतः सोपहारं दिव्यरूपः परिष्कृतः ।
तिल्यवृक्षादिकं प्राप्य क्रमाद् गन्धादिशोभितः ॥ ४ ॥
द्वारपापद्ववात् आसन्नब्रह्मस्थानोऽमितौजसि ।
पर्यङ्के ब्रह्मणा पृष्टः सत्यवाक् भोगसाम्यभाक् ॥ ५ ॥
मुख्यामुख्यप्राणचिन्ता द्वितीयाध्यायविस्तृता ।
प्रातर्दनी तृतीयेऽन्या परविद्या प्रकीर्तिता ॥ ६ ॥
इन्द्रेण त्वाष्ट्रहत्यादिकर्तृत्वान्तर्गतः परः ।
प्राणस्याप्यन्तरः प्राज्ञः आनन्दश्चाजरामृतः ॥ ७ ॥
सतोऽसतः कारयिता मुक्त्यै तत्रोपदिश्यते ।
तुर्ये बालाकिविद्योक्ता बृहदारण्यके स्थिता ॥ ८ ॥

॥ शुभमस्तु ॥

—:**:—

## कौषीतक्युपनिषद्गतानि ऋष्यादिनामानि

## कौपीतकिब्राह्मणोपनिषद्विषयसूची

श्री

# मन्त्रिकोपनिषत्

[पूर्णमद इति शान्तिः ।] [भद्रं कर्णेभिरिति शान्तिः ?]

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रच्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

## श्रीरङ्गरामानुजमुनिवरविरचिता
## मन्त्रिकोपनिषत्प्रकाशिका ।

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
मन्त्रिकोपनिषद्व्याख्या करवाणि यथामति ॥

श्री

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## मन्त्रिकोपनिषद्भाष्यपरिष्कारः

यो‌ऽधिष्ठाता विपरिणमिताचित् चितो भोजयन् सन्
लीलास्वादी निखिलनिगमस्तोमवन्द्योऽखिलात्मा ।
पद्विशस्सन् बहुलगणनागोचरः सर्वहेतुः
मुक्तेः सेतुर्भवतु भगवान् माधवोऽयं श्रिये नः ॥

भगवता भाष्यकृता, 'चमसवदविशेषात्' (१४२) इत्यधिकरणे निरीश्वरसांख्यनिराकरणाय एतदुपनिषद्वाक्यानामुपात्ततया तदर्थव्यक्तये उपनिषदियमपि दशोपनिषद्भाष्यकारैर्व्याख्यायि । तत्र "आथर्वणिका अधीयते" इत्युक्तत्वात्, अत्रापि 'मन्त्रोपनिषद्— अथर्वाणो भृगूत्तमा' इति श्रवणात् उपनिषदियमथर्ववेदीयेति विमृश्यते । यजुर्वेदीयत्वेन तु अष्टोत्तरशतोपनिषत्कोशे गण्यते । उभयत्र वा पठिता स्यात् ।

हरिः ओम्। अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययम्।
त्रिवर्त्मानं तेजसोहं सर्वतः पश्यन्न पश्यति ॥ १ ॥

---

अष्टपादं...पश्यति। त्रीणि वर्त्मानि यस्य स. त्रिवर्त्मा। सत्त्वरजस्तमोरूपगुणात्मकवर्त्मयुतं तेजसोहं ब्रह्मप्रकाशाच्छादकं ब्रह्मप्रकाशहन्तारं सर्वतः सर्वतो व्याप्त [प्रपञ्चं पश्यन् बहिरवलोकयन् जीवः अष्टपादं प्रकृत्यष्टकशरीरकम् ?] शुचिम् अपहतपाप्मानं निरवद्यं त्रिसूत्रं सृष्टिस्थितिसंहारात्मकसूत्रशब्दितक्रियायुक्तम् अणुम् अतीन्द्रियम् अव्ययं निर्विकारं हंसं हंसवदाश्चर्यभूतं दीप्यमानत्वाद्वा विवेचकत्वाद्वा हंससदृशं परमात्मानं [न ?]। पश्यतीत्यर्थः ॥ १ ॥

---

अष्टपादमित्यादि। अत्र मन्त्रे उत्तरार्धस्य पूर्वं व्याख्यानात्, अष्टपादमित्यारभ्य सर्वेषां द्वितीयान्तानां पदानां क्रमेण व्याख्यानाभावात्, पूर्वार्धे विशेष्यभूतः परमात्मा; उत्तरार्धे तु प्राकृतप्रपञ्चो विशेष्य इत्याद्यायोऽवगम्यते। अन्यथा तेजसोहमिति पदार्थः परमात्मनि नान्वेति; पश्यन्न पश्यतीत्यत्र पश्यन्नित्यस्य कर्मापि किञ्चिन्नोक्तं भवेदित्यभिसंधिः। एवञ्च भाष्ये, पश्यन् न इति पदद्वयव्याख्यानं भ्रष्टम्, अष्टपादमिति प्रथमपदव्याख्यानवत्। अन्यथा, 'न पश्यति' इति पाठं विहाय परिपश्यतीति पाठो भाष्याभिमतश्चेत्—पूर्वार्धप्रथमपदमारभ्य क्रमेण व्याख्या कृता स्यात्, द्वितीयमन्त्रावतारिका च, 'पुनः कदा पश्यति' इत्येवंरूपा, पूर्वमन्त्रे, न पश्यतीति पाठमभिमतं दर्शयति। तथा पश्यन्नित्यस्य सामान्यतः जीव इत्यर्थसंमतावपि सर्वं द्वितीयान्तं क्रमेणैकविशेष्यकं व्याख्यायेत। सर्वत्र प्रसिद्धश्च स एव, 'सर्वतः पश्यन्न पश्यति' इति पाठः इति ध्येयम्। हंसवदित्युक्तं सादृश्यं विवृणोति दीप्यमानत्वादिति॥१

भूतसंमोहने काले भिन्ने तमसि वै खरे ।
अतः (अतः) पश्यन्ति सत्त्वस्था निर्गुणं गुणगह्वरे ॥ २ ॥
अशक्यः सोऽन्यथा द्रष्टुं ध्यायमानः कुमारकैः ।
विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ॥ ३ ॥

---

पुनः कदा पश्यन्तीत्यत्राह **भूत ...गह्वरे** । काले कालविशेषे **भूतसंमोहने** भूतानां मोहजनके खरे घोरे **तमसि** तमोगुणे भिन्ने, **अतः** परं **सत्त्वस्थाः** रजस्तमोभ्यामस्पृष्टविशुद्धसत्त्वाः पुमांसं **निर्गुणं गुणगह्वरे** त्रिगुणगुहान्तर्वर्तित्वेऽपि गुणसङ्गकृतदोषशून्यं पश्यन्तीत्यर्थः ॥

**अशक्यः** ... **कुमारकैः** । अन्यथा तमोगुणभङ्गाभावे कुमारकैः तमोगुणसंलीनान्तःकरणतया मन्दप्रज्ञैः ध्यायमानोऽपि द्रष्टुमशक्य इत्यर्थः ।

**विकार** ... **ध्रुवाम्** । 'अष्टौ प्रकृतयः षोडश विकाराः' इत्युक्तरीत्या एकादशेन्द्रियपञ्चभूतात्मकषोडशविकारजननीं पञ्चतन्मात्रप्रकृति-

---

भूतसंमोहने इत्यस्य तमोविशेषणत्वं भाष्याभिमतम् । ननु तस्य कालविशेषणत्वमपि भवति । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इत्युक्तरीत्या सर्वभूतनिद्राकाले रात्रौ योगिभिर्निरवधिं योगस्य क्रियमाणतया भूतसंमोहनकालपदेन रात्रिग्रहणसंभवादिति चेन्न— दिवाऽपि योगस्य सम्यगनुष्ठानात् रात्रिरूपविशेषग्रहणे प्रमाणाभावात् । उपात्तगीतावाक्येऽपि रात्रिकालरूपार्थस्याभावात् । न हि उत्तरार्धे भूतजागरणकालस्य मुनिं प्रति निशात्वं वस्तुतोऽस्ति । अतस्तत्र न कालः कश्चिदुच्यते । किं तु एकज्ञातमन्यस्याज्ञातमित्येवेति । कालविशेषे इति । सात्त्विकत्यागपूर्वकर्मानुष्ठानमृदितकषायतादशायामित्यर्थः । अत इति पाठे जीवात्मावलोकनानन्तरमित्यर्थः । अन्तरिति पाठे अवलोकितस्य जीवात्मनोऽन्तरित्यर्थः । २

ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ।
सूयते पुरुषार्थञ्च तेनैवाधिष्ठितं (ता?) जगत् ॥ ४ ॥
गौरनाद्यन्तवती सा जनित्री भूतभाविनी ।

---

महदहङ्काररूपाष्टप्रकृतिरूपाम् अज्ञाम् अचेतनाम् अजां ध्रुवाम् उत्पत्ति-विनाशरहिताम् । एतेषां द्वितीयान्तपदानां पिबन्त्येनामविषमा-मित्युत्तरेणान्वयः ॥ ३ ॥

ध्यायते....जगत् । ध्यायते परमात्मना संकल्परूपेण ज्ञायते । अध्यासिता अधिष्ठिता तन्यते विस्तार्यते = स्थूलावस्था क्रियते, समष्टिभूतरूपेण क्रियते ; प्रेर्यते ; तेनैव परमात्मना अधिष्ठिता प्रकृतिः पुरुषार्थं पुरुषणामर्थनीयं भोग्यभोगोपकरणभोगस्थानरूपं जगत् सूयते ॥

गौ...विभोः । जनित्रीत्यनेन समष्टिसृष्टिरुच्यते । भूत-भाविनीत्यनेन व्यष्टिसृष्टिरुच्यते । अनाद्यन्तवती आद्यन्तशून्या नित्या तेजोबन्नद्वारा लोहितशुक्लकृष्णरूपयुक्ता ईश्वरस्य सर्वकामदुघा लीलारस-

---

अष्टप्रकृतीति । यद्यप्यस्मन्मते पञ्चतन्मात्रोत्पन्नात् भूतात् अपर-तन्मात्रोत्पत्तिस्वीकारात् प्रकृतिद्वादशकप्रसङ्गः—अथापि विकारपदं पाञ्चभौतिकशरीरे उपलभ्यमानभूतेन्द्रियपरम् । तेषामेव विकारे शरीरे दृश्यमानत्वात् । अवशिष्टानि तत्कारणानि चाष्टौ प्रकृतय इति न दोषः । नेयं सुबालोपनिषद्भाष्ये । ३

गौण्या वृत्त्या गौरित्युच्यत इति । अजां ध्रुवामित्यत्र अजापदं न छागस्त्रीवाचि । ध्रुवापदसमभिव्याहारबलादेवोत्पत्तिराहित्यरूप-योगार्थस्य स्फुटं प्रतीतेः । 'अजोऽपि सन्नव्ययात्मा' इत्यादौ अजपदस्य योगार्थे सुष्ठु प्रसिद्धिरप्यस्ति । अत एव श्रीभाष्ये चमसाधिकरणे

सिताऽसिता च रक्ता च सर्वकामदुघा विभोः ॥ ५ ॥
पिबन्त्येनामविषमामविज्ञाताः कुमारकाः ।
एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम् ॥ ६ ॥

---

दोग्ध्री प्रकृतिरूपा काचन गौरित्यर्थः । कामदोग्धृत्वादिसादृश्यात् गौण्या वृत्त्या गौरित्युच्यते ॥ ५ ॥

**पिबन्ति...कुमारकाः** । अविषमां कर्मानुगुणपरिणामित्वाद्-पक्षपातिनीम् **अविज्ञाताः** स्वात्मभिः देहेभ्यो विविच्याज्ञातास्सन्तः **कुमारकाः** अल्पप्रज्ञाः **पिबन्ति** प्राकृतं भोगं कर्मपरवशा अनुभवन्तीत्यर्थः एकस्तु **देवः** परमात्मा **स्वच्छन्दः** अकर्मपरवशस्सन् **वशानुगां** स्वसंकल्पाधीनस्वरूपस्थितिप्रवृत्तिका ता प्रकृतिरूपां गां **पिबते** तत्कृत-लीलारसं भुङ्क्त इत्यर्थः ॥ ६ ॥

---

अजामेकामित्यत्र छागीपरत्वं परोक्तं प्रत्याख्यातम् । न तथा गौरिति पदं योगार्थं क्वचित् प्रसिद्धम् । अतो गौणी वृत्तिरिति भावः । सर्वकामदुघेत्यत्र विभोरित्यस्यान्वयात् जीवकामदोहनरूपार्थ-त्यागेन लीलारसदोग्ध्रीत्युक्तम् । जीवैरनुभाव्यतया विभोः कामना-विषयभूतं यद्यत् तस्य सर्वस्य दोग्ध्रीत्युक्तिसंभवेऽपि तत्रतत्र लीला-रसस्यापि स्वानुभाव्यस्य सत्त्वात् तद्विवक्षैव युक्तेति भावः  ५

एकस्तु पिबते देवः स्वच्छन्द इति । न चेदम्, 'ऋतं पिबन्तौ' इत्यत्र परमात्मनः पानकर्तृत्वाभावेऽपि पायितृत्वमस्तीत्युपपादनं किमर्थं कृतम् । अत्रोक्तरीत्या पानकर्तृत्वस्यैव संभवादिति वाच्यम्— जीवस्य सुकृतफलभोक्तृत्वम् परस्य तत्कृतभोगदर्शनाधीनलीलारस-भोक्तृत्वमित्येवेहाप्युक्तया सुकृतफलभोक्तृत्वस्य परमात्मन्यभावात्, 'ऋतं पिबन्तौ सुकृतस्य' इति जीवानुभाव्यतयोक्ते ऋते परानुभा-व्यत्वायोगेन पाययितृत्वस्यैव तत्र वक्तव्यत्वात् ।  ६

ध्यानक्रियाभ्या भगवान् भुङ्क्तेऽसौ प्रसभं विभु· ।
सर्वसाधारणीं दोग्ध्रीं पीड्यमाना तु यज्वभि. ॥ ७ ॥
पश्यन्त्यस्या महात्मानः सुवर्णं पिप्पलाशनम् ।
उदासीनं ध्रुवं हंसं स्नातकाध्वर्यवो जगु. ॥ ८ ॥
शसन्तमनुशसन्ति बह्वृचा· शास्त्रकोविदाः ।

---

ध्यान . .विभुः । ध्यानक्रियाभ्याम् 'ऐक्षत, 'असृजत' इति श्रुताभ्या सङ्कल्पसर्गादिव्यापाराभ्यामित्यर्थ । भुङ्क्ते तत्तल्लीलारसमनुभवतीत्यर्थ । शिष्ट स्पष्टम् । सर्व . यज्वभिः । सर्वबद्धजीवसाधारणतया फलप्रदाम् , वत्सै यथा माता क्षीरार्थे पीडिता भुज्यते, एव कर्मवश्यैरात्मभि भोक्तव्यफलानुरूपं परिणाम्यमानामित्यर्थ ।

इत्थमेव व्यासार्यैः, "चमसवदविशेषात्" इति सूत्रे व्याख्यातम्॥

**पश्यन्ति पिप्पलाशनम्** । कर्मफलभोक्तार शोभनपक्षयुक्त पक्षिवत् ज्ञानानन्दादिकमनीयगुणयुक्त केचन शुद्धान्त करणा महात्मान **पश्यन्ति** विविच्य साक्षात्कुर्वन्ति । **उदासीन जगुः** । तत्समीपवर्तिनम्, 'तयोरन्य पिप्पल स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इत्युक्त रीत्या कर्मफलाशनशून्यतया उदासीन ध्रुव व्यापित्वेन निश्चलं हंस हसवच्छुद्धमङ्कुत **स्नातकाध्वर्यवः**—स्नातकव्रतयुक्ता अध्वर्यव येषा ते स्नातकाध्वर्यव —समीचीनयाजकानुष्ठापितयज्ञविशुद्धान्त करणा **जगुः** सामभि स्तुवन्तीत्यर्थ ॥ ८ ॥

**शसन्त...कोविदाः** । अत्र तमित्यध्याहार । त शसन्त—तं स्तुवन्तम् उद्गातृगण बह्वृचाः ऋग्वेदाध्येतार **शास्त्रकोविदाः** अध्यात्म-

रथन्तर बृहत् साम सप्त वैधस्तु गीयते ॥ ९ ॥
मन्त्रोपनिषद ब्रह्म पदक्रमसमन्वितम् ।
पठन्ति भार्गवा ह्येते अथर्वाणो भृगूत्तमा ॥ १० ॥

इति मन्त्रिकोपनिषदि प्रथम खण्ड ॥

॥ अथ द्वितीय खण्ड ॥

सब्रह्मचारिवृत्तिश्च स्तभोऽथ फलितस्तथा ।
अनड्वान् रोहितोच्छिष्ट पठ्यते बहुविस्तरे ॥ १ ॥

---

शास्त्रप्रवीणा होतृमैत्रावरणादय अनुशसन्ति । 'स्तुतमनुशसन्ति' इति श्रवणादुद्गातृगणे सामभि स्तुता देवता होतृगणे ऋग्भि शसनीया । ततश्च सूक्तस्तोत्रशस्त्राणि एतद्विषयाण्येवेति भाव ।

रथन्तर । रथ तरबृहत्सामादिक यस्मिन् विषये गीयत इत्यर्थ ॥

मन्त्रोपनिषद भृगूत्तमाः । पदक्रमसमन्वित मन्त्रोपनिषदाख्य ब्रह्म वेद भृगूणा मध्ये उत्तमा भार्गवा एते अथर्ववेदाध्यायिन पठन्तीत्यर्थ । ततश्चाथर्वशिखाध्यायिभिरेवेयमुपनिषदध्येतव्येत्यर्थ ॥१०

॥ इति मन्त्रिकोपनिषत्प्रथमखण्डप्रकाशिका ॥

परमात्मन सर्वात्मतामाह सब्रह्मचारिवृत्तिश्च बहुविस्तरे । स्तभुर्गत्यर्थो हिंसार्थो वा । रोहितोच्छिष्टः । उच्छिष्टोऽवशिष्ट । रोहितश्च उच्छिष्टश्च रोहितोच्छिष्ट ? इति यास्त् । बहुविस्तरे शास्त्रे ये पाठ्यते(ये पठ्यन्ते?), ते सर्वेऽपि ■ एवेत्यर्थ ॥ १ ॥

---

सब्रह्मचारिवृत्तिश्चेत्यादिना ब्रह्मण सर्ववस्तुसामानाधिकरण्य प्रदर्श्य, 'नैतत् वस्त्वैक्यनिबन्धनम् किन्तु शरीरात्मभावकृतम्'

[कालः प्राणश्च भगवान् मृत्युः शर्वो महेश्वरः ।
उग्रो भवश्च रुद्रश्च ससुरः सासुरस्तथा ॥ २ ॥
प्रजापतिर्विराट् चैव पुरुषः सलिलमेव च ।]
स्तूयते मन्त्रसंस्तुत्यैरथर्वविहितैर्विभुः ॥ ३ ॥
तं षड्विंशकमित्येके सप्तविंशमथापरे ।
पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदुः ॥ ४ ॥
चतुर्विंशतिसंख्यातमव्यक्तं व्यक्तमुच्यते ।

---

स्तूयते...विभुः । मन्त्रसंस्तुत्यैः मन्त्र इति संस्कृतशब्दवाच्यैः। मन्त्रैरिति यावत्। अथर्वविहितैर्मन्त्रैः स एव परमात्मा स्तूयत इत्यर्थः ॥ ३ ॥

तं....विदुः । निर्गुणं सत्त्वरजस्तमोगुणातीतं तमेव परमात्मानं षड्विंशं [विदुः] । परमात्मा षड्विंश इत्यर्थः । षड्विंशवादिनाञ्च कालतत्त्वमेष्वेव विशेषणतया अन्तर्गतमित्यभिप्रायः । सप्तविंशमथापरे कालपार्थक्यवादिन इति भावः ॥ ४ ॥

चतुर्विंशति...मुच्यते । व्यक्ताव्यक्तरूपतया चतुर्विंशति-संख्यातमपि तदेवात्मतत्त्वमुच्यत इत्यर्थः । तस्यैव ब्रह्मणः अव्यक्तव्यक्त-शरीरकत्वादिति भावः ।

---

इत्युपदेशार्थम् अचेतनातिरिक्तजीवाधिकत्वं ब्रह्मणि ज्ञाप्यते, तं षड्विंशकमित्यादिना । अथर्वशिरस इति । अथर्वोपनिषत्त इत्यर्थः ।

चतुर्विंशतिसंख्यातमित्येतत् पञ्चविंशस्य जीवस्याप्युपलक्षणम् । यद्वा पुरुषं निर्गुणं सांख्यमिति जीवात्मकथनम् । अत एव सांख्य-मिति विशेषणमपि सार्थकम् । सांख्यशास्त्रे युक्त्या साधितमपि वेदादेव प्रतिपद्यन्ते प्रामाणिकाः तदुक्तम्, 'श्रौतीमेवात्मसिद्धिं श्रोत्रियाः संगिरन्ते' इति । अत एवाथर्वशिरोरूपवेद्यत्वमेवादृत्य सांख्यप्रक्रियासिद्धिनिरसनं शारीरके। तथाच चेतनाचेतनाधिकोऽपि

अद्वैतं द्वैतमित्याहुस्त्रिधा तं पञ्चसप्तधा ॥ ५ ॥
ब्रह्माद्यं स्थावरान्तं च पश्यन्ति ज्ञानचक्षुषः ।
तमेकमेव पश्यन्ति परिशुद्धं (शुभ्रं) विभुं द्विजाः ॥ ६ ॥

---

अद्वैतं...सप्तधा । तमेव परमात्मानं चिदचिद्विशिष्टमभिप्रेत्य तस्यैकत्वादद्वैतमित्याहुः, 'एकमेवाद्वितीयम्' इत्याद्याः काश्चन श्रुतयः । काश्चन, 'पृथगात्मानं प्रेरितारं च मत्वा' इत्याद्याः श्रुतयः विशेषणविशेष्यभेदविवक्षया द्वैतम् । [अतोऽस्यैतावद्वैतं द्वैतमित्याहुः ।] केचित्तु, 'भोक्ता भोग्यं प्रेरितारम्' इति चिदचिदीश्वरभेदेन त्रिधा । व्यक्ताव्यक्तपुरुषजीवेश्वररूपेण पञ्चविधं केचिदाहुः । तमेव पञ्चधा पञ्चभूतात्मकतया, सप्तधा सप्तलोकात्मकतया चाहुरित्यर्थः ॥ ५ ॥

ब्रह्माद्यं ... द्विजाः । ब्रह्मादिस्थावरान्तान्तर्यामितया व्यापकं परि-

---

चेतनाचेतनाचिदचित्सामानाधिकरण्येन व्याप्तिमदित्यर्थः । एवमर्धद्वयेन चेतनाचेतनात्मकत्वं ब्रह्मण उक्तम् । एवं पञ्चविंशस्य पुरुषस्य चतुर्विंशतेरचेतनानां च व्यक्ताव्यक्तानां महदादीनां परमात्मनः षड्विंशत्वमुपपादितं भवति । पञ्चधा सप्तधेत्यस्यैवं त्वर्थो भवितुमर्हति—तत्त्वत्रयस्यापि अर्थपञ्चकस्यापि दर्शनात् पञ्चधा ब्रह्मावस्थितम् । अथवा व्यक्ताव्यक्तयोश्चतुर्विंशतितत्त्वानां व्यक्ताव्यक्तेन कोटीकारे व्यक्ताव्यक्तकालजीवपरमात्मरूपेण पाञ्चविध्यम्, व्यक्ताव्यक्ताक्षरतमोजीवकालपरमात्मरूपेण साप्तविध्यमिति । एवं प्रकृतिनित्यविभूतिकालजीवपरमात्मभेदेन वा प्रकृतिकालजीवधर्मभूतज्ञानपरमात्मभेदेन वा पाञ्चविध्यम् । व्यक्ताव्यक्तनित्यविभूतिधर्मभूतज्ञानजीवपरमात्मभेदेन च साप्तविध्यमित्याद्यपि द्रष्टव्यम् । ४-५
ब्रह्माद्यमिति । अत्र सर्वे पश्यन्तीति पदस्य द्विः श्रवणात्

यस्मिन् सर्वमिदं प्रोतं ब्रह्म स्थावरजङ्गमम् ।
तस्मिन्नेव लयं याति स्रवन्त्यः सागरे यथा ॥ ७ ॥
यस्मिन् भावाः प्रलीयन्ते लीनाश्चाव्यक्ततां ययुः ।
पश्यन्ति व्यक्ततां भूयो जायन्ते बुद्बुदा इव ॥ ८ ॥

---

शुद्धमेकमेवाऽऽत्मानं ज्ञानचक्षुषः पश्यन्तीत्यर्थः ॥ ६ ॥

**यस्मिन्** —अत्र ब्रह्मशब्देन जीवजातमुच्यते । स्थावरजङ्गमात्मकमिदं सर्वं ब्रह्मजातं (ब्रह्म जीवजातं ?), यस्मिन् प्रोतं= यत्स्वरूपेण धृतम् —यदात्मकमित्यर्थः—तस्मिन्नेव लयं याति । ततश्च उपादानत्वान्तर्यामित्वयोरैकाधिकरण्यमुक्तं भवति । **स्रवन्त्यः सागरे यथा** । स्रवन्त्यः नद्यः समुद्रे यथा लयं यान्तीत्यर्थः ॥ ७ ॥

**यस्मिन्...बुद्बुदा इव** । यस्मिन् आत्मनि भावाः वियदादिपदार्थाः प्रलीयन्ते, प्रलीनाश्च सन्तः शब्दस्पर्शादिशून्याः पृथगुपलम्भानर्हाः अविभक्तनामरूपाः, 'तमः परे देव एकीभवति' इति श्रुत्यनुरोधेनाविभक्ततमोवस्था भवन्ति— तस्मिन्नेव परमात्मनि सर्गादिसमये बुद्बुदा इव पुनर्जायन्ते, व्यक्ताश्च भवन्ति । ततश्च लयाधारस्य परमात्मन एवोत्पत्त्युपादानत्वमिति भावः ॥ ८ ॥

---

पूर्वार्धे पृथग्वाक्यम्, तथोत्तरार्धमिति ज्ञायते । तत्र पूर्वार्धेन ब्रह्मणः देहविशिष्टात्मरूपत्वप्रयोज्यो अन्तर्यामित्वमुक्तम् । पूर्वं तु पुरुषमिति चतुर्विंशतीति च अर्धाभ्यां शुद्धचेतनाचेतनान्तर्यामित्वमुक्तमिति विशेषः । तमेकमित्युत्तरार्धेन एव सर्वान्तर्यामित्वे सत्यपि तत्तत्तदोपसृष्टस्वरूपो विभवो वर्ण्यते इति वक्तव्यम् । भाष्ये पूर्वोत्तरार्धयोरेकवाक्यतादर्शनात् पश्यन्तीति पदमेकमेव स्यादिति, पाठो निरीक्ष्यः ।
यस्मिन् सर्वमित्यादिना उपादानकारणत्वमुच्यते । ७-८

क्षेत्रज्ञाधिष्ठितश्चैव (श्चैन) कारणैर्भिद्यते पुन ।
एव स भगवान् देव पश्यत्यस्य पुन पुन ॥ ९ ॥
ब्रह्म ब्रह्मन् यथा (ब्रह्मत्यथो) यान्ति ये विदुर्ब्राह्मणास्तथा।
अत्रैव ते लय यान्ति लीनाश्चाव्यक्तशालिन ॥
लीनाश्चाव्यक्तशालिन (नाव्यक्तशायिन ?) इति ॥ १० ॥

इति मन्त्रिकोपनिषदि द्वितीय खण्ड ॥

इति मन्त्रिकोपनिषत् सपूर्णा
॥ शुभमस्तु ॥

---

क्षेत्रज्ञ...पुन। । उत्पन्नाश्च महदाद्या क्षेत्रज्ञविशेषैरधिष्ठिताश्च सन्त पुनश्च नाशकारणैर्भिद्यन्ते नाश्यन्त इत्यर्थ । एव — पुन पुन । एव परमात्मा अस्य प्रपञ्चस्य पुन पुन उत्पत्तिविनाशावेव पश्यति सङ्कल्पयतीत्यर्थ ॥ ९ ॥

यथा येन प्रकारेण ब्रह्मन् ब्रह्मणि ब्रह्म प्रकृतिनीवभूत ब्रह्म लय याति,—यान्तीति वचन यत्ययश्छान्दस — तथा ये विदु, ते अत्रैव ब्रह्मणि लीना ब्रह्मण पृथगव्यक्ता एव शेरते न कदाचिदपि ॥

इति मन्त्रिकोपनिषद्भाष्ये द्वितीयखण्डप्रकाशिका ।
इति श्रीमत्ताताचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्ताचार्य
पादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य
परकालमुनिपादसेवासमधिगतपारमहंस्यस्य
श्रीरङ्गरामानुजमुनेः कृतिषु
मन्त्रिकोपनिषत्प्रकाशिका सपूर्णा ।

---

'एवं स भगवान्' इति प्रजाद्वेश्वरपक्षनिरसनेन ब्रह्मण , भगव

वासुदेवरूपत्वेन ध्यानक्रियाभ्यां भगवानिति पूर्वमेव दर्शितस्य नित्यैश्वर्यं निरूपितम् । ९

एवं शेरते नेत्येव पाठदर्शनात् ब्रह्मणि लीनाः पश्चात् दृश्यमानरीत्या नाव्यक्तशायिन इत्यर्थः स्यात् । अव्यक्तशालिन इति । 'अव्यक्तमव्यक्ततामेवं शाडन्ते श्लाघन्ते इति अव्यक्तशालिनः । शाडृ श्लाघायाम् । डलयोरभेदात् काश्यपमतमत्र स्मरम्' इति व्याख्येयम् ।

ईश द्यु निषद्भाष्यपरिष्कारविधायिना ।
श्रीमच्छुत्यन्तसौमित्रिरङ्गलक्ष्मणसेविना ॥
श्रीवीरराघवार्येण वात्स्यसच्चक्रवर्तिना ।
मन्त्रिकोपनिषद्भाष्यपरिष्कारो व्यतन्यत ॥

इति श्रीवात्स्यवीरराघवाचार्यकृतिषु
मन्त्रिकोपनिषद्भाष्यपरिष्कारः
॥ श्रीरस्तु ॥

## मन्त्रिकोपनिषदर्थसंग्रहकारिकाः

याजुषी चाऽऽथर्वणी च मन्त्रिकोपनिषन्मता ।
खण्डद्वयात्मना तस्या विभागमपि मन्वते ॥ १ ॥
भगवत्प्रेर्यमाणैव प्रकृतिः परिणामिनी ।
जीवात्मनां भोगहेतुः तस्य लीलारसप्रदा ॥ २ ॥
सर्वश्रुतिभिरुद्घुष्टः सर्वात्मा च स्तुतः परः ।
षड्विंशत्वादिना नूनं पृथग् दृष्टो जगन्मयः ॥ ३ ॥
निमित्तवत् उपादाने क्षेत्रज्ञैर्भगवानयम् ।
परिशुद्धो ध्यातुमर्हो नित्यैश्वर्यं इहोच्यते ॥ ४ ॥

## शारीरके मन्त्रिकोपनिषद्वाक्यस्थलम्

म. १. १-४-६.

मन्त्रिकोपनिषद्विषयः— प्रकृतिपुरुषातिरिक्तब्रह्मप्रतिबोधनम्

### मन्त्रिकोपनिषद्गतानि ऋष्यादिनामानि



### मन्त्रिकोपनिषन्मन्त्रसूची

श्रीः

श्रीमते नारायणाय नमः

# सुबालोपनिषत् ।

[ओं पूर्णमद इति शान्तिः ॥]

हरिः ओम्—तदाहुः—किं तदाऽऽसीत्

---

श्रीः

श्रीमते रामानुजाय नमः

[श्रुतप्रकाशिकावक्त्रे व्यासायास्तु नमस्क्रिया ।
यः संग्रहाय दयया श्रुतदीपमदीपयत् ॥]

## सुबालोपनिषद्विवरणम्

## वेदव्यास-श्रीमत्सुदर्शनभट्टारक-श्रीश्रुतप्रकाशिकाचार्यविरचितभाष्यम् ।

विशुद्धविज्ञानविशेषकारणं रजस्तमःकल्मषदोषनाशनम् ।
सदैव रामानुजपादपङ्कजं स्मरामि नौमि प्रणमामि चाऽऽदरात् ॥ १

सौबालोपनिषद्धृदि विनिहितमर्थं सुपुष्कलं गहनम् ।
अनुसन्दधीमहि वयमक्लिष्टमृजूपपत्त्या च ॥ २ ॥

तदाहुरिति । तत् वक्ष्यमाणं वाक्यजातमध्येतारोऽधीयत

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

नारायणाद्रिशिखरेऽत्र निरीक्ष्यते यो
नारायणः कमलयाऽद्भुतभासुबालम् ।
तं ब्रह्मरुद्रमुखसर्वसृजं सुबाल-
श्रुत्यन्तघुष्टमखिलान्तरमाश्रयामि ॥

तस्मै स होवाच—नसन्नासन्नसदसदिति ।

---

इत्यर्थ । यद्वा शिष्याचार्यभावेन स्थिता प्रष्टार प्रतिवक्तारश्च ब्रह्मवा-दिन आहुरित्यर्थ । तत्र कस्यचित् शिष्यस्य प्रश्नवचन दर्शयति किं तदासीदिति । तदा सृष्टे पूर्वं किं जगत्कारणत्वेनावस्थितमासीदित्यर्थ । तस्मै स होवाच । तस्मै प्रष्टृत्वेन प्रकृताय शिष्याय सः प्रष्टव्यतया बुद्धिस्थ आचार्य उवाचेत्यर्थ । हेति पूजायाम् । अत्र प्रष्टा रैक, प्रतिवक्ताऽऽचार्यो घोराङ्गिरा इति व्यक्तीभविष्यति । सक्षेपत कारण-विषय प्रतिवचन दर्शयति नसन्नासन्नसदसदिति । तत्र (अत्र?) सदादिपदानि नगशब्दवत् नशब्देन समस्तानि। नशब्दश्च तदन्यवाची। सच्छब्द कार्यावस्थचेतनपर, 'इद सर्वमसृजत' इत्युपक्रम्य, 'सच्च त्यच्चाभवत् विज्ञानञ्चाविज्ञानञ्च'इति कार्यावस्थचेतनविषये सच्छब्दस्य

---

श्रीभाष्यादेर्व्याक्रिया सार्वभौमी येषामेषा स्वादुवाचासुधानाम् ।
व्यासार्याणामेवमस्मद्गुरूणां विख्यातानां वन्दिषीयाङ्घ्रिपद्मम् ॥

उपनिषदो बृहदारण्यकान्ता इव सुबालोपनिषदियमपि सर्वै-समवष्टब्धा(?), सर्वजगत्कारणस्य ब्रह्मरुद्रादिकारणत्व—सर्वान्तर्यामित्व—नारायणत्व—दिव्यैकदेवत्वादिसम्प्रदर्शनेन सर्वाभ्योऽतिशयिता, पर परैरपि न व्याख्याता, साधु व्याकर्तव्येति विभाव्य, श्रीभाष्य-दीप-वेदार्थसंग्रहादिव्याख्यानविख्यातवैदुष्यैर्विशदमधुर-विशिष्टार्थव्युत्पादकवचस्सुधावर्षणालङ्कर्मीणैः वेदव्यासापरनामधेयैः श्रीसुदर्शनभट्टारकैर्भाष्यमस्या अभाषि । पर तत् विवरणमस्याः षोडशखण्डात्मिकाया पञ्चमखण्डपर्यन्तमेव सर्वत्र लक्ष्यते । विशेषोऽप्येतदुपनिषद्भाग श्रीभाष्यादौ एतद्भाष्ये च यथापेक्षमुदाहृत , यत्रैव नारायणत्वादि न प्रतिबोधितमिति सोऽपि सार्वोऽधिगन्तव्य एव ।

प्रयुक्तत्वात् । असच्छब्दश्च कार्यावस्थाचेतनपरः। कार्यावस्थचेतनविलक्षणं कार्यावस्थाचेतनविलक्षणमुभयात्मकजगद्विलक्षणं परमे व्योम्नि स्थितं परं ब्रह्म कारणमासीदित्यर्थः । ब्रह्मणः परमव्योमसंबन्धो हि वक्ष्यते, 'परस्तात्सन्नासन्नसदत्' इति । अस्य वाक्यस्य सदादिनिषेधमात्रपरत्वे, 'तस्मात् तम. संजायते' इति तच्छब्देन कारणतया कस्यचित् परामर्शायोगात् । किञ्चिदपि नास्ति चेत्, तस्मादिति किं परामृश्यते? सदसदनिर्वचनीयमज्ञानमिति चेत्, तदयुक्तम् । अस्यामेवोपनिषदि, 'अपुनर्भावा(मेव?) याण्डकोशं भिनत्ति' इत्यारभ्य, 'मृत्युं भिनत्ति मृत्युर्वै

---

ननु तद्वाहुरिति प्रष्टृप्रतिवक्तृणां बहूनामुक्तिरुपक्रान्ता। एवञ्च, किं तदासीत् इति प्रश्नमाहुः, तत्र नसन्नासन्नसदसदिति प्रतिवचनञ्चाहुरिति सुवचम् । तत्र मध्ये तस्मै स होवाचेति कथमित्यत आह अत्र प्रष्टा रैक इत्यादि । यद्यप्येवं श्रुत्याशयः स्यात्—'ब्रह्मजिज्ञासया प्रवृत्ताः सर्वेऽपि प्रष्टारः, किं तदाऽऽसीदित्येव प्रश्नमाहुः। तत्र प्रतिवक्तृणामुक्तिर्भिद्यते, ब्रह्म वा इदमग्र आसीत्, आत्मा वा इदमग्र आसीत्, एको ह वै नारायण आसीत्, असदेवेदमग्र आसीत् इत्येवम् । तत्र रैकाय प्रष्ट्रे घोराङ्गिरस उत्तरं तु विलक्षणम् नसदित्यादि'इति । तथाच आहुरिति प्रश्नमात्रान्वयीति—तथापि स होवाचेत्येतावदनुक्त्वा तस्मै स होवाचेति वचनात् प्रश्नवाक्यमपि रैकर्तृकतया व्याख्यातमिति ध्येयम् ।

उभयात्मकेति । न चैवं नसन्नासदित्युक्तस्यैव नसदसदित्युक्तौ पुनरुक्तता स्यादिति वाच्यम्—समष्टिकार्यभूतचेतन-तादृशाचेतन-व्यष्टिरूपचेतनाचेतनात्मकजगद्रूपत्रयवैलक्षण्यस्य त्रिभिः पदैर्विवक्षणादपौनरुक्त्यात् ।

तस्मात् तम सजायते ।

परे देव एकीभवति । परस्तान्नसन्नासन्नसदसत्' ( 1) इति देशत कालत स्वभावतो वा मुक्तप्राप्यत्वकथनायोगात् । 'मृत्यु दहति परस्तान्नसन्नासन्नसदसत्' इति ज्ञानाभिदाह्यात् मृत्यो परत्वाभिधानायोगाच्च । अनिर्वाच्य हि ज्ञाननिवर्त्यमभिमतम् । परस्ताच्छब्दवैयर्थ्याच्च । मृत्यो रपि सान्ततया परत्वविशेषण हि न घटते । 'मृत्युर्वै परे देव एकीभवति परस्तान्नसन्नासन्नसदसत्' इति देशत कालत स्वभावतो वा सर्वेश्वरात् परत्वमनिर्वचनीयस्यात्य ऽनुपपन्नम् । जगत्कारणब्रह्मपर वे मुक्तप्राप्यत्वादिक सर्वमुपपन्नम् । इतिशब्द प्रतिवचनसक्षेपसमाप्तौ ।

अथ विस्तरेण सृष्टिमाह तस्मात् तमः सञ्जायते इति । तस्मात् सर्वविलक्षणत्वेन प्रतिपादितात् परस्मात् ब्रह्मण अतिसूक्ष्म प्रधानतत्त्व सजायते सञ्जातम् । विभक्तमित्यर्थ । ननु पूर्वमविभक्तस्य हि पश्चाद्विभाग । ब्रह्मण चिदचिद्विलक्षणतया तेन तत्पूर्वमपि अविभागाभावात् विभागोक्तिर्न घटते ॥ न । अस्यामेवोपनिषदि तमोमृत्युशब्दवाच्यस्य सूक्ष्माचिद्वस्तुन परब्रह्मशरीरत्व वक्ष्यते । अत तमश्शरीरके ब्रह्मणि

---

देशत कालत स्वभावतो वेति । मृत्यु भिनत्तीति मृत्युभेदनानन्तर मुक्तप्राप्यत्वमुक्तम् । परस्तादिति मृत्युतोऽनाकारतदेशो मुक्तप्राप्यत्वमुक्तम् । तदुभयमपि अज्ञानस्य न भवति । अस्तु तावदिदम्, यत् देशत कालत इति । अज्ञान मुक्तप्राप्य नैव भवतीति स्वभावतोऽपि तद्वर्णनायोग एवेत्यर्थ ।

ननु तमसो भूतादिरित्यादिषूपरितनवाक्येषु सञ्जायत इत्यस्यास्यैवानुषङ्गात् तद्वोत्पत्त्यर्थकस्यास्य अत्र विभागपरत्वमयुक्तम् । अत ,

कार्योपयुक्तांशस्य प्रलयदशायामविभागो युक्तः । वक्ष्यते, 'तम एकीभवति' इति । अतः सर्गकाले विभागोऽप्युपपन्नः। विभागश्च न छित्वा भित्वा क्रियते । अपितु केनचिदाकारेण व्यावृत्तिर्विभागः । परब्रह्मप्रकारभूतकार्योपयोग्यंशस्य कार्यानुरूप्यापत्तिर्विभागः । स च परमात्मप्रेरणाधीन. । परमात्मनोऽचिच्छरीरकत्व तत्प्रेरकत्वञ्च भगवता **मनुना** स्पष्टमुक्तम् , 'आसीदिदं तमोभूतम्' इत्यारभ्य 'प्रादुरासीत् तमोनुदः । सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः' इति । एतदुक्तं भवति—समस्तचिदचिद्विलक्षणस्वरूपात् तमश्शब्दवाच्यातिसूक्ष्मप्रधानशरीरकात् परब्रह्मणः कार्योत्पादनाय कश्चित् तमस्तत्त्वांशः तत्संकल्पाद्विभक्तोऽभूदिति ।

---

श्रुतिस्वारस्याच्च तमस्त्वावस्थापन्नमुत्पद्यत इत्येवार्थोऽस्तु इत्यत्राह 'वक्ष्यते तम एकीभवति इति । अक्षरं तमसि लीयते इत्यन्तं लीयत इति प्रयुज्य, तमः पर इति वाक्ये एकीभवतीति प्रयोगात् तमस्त्वमक्षरत्वादियत् न प्रहीयत इति प्रतीयते । अतः तमस्त्वावस्थाविशिष्टतयोत्पत्त्ययोगात् विभागरूप एवार्थः प्रथमवाक्ये ग्राह्यः । तत्राचेतनस्य तमसः चेतनेन देवेनैक्यायोगात् देवापृथक्सिद्धेन अचेतनद्रव्येण अविभक्ततमोनाम्ना सहैक्यमेव विवक्षितमिति सृष्ट्यारम्भकाले ह्योक्तो विभागोऽपि तादृशाचेतनद्रव्यादेव विवक्षितः । ततोऽस्य विभागो नाम कार्यानुरूप्यापत्तिः कार्यापेक्षितसामग्रीसंपन्नत्वम् । सा च सामग्री भगवत्संकल्परूपप्रेरणादिः । आसीदिदं तमोभूतमिति। एतन्मनुवचनतात्पर्यं श्रुतप्रकाशिकायां (जिज्ञासा-)विशदमनुसंधेयः। अनेन प्रलयकाले तमस्त्वावस्थासद्भावः स्पष्टमवगम्यत इति न तस्य जनिवर्णनं युक्तमित्यपि दर्शितम् । श्रुत्यन्तरञ्च, 'नासदासीन्नो सदासीत् तदानीं तम आसीत् । तमसा गूढमग्रे प्रकेतम्' इति ।

तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुः वायोरग्नि-

**तमसो भूतादिरिति ।** **भूतादिः** आकाशादिभूतानामादिभूतः तामसाहंकार.। तस्माद्विभक्तात् तमसोऽक्षराव्यक्तमहदवस्थाद्वारेण भूतादिरभूदित्यर्थः । 'भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इति प्रलयक्रमस्य वक्ष्यमाणत्वात् तमसो भूतादिकारणत्व तत्त्वान्तरव्यवधानेनेत्यवगम्यते । **भूतादि**शब्द सात्त्विकाहङ्कारराजसाहंकारयोरपि प्रदर्शनार्थः । 'वैकारिकस्तैजसश्च भूतादिश्चैव तामसः। त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायते' इति भगवत्पराशरस्मरणात्।

**भूतादेराकाशमिति ।** शब्दतन्मात्रावस्थापूर्वकमाकाशमुत्पन्नमित्यर्थः । 'आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते' इति अस्यामेवोपनिषदि पञ्चभूतप्रलयदशायां तन्मात्रलयप्रतिपादनेन उत्पत्तावपि तन्मात्रोत्पत्तेरर्थसिद्धत्वात् । 'भूतादिस्तु विकुर्वाण शब्दतन्मात्रक तत । ससर्ज शब्दतन्मात्रादाकाश शब्दलक्षणम्' इति भगवत्पराशरवचनेन शब्दतन्मात्रादाकाशोत्पत्ते स्पष्टतर मवगतत्वाच्च । **आकाशाद्वायुरिति ।** अत्रापि स्पर्शतन्मात्रपूर्वक वायुरुत्पन्न इत्यर्थः । 'आकाशस्तु विकुर्वाण स्पर्शमात्र ससर्ज ह । बलवानभवद्वायुस्तस्य स्पर्शो गुणो मत' इति पराशरोक्ते । **वायोरग्निः अग्नेरापः अद्भ्यःपृथिवीति ।** अत्रापि रूपतन्मात्रादग्नेरुत्पत्ति, रसतन्मात्रादपामुत्पत्ति, गन्धतन्मात्रात् पृथिव्युत्पत्तिरपि सिद्धा । 'ततो वायुर्विकुर्वाणो रूपमात्र ससर्ज ह । ज्योतिरुत्पद्यते वायोस्तद् रूपगुणमुच्यते । ज्योतिश्चापि विकुर्वाण रसमात्र ससर्ज ह

खेरापोऽद्भ्य पृथिवी । तदण्ड समभवत् ।

चाऽम्भांसि गन्धमात्रं ससर्जिरे' इति पुराणवचनोपबृंहितत्वात् । वायोरग्निरित्यत्राग्निशब्द तेजोमात्रपर । 'आपस्तेजसि लीयन्ते' इति अत्रैव प्रलयवाक्ये तेजश्शब्दश्रवणात्, 'तत तेजोऽसृजत' इति श्रुत्यन्तरैकार्थ्यात्, 'ज्योतिरुत्पद्यते वायो ' इति स्मृतिवचनाच्च ।

तदण्ड समभवदिति तच्छब्द पृथिव्यन्ततत्त्वजातपर । महदादिपृथिव्यन्त तत्त्वजातमण्डात्मना परिणतमभूदित्यर्थ । 'महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते' इति स्मरणात् ।

ननु 'तन्मात्राणि भूतादौ लीयन्ते इति तन्मात्राणा युगपत् प्रलयश्रवणात् उत्पत्तिरपि युगपदित्यवगम्यते । युगपत् उत्पन्नेभ्य तन्मात्रेभ्य परस्परानपेक्षेभ्य आकाशाद्युत्पत्ति । अत एव आकाशादीना न परस्परकारणत्वम् । तथा सति, 'अष्टौ प्रकृतय षोडश विकारा ' इति विकाराणा षोडशसङ्ख्या स्वरस घटते । अन्यथा आकाशादीना चतुर्णां प्रकृतित्वेन [प्रकृतीना] विकाराणाञ्च द्वादशत्व स्यात । तन्मात्राणा युगपदुत्पत्त्यङ्गीकारे लयश्रुत्यनुरोधश्च भवति। 'आकाशाद्वायु ' इत्यादिवाक्येषु आकाशादिशब्दा पञ्चम्यन्ता तन्मात्रावस्थाकाशादिभूतपरा इति —

---

न परस्परकारणत्वमिति । वाय्वादीना साक्षात् आकाशादिकारणकत्व वा तज्जन्यतन्मात्रादिकारणकत्व वा नेत्यर्थ । तथासतीति । तत्कारणकत्वाभावे सत्येवेत्यर्थ । तन्मात्रावस्थाकाशादिभूतपरा इति । ननु तन्म त्रेति शब्दतन्मात्रग्रहणे तज्जन्यत्व वायो कथम् । स्पर्श-तन्मात्रग्रहणे तदवस्थत्वमाकाशस्य कथमिति चेत्—पूर्वं परस्परानपेक्षेभ्य इत्यनेन वायूत्पत्तौ शब्दतन्मात्रापेक्षा न वार्यते । किंतु

अत्रोच्यते—न तावत् तन्मात्राणां युगपदुत्पत्तिः श्रुता ॥ युगपत्प्रलयश्रवणात् कल्पनीयेति चेन्न—प्रलयस्यापि यौगपद्याश्रवणात्। लीयन्त इति हि श्रूयते, न तु, 'युगपल्लीयन्ते' इति। अत क्रम-यौगपद्यसाधारणी इयं श्रुतिः। यथा, 'यतो वा इमानि भूतानि जायन्ते यत् प्रयन्त्यभिसंविशन्ति', 'यस्मिन्निदं सं च वि चैति सर्वम्' इत्यादि। तत्रापि यौगपद्यविवक्षा अस्तीति चेत्—महदहङ्कारादि तत्त्वानां देवमनुष्यादीनाञ्च प्रमाणान्तरावगतसर्गप्रलयक्रमो बाध्येत। अतो युगपत्प्रलय(या?)श्रवणात् युगपदुत्पत्तिकल्पनं तन्मात्राणाम् युक्तम्। न केवलं कल्पकाभावात् युगपदुत्पत्तिकल्पनमयुक्तम्, बाधक-सद्भावाच्चायुक्तम्। न हि श्रुतिक्रमविरोधेन यौगपद्यकल्पनमुपपद्यते।

तथा हि—'भूतादेराकाशमाकाशाद्वायुः वायोरग्निः' इत्यादि वाक्येषु पञ्चम्यन्तानामाकाशादिशब्दानां प्रसिद्धाकाशादिमात्रपरत्व प्रहाणेन तन्मात्राकाशादिपरत्वमसरसम्। स्वारस्यबाधाभावेऽपि क्लिष्टार्थ कल्पनमयुक्तम्। प्रथमान्तानां पञ्चम्यन्तानाञ्चाऽऽकाशादिशब्दानां मर्थैकरूप्यञ्च स्यात् ॥ प्रथमान्तानामपि तन्मात्रपरत्वात् नार्थैरूप्यमिति चेत्—तर्हि भूतादेः शब्दतन्मात्रमुत्पन्नम्, शब्दतन्मात्रात् स्पर्शतन्मात्रमुत्पन्नमित्ययमर्थ उक्तः स्यात्। तदानीमुत्त रोत्तरतन्मात्राणां पूर्वपूर्वतन्मात्रसृष्टत्वात् तेषां युगपदुत्पत्तिर्बाध्येत। तन्मात्रेभ्यः प्रसिद्धाकाशाद्युत्पत्तिः निष्प्रमाणिका च स्यात्, 'एतस्मा

सिद्धान्ते स्पर्शतन्मात्रं दे स्वोत्पत्तौ आकाशादिद्वारा शब्दतन्मात्रं च पेक्षत्व यत्, तदेव वार्यते इति इह आकाशपदं शब्दतन्मात्रपरमिति।

ज्जायते प्राणः....खं वायुर्ज्योतिरापः' इत्यादौ कस्मिंश्चिदपि वेदवाक्ये तन्मात्रेभ्यः खाद्युत्पत्तिश्रवणाभावात् । प्रथमान्तानां शब्दानां तन्मात्रवाचित्वमप्ययुक्तम्; 'अद्भ्यः पृथिवी' इत्यनेन भग्नत्वात् । न हि पृथिवीशब्दो गन्धतन्मात्रपरः ; अनन्तरवाक्यविरोधात् । 'तदण्डं समभवत्' इति अस्यामुपनिषदि, अन्यत्र 'पृथिव्या ओषधयः' इत्येवानन्तरं श्रूयते । न हि गन्धतन्मात्रात् अण्डोत्पत्तिश्च भवति । किञ्च युगपदुत्पन्नेभ्यः तन्मात्रेभ्यः पञ्चभूतोत्पत्त्यभ्युपगमे, 'पृथिव्यप्सु प्रलीयते' इति प्रलयश्रुतिश्च विरुध्यते । पृथिव्याः तत्कारणस्य गन्धतन्मात्रस्य च सलिलकारणकत्वाभावात् । एवम् 'आपस्तेजसि लीयन्ते' इत्यादिभिश्च विरोधः । उत्तरोत्तरभूतानां पूर्वपूर्वभूतप्रभूतत्वाभावात् । अतः तन्मात्राणां युगपदुत्पत्तिः कल्पकाभावात् सर्गप्रलयपरानेकवाक्यविरोधाच्चानुपपन्ना । छान्दोग्ये च, 'तत् तेजोऽसृजत—तत् तेज ऐक्षत—तदपोऽसृजत—ता अन्नमसृजन्त' इति तेजोबन्नवाचिशब्दानां तन्मात्रपरत्वे स्वारस्यभङ्गः, तस्मिन् सोढेऽपि युगपदुत्पत्तिविरोधश्चावर्जनीयः ।

'आकाशाद्वायुः' इत्यादिवाक्यानां केचिदेवं निर्वाहमिच्छन्ति—भूतादेराकाशमाकाशाद्वायुः', 'आत्मन आकाशः संभूतः, आकाशाद्वायुः' इत्यादिवाक्येषु आकाशादयः शब्दाः अविशेषेण स्थूलसूक्ष्मवस्तुतद्भूतवाचिनः । अतोऽनैकान्त्यादिदोषा न स्युः । तत्रार्थसामर्थ्यात् सूक्ष्मांशस्यैव स्थूलभूतमनन्तरं प्रति कारणत्वं सिद्ध्येत्—इति । इदानीमपि तन्मात्राणां युगपदुत्पत्तिः दूरतः परित्यक्ता । किञ्च—'आकाशाद्वायुः' इत्यादीनि वाक्यानि मिथुनात् मिथुनोत्पत्तिवचनानि ।

पञ्चम्यन्तानां प्रथमान्तानाञ्च पदानामुभयवाचित्वात् । एवं सति माता पित्रोरिव पुत्रदुहित्रोरिव च स्थूलसूक्ष्मभूतयोर्न परस्परकार्यकारणभाव सिद्ध्येत् । पुत्रदुहितरौ प्रति पित्रोरन्यतरस्येव स्थूलाकाशस्यापि स्पर्श मात्र वायुमपि प्रति कारणत्वं स्यात् । सूक्ष्मस्येव स्थूलाकाशस्यापि प्रकृत्युत्पन्नस्य स्थूलं सूक्ष्मञ्च वायु प्रति हेतुतयाऽन्वयस्य अविशेषेण पञ्चमीप्रतिपन्नत्वात् स्थूलाकाशस्य स्पर्शमात्रस्थूलवायुजननायोग्यत्वे प्रमाणान्तराभावात् । शास्त्रैकसमधिगम्यो ह्ययमर्थो यथाशब्दं स्वीकार्य । अत अर्थसामर्थ्यादभिमतव्यवस्था दुर्लभा । तथा, 'वायुराकाशे लीयते' इत्युक्ते स्पर्शतन्मात्रवाय्वो स्थूलाकाशेऽपि लय प्रतिपादित स्यात् । अत सर्व परमत व्याकुल स्यात् ।

तस्मात् प्रमाणान्तरागोचरे जगत्सर्गप्रलयादौ शब्दाना स्वरस-सिद्ध एवार्थ स्वीकार्य स्वप्रकरणस्ववाक्यानुगुण्यादुपबृंहणवचनानु गुण्याच्च प्रसिद्धानामेवाकाशादीना तन्मात्रव्यवहिता सृष्टिरित्यभ्युप गन्तव्य । 'तमसो भूतादि , भूतादेराकाशम्' इत्यादिषु व्यवधानेऽपि कार्यकारणभावनिर्देशदर्शनात् ।

तर्हि, 'अष्टौ प्रकृतय षोडश विकारा ' इति श्रुते का गतिरिति चेत्—देशोपबृंहणनिपुणतरपरमर्षिसदर्शितैव गति । नास्माभि तद्विरुद्ध

---

नास्माभिरिति । अत्र अष्टौ प्रकृतय इति प्रकृतिमहदहङ्कारतन्मात्राणामेव विवक्षा षोडश विकारा इति पञ्चभूतैकादशेन्द्रियग्रहणम्। एवेन चतुर्विंशतितत्त्वनाव्यवहारस्य बहुग्रन्थसप्रतिपन्नत्वात्। कथमाकाशादीना चतुर्णां प्रकृतित्वेनापरिगणनमिति चेत्—विवक्षितस्यार्थस्य

निर्वहणेऽभिनिवेष्टव्यम्। भगवता वेदव्यासेन हि मोक्षधर्मे याज्ञवल्क्यजनकसंवादे षोडश विकाराः प्रत्यक्षश्रुत्यन्तराविरोधेन दर्शिताः—

"अष्टौ प्रकृतयः प्रोक्ताः विकाराश्चैव षोडश।
(१) तथा व्यक्तानि सप्तैव प्राहुरध्यात्मचिन्तकाः॥
अव्यक्तञ्च महांश्चैव तथाऽहंकार एव च।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्॥
एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु।
श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणञ्च पञ्चमम्॥
वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च।
शब्दस्पर्शौ च रूपञ्च रसो गन्धस्तथैव च॥
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु।

---

तत्त्वाभावात्। नात्र प्रकृतित्वं कार्यद्रव्यारम्भकत्वमात्रम्; किंतु पाञ्चभौतिकत्वस्य शरीरे प्रसिद्धतया पञ्चभूतगतशब्दादिसर्वगुणाश्रयतया इन्द्रियाश्रयतया च तस्योपलभ्यमानत्वाच्च विकारभूते शरीरे उपलभ्यमानानि तत्त्वानि विकारा इत्युच्यन्ते, अन्यानि तु प्रकृतिमहदहङ्कारतन्मात्राणि तथानुपलभ्यमानत्वात् उपलभ्यमानतत्प्रकृतित्वाच्च प्रकृतय इत्युच्यन्ते इति तात्पर्यवर्णनसंभवात्। अतः सांख्याभिमतरीतिमुपेक्ष्य भगवत्पराशरोपबृंहितप्रकृतश्रुत्यनुरोधेन तत्त्वोत्पत्तिर्वाच्या न, 'अष्टौ प्रकृतयः' इति श्रुत्यादिविरोध इत्यादिवर्णनं यद्यपि संभवति-अथाप्यासितव्ये उपपन्नेऽपि नास्माभिरभिनिवेशः कार्यः, व्यासार्य ग्रादि वचनपर्यालोचने अष्टौ प्रकृतय इत्यस्याभिप्रायान्तरावगमादिति भावः।

तथा व्यक्तानीति युक्तः पाठः; न तु अथाव्यक्तानीति। वस्तुतः, आसां तु सप्त व्यक्तानीत्येव संमततमः पाठः (मोक्ष—३१५.)।

दशेन्द्रियाण्यर्थेनानि सविशेषाणि मैथिल ! ॥

मन षोडशमित्याहुः अध्यात्मगतिचिन्तकाः''     इति ।

अत्र ज्ञानप्रवृत्तिकारणानीन्द्रियाणि तद्विषयाः शब्दादयश्च तत्त्वान्तरानारम्भकत्वात् षोडश विकारा इति प्रतिपादितम् । 'एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु' इति वैयधिकरण्यनिर्देशात् विशेषशब्दः शब्दस्पर्शादिगुणमात्रपरः । 'शान्ता घोराश्च मूढाश्च विशेषाः तेन ते स्मृताः' (वि पु १.२ ) इत्यत्र तदभावात् विशेषशब्दो गुणिपरः । पटस्य शुक्ल, पट. शुक्ल इत्यादिषु शुक्लादिशब्दानामिव विशेष शब्दस्यापि गुणपरत्वं गुणिपरत्वञ्च युक्तमेवेति प्रयोगवशादवगम्यते । नन्वेवं सति चतुर्विंशत्याधिक्यं स्यादिति चेन्न, द्रव्यरूपाणां कार्यकारणाचिद्रूपाणामव्यक्तादीनां चतुर्विंशतिसंख्यानतिरेकात् । 'अष्टौ प्रकृतयः षोडश विकारा.' इत्यादिवाक्यस्य तु द्रव्यैकपरत्वनियमो नास्तीति उपबृंहणवशादवगम्यते । अर्थान्तराणामनुपपन्नत्वाच्च ॥ आकाशादीनामपि प्रकृतित्वे, 'अष्टौ प्रकृतय' इति श्रुत प्रकृतीनामष्टसंख्याकत्व न घटत इति चेन्न—तन्मात्राणां भूतेष्वन्तर्भावाभिप्रायेणाष्टसंख्यानिर्देशोपपत्ते ।

तथा वसिष्ठकरालजनकसंवादेऽपि भूततन्मात्रव्यतिरिक्तानां शब्दस्पर्शादीनां विशेषशब्दोक्तानां षोडशविकारान्तर्भाव प्रतिपाद्यते—

''अव्यक्तमाहु प्रकृति परां प्रकृतिवादिन ।
तस्मान्महत् समुत्पन्न द्वितीय राजसत्तम ॥
अहङ्कारस्तु महत तृतीय इति न श्रुतम् ।
पञ्च भूतान्यहङ्कारादाहु सांख्यनिदर्शिन ॥

एताः प्रकृतयस्त्वष्टौ विकाराश्चापि षोडश ।

पञ्चैव च विशेषाश्च पञ्च पञ्चेन्द्रियाणि तु ॥ "(शा शां ३११)

इति। अत्र पञ्चानां भूतानां प्रकृतिषु परिगणनात् केवलविकारत्वमपास्तम्। विशेषशब्दस्य तन्मात्रपरत्वं तन्मात्राणां केवलविकारत्वञ्च न कस्यापीष्टम्। अतो विशेषशब्दः शब्दस्पर्शादिगुणमात्रपर इति परिशेषात् सामर्थ्याच्च सिद्धम्॥ 'पञ्च भूतानि' इति भूतशब्दः तन्मात्रपरः; 'विशेषशब्द आकाशादिपरः' इति चेन्न । अपवादाभावेऽपि भूतशब्दस्य क्लिष्टार्थकल्पनाऽयोगात् । विशेषशब्दो गुणेष्वक्लिष्टः । न केवलमुपबृंहणवचनस्थभूतशब्दस्यैव, श्रुतिवाक्यस्थाकाशादिशब्दानामपि तन्मात्रपरत्वे स्वारस्याभावः स्फुटतरः ।

एवमुपनिषद्वाक्यानां परमर्षिवचसाञ्चानुरूपार्थाश्रयणमर्वाचीनसांख्यदुर्निबन्धनम्; स्वरसवचनान्तरयुक्त्यन्तराभावात् । समीचीनं सांख्यम् — श्रुत्यर्थानुगुणमिति अत्रैव दर्शितम्, 'आहुः सांख्यनिदर्शनम्'(र्शिनः)इति ।

तथा यमस्मृतौ विषयेन्द्रियाण्येव षोडश विकारा इत्युक्तम्—

"पञ्चविंशतितत्त्वज्ञो यत्रतत्राश्रमे रतः ।
प्रकृतिज्ञो विकारज्ञः स दुःखात् परिमुच्यते ॥
मनो बुद्धिरहंकारः खानिलाग्निजलानि भूः ।
एता प्रकृतयस्त्वष्टौ विकाराः षोडशापरे ॥
श्रोत्राक्षिरसनाघ्राणं त्वक् च संकल्प एव च ।
शब्दरूपरसस्पर्शगन्धवाक्पाणिपायवः ॥
उपस्थपादाविति च विकाराः षोडश स्मृताः ।

चतुर्विंशकमित्येतत् ज्ञानमाहुर्मनीषिणः ॥
पञ्चविंशकमव्यक्तं षड्विंशः पुरुषोत्तमः ।
एतत् ज्ञात्वा तु मुच्यन्ते यतयः शान्तबुद्धयः ॥
अशब्दमरसस्पर्शं रूपगन्धविवर्जितम् ।
निर्दुःखं सुसुखं शुद्धं तद्विष्णोः परमं पदम् ॥
अजं निरञ्जनं शान्तमव्यक्तं ज्ञानमक्षरम् ।
अनादिनिधनं ब्रह्म तद्विष्णोः परमं पदम् ॥" इति ।

अत्र प्रकृतिषु परिगणनात् प्रथमोपादानाच्च प्रधानतत्त्वमव्यक्ततया मन इत्युक्तम् । सङ्कल्पशब्देन तत्कारणं मनो विवक्षितम् । ज्ञानं ज्ञातव्यम् । प्रत्यगात्मनः पञ्चविंशकत्वेनोक्तत्वात् परिशेषाच्च चक्षुराद्यगम्यमात्मतत्त्वमव्यक्तशब्दोक्तम् । 'विकाराः षोडश स्मृताः' इति षोडशविकारशब्दोपादानात् एताः प्रकृतयस्त्वष्टौ' इत्युक्तत्वाच्चास्य स्मृतिवचनस्य, 'अष्टौ प्रकृतयः षोडश विकाराः' इति श्रुतिमूलत्वमवगम्यते । अतस्तस्याः श्रुतेरयमर्थ इति यमेन निर्णीयत इति स्फुटम् ।

ईदृशस्मृत्युपबृंहितया अनया श्रुत्या विषयेन्द्रियाण्येव षोडश विकारत्वेन विवक्षितानीति भगवतो भाष्यकारस्य हृदयमिति भगवद्गीताभाष्ये स्पष्टमवगम्यते, "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' इति क्षेत्रारम्भकद्रव्याणि । पृथिव्यप्तेजोवाय्वाकाशानि महाभूतानि । अहङ्कारो भूतादिः । बुद्धिर्महान् । अव्यक्तं प्रकृतिः । 'इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः' इति क्षेत्राश्रितानि तत्त्वानि । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थाः पञ्च कर्मेन्द्रियाणि

दश ; एकमिति मनः । इन्द्रियगोचराश्च पञ्च शब्दस्पर्शरूपरसगन्धाः" इति । अत्र क्षेत्रारम्भकद्रव्याणीत्यारम्भकद्रव्यपदेन, 'अष्टौ प्रकृतय' इति प्रकृतिशब्दो व्याख्यातः । 'क्षेत्राश्रितानि तत्त्वानि' इति विषयेन्द्रियाणां षोडशानां साधारणाकार उक्तः ।

एवम्, 'अष्टौ प्रकृतय षोडश विकाराः' इति वाक्येऽपि

---

ननु संभवति द्रव्यपरतयैव, 'अष्टौ प्रकृतयः षोडश विकाराः' इत्यस्य निर्वाहे विकारपदेन गुणमात्रग्रहणं न युक्तम् । कथं निर्वाह इति चेत्—नात्र प्रकृतिशब्दः तत्त्वान्तरोपादानत्वमात्रेण प्रयुक्तः ; किंतु समष्टितत्त्वाभिप्रायेण । विकारपदञ्च व्यष्ट्यन्तर्गतवस्तुपरम् । एवं हि व्यष्टिप्रलयवर्णनानन्तरं समष्टिप्रलयवर्णनारम्भे भगवान् पराशर आह (६.४.३०.), 'एवं सप्त महाबुद्धे क्रमात् प्रकृतयः स्मृताः । प्रत्याहारे तु ताः सर्वाः प्रविशन्ति परस्परम्' इति । आवरणानि च न तन्मात्राणि, किन्तु भूतानीति तत्र (१. २.) एव सुबोधम् । अतः अण्डकटाहरूपपृथिवीसहिताः आवरणभूताः वाय्वादयः (वि-१२.) व्यष्टिप्रपञ्चहेतुत्वात् साक्षादुपभोगानर्हत्वात् समष्टयः प्रकृतयः । व्यष्ट्यन्तर्गतानि तु इन्द्रियाणि च भूतानि च विकाराः । भूतानामपि इन्द्रियविषयत्वेऽपि तत्तद्गुणविशिष्टतयैवेन्द्रियग्राह्यत्वात्, इन्द्रियव्यवस्थापकत्वरूपमहिमशालित्वाच्च गुणानाम्, तेषामेव प्राधान्येन विषयतया निर्देशः सर्वदर्शनसुप्रसिद्ध इति क्वचित् गुणपुरस्कारेण निर्देशोऽपि गुणिनामुपेक्षणे न तात्पर्यम् । एवञ्च, 'महाभूतान्यहङ्कारः' इति गीतादिकं सुस्थम् । 'एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु' इति शब्दादीनां (भारतादौ) निर्देशस्थलेऽपि महाभूतेष्विति द्रव्याणां विशेषणतया निर्देशात् द्रव्यविशिष्टगुणानामेव विकारत्वं गम्यते । गुणविशिष्टद्रव्यमिति द्रव्यवर्तिगुण इति च नात्यन्तभिन्नम् इत्या-

तत् संवत्सरमात्रमुषित्वा द्विधाऽकरोत्, अधस्ताद्भूमिमुपरिष्टादा-

निषयेन्द्रियाण्येव अत्यन्ताविरोधेन षोडशविकारत्वेन विवक्षितानीति व्यासादीनां परमर्षीणां भाष्यकारस्य च [हृदयं] स्फुटतरमवगम्यते। अतः आकाशाद्वायुरित्यादीनां यथोक्त एवार्थः।

एवं ब्रह्माण्डसृष्टिरुक्ता। अथ हिरण्यगर्भोत्पत्तिमाह **तत् संवत्सरमात्रमुषित्वा द्विधाऽकरोदिति**॥ वक्ष्यमाण पुरुषः तस्मिन् अण्डे संवत्सरमात्रमुषित्वा परिणतं तदण्डं द्विधाऽकरोदित्यर्थः।

यद्वायाम्—निर्वाहप्रकारो यः कश्चिदस्तु। आकाशाद् वायुरित्यादेरर्थस्तु यथोक्त एव; न तत्रान्यथाभावः। अस्माभिस्तु गुणानामपि चतुर्विंशतितत्त्वमध्ये गणनं युक्तमिति एवमुक्तम् इत्याशयेन निगमयति अत आकाशादिति। एवं हि तत्त्वसागरसंहितावचनमपि श्रीरहस्यत्रयसारोद्धृतम्—'भूतानि च कवर्गेण चवर्गेणेन्द्रियाणि च। टवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा' इति ज्ञानेन्द्रियैः सह गन्धादीनामेव चतुर्विंशतिमध्ये निवेशकम्, स्वारस्यात्। (व्याख्यातारस्तु गन्धतन्मात्रादि ग्राहयन्ति)। तथाच श्रीमुखसूक्तभाष्ये श्रीवटलक्ष्मिन्यामपि (८. ८. ५.), "प्रकृतिमहदहङ्कारैकादशेन्द्रियपृथिव्यादिभूतशब्दादिविषयरूपचतुर्विंशतितत्त्वविलक्षण" इति। अत्र तत्त्वमुक्ताकलापश्लोकः (१. १५) तत्त्वसर्वार्थसिद्ध्यादिग्रन्थानुसंधेयो—
"तत्त्वेष्वाथर्वणेऽष्टौ प्रकृतय उदिताः षोडशान्ये विकाराः
निष्कर्षस्यपरेऽस्मिन् वचसि तदितरत् सर्वमावर्जनीयम्।
दृष्ट्वा सांख्यं पुराणादिकमपि बहुधा निर्वहन्त्येतदेके
चिन्तासाफल्यमान्द्यात् श्रमबहुलतयाऽप्यत्र नाद्रीकृतास्मि॥ इति।
संवत्सरमात्रमिति मात्रशब्दः कात्स्न्यार्थकः। पूर्णं संवत्सरमित्यर्थः। अधस्तादिति। अत्र मोक्षधर्मे (३२९), 'ततो ब्रह्माणमसृजत्

काशम् । मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्र-पात् सहस्रबाहुरिति ।

---

आकाशमिति ॥ अकरोदित्यन्वयः । आकाशादि(?)शब्दः स्वर्गादि—परः । मध्ये अन्तरिक्षे पुरुषः । अभूदिति शेषः । पुरुषशब्दस्य मनुष्यपरत्वव्यावृत्त्यर्थं दिव्यः पुरुष इत्युक्तम् । तस्याण्डोत्पन्नस्य दिव्यपुरुषस्य पुरुषसूक्तप्रतिपाद्यपरमपुरुषात्मकत्वमाह सहस्रशीर्षा पुरुष इति । अन्यथा द्वितीयपुरुषशब्दस्य पौनरुक्त्यप्रसङ्गात् । सर्वज्ञत्वात् सर्वशक्तित्वाच्च सर्वत्र शिरश्चक्षुःपादकार्य[बाहुकार्य]करणसमर्थो यो महापुरुषः श्रुतः, तदात्मकोऽयमण्डोत्पन्नः पुरुष इत्यर्थः ।

इदञ्च सामानाधिकरण्यं परमपुरुषान्तर्यामिकत्वनिबन्धनम् ; न तु स्वरूपैक्यकृतम् । तस्य ब्रह्मा बिभीते' इति तस्य मृत्युभयाभिधानात्, 'भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम', 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एक' इति पुण्डरीकाक्षस्य परमपुरुषस्य,

---

हैरण्याण्डसमुद्भवम् । सा मूर्तिः सर्वभूतानामित्येवमनुशुश्रुम । संवत्सरमुषित्वाऽण्डे निष्क्रम्य च महामुनिः। संदधेऽर्धं महीं कृत्स्नां दिवमर्धं प्रजापतिः। द्यावापृथिव्योरित्येष राजन् वेदेषु पठ्यते। तयोः शकलयोर्मध्यमाकाशमकरोत् प्रभुः' इति। मनुश्च (1-12) 'तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम्। स्वयमेवात्मनो ध्यानात् तदण्डमकरोत् द्विधा। ताभ्यां स शकलाभ्याञ्च दिवं भूमिं च निर्ममे। मध्ये व्योम' इति।

ननु 'दिव्यो देव एको नारायण' इति नारायणे दिव्यशब्दप्रयोग-स्यात्रोपनिषदि श्रवणात् वाक्यमिदं परमात्मपरमेवास्तु, कृतं चतुर्मुखविवक्षयेत्यत्राह अन्यथा द्वितीयपुरुषेति।

सोऽग्रे भूतानां मृत्युमसृजत् त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुम् ।

मृत्योरपि भयनिमित्तत्वाच्च मृत्योर्भीतस्य मृत्युभयजनकस्य च स्वरूपैक्यानुपपत्तेः । शाखान्तरे हिरण्यगर्भस्य, महापुरुषस्य महापुरुषत्वानभिज्ञत्वाम्नानाच्च न स्वरूपैक्यम् । 'स प्रजापतिरेकः पुष्करपर्णे समभवत्' इत्यारभ्य, 'मम वै त्वङ्मांसा समभूत्' इति प्रजापतिनोक्ते, 'नेत्यब्रवीत् । पूर्वमेवाहमिहाऽऽसमिति । तत् पुरुषस्य पुरुषत्वम् । स सहस्रशीर्षा पुरुषः' इति चतुर्मुखस्य परमपुरुषावेदनं हि प्रतिपादितम् । अत एव ह्युक्तं ब्रह्मणैव,

'यत्र देवा न मुनयो न चाहं न च शङ्करः ।
जानन्ति परमेशस्य तद्विष्णोः परमं पदम् ॥' इति ॥

तथा तेनैव ब्रह्मरुद्रसंवादेऽप्युक्तम्—'तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥' इति । अतः तदन्तर्यामित्वनिबन्धनं सामानाधिकरण्यम् ।

इतिशब्दो भगवदेककर्तृकसर्गसमाप्तौ ।

अथ हिरण्यगर्भकर्तृकसर्गमाह सोऽग्रे भूतानां मृत्युमसृज-

---

नेत्यब्रवीदिति । पुष्करपर्णे जातेन प्रजापतिना स्वकीयमांसमयत्वालोचनप्रवर्तदान-वैखानस-वालखिल्यन्यायेन अपामन्तः कूर्मं भूतं सर्पन्तमपि स्वत्वङ्मांसाभ्यां संभूतमसीत्युक्ते, स कूर्मः तदुक्तं न्यषेधीदित्यर्थः ।

सहस्रशीर्षा पुरुष इत्यस्य तत्र 'भूत्वोदतिष्ठत्' (तै.आ.अ-१-२३.) इत्युत्तरत्रान्वयः । खण्डपरशुमिति । खण्डकपरशुविशिष्टमित्यर्थः स्यात् । रुद्रसृष्टिस्तु, 'ललाटात् क्रोधजो रुद्रो जायते' इत्युत्तरत्र वक्ष्यते ।

सोऽग्रे इति । नन्वत्र पूर्वः प्रथमपुरुषशब्दः चतुर्मुखान्तर्यामिपरः,

दिव्य इत्यादि नारायणपरमित्यपि सुवचम्। तदयं तच्छन्दः परमपुरुषपर एव किं न स्यात्। तत्कर्तृकैव सृष्टिः चतुर्मुखस्येव मृत्युप्रभृतीनां सर्वाणि च भूतानीत्यन्तानामुच्यताम्। चतुर्मुखकर्तृकसृष्टिस्तु, हिरण्यज्योतिरित्यारभ्योपरि वक्ष्यमाणा परमस्तु। एवञ्च ब्राह्मणक्षत्रियादीनां भगवदवयवोत्पन्नत्वं सिद्ध्यति। प्रसिद्धं हि भगवतोऽवयवानामेव तथात्वम्, 'स्त्रीरत्नकारणमुपात्ततृतीयवर्णं दैत्येन्द्रवीरशयनं दयितोपधानम्। देवेश यौवनगजेन्द्रकराभिराममूरीकरोतु भवदूरुयुगं मनो मे', 'सर्गोऽपिदं भवति चन्द्रमसां प्रसूतिः' इत्यादौ। यद्ययं स इति शब्दो ब्रह्मार्थकोऽभविष्यत्, तर्हि उपरि, तस्य ब्रह्मा बिभीते, सो ब्रह्माणमेव विवेश' इत्यत्रापि पूर्ववत्, 'तस्य स बिभीते, स तमेव विवेश' इति तच्छन्द एव प्रायोक्ष्यत। न च मनुवचनविरोध इति शङ्क्यम्—तत्र चतुर्मुखजन्यमनुजन्यत्वस्य प्रजापत्यादिषु कथनाद्यनेकबैलक्षण्यदर्शनेन स इत्यस्य चतुर्मुखार्थकत्वेऽपि विरोधपरिहाराभावात्। पुरुषसूक्तं तु कतमस्य पक्षस्य साधकमिति विमर्शपदं नातिक्रामति। महाप्रलयानन्तरभाविप्रथमसृष्टिप्रकरणत्वाच्चास्य सर्वस्य परब्रह्मजन्यत्ववर्णनपरत्वं युज्यते, यदिदं नामसहस्रभाष्येऽभाषिषत, 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे' इत्यत्र—, "यद्यपि ब्रह्मसर्गादुपरि, अवान्तरसर्गे च ब्रह्मादिमुखेन सृजति, अथापि प्रथमसृष्टौ न तथेति सूचयति आदियुगागमे इति" इति। देवनायकपञ्चाशत्येव च श्रीरत्नमित्यादिवत् 'वेदेषु निर्जरपते निखिलेष्वधीतं व्यासादिभिर्बहुमतं तव सूक्तमग्र्यम्। अङ्गान्यमूनि भवतः सुभगान्यधीते विश्वं विभो जनितयन्ति विरिञ्चिपूर्वम्' इत्यपि द्रष्टव्यम्। अतो ब्रह्मद्वितीयदिनादिरूपेषु कल्पेषु चतुर्मुखैकस्रष्टृत्वेऽपि सर्वेषाम्, आद्यौ परमपुरुषजन्यत्वं भूतानामुपपन्नमिति चेत्—अस्तु परमपुरुषकर्तृकाऽपि आदिसृष्टिरनेकेषां भूतानाम्—अथापि प्रकृतवाक्ये स इति स एव ग्राह्य इति न विशेषगम

तस्य ब्रह्मा बिभीते । सो ब्रह्माणमेव विवेश । स मानसान् सप्त पुत्रानसृजत् । ते ह विराजः सप्त मानसान् असृजन् । ते ह प्रजापतयः ।

---

दिति । मृत्युं विशिनष्टि त्र्यक्षमित्यादिपदैः । **तस्य ब्रह्मा बिभीते ।** तस्येति सम्बन्धमात्रे षष्ठी । तस्मात् मृत्योर्भीत । स्रष्टुरपि भयावहो मृत्युः, किमुत अन्येषामित्यर्थः **सो ब्रह्माणमेव विवेशेति । सो ब्रह्माणमिति** सन्धिश्छान्दसः । ब्रह्मशरीरे तिरोहित इत्यर्थः । **स मानसानिति ।** सः ब्रह्मा सप्त **मानसानसृजत्** । मनसाऽसृजदित्यर्थः । **ते ह विराजः** विविधदीप्तियोगात् विराट्शब्दवाच्यभूताः सप्त मानसपुत्राः स्वयमपि मानसान् असृजन् । कथं मनसा सृष्टिरित्यत्राह **ते ह प्रजापतय इति ।** प्रजापतित्वात् मनसा स्रष्टुं शक्ता हीत्यर्थः ।

---

कमस्ति । प्रत्युत, सहस्रबाहुरिति इति इतिशब्देन भगवदेककर्तृक-सृष्टिसमाप्तिद्योतनात्, पूर्वं मध्ये पुरुष इति ब्रह्मान्तर्यामितया गृहीतस्य 'सोऽग्रे इति स इत्यनेन ग्रहणौचित्याच्च चतुर्मुखसृष्टत्वमेव मृत्युप्रभृतीनाम् । अत एव सो ब्रह्माणमेव इति एवकारोऽपि सङ्गच्छते । स्वस्य स्रष्टारमेव स्वयं हन्त मृत्युः प्रविवेशेति वर्णनपरत्वात् तस्य । तदुपरि प्रजापतयः सृज्यमाना अपि चतुर्मुखजन्यत्वेन प्रसिद्धाः, न भगवत्पुत्रतया । द्वितीयखण्डे स्त्रीपुरुषरूपद्वेधकरणानन्तरसृष्टिस्तु दास्यमाना चतुर्मुखजन्यमनुसृष्टित्वेन सम्भावनमर्हति, बृहदारण्यकानुरोधात् । एवञ्च, 'ललाटात् क्रोधजो रुद्रः' इत्यत्र, 'अस्यैव चानुजो रुद्रो ललाटात् यः समुत्थितः' इत्युपबृंहणानुसारमुपपन्ने रुद्रे ब्रह्म-जन्यत्वं प्रमाणान्तरानुसारेण ग्राह्यम् । महतो भूतस्य निःश्वसितमित्यद्यपि मैत्रेयीविद्यायामिव साक्षात्परमात्मनि श्वसितरूपं प्रतीतमपि इह तथा न ग्राह्यमित्यलम् ।

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ।
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च हृदयात् सर्वमिदं जायते ॥
इति सुबालोपनिषदि प्रथमः खण्डः ॥

—०—०—

अथ द्वितीयः खण्डः ॥

अपानान्निषादा यक्षराक्षसगन्धर्वाश्च, अस्थिभ्यः पर्वता लोमभ्य

---

पुनश्च हिरण्यगर्भात् प्राणिसृष्टिमाह — ब्राह्मणोऽस्य मुखमासीदिति । ब्राह्मण मुखमासीदित्यौपचारिकं सामानाधिकरण्यम् । मुखजात इत्यर्थः । पद्भ्यां शूद्र इत्यनन्तरोक्तेः । बाहू राजन्यः कृतः । बाहुभ्यां कृतः तज्जनित इत्यर्थः । ऊरू तदस्य यद्वैश्यः । [यदिति] नपुंसकं वस्तुत्वाभिप्रायम् । वैश्य इति यत् तदस्य ब्रह्मणः ऊरू ऊरुभ्यां जातमित्यर्थः । प्राणः पञ्चवृत्तिप्राण । हृदयात् संकल्पादित्यर्थः । सर्वमिदम् = अनुक्तं सर्वमिदम् ।

इति श्रीहरितकुलतिलकवाग्विजयिसूनो
श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयस्य श्रीसुदर्शनार्यस्य
कृतौ सुबालोपनिषद्विवरणे प्रथम खण्ड ॥

—:**.—

अथानुक्तसर्गप्रपञ्चपूर्वकं प्रलय उच्यते अपानादिति । मनुष्येषु निकृष्टाः निषादाः देवयोन्यवान्तरभेदाः यक्षराक्षसगन्धर्वाश्च चतुर्मुखस्यापानादजायन्तेति अध्याहारेण वा अजायतेति पदस्य विपरिणामेन

ओषधिवनस्पतयः, ललाटात् क्रोधजो रुद्रोऽजायत (जायते)।

तस्यैतस्य महतो भूतस्य निःश्वसितमेवैतत्, ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो निति(चि?)तं ज्योतिषामयनं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि च सर्वाणि च भूतानि।

हिरण्यज्योतिर्यस्मिन्नयमात्माऽधिक्षियन्ति भुवनानि विश्वा,

---

वा अन्वय। ललाटात् क्रोधज इति। रुद्रोत्पत्तौ चतुर्मुखस्य मनोवृत्तिषु क्रोध, अवयवेषु ललाटश्च हेतु। 'मन्यव पुत्राय नम' इत्यादिष्वपि क्रोधात् ललाटोद्भवतया पुत्रत्वमेतदैकार्थ्येन सिद्धम्।

अथ शास्त्रप्रवर्तनमाह तस्यैतस्येति। तस्य अण्डसंभवस्य एतस्य देवादिस्रष्टुर्हिरण्यगर्भस्येत्यर्थः। महतो भूतस्येति परमात्मवाचिशब्देन सामानाधिकरण्यात् हिरण्यगर्भकर्तृकस्य सर्वस्य भगवदधीनत्वं ज्ञाप्यते। 'महद्भूतमनन्तमपारम्', 'एतस्य वा अक्षरस्य महतो भूतस्य' इति, 'एको विष्णुर्महद्भूतम्' इति च श्रुतिस्मृतिषु महद्भूतशब्दस्य भगवति प्रसिद्धिर्निर्णीता। निश्वसितमिति तत्र सृष्टत्वं विवक्षितम्। सर्वाणि च [तानीमानि] भूतानि निश्वसितमित्यन्वय। भूतशब्द शरीरपर।

हिरण्यज्योतिरित्यादि॥ हिरण्मयमानो ज्योति यस्य स.

---

ननु हिरण्यज्योतिरित्यारभ्य वक्ष्यमाणा विश्वरूपवर्णनरूपेयं खण्डे युक्ता। ततः पूर्वमुच्यमाना तु पूर्वखण्डे सङ्गता—सृष्टिरियं परमपुरुषकर्तृकाऽपि कदाचित्, कदाचिच्चतुर्मुखकर्तृकाऽपीत्यस्योपपादनार्थम्।

आत्मानं द्विधाऽकरोत्, अर्धेन स्त्री अर्धेन पुरुषः। देवो भूत्वा देवान् असृजत्, ऋषिर्भूत्वा ऋषीन्, यक्षराक्षसगन्धर्वान्, ग्राम्यान् आरण्यान् पशून् असृजत्। इतरा गौरितरोऽनड्वान्; इतरा वडबेतरोऽश्वः; इतरा गर्दभीतरो गर्दभः; इतरा विश्वम्भरी इतरो विश्वम्भरः। सोऽन्ते वैश्वानरो भूत्वा संदग्धे (सदग्धे?) सर्वाणि भूतानि।

---

हिरण्यज्योतिरित्यात्मविशेषणम्। यस्मिन् विश्वा भुवनानि अधि क्षीयन्ति = वश्यतया स्थितानि, सोऽयं हिरण्यज्योतिरात्मा = हिरण्यगर्भ आत्मानं द्विधाऽकरोदित्यन्वय। कथं? अर्धांशेन स्त्री अर्धांशेन पुरुष। अभूदिति शेष। शरीरिणं स्रष्टुं ब्रह्मा स्वांशाभ्यां तत्तज्जातीय पुरुषोऽभूत्, तत्तज्जातीया स्त्री चाभूदित्यर्थ। तदेव प्रपञ्चयति देवो भूत्वा देवानसृजदित्यादिना। यक्षराक्षसगन्धर्वानिति। तज्जातीयः पुमान् भूत्वा असृजदिति प्रकरणवशादवगम्यते। ग्राम्यारण्यपशुसृष्टिं प्रपञ्चयति इतरा गौरित्यादिना। इतरा पूर्वं ब्रह्मणा स्वांशेन सृष्टा स्त्री गौरभवत्। इतरः तत्कल्पित पुरुषोऽनड्वान् पुङ्गवोऽभूत्। गोजातीयसृष्ट्यर्थमित्यर्थ। इतरा वडवा इतरोऽश्व इत्यादेरप्येवं योजना। वडवा तुरगली। विश्वम्भरी भारवहा उष्ट्री। अर्थान्तरमप्येवम्।

अथ प्रळयं प्रतिपादयति सोऽन्ते इत्यादिना। सः हिरण्यगर्भरूप परमपुरुष अन्ते स्थितिकालसमाप्तौ वैश्वानरः कालाग्निर्भूत्वा सर्वाणि भूतानि कार्यजातानि सदग्धे(?) दहति = धक्ष्यतीत्यर्थ। भवनदहनक्रियाभेदात् स इति द्विरुक्ति। दाहानन्तरं प्रळयमाह

---

कालाग्निरिति। श्रीविष्णुपुराणे द्रष्टव्यमिदम् (६-३)।

पृथिव्यप्सु प्रलीयते । आपस्तेजसि लीयन्ते । तेजो वायौ

---

पृथिव्यप्सु प्रलीयत इति । पूर्वावस्थाप्रहाणेन कारणसंसर्गो लयः । 'लीङ् श्लेषणे' इति हि धातुः । कार्यस्य तदुपयुक्तकारणद्रव्यांश उपादानम् । तदतिरिक्तांशस्त्वपादानम् । तदपेक्षया कार्यस्य विभागव्यपदेशः । अतः पञ्चम्यन्तेन उच्यते । अपादान (उपादान!) त्यक्तकार्यावस्थद्रव्यमपादानेन संसृष्टं भवति । तस्य तदानीम्, परस्य पुनस्तद्वत् अधिकरणत्वादपादानमेव सप्तम्यन्तेनोच्यते । अपादानस्योपादानद्रव्यसजातीयत्वात्, 'कारणे लय' इति व्यपदेशः । पृथिव्यप्सु प्रलीयते । पृथिवी पृथिवीत्वावस्थां तदुपक्रमभूतां गन्धतन्मात्रावस्थाञ्च हित्वा अम्बवस्था सती प्रागवस्थितेषु समुद्रादिजलेषु संसृष्टा भवतीत्यर्थः। स च संसर्गः समानाकारयोर्निरन्तरसंश्लेषरूपत्वादैक्यमित्युच्यते । क्षीरे (!) क्षीरे कपिलादिगो(!)क्षीर संसृष्टमेकीभूतमिति व्यवह्रियते । आपस्तेजसि लीयन्त इत्यादिवाक्यानामपि अयमेवार्थः। त्यक्तजलावस्थस्य त्यक्तरसतन्मात्रावस्थस्य च द्रव्यस्य तेजोवस्थापन्नस्य प्रागवस्थिततेजस्संपर्को लयः । एवमुत्तरत्राप्यनुसन्धेयम् ।

एतत् सर्वं भगवता पराशरेण स्पष्टमुक्तम्—

'आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणम् ।

---

एतत् सर्वमिति । विवेचितस्य पदस्यार्थस्य परमोपपादकोऽर्थः, तत्र तस्यानत्यन्तविरुद्धत्वमित्यर्थः । आपो ग्रसन्तीति श्लोकः पृथिव्याः गुणग्रासपर्यवसानेन तस्याः प्रलयानुगुण्यं दर्शयति । श्लोके पिण्डीभूतस्य तात्पर्यतानि-अपवर्गादित्व-संनिकर्षवत्त्वादिरूपमेव विलय-

आत्तगन्धा ततो भूमिः प्रळयत्वाय कल्पते ।
प्रनष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिका ।
आपस्तदा प्रवृद्धास्तु वेगवत्यो महास्वनाः ।
सर्वमापूरयन्तीदं तिष्ठन्ति विचरन्ति च' इति । तथा,
'नश्यन्त्यापः पुनस्ताश्च रसतन्मात्रसंक्षयात् ।
ततश्चापो हृतरसाः ज्योतिष्टुं प्राप्नुवन्ति वै ।
अग्न्यवस्थे तु सलिले तेजसा सर्वतो वृते ।
स चाग्निः सर्वतो व्याप्य आदत्ते तज्जलं तथा ।
प्रनष्टे रूपतन्मात्रे हृतरूपो विभावसुः ।
प्रशाम्यति तथा ज्योतिर्वायुर्दोधूयते महान् ।
निरालोके तदा लोके वाय्ववस्थे च तेजसि' इत्यादिना ॥

अत्र, 'प्रनष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिका' इत्यनेन स्थूलपृथिव्या एव गन्धतन्मात्रावस्थापहाणेन जलत्वापत्तिरुक्ता । 'आपस्तदा प्रवृद्धास्तु' इत्यनेन प्रागवस्थितानामपां पृथिव्यवस्थान्तररूपसलिलान्तरसंसर्गात् तदेकीभूततया प्रवृद्धत्वमुक्तम् । 'सर्वमापूरयन्ति' इति पूर्वपृथिव्याक्रान्तप्रदेशस्यापि सकलिलस्याऽऽपूरितत्वमुक्तम् । एवमग्न्यवस्-

---

दर्शनात् गन्धस्य च सारगुणत्वात् तथोक्तिः । [illegible] इत्यादिना च पृथिव्याः गन्धतन्मात्रलयद्वारा वारिभावो वर्णितः। यद्वा [illegible]यो प्रनन्तीति पूर्वार्धं गन्धतन्मात्रस्य स्वस्मिन् विलापने अपां प्रवृत्तिं दर्शयति । उत्तरार्धञ्च अत एव पृथिव्याः गन्धतन्मात्रद्वारा जले विलयपरम् ।

सकलिलस्येति । कलिलपदेन [illegible] ।

लीयते । वायुराकाशे लीयते । आकाशमिन्द्रियेषु

जलस्यापि रसतन्मात्रावस्थाप्रहाणेन ज्योतिष्ट्वापत्ति कण्ठोक्ता—'अन्यवस्थे तु सलिले तेजसा सर्वतो वृते' इति । [अन्यवस्थे सलिले ?] औष्ण्यगुणेनाऽऽवृते सति प्रागवस्थितो वह्नि सर्वतो व्याप्य = पूर्वं जलमसृष्टमपि प्रदेशं व्याप्य तज्जलमन्यव्यवस्थमादत्ते = स्वात्मनैकीकरोतीत्यर्थः । 'प्रनष्टे रूपतन्मात्रे' इत्यादिना अग्नेरपि तन्मात्रावस्थाप्रहाणेन वायुत्वापत्ति, तेनैकीभावात् प्रागवस्थितस्य वायोरतिमहत्त्वापत्तिश्च प्रतिपादिता । एवमुपबृंहणानुगृहीतत्वात् पृथिव्यप्सु प्रलीयत इत्यादिवाक्यानां यथोक्त एवार्थः ।

आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेष्विति । अत्र इन्द्रियाणि तन्मात्राणि च न लयस्थानत्वेन विवक्षितानि । इन्द्रियाणामाकाशकारणत्वाभावात्, तन्मात्राणामिन्द्रियकारणत्वाभावात् । प्रलीयत इति पञ्चाश्रवणाच्च । अत एव लयशब्दानुषङ्गश्च न युक्तः । इतरसर्ववाक्येष्वनुषङ्गश्चेत्, मध्यगतवाक्यद्वयेऽपि अनुषङ्गः स्यात् । पूर्वापरवाक्येषु सर्वेषु लयवाचिपदस्य पठितत्वात् मध्येऽनुषङ्गश्चानुचितः । अतो लयपदाश्रवणं लयस्याविवक्षितत्वं दर्शयति । अतः संसर्गमात्रमेव विवक्षितम् । नन्वाकाशस्येन्द्रियसंयोगः प्रागप्यस्तीति प्रलयदशायां तदुक्तिर्व्यर्थेति चेत्—[न] इह विवक्षितस्य संसर्गस्य प्रागसिद्धत्वात् । मनआदीनामिन्द्रियाणां हि पृथिव्यादिभूतैराप्यायनं श्रुतिस्मृतिषु प्रसिद्धम्, 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्', 'श्रोत्रं नभो घ्राणमुक्तं पृथिव्या' इत्यारभ्य, 'वाय्वात्मकं स्पर्शनमा-

इन्द्रियाणि तन्मात्रेषु । तन्मात्राणि भूतादौ लीयन्ते ।

---

मनन्ति, 'नभः श्रोत्रञ्च तन्मयम्' इमित्यादिषु । तत्र पृथिव्यादिषु वायु पर्यन्तेषु प्रलीनेषु तत्तदिन्द्रियाध्यायकभूतांशानामपि प्रलीनतया तेषामाकाशतापन्नत्वात् सर्वेष्वपीन्द्रियेषु स्वान्तर्गतेतरभूतमाकाशमेव ससर्गितयाऽवस्थितम्, न तु पृथिव्यादीत्यर्थः । अथ इन्द्रियाणामाकाशस्य च अहङ्कारकार्यत्वात् सेन्द्रियस्य स्वान्तर्गतेतरभूतचतुष्टयस्याकाशस्य तत्र लयं वक्तुम्, आकाशस्य तन्मात्रावस्थापन्नस्यैवेन्द्रियससर्गमाह— **इन्द्रियाणि तन्मात्रेष्विति** । पूर्वमाकाशसंसृष्टानीन्द्रियाणि पश्चात् शब्दतन्मात्रेषु संसृष्टानीत्यर्थः । परित्यक्ततन्मात्रावस्थतया पृथिव्यादिषु प्रलीनेषु गन्धतन्मात्रादीनामवस्थानानुपपत्तेः शब्दतन्मात्रमेव **तन्मात्र**शब्देन विवक्षितम् । तत्तदिन्द्रियाध्यायकपृथिव्यादिभूतांशानामपि स्वस्वकारणतत्त्वलयक्रमेण शब्दतन्मात्रतापन्नत्वात् तत्तदंशेन भेदविवक्षाया बहुवचनम् । एतदुक्तं भवति–इन्द्रियाध्यायकभूतानां सर्वेषां आकाशतापन्नत्वात् आकाशस्यैवेन्द्रियेषु ससर्ग आसीत् । पश्चात्तामपि भूतानां शब्दतन्मात्रतापन्नत्वात् इन्द्रियाणि शब्दतन्मात्रांशभेदेषु संसृष्टान्यासन्निति ।

अथ सेन्द्रियाणां शब्दतन्मात्रांशानां स्वकारणे प्रलयमाह **तन्मात्राणि भूतादौ लीयन्ते** इति । **भूतादि**शब्दोऽहङ्कारमात्रपरः । इन्द्रि

---

अहङ्कारमात्रपरः इति । कृत्स्नाहङ्कारपरः, न तु महाभूतकारणतामसाहङ्कारमात्रपर इत्यर्थः । तन्मात्राणीति निर्देशानुसारेण भूतादौ इति निर्देशः कृतः । अत्र तन्मात्रपदस्य पूर्ववाक्यानुसारेण

याणां सात्त्विकाहंकारकार्यतया तस्मिन्नंशे लयोपपत्ते । तामसाहं-
कारांशे लयानुपपत्तेश्च ।

यद्वा — अण्डान्तर्गतस्य भूतचतुष्टयस्य स्वस्वकारणलयक्रमेणाऽऽ-
काशतापत्तिराकाशस्येन्द्रियसंसर्गश्चोक्तौ । अथ तेनाकाशेन सह अण्डात्
बहिरावरणत्वेनावस्थितानां भूतानां तन्मात्रावस्थापत्तिरूप प्रलयमिन्द्रिय
समर्गश्चाह **इन्द्रियाणि तन्मात्रेष्विति** ॥ ब्रह्माण्डतदावरणरूपेणावस्थि
तानि पृथिव्यादीनि भूतानि स्वस्वकारणे प्रलीयमानानि तन्मात्रावस्था
क्रमेणापन्नानि भवन्ति । तेषु तन्मात्रेष्विन्द्रियवर्गं क्रमेण संसृष्ट इत्यर्थ ।
अथाण्डोदरतद्बहिर्भागावस्थितमहाभूतकारणानां साधारणं प्रलयमाह
**तन्मात्राणि भूतादौ लीयन्त इति** । तानि तन्मात्राणि साक्षात्
परम्परया च स्वकारणभूतेऽहङ्कारे साक्षात् परम्परया च लीयन्त इत्यर्थ ।

---

सेन्द्रियतन्मात्रपरत्वे सिद्धे भूतादिपदमपि सात्त्विकाहङ्कारविशिष्ट-
भूतादिपरं सुवचम्, प्राह्यत्वेति भावः ।

तन्मात्रेषु, तन्मात्राणीति बहुवचनोपपत्तिसंपादक पक्षान्तर-
माह यद्वेति । पूर्वोक्ते पक्षे, पृथिव्यप्सु प्रलीयत इत्यादिवाक्यानाम-
विशेषेण ब्रह्माण्डान्तर्वर्तिनदावरणोभयरूपमहाभूतविलयपरत्वं
सुवचम् । अस्मिस्तु पक्षे अन्तर्वर्तिभूतमात्रलयपरत्वम् । अन्यथा
बहिर्वर्तिपृथिव्यादिलयस्यापि विवक्षितत्वे ... प्राचीन
गन्धतन्मात्रादिलयस्यापि निष्पन्नतया आवरणभूताकाशमात्रस्य
परिशिष्टतया तस्य, 'आकाशमिन्द्रियेषु' इति इन्द्रियसंसर्गे वक्ष्यमाणे
तत्र आकाशकारणभूतं शब्दतन्मात्रमेव स्थितमिति, 'इन्द्रियाणि
तन्मात्रेषु' इति बहुवचनानुपपत्तिर्हि तदवस्था स्यात् । एवञ्चाण्डा-

अयमर्थो भगवता **पराशरेण** स्पष्टमुक्तः, 'आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणम्' इत्यादिना अण्डान्तर्गतानां तत्त्वानामव्यक्तपर्यन्तं प्रलयमुक्त्वा, 'येनेदमावृतं पूर्वमण्डमप्सु प्रलीयते ।

सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्वतम् ॥

उदकावरणं यत्तु ज्योतिषा लीयते तु तत् ।

ज्योतिर्वायौ लयं याति यात्याकाशे समीरणः ॥

आकाशश्चैव भूतादिर्ग्रसते तं तथा महान् ।

महान्तमेभिः सहितं प्रकृतिर्ग्रसते द्विज ॥' इति ।

अस्यां योजनायां तन्मात्रेषु, तन्मात्राणीत्युभयत्र तन्मात्रशब्दासंकोच , बहुवचनस्वारस्यम् ; उपबृंहणानुग्रहश्च सिध्यति ।

---

न्तर्वर्तिषु भूतेषु आकाशमात्रपरिशेषः प्रथममुक्तः । अथ तस्येन्द्रियेषु संसर्गः । अथ चाण्डकटाहरूपपृथिव्याः तदावरणपरम्परान्तर्गतानां जलादीनाञ्च लये जायमाने तत्तद्भूतलयाधारतत्तत्तन्मात्रसंबन्धः क्रमेण भवतीति इन्द्रियाणि तन्मात्रेषु इति बहुवचनोपपत्तिरस्मिन् पक्षे इति भावः । सोन्ते वैश्वानर इति पूर्ववाक्यञ्च व्यष्टिमात्रविषयकमिति ।

ननु अण्डान्तर्वर्तिपृथिव्यादिलयानन्तरमाकाशस्येन्द्रियसंसर्गः आकाशमिन्द्रियेषु इत्यनेनोक्तः । तदनन्तरमिन्द्रियसंसर्गः तन्मात्रेष्विति, इन्द्रियाणि तन्मात्रेष्वित्यनेन वक्तव्यम् । नेतद् सुवचम् । आकाशपरिशेषणात् प्रागेव गन्धतन्मात्रादीनां नष्टतया आकाशसंसर्गानन्तरमिन्द्रियाणां सर्वतन्मात्रेषु संसर्गकथनायोगादित्यत्राह अव्यक्तपर्यन्तं प्रलयमुक्त्वेति । अण्डान्तर्वर्तिनामव्यक्तपर्यन्तं प्रलयः पूर्वं भवति । तदनन्तरमेवाऽऽवरणभूतानां लय इति विष्णुपुराणप्रा-

माण्याऽङ्गीकर्तव्यम् । अत इन्द्रियाणां तन्मात्रेषु क्रमेण आवरणा-न्तर्गतेषु सर्वेषु संसर्गोपपत्तिरिति ।

किञ्चिदमिह विमृश्यम्—विष्णुपुराणे अण्डान्त अव्यक्तपर्यन्त-लयं पूर्वमुपवर्ण्य पश्चाद् बाह्यपदार्थलयवर्णनेऽपि लयवर्णनपौर्वा-पर्यस्येह लयपौर्वापर्यकल्पकत्वे मानाभाव । न हि अण्डान्तर्वर्ति-कारणभूतमहदहङ्कारापेक्षया बाह्यानां तेषां पृथगव्यक्तादुत्पद्यमानत्व-मस्ति। एक एव हि महान् एक एव च सात्त्विकादिरहङ्कारः । अतो बाह्यपृथिव्यादिलयात् प्रागेव अण्डान्तर्वर्तिलयकाल एवाव्यक्त-पर्यन्तस्यैव लयस्य कल्पन न युक्तम् । किञ्च तथा कल्पने अण्डान्तर्वर्त्या-काशसंसृष्टानामिन्द्रियाणामाकाशेन सह भूतादौ लयस्तदैव स्यात् , बहिर्वर्तिमात्रस्य तु पश्चादिति वर्णनस्यैव युक्तत्वात् तेषामिन्द्रियाणां बाह्यतन्मात्रेषु संसर्गकल्पन तत एव भूतादिलयवर्णनञ्चेह श्रुत नोप-पद्येत । अत अण्डान्तर्वर्तिपृथिवीलयकाल एव बहि· पृथिवी-लयोऽपि । एव तत्तद्भूतलयोऽप्युभयत्र युगपदेव । तथाचाकाशा-स्येन्द्रियेषु संसर्गकाले बहिरप्याकाशमात्रमेवावस्थितमिति तद-नन्तर· तन्मात्रे इन्द्रियसंसर्ग शब्दतन्मात्र एव भवितुमर्हति । अनन्तरमेव [illegible] सङ्घस् अहङ्कारस्य, ततो महतश्च लयो यथाश्रुति । न च 'इन्द्रियाणि तन्मात्रेषु' इत्यनेन आकाशेन्द्रियसंसर्गात् पूर्वं गन्ध-तन्मात्रादिभिरिन्द्रियसंसर्ग , पश्चात् शब्दतन्मात्रेण च सोऽभिधीयत इत्येवास्त्विति वाच्यम्—तथासति पूर्वस्मिन् पक्षेऽपि तन्मात्राणीति बहुवचनसमर्थनस्य तुल्यतया तत्र तात्पर्यायोगात् । अत आका-शेन्द्रियसंसर्गानन्तर सर्वतन्मात्रसंसर्ग इन्द्रियाणां वक्तव्यश्चेत्, अन्य एव पन्था आश्रयणीय ।

कोऽसाविति चेत्—उच्यते । अहङ्कारात् शब्दतन्मात्रमात्रे जाते तदुत्पत्त्यादानादन्तरं पञ्चतन्मात्रैरेकभूतक्रमेण सृष्टिः सिद्धान्त-संमता । विष्णुपुराणव्याख्याने विष्णुचित्तीये सा नाद्रियते (१ २)।

तथासति, 'अष्टौ प्रकृतयः षोडश विकाराः' इति प्रकृत्यष्टकादिपरिगणनं न घटेत इति। अतः शब्दतन्मात्रादेव आकाशवत् स्पर्शतन्मात्रेऽप्युत्पन्ने तस्मात् शब्दतन्मात्रसहितादेव वायूत्पत्तिः एवमुत्तरोत्तरभूतम् अनन्तरपूर्वात् तन्मात्रात् स्वपूर्वतन्मात्रसहितादुत्पद्यत इति तन्मात्राणामेव प्रकृतित्वात्, 'अष्टौ प्रकृतय' इत्युपपन्नम्। न च स्पर्शतन्मात्रमात्रात् वायूत्पत्तौ तत्र शब्दगुणोपलम्भ उपपद्यते। तन्मात्रं हि नाम, 'वायुर्गन्धानिवाशयात्' इत्युक्तरीत्या वातानीतसुरभिभागवत् तत्तद्गुणमात्रे उद्भूतः अन्यांशे च धर्मितद्गतगुणान्तरतयाप्यनुद्भूतः (अनुत्कटः) सूक्ष्मद्रव्यविशेषः। तत् कथं तदेकोत्पन्नस्य स्थूलानेकगुणशालित्वमिति। परंत्विदं विष्णुचित्तीयदृष्टमपि अत्र व्यासार्योपनिषद्भाष्ये 'अष्टौ प्रकृतयः' इत्यस्यान्यथा तात्पर्यवर्णनेन सांख्यमतनिराकरणादेव नाभ्युपगतमिति सुगमम्। तत्र विष्णुचित्तीयमते, प्रकृत्यष्टकादिविवरणपराणां व्यासयमादिवचसामन्यथा निर्वाहसंभावनायामपि, 'आकाशाद्वायुः', 'पृथिव्यप्सु प्रलीयते' इत्यादिश्रुतिवाक्यार्थवैघट्यं पूर्वमेतद्भाष्यदर्शितरीत्या जागर्तीति तन्मतं यद्युपेक्ष्यते, तर्हि एतद्भाष्योक्तमप्युपेक्ष्य अहङ्कारादेव तन्मात्राणि पञ्च जायन्ते। ततः शब्दतन्मात्रादाकाशे जाते, आकाशात् स्पर्शतन्मात्रसहिताद् वायुरुत्पद्यत इत्येवमेकभूतैकतन्मात्रयोरुत्तरोत्तरभूतोपादानत्वमिष्यताम्। एवञ्चोक्तश्रुतिवैघट्यविघटनम्, तन्मात्राणि भूतादौ लीयन्ते इति बहुवचनाञ्जस्यञ्चेति चेत्—न—

सर्वेषां तन्मात्राणामहङ्कारजन्यत्वस्य विष्णुपुराणाद्युपबृंहणविरुद्धत्वात्। बहुवचनस्य पाशन्यायेनोपपन्नतया तदनुरोधेन विस्पष्टोपबृंहणबाधायोगात्। अतः स्मृतिपाञ्चरात्रानुरोधात् सिद्धान्तसंमतरीतिरेव सृष्टिक्रमः। सर्वमन्यत् तदनुरोधेन नेयमित्यलम्।

ननु आकाशमिन्द्रियेषु न लीयत इति कथम्? चतुर्दशखण्डे (१४)पृथिवीवावान्नमापोऽन्नादाः इत्येवमुत्तरोत्तरं प्रलयस्थलनिर्देशात्

भूतादिर्महति लीयते । महानव्यक्ते लीयते । अव्यक्तमक्षरे लीयते ।

भूतादिर्महति लीयते इत्यत्रापि भूतादिशब्दोऽहंकारमात्रपरः । वैकारिकतैजसाहंकारयोः तदानीमवस्थानानुपपत्तेः । महानव्यक्ते लीयत इति । गुणत्रयवैषम्यानन्तरपूर्वावस्था गुणसाम्यम् । गुणसाम्यलक्षणमव्यक्तम् । अव्यक्तमक्षरे लीयते इति । यस्यामवस्थायां गुणसाम्यमप्यस्फुटम्, तदवस्थं चेतनसमष्टिगर्भं तत् अक्षरशब्देनोच्यते ; न तु चेतनमात्रम् । तस्याव्यक्तप्रकृतित्व-तमोविकृतित्वायोगात् ।

---

आकाशो वा अन्नमिन्द्रियाण्यन्नादानीति तत्र तल्लयश्रवणादिति चेन्न—तत्र इन्द्रियाणीत्यस्य इन्द्रियसंसृष्टतन्मात्रपरत्वात् । ननु, 'आकाशं तन्मात्रे लीयते, तन्मात्रं भूतादौ' इत्येवं निर्देष्टव्ये, मध्ये इन्द्रियघटनं किमर्थं कृतमिति चेत्—उच्यते । स्थूलभूतानामेवेन्द्रियग्राह्यता ; न तन्मात्राणाम् । सृष्ट्यारम्भे च सात्त्विकाहङ्कारजनितानि इन्द्रियाणि विषयोपादानभूते तन्मात्रे संसर्जितानि क्रमेणाकाशादिषु संसृष्टानि स्थितानि समये तत्तद्ग्राहकाण्यभूवन् । एवञ्च, 'ग्राह्यो विषयः सर्वो विलीनप्रायः, ग्राहकमात्रमवशिष्टम् ; इन्द्रियाण्याप्यायकभूतांशाश्च तदा आकाशरूपेणैव स्थित इति आकाशमिन्द्रियेष्विति वाक्ये ज्ञाप्यते । अथ, 'ग्राहकमपि तन्मात्रेण सह अहङ्कारे विलयार्थं तन्मात्रे संसृज्यते, सर्वथा आप्यायकभूतांशविहीनमेव नास्ति' इति इन्द्रियाणि तन्मात्रेष्वित्यादिना दर्श्यते । 'इन्द्रियेभ्यः परा ह्यर्थाः' इति न्यायेन विषयाणां प्राधान्यात्, भूरिप्रपञ्चत्वाच्च विषयहेतोर्भूतादेस्तामसस्य शब्दो निर्देशः, न सात्त्विकस्येति च ध्येयम् ।

अवस्थानानुपपत्तेरिति । सह लयस्यावश्यकत्वादिति भावः । चेतनसमष्टिगर्भमिति । अक्षरस्य चेतनस्य अचिद्गर्भत्वात् तस्यामवस्थायामक्षरांशोद्भवात् प्रकाशत इति तत् अक्षरसंज्ञां लभते ।

अक्षरं तमसि लीयते । तमः परे देव एकीभवति ।

अत्र मवें तत्त्वजातं चिदचिदात्मकं मन्तव्यम् ; 'प्रधानादिविशेषान्तं चेतनाचेतनात्मकम्' इति भगवत्पराशरवचनात् । अत्र तु चिद्गर्भवस्तुनि अक्षरशब्द उपचरितः ; प्रयोगेऽन्यथासिद्धे शक्त्यन्तरकल्पनायोगात् । अक्षरं तमसि लीयते इति । चिद्गर्भत्वमचित्त्वमपि यत्र विवेक्तुमशक्यम् , तदवस्थमतिसूक्ष्मं प्रधानं तमश्शब्दाभिलप्यम् । अक्षराद्यवस्थाप्राप्त्यौन्मुख्यविशिष्टं तदेव विभक्तं तमः । तदौन्मुख्यरहितमविभक्तं तमः परमात्मशरीरतयाऽपि निर्नयितुमशक्यम् , सलिलविलीनलवण-चन्द्रकान्तस्थसलिल--सूर्यकान्तस्थवह्निकल्पं सर्वज्ञपरमात्मैकवेद्यमवतिष्ठते । भूतलविनिहितबीजस्थानीयमविभक्तं तमः । भूमिस्सृतबीजवत् विभक्तं तम । सलिलसंसृष्टार्द्रशिथिलावयवबीजतुल्यमक्षरम् । उच्छूनबीजसमानमव्यक्तम् । अङ्कुरस्थानीयो महानिति विवेक । तम...एकीभवति । महदाद्यवस्थामहाणवत् तमस्स्वभहाणाभावात् लीयत इत्यनुक्ति. । कार्योपयोगितया विभक्तं तम कार्यानुपयुक्ताविभक्ततमसि एकीभवतीत्यर्थः । यथा सलिलावस्थपृथिवी अंशः प्रागवस्थितसलिलेनैकीभवति, यथाऽग्न्यवस्थो जलांश प्रागवस्थिततेजसैकीभवति, तद्वत् तमस्तत्त्वस्य परमात्मशरीरभावस्य वक्ष्यमाणत्वादविभक्ततमश्शरीरकपरमात्मनैकीभाव इति तत्त्वस्थिति ।

तमः परे देव एकीभवतीति। अत्र परे इत्यनेन तस्य सर्वोपादानत्वम्, देवे इत्यनेन निमित्तत्वञ्च व्यज्यते । दिवु क्रीडायामिति लीलारसानुभवरचनात् किमर्थं सृजतीति शङ्काऽपि शमिता । ननु 'कारंकारमलौकिकाद्भुतमयं मायावशात् संहरन् हारंहारमपीन्द्र-

शासनम्। इति वेदानुशासनम्। वेदानुशासनम्॥ इति द्वितीयः खण्डः

परत्वे प्रपञ्चस्य निर्वचनीयत्वं ब्रह्मण एवानिर्वचनीयत्वञ्चोक्तं स्यात्। अस्तातिप्रत्ययवैयर्थ्यञ्च भवेत्। अतः प्रकृतिप्राकृतसमस्तवस्तुविलक्षणं किमपि तत्त्र विवक्षितम्। तच्च किमित्यपेक्षायाम्, 'आदित्यवर्णं तमसः परस्तात्', 'तदक्षरे परमे व्योमन्', 'विश्वं पुराणं तमसः परस्तात्' इत्यादिभिः वेदान्तवाक्यैः मुक्तप्राप्यस्थानविशेषविशिष्टं परं ब्रह्मेति निश्चीयते। न च केवलं परं ब्रह्मैव विश्वविलक्षणत्वात् नसन्नासन्नसद-सदित्युच्यते; परस्ताच्छब्दानन्वयप्रसङ्गात्। त्रिविधपरिच्छेदरहितया सर्वगतस्य परब्रह्मण स्वरूपं हि देशविशेषपरिच्छिन्नं कथमुच्यते। अतः स्थानविशेषरूपविशेषविशिष्टमेव तथा वक्तुं युक्तम् (स्वामिनि!) परस्य ब्रह्मणो रूपमनेन वाक्येन प्रतिपाद्यत इति सिद्धम्।

इत्येतन्निर्वाणमनुशासनम्। एतदनुशासनम् विविच्य ज्ञापनम् = उपदेश. निर्वाणं निर्वाणहेतुः = मोक्षहेतुः; तत्कारण-विषयत्वादित्यर्थः। इति वेदानुशासनमिति। 'जगत्सृष्टिरेवं विधा। प्रलय एवंविधः। कार्यकारणभूतानि तान्येतानि। ब्रह्मादयश्च कार्य-भूताः। परमकारणं ब्रह्मैव चिदचिद्वस्तुविलक्षणं विलक्षणदेशादि-विशिष्टम्। तच्च परमपुरुषः। ब्रह्मादयश्च तत्कार्यभूता. तदात्मकाः। परमकारणविषयज्ञानमेव मोक्षहेतुः' इत्ययं वेदोपदेश इत्यर्थः। कारण-स्त्वोपदेशसमाप्तिद्योतकोऽभ्यास॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनोः श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयस्य श्रीसुदर्शनार्यस्य कृतौ
सुबालोपनिषद्विवरणे द्वितीयः खण्डः॥

अथ तृतीयः खण्डः ।

असद्वा इदमग्र आसीत् ।

अजातमभूतमप्रतिष्ठितमशब्दमस्पर्शमरूपमरसमगन्धमव्ययं

---

जगत्कारणतयोक्तस्य परब्रह्मण कारणत्वशङ्कितविकारादिदोष-व्युदासार्थं तत्स्वरूपं विशोध्यते तृतीयखण्डेन । तदर्थं कारणमनुवदति असद्वा इदमग्र आसीदिति । इदंशब्दो न जगन्मात्रपरः । तस्य वक्ष्यमाणजगद्वैलक्षण्यव्याघातात् । न हि जगत् जगतो विलक्षणाकारं भवति । जगत परमात्मशरीरत्वञ्चात्रैव वक्ष्यते । अत इदंशब्देन जगच्छरीरकं ब्रह्मोच्यते । जगद्रूपं परं ब्रह्म तु अग्रे सृष्टेः पूर्वमसदासीत् अविभक्त-नामरूपमासीत् । महदहङ्कारदेवमनुष्यादिनामरूपशून्यमासीदित्यर्थः । आत्मानं मत्त्वेत्यनन्तरमात्मशब्दव्यपदेशेन असच्छब्दस्यात्मविषयत्वा-वगमात्; 'सदेव सोम्येदमग्र आसीत्' इति कारणवाक्यान्तरैकार्थ्येन तुच्छत्वायोगाच्च । सच्छब्दः कार्यपरः । 'असद्वा इदमग्र आसीत् । ततो वै सदजायत' इति शाखान्तरे श्रवणात् । कार्यं तु विभक्तनामरूपम् । 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इति श्रवणात् । सद्विलक्षणत्वञ्चासत्त्वम् । अतो नामरूपशून्यमासीदित्यर्थः ।

तस्य सदसद्वैलक्षण्यमाह अजातमित्यादिना । कार्यकारणरूपा-विद्वतद्दोषाभावेन व्यावृत्तिमाह अजातमित्यादिना । 'जायते अस्ति विपरिणमते वर्द्धते अपक्षीयते विनश्यति' इत्यचेतनस्य भावविकाराः

---

नसत्रासन्नसदसदिति चेतनाचेतनवैलक्षण्यमुक्तं विशदीक्रियते असद्वा इत्यादिना । वक्ष्यते च सप्तमखण्डे ।

महान्तं बृहन्तमजमात्मानं मत्वा धीरो न शोचति ।

षडुच्यन्ते । तत्र उत्पद्यमानावस्था जन्म । उत्पन्नावस्था चास्तित्वम् । तदुभयाभावमाह **अजातमभूतमिति** । जन्म च, तदवच्छिन्नमस्तित्वञ्च नास्तीत्यर्थः। **अव्ययमिति** विनाशराहित्यं वक्ष्यते । उत्पत्तिविनाशमध्यकालभाविनः पृथिव्यादीनां ये विकाराः तद्राहित्येन तद्व्यावृत्तिमाह **अप्रतिष्ठितमित्यादिना** । प्रतिष्ठा=आधारः । पृथिव्यादीनि आधारसापेक्षाणि । ब्रह्म तु तदनपेक्षम् । अशब्दमित्यादिना कालपरिच्छेदाविनाभूतधर्मव्यावृत्तिरुक्ता । एवमजातमित्यादिना अव्ययमित्यन्तेन कालतः परिच्छेदाभाव उक्तः । **महान्तं बृहन्तमिति** स्वरूपतो धर्मतश्च विपुलत्वमुक्तम् । तेन देशापरिच्छेद उक्तः । **आत्मानमिति** वस्त्वपरिच्छेद उक्तः । न हि वस्तुतः परिच्छिन्नो घटः अन्यस्यात्मा भवति । अयं तु सर्वस्यात्मा सर्वशरीरकत्वात् सर्वबुद्धीनां पर्यवसानभूमिः। वस्तुतः परिच्छिन्नो हि घटः पटादिबुद्धेर्न पर्यवसानभूमिरिति तद्व्यावृत्तिः । कर्माधीनदेहसंबन्धलक्षणोत्पत्तिमतां जीवानामप्यात्मशब्दवाच्यत्वात् तद्व्यावृत्त्यर्थमजमात्मानमित्युक्तम् । एवं त्रिविधपरिच्छेदरहितं समस्तचिदचिद्वस्तुविलक्षणं कारणत्वशङ्कितत‌द्गतदोषास्पृष्टं परमात्मानं मत्वा उपास्य

---

अजातमित्यादिना अचेतनवैलक्षण्यस्य प्रपञ्चनम् ; उपरि अप्राणमित्यादिना च चिद्वैलक्षण्यस्य । अप्राणमित्यादिकं, न तदश्नाति किञ्चनेत्यत्र तच्छब्दविशेषणम् ; न तु पूर्वविशेषणम् पूर्ववाक्यस्य समाप्तत्वात् ; अवागिति नपुंसकप्रयोगाच्च । अत्र अशब्दमित्यादिपदेषु क्वचिद् बहुव्रीहिः, क्वचित् तत्पुरुष इति यथायथं ग्राह्यम्, यथा गार्गीब्राह्मणे अक्षरविद्यायां बृहदारण्यके। वस्तुत इति। वस्तुनेत्यर्थः ।

अप्राणममुखमश्रोत्रमवाक् अमनोऽतेजस्कमचक्षुष्कमनामगोत्रम् अशिरस्कमपाणिपादमस्निग्धमलोहितमप्रमेयमह्रस्वमदीर्घमस्थूलमन

धीरो न शोचतीति। सांसारिकदुःखं नानुभवति। मुक्तो भवतीत्यर्थः।

अजमिति व्यष्टिदेहविशिष्टदेवमनुष्यादिजीवव्यावृत्तिं सूचिता प्रपञ्चयति अप्राणमित्यादिना। अप्राणमिति प्राणाधीनस्थितित्वं निवर्तितम्, न तु प्राणसम्बन्धमात्रम्। प्राणस्याप्यन्तर्यामित्वात् तस्य। 'यः प्राणे संचरन्' इति हि वक्ष्यते। अमुखमिति। अपरभागसापेक्ष पुरोभागावयवविशेषो मुखम्। तदस्य न विद्यते सर्वत्राभिमुखत्वादित्यर्थः। अश्रोत्रमवागित्यादिना ज्ञानेन्द्रियाधीनज्ञानत्वं कर्मेन्द्रियाधीनव्यापार निवर्तितम्। तेन तस्य स्वतःसर्वज्ञत्वं सर्वशक्तित्वञ्च दर्शितम्। अतेजस्कः मनोधीनप्रकाशरहितम्। अचक्षुष्कं रूपसाक्षात्कारे चक्षुरनपेक्षम्। अनामगोत्रमशिरस्कमपाणिपादमिति। नामगोत्रशब्दाभ्यां नामधेय कुलञ्चोक्तम्। नाम कुलञ्च शिरः पाणिपादाद्यवयवाश्च न स्वरूपं विद्यत इत्यर्थः। लोके शिरःपाणिपादाः अन्योन्यकार्याशक्ताः, अत्र तु सर्वत्र सर्वावयवकार्यशक्त इत्यर्थः। अस्निग्धमलोहितम्। मनुष्यदेहवत् स्नेहरक्तादिमान् न भवतीत्यर्थः अप्रमेयमिति। प्रमाणम् = इयत्ता। प्रमाणे ह्रयसज्दघ्नमात्रच इति प्रयोगात् अप्रमेयमपरिमेयम्। व्यष्टिदेहवत् इयत्तारहितम्। तदेव प्रपञ्चयन् महान्तमित्युक्तदेशा परिच्छेदं निरूपयति अह्रस्वमित्यादिना। अस्थूलम् अपीनम्। अनणु अकृशम्। स्थूलताप्रतिसम्बन्धिनो निषेध्यत्वात्। तस्मात् अनल्पम् अल्पपरिमाणरहितम्। अनल्पस्य समुद्रादेरप्यवधिमत्त्वदर्शनात् व्या-

ध्वनल्पमपारमनिर्देश्यमनपावृतमप्रकाश्यमसंवृतमनन्तरमग्राह्यं न तदश्नाति किञ्चन ; न तदश्नाति कश्चन ।

एतद्वै सत्येन दानेन तपसाऽनाशकेन ब्रह्मचर्येण निर्वेदनेना-

---

वृत्त्यर्थमाह **अपारमिति** । शतयोजनलक्षयोजनत्वादिविशेषणैर्निर्देष्टुमशक्यम् । तर्हि सर्वगतत्वात् सर्वत्र दृश्येतेत्यत्राह **अनपावृतमिति** । तिरोहितमित्यर्थः । अत्र हेतुमाह **अप्रकाश्यमिति** । चक्षुरादिभिः प्रकाशयितुमशक्यत्वादित्यर्थः । प्रमाणागोचरत्वे शून्यत्वं स्यादित्यत आह **असंवृतमिति** योगिनामतिरोहितमित्यर्थः । तेषां कुत्र प्रकाशत इत्यत्राह **अनन्तरमग्राह्यमिति** । अनन्तरम् नहि आदित्यमण्डलादौ प्रकाशते, अग्राह्यम् अन्नं हृदयपुण्डरीकेऽपि प्रकाशत इत्यर्थः । **न तदश्नाति किञ्चन** । सर्वत्रावस्थितमपि परं ब्रह्म न किञ्चनाश्नाति । कर्मफलत्वेन न किञ्चिदपि जीववत् भुङ्क्त इत्यर्थः । 'ज्ञानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभुः' इति लीलारसभोक्तृत्वस्य प्रमाणसिद्धत्वात् । **न तदश्नाति कश्चन** । कश्चिदपि सांसारिकं कर्मफलमिव न तद् भुङ्क्ते इत्यर्थः । वाक्यद्वयेन समस्तभोक्तृभोग्यविलक्षणमित्यर्थः [उक्तो भवति *।]

मत्वा धीरो न शोचतीति तदुपासनमपवर्गोपायत्वेन पूर्वमुक्तम् । तस्याङ्गान्याह **एतद्वा इति** । यथार्थं भूतहितवचनं सत्यम् । **तपसा** । 'तप आलोचने' । तत्त्वनिरूपणेनेत्यर्थः । 'ब्रह्मचर्यं स्त्रीनियतिः' ।

---

सत्येनेत्यादिना अङ्गषट्कस्य वक्तव्यत्वात् तपसाऽनाशकेनेत्यत्र अनाशकपदमपि विशेष्यवाचकं स्वीक्रियते । तत्र तपःपदेन कृच्छ्रचान्द्रायणादिग्रहणे अनशनं पृथङ् न वक्तव्यमिति अनाशकपदस्य

शकेन षडङ्गेनैव साधयेत् । एतत् त्रयं वीक्षेत दमं दानं दयामिति ।

---

**अनाशकेन** अनशनेन । यद्वा तपः कृच्छ्रचान्द्रायणादीति, अनाशकं फलाभिसन्धिरहितं यज्ञादिकम् , विनाशकेन फलभोगेन तदभिसन्धि-कर्तृत्वममकारेण(?) च रहितत्वात् । सत्यादिकमेव षडङ्गशब्देनोच्यते । पुनश्च तदङ्गत्वेन प्रकृष्टतरं गुणत्रयमाह **एतत् त्रयमिति** ।। **दमं** मनो-नियमनम् । **दानम्** । 'दैप् शोधने' । स्नानादिना शुद्धिः । प्रसिद्धदानस्य पूर्वोक्तत्वात् पुनरुक्तिप्रसङ्गात् । अनुक्तगुणान्तरसाहचर्येण दानशब्द-स्याप्यनुक्तगुणपरत्वोपपत्तेश्च । यद्वा आदरातिशयात् **दानस्य** पुनरपि कीर्तनम् । **दया** स्वप्रयोजनानपेक्षं परदुःखासहत्वम् ।

---

यज्ञपरत्वमाह यद्वेत्यादिना । इतिशब्दो हेत्वर्थः । तपःपदेन कृच्छ्रादे-रुक्तत्वादित्यर्थः । तदभिसंधिकर्तृत्वममकारेणेत्यत्र पाठो निरीक्ष्यः । त्रयाणां समाहारद्वन्द्वेन वा एकवचनं समर्थनीयम् । तदभिसंधिः फलापेक्षा । ब्रह्मचर्यं स्त्रीनियतिः इति वाक्यं रहितत्वादित्येतदनन्तरं पाठ्यम्; स्थानात् । निर्वेदनेनेत्यस्य निर्वेदार्थकत्वं स्पष्टमिति तत् पदं हानेनेति पदमिव न व्याख्यातम् । अनाशकेन षडङ्गेनेत्यत्र अना-शकपदं षडङ्गविशेषणं स्यात् । पूर्वोक्तरीत्या विनाशकरहितेनेति तदर्थः । षडङ्गेनेति समाहारः एकाभावेऽपि कार्यसिद्धिं दर्शयति । एवकारो वक्ष्यमाणेन दमादित्रयेणास्य वैकल्पिकत्वमर्तिं वारयति; अङ्गानि विना ज्ञानाभ्यासमात्रेणोपासनं साधयितुं शक्यमिति मतिश्च । साधयेदित्यत्र एतदिति वाक्योपक्रमस्थं कर्म । ब्रह्मोपासन-मिति वा ब्रह्मेत्येव वा तदर्थः । अत्र दानेनेत्यनेन बृहदारण्यके (७.२.) देवान् मनुष्यान् असुरांश्च प्रति क्रमेण प्रजापतिकृतोपदेशार्थ-वादपूर्वकं "दाम्यत दत्त दयध्वमिति तदेतत्त्रयं शिक्षेद् दमं दानं

न तस्य प्राणा उत्क्रामन्ति। अत्रैव समवलीयन्ते। ब्रह्मैव सन् ब्रह्माप्येति,

एवं साङ्गब्रह्मोपासनफलमाह न तस्येत्यादिना। य एवम् उक्तैरङ्गैः सह वेद परं ब्रह्मोपास्ते,—'उपासीत' इत्यसकृद्वक्ष्यमाणत्वात् सामान्यशब्दस्य विशेषपर्यवसायित्वाच्चोपासनात्मकं वेदनं विवक्षितम्—, तस्य उपासकस्य— सम्बन्धमात्रे षष्ठी— तस्मादुपासकात् प्राणाः नोत्क्रामन्तीत्यर्थः। यथा 'नटस्य शृणोति' इत्यत्र नटाच्छृणोतीत्यर्थः, तद्वत्। एकादशेन्द्रियाणि मुख्यप्राणश्च प्राणा उच्यन्ते। ते सूक्ष्म शरीरस्था अर्चिरादिमार्गगमनार्था उपासकं न जहतीत्यर्थः. 'न तस्मात् प्राणा उत्क्रामन्ति' इति शाखान्तरवाक्यैकार्थ्यात्। 'कोशं भिनत्ति शीर्षकपालं भिनत्ति पृथिवीं भिनत्ति' इत्युपक्रम्य, 'अव्यक्तं भिनत्ति अक्षरं भिनत्ति तमो भिनत्ति' इत्यन्तेन अस्यामेवोपनिषदि ब्रह्मविदुत्क्रान्तेर्वक्ष्यमाणत्वाच्च। "प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम्" इति ब्रह्मसूत्रम्। ब्रह्मैव सन् ब्रह्मसमानाकारस्सन् ब्रह्माप्येति ब्रह्मण्यप्येति

द्याम्" इति विहितलयोपलक्षणमित्याशयेनोच्यते एतत् त्रयमिति। शीक्षेतेत्यस्य शिक्षेतेत्यर्थः। नयेन वा पाठः।

न तस्य प्राणा इत्याद्यर्थविस्तरो बृहदारण्यके द्रष्टव्यः (६.४.)। अत्रैव समवलीयन्ते इत्यस्य अर्चिरादिगत्यर्थं तस्य पिते सूक्ष्मशरीर एव लीयन्ते। न स्थूलशरीरान्तरं प्रति यान्तीत्यर्थः। यद्वा अत्रैवेत्यस्य प्रकृतायैवेत्यर्थः। एवञ्च न तस्य प्राणा उत्क्रामन्तीत्यस्य तदीयाः प्राणाः न तत्प्राप्यं प्रति परं स्थानं प्रत्युत्क्रामन्तीत्यर्थवर्णनेऽपि न दोषः। तेन तलाम्य अकर्मकृतो देह इति सिद्ध्यति। अथवा 'अत्रैव समवलीयन्ते' इत्यस्य जीवसंसृष्टा एव भवन्ति, न तु तं त्यजन्तीति

य एवं वेद ॥　　　　॥ इति तृतीयः खण्डः ॥

---

आत्यन्तिकलयं गच्छति । परित्यक्तकर्मकृतदेवमनुष्यादिनामरूपे(पो ?) ब्रह्मणि सर्वकारणे सर्वाधारभूते प्रतिष्ठितो भवति । कार्यस्य नामरूपप्रहाणेन कारणावस्थानं हि लयः । तदानीं ब्रह्मणि वर्तमानस्य ब्रह्मसमानाकारतयाऽवस्थानमुपपन्नम् । परित्यक्तदेवादिरूपस्य ब्रह्मसारूप्यञ्च अपहतपाप्मत्वादिगुणाष्टकाविर्भावलक्षणम् । 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति दहरवाक्ये प्रजापतिवाक्ये च गुणाष्टकाम्नानात् ।

निर्विशेषज्ञानमात्रब्रह्मतापत्तिपरत्वमस्य वाक्यस्यानुपपन्नम्— य एवं वेद स ब्रह्मैव सन्निति पदानामनन्वितत्वात् । वेदितुः ब्रह्मतापत्तिप्रतीतेः । वेदितुर्वृत्तिमात्रतापत्तेरनुपपन्नत्वाच्च । किञ्च ब्रह्माप्येतीति वाक्यस्य ब्रह्मशब्दद्वितीयानुरोधेन प्राप्तिर्वा, अप्येतीतिशब्दस्वारस्यानुरोधेन तत्र लयो वा अर्थः स्यात् । ब्रह्मैव सन्निति ब्रह्मतापन्नस्य ब्रह्मभावातिरेकेण प्राप्तेर्लयस्य चाभावात्, 'ब्रह्माप्येति' इति वाक्यांशोऽनर्थकः स्यात् । 'ब्रह्मतापन्नस्य काल्पनिकनामरूपभेदप्रहाणमप्ययः' इति चेत्, व्यतिरेकेण ब्रह्मभावो नाम अर्थान्तरं नास्तीति, ब्रह्मैव सन्निति वाक्यांशोऽनर्थकः स्यात् । 'प्रागेव ब्रह्मानन्य आत्मा । तस्मात् काल्पनिकभेदलय एव विद्याफलमित्यर्थः' इति चेत्, 'य एवं वेद, स ब्रह्मैव सन् ब्रह्माप्येति' इति ब्रह्मतापत्तेर्वेदनफलत्वप्रतीतिस्वारस्यभङ्गः । किञ्च

---

पूर्वापरवाक्ययोः सौचार्थं पर्यवेद भाष्यमिमन्न स्यात् ; अधिकरणस्यानुत्थानात् । "प्रतिषेधात्" इति सूत्रटीकायां सर्थितोक्तत्वाच्च ।

क इह, ब्रह्मैव सन्निरुच्यते ? किं ज्ञप्तिमात्रम् ? तर्हि वाक्यवैघट्यम् । यो वेद स ब्रह्मैव सन्निरुच्यते ; न तु या वित्तिः सा ब्रह्मैव सती ब्रह्मा प्येतीति । अतो वेदितुरेव ब्रह्मताप्तिः प्रतीयते । वेदिता च ज्ञाता । स चाहंकारः । काल्पनिकोऽहंकारो जडः, नात्मेति तस्य ब्रह्मभावाभावात् ब्रह्माज्ञानवादपक्षे इयं श्रुतिरत्यन्तविरुद्धा । अतो यथोक्त एवार्थः ॥

इति हरितकुलतिलकवाग्विजयिसूनोः श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयस्य श्रीसुदर्शनार्यस्य कृतौ
सुबालोपनिषद्विवरणे तृतीयः खण्डः ॥
॥ श्रीसुदर्शनार्यमहादेशिकाय नमः ॥

एवं खण्डत्रयेण परस्य ब्रह्मणो जगत्कारणत्वम् , तत्प्रयुक्तदोषशङ्का-निवारणार्थं विश्वविलक्षणत्वञ्चोक्तम् । अपवर्गोपायश्च सत्याद्यनुगृहीतं तदुपासनमिति च संक्षेपत उक्तम् । अथ उपासनविशेषान् पञ्च (पञ्चमे?) प्रपञ्चयितुं उपासनस्थानेषु प्रधानं हृदयकमलं प्रस्तुत्य तत्रावस्थितस्य जीवस्य परमात्मोपासिसिषोपजननाय प्रकृतिसम्बन्धसंकुचितज्ञानस्यास्य ज्ञानसंकोच-विकासतारतम्यकृतो जागराद्यवस्थायोग. चतुर्थेन खण्डेन प्रतिपाद्यते ।

---

एवं खण्डत्रयेणेति । अयं भावः—सुबालोपनिषद्वर्तिं सरसं मनसि निधायैव सूत्रकारो नूनं शारीरकं निबबन्ध । तत्र हि प्रथमेऽध्याये जगत्कारणत्वं नारायणस्य निरूप्य द्वितीयेऽध्याये सर्वजगन्निमित्तोपादानस्य चेतनाचेतनाविशेषोत्प्रेक्षितानेकदोषशङ्कापरिहारेण सर्ववस्तुवैलक्षण्यं व्युत्पाद्य, तादृशस्य तस्य प्राप्त्यर्थोपासनविषयतृष्णाभिवर्धनाय जीवस्य जागरस्वप्नसुषुप्त्याद्यवस्थावस्थितदुरवस्थास्थापनपूर्वं परस्यैतद्विलक्षणस्य विषये बहून् भक्तिमार्गान् माहात्म्य-

॥ अथ चतुर्थः खण्डः ॥

हृदयस्य मध्ये लोहितं मांसपिण्डम्, यस्मिंस्तत् दहरं पौण्डरीकं

**हृदयस्य मध्ये लोहितं मांसपिण्डमिति** । अत्राय हृदयशब्दः शरीरे वक्षःस्थलोपलक्षितप्रदेशपरः । तस्य मध्ये लोहितं रक्तवर्णं मांस-

---

तीयेऽध्याये संप्रतिशोध्य तुरीये तत्प्राप्तिप्रकारं भगवान् बादरायणः प्रास्तौषीत् । इह चोपनिषदि प्रथमं खण्डद्वयेन परमपुरुषस्य अद्वारकं सद्वारकञ्च स्थितं जगज्जन्मादिकारणत्वमभिधाय तृतीयेन तस्य चेतनाचेतनवैलक्षण्यम् अत एवोपासनार्हत्वञ्चोपपाद्य तदुपासिसिषोत्पादनाय चतुर्थेन जीवस्य जागरादिदुरवस्थाः प्रज्ञाप्य पञ्चमेन तदुपासनप्रकारान् उपदिश्य शेषमपि शेषेषु खण्डेषु समुपवर्णितमिति ।

तदित्यस्य, 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इति दहरपुण्डरीकत्वेन प्रसिद्धमित्यर्थः । पौण्डरीकमिति । पुण्डरीकमित्यपि पाठोऽस्ति । सर्वथा इदमेन हृदयबोधकं विशेष्यपदम् ।

अत्रायं हृदयशब्द इति। अत सुबालोपनिषदि । तेन, 'पद्मकोशप्रतीकाशं हृदयञ्चाप्यधोमुखम्' इति तैत्तिरीयश्रुतहृदयशब्दव्यावृत्तिः। तस्य पुण्डरीकाकारभागपरत्वात् । अत्रापि अनन्तरवाक्ये, हृदयस्य यशेत्यत्र यथातैत्तिरीयमर्थस्वीकारात् अयमित्युक्तम् । अथवा एकेन पदेन उत्तरहृदयपदव्यावृत्तिः ; अन्येन पुण्डरीकाकारहृदयाधारमांसपिण्डगर्भकत्वरूपः अर्थान्तरपरत्वसाधको हेतुर्दर्शितः ॥ द्वितीयहृदयशब्दस्यापि समानार्थकत्वं कस्मान्नेति चेत्—दशानां छिद्राणां वक्षःप्रदेशे अभावात्, तत्रैव भावादिति भाव्यम् । किञ्च, यस्मिंस्तद्दहरमित्यत्र तदिति पदं तावत् हृदयमित्यर्थकं सत् दहरस्य हृदयत्वेनान्यत्र प्रसिद्धिं गमयति । एवं तर्हि, 'तस्य दशच्छिद्राणि'

कुमुदमिवानेकधा विकसितम् ।

हृदयस्य दश छिद्राणि भवन्ति ; येषु प्राणाः प्रतिष्ठिताः ।

---

पिण्डं स्थितमित्यर्थः । **यस्मिन् तद्दहरं पौण्डरीकमिति** । पुण्डरीकमेव **पौण्डरीकम्** । उपमानोपमेयभावेन पुण्डरीकसंबन्धीति वाऽर्थः । 'पद्मकोशप्रतीकाशं हृदयञ्चाऽप्यधोमुखम्' इति [हि?] श्रूयते । यस्मिन् मांसपिण्डे **पौण्डरीकं** पद्मकोशसदृशावयवविशेषः तिष्ठतीत्यर्थः । हृत्पद्मं मांसविशेषेण परित आवेष्टितत्वात् मांसपिण्डमध्यस्थितमित्युक्तम् । **कुमुदमिवानेकधा विकसितमिति** । वर्णेन कुमुदसन्निभम् । तस्य चन्द्रकान्तसमानत्वं हि योगशास्त्रेषूच्यते । अनेकधा विकसितं–विकास-योग्यम् अनेकधा शब्दादिनानाविषयज्ञानप्रसरानुगुणावकाशमित्यर्थः ।

तदेव विवृणोति **हृदयस्य दश छिद्राणि भवन्तीति** । अयं हृदयशब्दः पद्मकोशसदृशावयवपरः। छिद्राणि नाडीमुखसम्बन्धद्वाराणि। **येषु प्राणाः प्रतिष्ठिता** इत्यनेन नाडीच्छिद्रत्वं स्पष्टम् । इह बहुवचनान्त **प्राण**शब्देन इन्द्रियाणि विवक्षितानि । यद्वा प्राणापानादयो विवक्षिताः।

---

इत्येव कस्मान्न पठ्यते उपरीति चेत्—मुख्यहृदयस्यैव तस्यैवेति ज्ञापनाय हृदयशब्देन निर्देश इति । किञ्च यदि द्वितीयं हृदयपदं वक्षःप्रदेशार्थकम्, तर्हि हृदयस्येत्यारभ्य विकसितमित्यन्तं वाक्य-मुपर्येव पाठमर्हति; प्रकृतानुपयोगादिति हृदयम् । सर्वेन्द्रियप्रवृत्ति-भूतत्वञ्चास्यैव जीवाधारस्य युक्तम् । शेषमुपरिष्टात् । नाडीनि । तत्तदिन्द्रियनाडीत्यर्थः । उपरि प्राणव्यानापानादिनिर्देशानुगुण्यात् आभ्यन्तरवायावपि दशधा विभागस्य प्रसिद्धत्वात् दशच्छिद्रवर्तिनः प्राणाः तेऽपीत्याशयेनाह यद्वा प्राणापानादय इति । श्रुतौ व्यानस्य

स यदा प्राणेन सह संयुज्यते, तदा पश्यति नद्यो नगराणि बहूनि विविधानि च। यदा व्यानेन सह संयुज्यते, तदा पश्यति

योगदशाया वायुविशेषस्य ज्ञानविकासकारणत्वमाह स यदे-त्यादिना। स यदा प्राणेन संयुज्यते, तदा पश्यति नद्यो नग-राणि बहूनि विविधानि चेति। उपासकत्वेन पूर्वखण्डप्रस्तुत इह च शरीराद्यधिष्ठातृत्वेन बुद्धिस्थो जीवात्मा स इत्युच्यते। यदेति योगकालो विवक्षितः। एकवचनान्तोऽयं प्राणशब्दः प्राणाख्यवृत्तिमद्वायु-विशेषपरः। प्राणेन सह संयुज्यते। मनसा प्राणसंयुक्तत्वेन भावित इत्यर्थः। यत्र हि मनः, तत्र हि वायुः। नद्यः नदीः। पश्यतीति।

---

अपानात् पूर्वं पठनमेतच्छाखीयानां प्राणाहुत्यादौ व्यानस्यैव प्राणा-नन्तरं ग्रहणात् स्यात्।

पुरुषस्य प्राणसंयोग. सर्वदैव सर्वस्यास्तीति यदेत्यादिनिर्देशोऽ-नुपपन्न इति संयुज्यत इत्यस्य संयुक्तमनस्क इत्यर्थाभिप्रायेण योगि-जीवपरतया स यदेत्यादिवाक्यं नयति उपासक त्वेनेत्यादिना। न च स यदेत्यादिकं सर्वं स्वप्नदशावर्णनपरमेवास्तु, उपरि अथैषा दशा नाड्य इति च, सुषुप्तिवाक्यमध्ये अथात्रैतद्वित्ति अथशब्दश्च बाधक भवेदिति वाच्यम्—अथ द्वितीये कोशे इति स्वप्नकोशस्य द्वितीयतया वर्णनात्, तदुपरि सुषुप्तौ, इत्याकाशे परे कोशे इति तृतीयकोशकथनात् प्रथम प्रथमकोशवृत्तमेव कथ्यत इति प्रतीत्या जागरपरतायाः पूर्वस्य वाक्य-समुदाये ग्राह्यत्वात्। तत्र यदेत्यादिनिर्देशात् देवपक्षादिदर्शनकथन-वशाच्च सर्वपुरुषजागरपरत्वासंभवे सिद्धे योगिपरत्वावधारणमिति। प्राणसंयुक्तत्वेन भावित इत्यत्र स्वयमिति शेषः। भावित इति कथनं मनोरूपसहकारिप्रदर्शनार्थम्। ग्राह्यविषय विमृश्य तदनुरूपे वायु-विशेषे च मनोऽवस्थाप्यते चेत्, तद्विषयदर्शनं योगिनो भवतीत्यर्थः।

देवांश्च ऋषींश्च। यदाऽपानेन सह संयुज्यते, तदा पश्यति यक्षराक्षसगन्धर्वान्। यदा तूदानेन सह संयुज्यते, तदा पश्यति देवलोकान् देवान् स्कन्दं जय(जयन्त)श्चेति। यदा समानेन सह संयुज्यते, तदा पश्यति देवान् लोकान् धनानि च। यदा वैरम्भेण सह संयुज्यते, तदा पश्यति दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्च भुक्तञ्चाभुक्तञ्च सच्चासच्च। सर्वं पश्यति सर्वं पश्यति।

अथेमा दश नाड्यो भवन्ति। तासामेकैकस्यां द्वासप्ततिर्द्वा-

---

व्यवहितान्यपि नद्यादीनि पश्यतीत्यर्थः। **यदा व्यानेन सह संयुज्यत** इत्यादिवाक्यानामप्यनया दिशा निर्वाहो वेदितव्यः। **यदा तूदानेनेति। देवान्।** देवलोकस्थानिति शेषः। **जयं** जयाभिमानिदेवताम्; जयन्तं वा। तलोपश्छान्दसः। प्रधानभूतदेवताप्रदर्शनार्थं स्कन्दाद्युक्तिः। **धनानीति**। भूमिनिहितानीत्यर्थः। **वैरम्भः** वायुविशेषः। उपरि व्यक्तीभविष्यति। दृष्टश्रुतादिकीर्तनं दृष्टान्तार्थम्। जन्मान्तरे दृष्टं वा। **सर्वं पश्यतीत्यभ्यास** आदरकृतः। एवं प्राणादिविशेषप्रसङ्गेन तत्प्रशंसा कृता। अयोगदशायामदर्शनं लोकसिद्धत्वादनुक्तम्। एवञ्च हृदयकमलस्थस्य जीवात्मनः प्राणेन्द्रियव्यापारवतो जागरावस्था दर्शिता भवति।

अथ स्वप्नाद्यवस्थाद्वयं वक्तुं तयोरवस्थयोर्जीवस्य स्थानभूतान् नाडीविशेषानाह **अथेमा दश नाड्यो भवन्तीति**। नाड्यः प्रधान-

---

तलोप इति। जयन्तमिति पाठोऽप्यस्ति।

उपरीति। नवमखण्ड इत्यर्थः। सत् वर्तमानम्। असत् अतीतमनागतञ्च। जागरावस्थेति। येषु प्राणाः प्रतिष्ठिताः इति पूर्ववाक्येनैव जागरसामान्यमभिप्रायं मन्तव्यम्। एवं योगकाल एवैवंप्रतीत्या अन्यदा तदप्[illegible]तो जुगुप्सितत्[illegible]पितं भवति।

सप्ततिः शाखानाडीसहस्राणि भवन्ति, यस्मिन्नयमात्मा स्वपिति शब्दानाञ्च करोति ।

---

नाड्यः । तासामिति । प्रधाननाडीसंसृष्टा अप्रधानसिराः शाखानाड्य. । उक्तानां नाडीना विनियोगं सामान्येन दर्शयति यस्मिन् अयमात्मा स्वपितीति । नाडीसमूहाभिप्रायेण यस्मिन्नित्युक्तम् । स्वपितीतिशब्दोऽत्र न सुषुप्तिपरः ; अपि तु सुषुप्तिस्वप्नसाधारणनिद्रापर.। उपरतबाह्येन्द्रियव्यापारो यत्र वर्तत इत्यर्थ । स्वप्नसुषुप्तिसाधारणचेष्टामाह शब्दानाञ्च करोतीति । द्वितीयार्थे षष्ठी । शब्दान् करोतीति ।

---

दशच्छिद्राधिष्ठितवायुविशेषसहकारेण भवन् जागरविशेष उक्तः । अवस्थान्तरस्थानभूतदशनाडीसंबन्धमाह अथेमा इति । 'हृदयस्य दशच्छिद्राणि' इति वाक्यात् हृदयस्येत्यस्यौचित्यादनुषङ्गः। इमाश्च ज्ञानकर्मेन्द्रियदशकनिबन्धनभूता इति विमृश्यम् । नाडीनां स्वप्नस्थानत्ववत् सुषुप्तिस्थानत्वमपि निर्बाधम् । "तदभावो नाडीषु तच्छ्रुतेरात्मनि च" इति सूत्रे नाडीनां सुषुप्तिस्थानत्वस्वीकारात्।

एवञ्च तत्रोदाहृतस्य बृहदारण्यकवाक्यस्य (४. १) तत्परत्वेऽपि कौषीतकिब्राह्मणे स्वप्नस्थानपरत्वमपि श्रुतम् । "नाडीनां स्वप्नस्थानत्वात्" इति जगद्वाचित्वाधिकरणभाष्यञ्च कौषीतकिब्राह्मणगतप्रकृतवाक्याभिप्रायम् । ताश्च सुषुप्तिनाड्यः हितानामिकाः प्रत्येकं द्विसप्ततिसंख्याकशाखानाडीमत्तया बृहदारण्यके उक्ताः । इहापि तथा श्रवणात् उभयपरमेवेदं वाक्यमिति भावः । (एवञ्च तास्वेव नाडीषु स्थानभेदः स्वाप्नसुषुप्तिभेदाय ग्राह्यः ।)

समूहेति । यच्छब्दार्थभूतासु नाडीषु एकत्वस्य एकवचनोक्तस्य समुदायद्वारा अन्वय इति भावः । अणोरात्मन एकत्रैव स्थिति-

**अथ द्वितीये स कोशे स्वपिति । तदेमञ्च लोकं पश्यति सर्वान्**

---

अबुद्धिपूर्वकमवशप्रलपितं करोतीत्यर्थः । स्वप्ने भयाद्यतिशयात् आक्रोशादिसंभवः । सुषुप्तावपि वातविकारात् अवशप्रलपितसंभवः ।

एवं स्वप्नसुषुप्त्योः साधारणाकारमुक्त्वा स्वप्नावस्थामाह अथ द्वितीये स कोशे स्वपितीति । अथ जागरानन्तरम् । कोशशब्दः स्थानपरः । प्रथमस्थानं हृदयपुण्डरीकम् । तत्र स्थितस्य जागरः । यदा तदनन्तरं द्वितीयकोशस्थाने (द्वितीये कोशे = स्थाने ?) उक्तानां नाडी सहस्राणां मध्ये कस्मिंश्चिन्नाडीसमूहविशेषे स्वपिति निद्रायते, तदा स प्रस्तुत संप्रसादो जीवात्मा इमञ्च लोकं परञ्च लोकं च (?)

---

सूचनार्थमेकवचनम् । शब्दानामिति षष्ठी शब्दमध्ये यं कमपि शब्दमित्यर्थज्ञापनार्थः; 'एतेषां मे देहि' (छा.१.१०) इतिवत् ।

संप्रसाद इति । जागरावस्थागतकालुष्यराहित्यपरः संप्रसादशब्दः । 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य' इति चरमशरीरवियोगसंनिकृष्टो जीवो निर्दिष्टः । "भूमा संप्रसादात्—" इति सूत्रे, "शुद्धस्वरूपाभिप्रायेण सूत्रे संप्रसादनिर्देशः कृतः" इति एतद्भाष्यकृद्भिः टीकायां प्राकाशि । अतः स्वप्नावस्थजीवमात्रे संप्रसादशब्दनियमाभावात् स संप्रसाद इत्यादेः, 'सः स्वप्नावस्थो जीवः संप्रसादशब्दवाच्य इति आचक्षते' इत्यर्थायोगात्, पृथग्वाक्यतायां प्रमाणाभावाच्च, 'स संप्रसादः सर्वान् शब्दान् विजानाति' इति पूर्वेणैकवाक्यता । 'सर्वेन्द्रियव्यापारसंपत्तिसमयेऽपि यः सर्वं न जानाति, स कथमुपरतेन्द्रियः सुप्तः इमं लोकं सर्वान् शब्दान् परञ्च सर्वं जानीयात्' इत्याशङ्कापरिहाराय संप्रसादत्वविशेषणम् । अकलुषत्वमेव ह्यस्य स्वभावः । 'सर्वं ह पश्यः पश्यति' इति छिल

शब्दान् विजानाति स संप्रसाद इत्याचक्षते ।

प्राण. शरीरं परिरक्षति । हरितस्य नीलस्य पीतस्य लोहितस्य श्वेतस्य नाड्यो रुधिरस्य पूर्णाः ।

---

पश्यति । जाग्रदवस्थादृष्टसजातीयश्च लोकम् ईश्वरसृष्टं पश्यतीत्यर्थः । 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान् रथयोगान् पथः सृजते । स हि कर्ता' इति श्रूयते । पश्यतीति चक्षुर्व्यापार उक्तः । अथ श्रोत्रव्यापारमाह सर्वान् शब्दान् विजानातीति । इदमीश्वरसृष्टशरीरस्थेन्द्रियान्तरव्यापाराणामपि प्रदर्शनार्थमुक्तम् । इत्याचक्षत इति । स्वप्नावस्था स्वप्नविदो वदन्तीत्यर्थः ।

अथ सुषुप्तिं वक्तुमारभते प्राणः शरीरमित्यादिना । सुषुप्तिकाले जीवेच्छ प्रयत्नौ विनाऽपि परमात्मसंकल्पप्रेरितो मुख्य प्राणः शरीरं परिरक्षति घत इत्यर्थः । प्राणसंचारस्थानभूता नाडीर्विशिनष्टि हरित-

---

पश्यत्स्वभावस्य परिस्थितिः । स जाग्रदवस्थारूपप्रतिबन्धकविरहे प्राचीनकर्मानुगुणप्रसादविशेषात् सर्वं द्रष्टुमलमिति दर्शितं भवति । तेन स्वाप्निकपदार्थानां वास्तवत्वमपि स्थापितं भवति, प्रसन्नपुरुष ग्राह्यत्वज्ञापनात् । एवमेकवाक्यतायाञ्च आचक्षत इत्येतत्, 'एवं स्वप्नवृत्त वदन्ति' इत्यर्थकं भवतीति स्वप्नवर्णनमत्र समाप्तमिव लक्ष्यते इति विमृश्य, प्राण शरीरमित्यादिकं सुषुप्तिपरं व्याख्यातम् । अन्यथा पुनः'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा' (बृ ६ १०), 'हिता नाम हृदयस्य नाड्यो हृदयात् पुरितितमभिप्रतन्वन्ति । यथा सहस्रधा केशो विपाटितः, तावदण्व्यः पिङ्गलस्याणिम्ना तिष्ठन्ते शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति । तासु तदा भवति' (कौ ४) इति श्रुत्यन्तरानुसारेण स्वप्नपरत्वमपि पूर्णाः इत्यन्तस्य सुवचम् । जागरे शरीरव्यापारायासबाहुल्यात् नाडीनां रुधिरपूर्णता न

अथास्यैतद् दहरं पौण्डरीकं कुमुदमिवानेकधा विकसितम्। यथा केशः सहस्रधा भिन्नः, तथा हिता नाम नाड्यो भवन्ति।

स्येति । द्वारस्त्वादिपदानि रुधिरविशेषणानि । ईषत्पीतं हरितम् । लोहितं शोणवर्णम् । रुधिरस्य रुधिरेण नाड्यः पूर्णा भवन्ति । आधा-सामावात् नाडीषु रक्तं न्यूनाधिकभावविरहेण व्याप्तमित्यर्थः । पूर्वं नाडीविशेषाः स्वप्नस्थानत्वेनोक्ताः ।

अथ नाडीविशेषाणामेवान्येषां सुषुप्तिस्थानत्वं वक्तुं तेषामपि हृदयकमलसंबन्धकथनार्थं हृदयं पुनः प्रस्तौति अथास्येति । पूर्ववदर्थः । तत्संबन्ध (द्वा?) नाडीबाहुल्यमाह यथा केशः सहस्रधा भिन्नः तथा हिता नाम नाड्यो भवन्तीति । हृदयसंबद्धा भवन्तीत्यर्थः । तासां

---

भवतीति सुषुप्तौ पूर्णतावर्णनं यदत्र सरसमुपपादितम्, तत् स्वप्नेऽपि हि भवितुमर्हति, प्रत्यक्षशरीरस्य प्रयासराहित्याविशेषात्। अथा-स्येत्यादिकं सुषुप्तिविषयमिति तु निर्विवादम्।

अथास्येति । अत्रेति पदं नाडीष्वित्यर्थकम्। तथाच यत् पूर्वोक्तं दहरं पुण्डरीकम्, तदत्र भवति, यत्र पुण्डरीके जीवः सुषुप्तो भवतीत्युच्यते । तद्भावाधिकरणे, "नाडीपुरीततौ प्रासादखट्वा-स्थानीयौ" इति श्रीभाष्यानुरोधेन हितानाड्यधिकरणकपुरीतद्गतत्वस्य सुषुप्त्याधारहृदयकोशेऽवधारणात्। इदमेव नाडीगतं परे कोशे इति कथ्यते समनन्तरम्। यथा केश इति। स्वप्नस्थानभूतानां नाडीनामपि हितानामकत्वस्य सहस्रधापाटितकेशवद्व्याप्तस्य च कौषीतकिश्रुत्युक्तत्वात् सुषुप्तिनाडीनां तासामैक्यं वा भेद एव वेति विमृश्यमेतत्। ऐक्येऽपि तत्र प्रदेशभेदोपपादनाय केशः सहस्रधेत्यादिपूर्वकं पुनस्तन्निर्देश इह घटेत। एवम् अथेमा दश नाड्य इति पूर्वमारम्भात् इन्द्रियदशकनिबन्धनभूतास्ता एव स्थान-

हृद्याकाशे परे कोशे दिव्योऽयमात्मा स्वपिति, यत्र सुप्तो न कञ्चन काम कामयते, न कञ्चन स्वप्नं पश्यति ।

न तत्र देवा देवलोका यज्ञा वा ।

---

हिताख्याना नाडीना सुषुप्त्याधारत्व पुरीतद्व्यवहितमिति श्रुत्यन्तरे विशदमर्थमिह दर्शयति हृद्याकाशे परे कोशे दिव्योऽयमात्मा स्वपितीति । हृदि आकाशेऽवस्थितोऽयमात्मा परे कोशे अन्यस्मिन् स्थाने मांसपिण्डशब्देन पूर्वमुक्ते पुरीतदाख्ये स्थाने स्वपितीत्यर्थ । 'हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते । ताभि प्रत्यवसृप्य पुरीतति शेते' इति हि श्रुत्यन्तरम् । हृदयवेष्टनमांस पुरीतच्छब्देनोक्तम् । तदिह स्थानान्तरत्वेनोच्यते । हृदये जागर । नाडीविशेषेषु स्वप्न । हिताख्यनाडीविशेषान्विते पुरीतति सुषुप्तिरिति विभाग । यत्र तृतीयस्थाने । न तत्र देवा देवलोका यज्ञा वेति ।

---

भेदेन स्वप्नसुषुप्तिनिर्वाहिकाः जागरसंबन्धिन्य । एतदधिकरणको-पासनमेव चानन्तरे खण्डे प्रस्तोष्यत इति विभाव्य भवति । ननु अथास्येत्यारभ्य एतद्वाक्यपरामर्शो च पूर्व हृदयस्य दश छिद्राणीति यास्ये हृदयस्येति न पुण्डरीकार्थकम्, किंतु उपक्रान्तहृदयपदसमा-नार्थमिति, यत् तत्र प्रस्तुतं दहरपुण्डरीकम्, तस्येहैव संबन्ध इति च ज्ञायते । न । एकादशखण्डे दहर पुण्डरीक प्रस्तुत्य, 'तस्य मध्ये समुद्र , समुद्रस्य मध्ये कोश , तस्मिन्नाड्यश्चतस्रो भवन्ति' इति नाड्यन्तरचतुष्टयप्रस्तावात् इहोक्ता नाड्य कोशव्यतिरिक्तस्थानगता इति ज्ञायते । तत् स्थान स्थूलहृदय वा दहरपुण्डरीक वेति परामर्शे, 'हृदयस्य नाड्यो हृदयात् पुरीततमभिप्रतिष्ठन्ते' इत्येतदनुसारेणार्थ-निश्चयः कार्य । दश छिद्राणि तु दहरपुण्डरीके नाडीमूलस्थानानि ।

**न माता न पिता न बन्धुर्न बान्धवो न स्तेनो न ब्रह्महा नतेजस्कायममृतं सलिलं पर। इदं सलिलं वनम्।**

---

देवा[देहा]दय सुषुप्तौ न दृश्यन्त इत्यर्थ । **न मातेत्यादि।** सुषुप्त पुरुष न माता भवति। न पिता भवति। मातृत्वपितृत्वाद्यभिमानरहितो भवतीत्यर्थ। बन्धुः प्रकृतिसम्बन्धवान्। बान्धवः सुहृदादि । **नतेजस्कायममृत**मिति। अमृत मरणादिरहितमात्मवस्तु **नतेजस्कायम्।** तेजश्शब्दो ज्ञानपर । कायशब्दो निकायपर । त्रिविधज्ञानसमूहरहितमित्यर्थ । **सलिले।** सलिले, सलिलकार्ये शरीरे वा वर्तत इत्यर्थ । सलिलशब्द विवृणोति **इदं सलिलं वनमि**ति। **वनम्।** 'वन षण सम्भक्तौ'। आत्मन सम्भजनीयमिदं शरीरं सलिलकार्यत्वात् सलिलमित्यर्थ। इदं सलिलं छन्नमिति पाठे इदं शरीरं छन्नम्=सुषुप्तस्य न भासत इत्यर्थ।

---

न तत्र देवा इत्यादिना न सुषुप्तस्य देहाद्यपेक्षया भेदो वर्ण्यते जागरेऽपि तस्य भेदस्य सत्त्वात्। अत, बहुवचनाद्यनुरोधाच्च न दृश्यन्त इति वाक्यार्थ एव वक्तव्य। न मातेत्यादावपि एवमेव वाक्यार्थवर्णनं श्रुत्यभिमतं चेत्, यद्वा वा इति वाक्यारो न स्यात्। अतः तद्बलात् तत्पर्यन्त काचित् शैली, अथान्येति प्रतीत्या, अध्याहारगौरवपरिहाराय च सुषुप्तजीवो न माता भवतीत्याद्यर्थवर्णनम्। बन्धु प्रकृतिसंबन्धवानिति। स्वस्वमातापित्रादिशरीरानुबन्धशालीत्यर्थ । नतेजस्कायमिति पाठदर्शनेन धर्मभूतज्ञानसमूहरहितम् इत्यर्थवर्णनम्। अनेन पदेन न माताभवतीत्यादीना मातृत्वाद्यभिमानराहित्यरूपोऽर्थो व्यञ्जितो भवति। न हि मातृभूतो जीव सुषुप्तौ मातृत्वरहितो भवति। नशब्दं विना तेजस्कायमित्येव तु पाठो दृश्यते। तदा च अपरिणतधर्मभूतज्ञानविशिष्टमित्यर्थ । वस्तुत

भूयस्तेनैव मार्गेण जाग्राय धावति स सम्राडिति होवाच ॥

॥ इति सुबालोपनिषदि चतुर्थः खण्डः ॥

---

पुन. प्रबोधप्रकारमाह **भूय** इति । **तेनैव मार्गेण** निर्गमनमार्गेण; हिताख्यनाडीमार्गेण । 'ताभि प्रत्यवसृप्य पुरीतति शेते' इति श्रुतेः । **सम्राट्** शरीरस्वामिभूत पुरुषः **तेनैव** निर्गमनमार्गेणैव **जाग्राय** जागरणाय **धावति** गच्छति । हृदयस्थानमिति शेष । इति **होवा**चेति आचार्य इति शेषः ॥

इति हरितकुलतिलकवाग्विजयिसूनो श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयस्य श्रीसु दर्शनार्यस्य कृतौ
**सुबालोपनिषद्विवरणे चतुर्थ खण्ड ॥**

---

ज्ञानस्वरूपमित्येवार्थः । अभिमानाद्यनुपलम्भमात्रेण आत्मनाशो न मन्तव्य इति च अमृतमित्यनेन दर्शितम् । देहाभिमानाभावेऽपि देहसंबन्धो नापेत इति दर्शयितुं सलिलं एकेति । 'सलिल एको द्रष्टे'ति च बृहदारण्यके (४.४.३२.) । तेनैव मार्गेणेति । हृदयस्थान-स्थितो जागरस्थानात् स्वप्नस्थानद्वारा सुषुप्तिस्थानं दहरपुण्डरीक-मध्यमागतो यथागतं बहिरायातीत्यर्थः । सम्राडिति । छान्दस्तावे संप्रसाद इत्युक्तः आम्रदमनन् सम्राडित्युच्यते । बृहदारण्यके तु सम्राडिति जनकविषयं संबोधनम् ।

एवं परमात्मविषयकोपासिसिषोपजननाय जीवस्य जागराद्य-वस्थाक्लेशज्ञापनं कृतम् । एवमिह, यादृशनाडीरूपनिबन्धन—तदनु-बन्धिधरस्त्वन्तर्यामिपरमात्मोपासनमनन्तरखण्डे वक्ष्यते, तादृशी-भिर्नाडीभिर्हितानामिकाभिः देहिना हितं जागरादिभेदेन नानाप्रकारं संभवत् उपवर्णयन् अयं खण्डः उपरितनखण्डशेष इत्यपि ध्येयम् ॥

—:**:—

॥ अथ पञ्चमः खण्डः ॥

**स्थानानि स्थानिभ्यो यच्छति । नाडी तेषां निबन्धनम् ।**

---

एवं जागराद्यवस्थासु दुःखाभिभूतस्य निर्विण्णस्य चेतनस्यापवर्गार्थम्, समस्तचिदचिदन्तरात्मभूतस्य सर्वस्मात् परस्य निर्दोषस्य *कल्याणगुणाकरस्य परमात्मनः उपासनप्रकारान्* उपदिशति **स्थानानि स्थानिभ्यो यच्छतीति** । वक्ष्यमाणानि चक्षुरादीनि स्थानानि स्थानिभ्यः आदित्यादिभ्यः परमात्मा यच्छति, प्रयच्छति । आदित्यादीनां चक्षुराद्यभिमानित्वं भगवत्संकल्पाधीनमित्यर्थः । "ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात्" इति हि सूत्रकारः । **नाडी तेषां निबन्धनमिति** । नितरां बन्धनम् संबन्धहेतुः । तेषाम्

---

पूर्वं नाड्यो दर्शिताः । तन्नाडीतदनुबन्ध्यवच्छेदेन परमात्मोपासनमत्रोपदिश्यते । ननु यद्यप्यत्र चतुर्दश पर्यायाः सन्तीति नाड्यः चतुर्दश, न तु दशेति प्रतीयते—अथापि मनसः सर्वेन्द्रियोपकारकतया इन्द्रियान्तरनाड्य एव मनोनाड्योऽपि ; एवं बुद्धिचित्ताहङ्काराणामपि मनसो भिन्नत्वाभावस्य श्रीभाष्ये भावितत्वात् तदर्थमपि न पृथङ् नाड्य इति स्यात् । अत एव हृदयस्य दशैव छिद्राणि प्रागुक्तानीति चेत्–अस्तु, किं तेन ? वस्तुतो मनोबुद्ध्यादेः विभिन्नोपासनस्थानत्वादिस्वारस्यात् सन्त्येव उक्तनाडीदशकातिरिक्ताः मनःप्रभृतीनां नाडीविशेषाः । अत एव षष्ठे चतुर्दश नाड्यो नाम्ना निर्दिश्यन्ते । अत एव अहङ्कारादिपदमपि मनोभिन्नपरतया भाष्ये व्याख्यास्यते । चित्तं तु सर्वथा मन एव ।

नाडी तेषां निबन्धनमिति प्रतिपर्यायमावर्तते । *तत्र प्रथम*वाक्ये स्थानानां स्थानिनाञ्च ग्रहणम् । उभयेषामेव पूर्वं निर्देशात् ।

१. चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतम्। नाडी तेषां निबन्धनम्।

---

आदित्यादीनां चक्षुरादीनाञ्च शरीरान्तर्गतहृदयकोशस्थेन चेतनेन संबन्धहेतुर्नाडी, आदित्याद्यधिष्ठितं चक्षुरादिकं नाड्या संबद्धम्, नाडी हृदयेन संबद्धा, हृदयमात्मना संबद्धमिति तत्तद्देवताधिष्ठितैश्चक्षुरादिभिरात्मनः संबन्धो नाडीद्वारक इत्यर्थः।

अथ त्रिविधस्थानसंबन्धिनः परमात्मन उपासनं वक्तुं स्थानत्रैविध्यमाह चक्षुरध्यात्ममित्यादिना। आत्मनि शरीरे वर्तमानं वेदितव्यमध्यात्मम्। भूतेषु पृथिव्यादिषु वर्तमानं वेद्यमधिभूतम्। देवेषु वर्तमानं देवतासु अन्तर्भूतत्वेन वेद्यमधिदैवतम्। चक्षुरध्यात्ममिति। शरीरे वर्तमानं चक्षुः परमात्मन्याधेयत्वेनानुसन्धेयम्। द्रष्टव्यमधिभूतमिति। पृथिव्यादिषु वर्तमानं द्रष्टव्यं रूपं तथा वेद्यम्। आदित्यस्तत्राधिदैवतमिति। तत्र द्रष्टव्यगोचरे चक्षुषि अधिष्ठातृत्वेन देवतासु वेद्यं तत्त्वम् आदित्य इत्यर्थः। पूर्वं सामान्येनोक्तं नाडीनां संबन्धकत्वमिह दर्शयति। नाडी तेषां निबन्धनमिति। नाडीविशेषा वक्ष्यन्ते। हृदयसंबद्धा नाडी हृदयस्थेन पुरुषेण चक्षुरादित्यद्रष्टव्यानां संबन्धहेतुरित्यर्थः।

---

उपरितनेषु तैः सह विषयाणामपि। नाडीविशेषा वक्ष्यन्त इति। षष्ठे खण्डे विरजा, सुदर्शना, जिना, सौम्या, मोघा, कुमारा, अमृता, सत्या, मध्यमा, नासीरा, शिशुः, सूर्या, असुरा, भास्वती इति चतुर्दश नाड्यो वक्ष्यन्ते। नवमेऽपि ताः प्रस्तोष्यन्ते।

यश्चक्षुषि यो द्रष्टव्ये य आदित्ये यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृदयाकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा ।

तमात्मानमुपासीत, अजरममृतमभयमशोकमनन्तम् ।

---

एवमुक्ते त्रिविधेऽपि स्थले नाड्यादिषु च परमात्मनोऽवस्थान माह यश्चक्षुषीत्यादिना । सर्वपर्यायेष्वपि प्राणशब्दो नवमे वक्ष्यमाण-वायुविशेषपरः । विज्ञाने एवं तत्तद्देवताधिष्ठिते प्राणाधारे. चक्षुरा-दिभिरिन्द्रियैः जन्ये जीवात्मनो विज्ञाने । आनन्दे ज्ञानपूर्वकप्रवृत्ति-फलभूते सुखे । अनेन जीवात्मना ज्ञानानन्दयोः चक्षुरादीना हेतुत्वं परमात्मसंकल्पाधीनमिति दर्शितम् ॥ 'प्रज्ञा च तस्मात् प्रसृता पुराणी', 'एष ह्येवानन्दयाति' इति हि श्रुत्यन्तरम् । हृदयाकाशे । नाडीसबन्धद्वारेण सर्वेन्द्रियाश्रये हृदि विद्यमानमाकाश सुषिरम्, तस्मिन् । 'तस्यान्ते सुषिरं सूक्ष्मम्' इति हि श्रूयते । एतस्मिन् इह परिगणिते सर्वस्मिन् वस्तुजाते । तत्राऽप्यन्तरे अन्तर्भागे । य सञ्चरति वर्तते=तिष्ठतीत्यर्थः । सर्वगतस्य परमात्मनो देशात् देशान्तरसयोगरूपसञ्चारासंभवात् । सोऽयम् उक्तवैभवविशिष्ट सर्वगतत्वात् सन्निविष्ट आत्मा परमात्मेत्यर्थः ; आदित्यादिक्षेत्रज्ञेष्वप्ययमन्यानोक्ते । स नारायण इति व्यक्तीभविष्यति । तम् उक्ताकारविशिष्टमुपासीत । मुमुक्षुरित्यर्थसिद्धम्, 'ब्रह्मैव सन् ब्रह्मा-प्येति । एतन्निर्वाणमनुशासनम्' इति प्रकरणात् । अजरममृतमिति । जरामरणनिषेध सर्वशरीरगतसर्वविकाराभावप्रदर्शनार्थं । अभयमशोक-मिति । भावि-भूतहेतुजन्ये दुःखे भयशोकौ । तन्निषेधो जीवात्मगत-

२. श्रोत्रमध्यात्मं श्रोतव्यमधिभूतं दिशस्तत्राधिदैवतम्; नाडी तेषां निबन्धनम्। यः श्रोत्रे यः श्रोतव्ये यो दिक्षु यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा। तमात्मानमुपासीत, अजरममृतमभयमशोकमनन्तम्।

३. नासाऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतम्; नाडी तेषां निबन्धनम्। यो नासायां यो घ्रातव्ये यः पृथिव्यां यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा। तमात्मानमुपासीत, अजरममृतमभयमशोकमनन्तम्।

४. जिह्वाऽध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतम्; नाडी तेषां निबन्धनम्। यो जिह्वायां यो रसयितव्ये यो वरुणे यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन्

---

सर्वदोषाभावप्रदर्शनार्थं। एवमचेतनात् बद्धचेतनाच्च व्यावृत्तिः। अनन्तम् देशकालवस्तुभिः परिच्छेदरहितम्। अनेन मुक्तात् व्यावृत्तिः। एवं चिदचिदात्मकतत्त्वविभूतिविशिष्टं विश्वचिदचिद्विलक्षणं परमात्मानं नारायणमुपासीतेत्यर्थः।

श्रोत्रमध्यात्ममित्यादयः पर्यायाः सर्वे प्रथमपर्यायविवरणेन प्रायशो व्याख्याताः। श्रोतव्यः शब्दजातः। दिश इति दिगभिमानिदेवता विवक्षिता।

नासेति घ्राणेन्द्रियं विवक्षितम् इन्द्रियप्रकरणत्वात्। घ्रातव्यो गन्धः। पृथिवीशब्दो देवतापरः।

जिह्वाशब्दो रसनेन्द्रियपरः। रसयितव्यः माधुर्यादिरसः।

सर्वेस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा । तमात्मानमुपासीत, अजरममृतमभयमशोकमनन्तम् ।

५. त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम्; नाडी तेषां निबन्धनम् । यस्त्वचि यः स्पर्शयितव्ये यो वायौ यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृदयाकाशे य एतस्मिन् सर्वेस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

६. मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतम्, नाडी तेषां निबन्धनम् । यो मनसि यो मन्तव्ये यश्चन्द्रे यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृदयाकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

---

त्वक् स्पर्शनेन्द्रियम् । स्पर्शयितव्यम् स्पर्शविशेषः। वायुः देवता।

ननु मन्तव्यमधिभूतमिति कथमुच्यते मनश्चन्द्रप्रभृतयो विहित (प्रभृतयोऽपि हि ?) मन्तव्यकोटिनिविष्टा । ततश्चाध्यात्माधिभूतादिविभागो न स्यादिति-उच्यते । यत्राध्यात्माधिभूतादिसंकर, तत्र मन-

---

ननु मनसोऽध्यात्मं गणितस्य, चन्द्रस्य चाधैवाधिदैवतं गणितस्यापि मन्तव्यत्वात् मन्तव्यं सर्वं कथमधिभूतमिति गण्येत इति शङ्कते ननु मन्तव्येति । न मन्तव्यं सर्वमधिभूतमिति विवक्षितम्, किन्तु अध्यात्ममधिदैवतञ्चोक्तादन्यस्य भूतान्तर्गतत्वात् प्रायोवादोऽयमित्याशयेन समाधत्ते उच्यत इति। तुलायामिति। तुलायां=घटे अधिकद्रव्यतोलनापेक्षी प्रथमतः फलादिना इष्टकादि समगौरवं परिमाय, तत् इष्टकादि फलादिना सहैकत्र फलके निक्षिप्य फलकान्तरे निर्मेयद्रव्यं निक्षिप्य तोलयति । तत्रेष्टकादि पूर्वं प्रमेयं भवत् पश्चात् प्रमाणमपि भवति । तवेत्यर्थः । तदुक्तं न्यायसूत्रे, 'प्रमेयता च तुलाप्रामाण्यवत्' इति। अवश्यञ्च मन्तव्यशब्दार्थे संकोचः कार्यः।

७. बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतम्; नाडी तेषां निबन्धनम् । यो बुद्धौ यो बोद्धव्ये यो ब्रह्मणि यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृदयाकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

---

श्रुतिपदार्थव्यतिरिक्तविषयत्वेन मन्तव्यादिशब्दाः संकोचयितव्याः । यद्वा तुलायां प्रमाणभावप्रमेयभाववत् मनश्चन्द्रादीनामेव आकारभेदेनो-भयकोटिनिविष्टत्वव्यवहार उपपन्न इति मनः शरीरान्तर्वृत्तिरूपेणा-ध्यात्मं भवतु ; विचार्यत्वरूपेण मन्तव्यञ्च भवतु । अधिभूतशब्दोऽपि भूतपरिणामे शरीरे अवस्थितत्वादुपपन्नः । देवतारूपस्य चन्द्रादेरपि मन्तव्यत्वमविरुद्धम् , विचार्य निर्णेतव्यत्वात् । आकाशवर्तित्वादधि-भूतत्वञ्चाविरुद्धम् । सर्वेश्वरस्य तु मन्तव्यत्वेऽपि समाभ्यधिकराहित्येन अन्याधिष्ठेयत्वाभावान् मन्तव्यशब्द चन्द्रादे (?) अर्वाचीनेषु संकोचनीयः । एवं सर्वपर्यायेषु सङ्कीर्णव्यवहारपरिहारो द्रष्टव्यः ।

**बुद्धिः** व्यवसायवृत्तेर्मनसोऽनुग्राहकं महत्तत्त्वम् । बोद्धव्य निश्चेतव्यं रूपादि । महत्तत्त्वब्रह्मादिनाऽपि (दीनामपि॰) बोद्धव्यत्वादि-विरोधः पूर्ववदनुसंधेयः । ब्रह्मणि चतुर्मुखे ।

---

'श्रोतव्यो मन्तव्यः' इति श्रुतस्य परमात्मन एव मन्तव्यतया प्रमाप्त-त्वात् । तस्याप्यत्र तेन पदेन ग्रहणे न केवलमधिभूतमित्येतदनुपप-न्नम्, 'यो मन्तव्ये' इत्युत्तरत्रिलखितस्योक्ता सति परमात्मनः स्थितिरपि न घटेत । अतः संकोचनीयोऽयं चन्द्रादिलोऽपि संको-च्यतामित्याह सर्वेश्वरस्येति ।

८. अहङ्कारोऽध्यात्ममहङ्कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्; नाडी तेषां निबन्धनम्। योऽहङ्कारे योऽहङ्कर्तव्ये यो रुद्रे यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृदाकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा। तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम्।

९. चित्तमध्यात्मं चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतम्; नाडी तेषां निबन्धनम्। यश्चित्ते यश्चेतयितव्ये यः क्षेत्रज्ञे यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृदाकाशे य एतस्मिन् सर्व-

---

अहंकारः अनात्मनि आत्माभिमानवृत्तेर्मनसोऽनुग्राहकं महत्कार्यं तत्त्वम्। अहङ्कर्तव्यमधिभूतम्। भूतपरिणामे देहे वर्तमानः जीवात्मैव स्थूलोऽहमित्यभिमानविषयत्वादहंकर्तव्यशब्दार्थः। तत्र सविषयेऽहंकारे रुद्रोऽधिदैवतम्। महदभिमानी चतुर्मुखपुत्रो रुद्रो महत्कार्यस्याहङ्कारस्याधिदैवतमित्युपपन्नम्। अत एव हि दीक्षिते त्वसिन् ब्राह्मणत्वाभिमानेन रुद्रतनुरित्युच्यते।

चिन्तावृत्तिमत् मन एव हि चित्तम्। चिन्ता च स्मरणं वा अपेक्षितबुभुत्सा वा। 'एवं सञ्चिन्तयन् विष्णुम्', 'मानसं विष्णुचिन्तनम्' 'चिन्तयन्ती जगत्सूतिम्', 'चिन्तयामास कोन्वेतत् प्रयुञ्जीयादिति प्रभुः', 'तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः' इत्यादिप्रयोगदर्शनात्। क्षेत्रज्ञो जीवात्मा स्वयमेव। यद्वा, 'क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे। तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते' इत्युक्तोऽन्तरात्मा वा। यः क्षेत्रज्ञे—सञ्चरतीत्यत्र, क्षेत्रज्ञशब्दस्य परमात्मवाचित्वे, स्वस्मिन्नवस्थित इति स्वमहिमप्रतिष्ठितत्वमुक्तं भवति।

स्मिन्नन्तरे सञ्चरति, सोऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमन्तम् ।

१०. वागध्यात्मं वक्तव्यमधिभूतमग्निस्तत्राधिदैवतम्; नाडी तेषां निबन्धनम्; यो वाचि यो वक्तव्ये योऽग्नौ यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

११. हस्तावध्यात्ममादातव्यमधिभूतमिन्द्रस्तत्राधिदैवतम्; नाडी तेषां निबन्धनम्। यो हस्ते य आदातव्ये य इन्द्रे यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

१२. पादावध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्राधिदैवतम् । नाडी तेषां निबन्धनम् । यः पादे यो गन्तव्ये यो विष्णौ यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्न-

---

वक्तव्यं शब्दः । अग्निः देवता ।

विष्णुः उपेन्द्र । त्रिविक्रमत्वात् पादेन्द्रियाद्यधिष्ठातृत्वं तस्य । 'पद्भिर्विष्णुक्रमान् क्रमते', 'विष्णो क्रमोऽस्यभिमातिहा' इत्यादिश्रुतेः । विष्णौ...सञ्चरतीति । विष्णुशब्दः इन्द्रानुजत्वेनावतीर्णविग्रहपरः । यःसञ्चरतीति यच्छब्दस्य नारायणपरत्वात् यो विष्णाविति वैयधिकरण्यनिर्देशात्; रूपमस्य शुक्र इति न्यायेन असमानविभक्तिनिर्देशे सति विशिष्टवाचिशब्दस्यापि विशेषणमात्रपरत्वोपपत्तेश्च । विष्णुशब्दस्यापि विग्रहविशिष्टभगवद्वाचित्वे पूर्ववत् स्वमहिमप्रतिष्ठत्वमर्थ । चतुर्मुखादीनां तु अवतारत्वपरत्वश्रवणाभावात् स्वमहिमप्रतिष्ठितत्वं तत्रानुपपन्नम् । "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते", "तथान्तरात्मा

न्तरे सञ्चरति सोऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

१३. पायुरध्यात्मं विसर्जयितव्यमधिभूतं मृत्युस्तत्राधिदैवतम् ; नाडी तेषां निबन्धनम् । यः पायौ यो विसर्जयितव्ये यो मृत्यौ यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

१४. उपस्थोऽध्यात्ममानन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवतम् ; नाडी तेषां निबन्धनम् । य उपस्थे य आनन्दयितव्ये यः प्रजापतौ यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

एष सर्वज्ञ एष सर्वेश्वर एष सर्वाधिपतिरेषोऽन्तर्याम्येष योनिः

---

मम च ये चान्ये देहिसंज्ञिता.” इति सात्त्विकोपबृंहणेषु चतुर्मुखादीनां भगवदनुप्रविष्टत्वदर्शनाच्च ।

**आनन्दयितव्यमिति** स्त्रीपुंसशरीरस्थ आत्मा विवक्षितः । अत्र **प्रजापति**शब्दः चतुर्मुखव्यतिरिक्तविषय । ‘त्वं रुद्रस्त्वं ब्रह्मा त्वं प्रजापति ’ इति पृथगुपदेशदर्शनात् , चतुर्मुखस्य महत्तत्त्वाधिष्ठातृत्व प्रतिपादनादर्थान्तरे संभवति तस्यैव पुन प्रतिपादनपरत्वकल्पनायोगाच्च ।

एवं समस्तचिदचिद्वस्तुष्ववस्थितस्य भगवतो व्याप्ते घटादावाकाशव्याप्तिसाम्यव्यवच्छेदार्थम् अन्यत्रासमानितान् मङ्गलगुणविशेषानाह **एष सर्वज्ञ** इति । व्याप्यसर्ववस्तुसाक्षात्कर्तेत्यर्थ । **सर्वेश्वरः** साक्षात्कृतस्य सर्वस्य नियन्ता । **एषः सर्वाधिपतिः** नियाम्यस्य स्वामी ।

सर्वस्य । सर्वैसौख्यैरुपास्यमान न च सर्वसौख्यान् उ(न्यु) पास्यति । वेदशास्त्रैरुपास्यमान न च वेदशास्त्राण्युपास्यति । यस्यान्नमिद सर्वम् न च योऽन्न भवति ।

---

न केवल रक्षकत्वमात्रमधिपतिशब्दार्थ , मातापितृसरक्ष्यस्य पुत्रस्य तत्पतिकत्व व्यवहाराभावात् । जगच्छरीरकत्वसिध्यर्थ ईश्वरगन्दोक्त नियमनमन्न प्रवेशपूर्वकमिति दर्शयति एषोऽन्तर्यामीति । एष योनिः सर्वचिदचिच्छरीरकत्वात् तस्योपादानमित्यर्थ । सर्वसौख्यै। नानाविधसौख्योपेतैर्देवादिभिरित्यर्थ । वेदशास्त्रैरिति । वेदशास्त्राणा भगवदुपासने प्रमाणतया करणत्व विवक्षितम् । वेदशास्त्राणीति । अशास्त्रवश्य इत्यर्थ । अन्नम् अदनीयम् , संहार्यमित्यर्थ ।

---

तत्पतिकत्वेति । न हि पुत्र प्रति पितुर्मातुश्च पतित्वेन व्यवहार इति । श्रुतप्रकाशिकाया तु, 'वृद्धौ च मातापितरौ साध्वी भार्या सुत शिशु । अप्यकार्यशत कृत्वा भर्तव्या मनुरब्रवीत्' इति माता पितरौ प्रति पतित्वव्यवहारप्रसङ्ग इत्युक्तम् ।

सर्वसौख्यैरित्यत्र बहुव्रीह्युदाहरणम् , उपरि, 'सर्वसौख्यानुपास्यति' इति पाठाभिप्रायेण । 'सर्वसौख्यान्युपास्यति' इति पाठे तु इहापि कर्मधारय एव । सौख्यैरुपास्यमानत्व नाम स्वयमेव सौख्यैरस्य व्रियमाणत्वम् । सौख्याना सौख्यत्व तदधीनम् । सौख्यभागितया पुसामतिशयोऽन्यत्र । परमात्मविषये तु सौख्यानामपि त सम्बन्धा दतिशय । अद्भुतानन्दरूपत सम्बन्धात् गुणभूतानामानन्दानामतिशयो भवति । यदाहु —

> 'गुणत्वत्त लोके गुणिषु नियत (हिमत) मङ्गलपद
> विपर्यस्त हस्तिक्षितिधरपते तत् त्वयि पुन ।

अतः परं सर्वनयनः प्रशास्ता अन्नमयो भूतात्मा प्राणमय

**अतः पर**मिति । भूयोऽपि तन्माहात्म्यमुच्यते इत्यर्थः । यद्वा **अतः** उक्तगुणकत्वात् परं केवलं स एव सर्वस्मादधिक इति वक्ष्यमाणगुणैरन्वयः । **सर्वनयनः** सर्वकार्याणां नेता = निर्वोढा । **प्रशास्ता** प्रशासितृत्वेन निर्वोढा । न तु राजनियुक्तपुरुषवत् प्रशासनीयत्वेन निर्वोढेत्यर्थः । तमात्मानमित्यात्मशब्दनिर्दिष्टस्य परमात्मनः सर्वान्तरात्मत्वेन आत्मत्वकाष्ठां प्रतिपादयति **अन्नमय** इत्यादिना ॥ भूतपरिणामरूपदेहोऽ**न्नमयः** । स च सर्वेश्वर इत्यर्थः । **भूतात्मा** भूतानां शरीरकारणभूतानामपि आत्मा । अन्नमयादिशब्दानां परमात्मसामानाधिकरण्यमात्मशब्दस्वारस्यादवगम्यते । न च मृदात्मको घट इतिवत्

---

गुणाः सत्यज्ञानप्रभृतय उत त्वद्गततया
शुभीभूयं याता इति हि निरणैष्म श्रुतिवशात् ॥'

इति । अत एव नवनीतचौर्यादीनामपि भगवत्कृष्णसंबन्धात् यथावन्मोक्षहेतुता ।

उपास्यतीत्येतत् उपास्त इत्यर्थे छान्दसम् । 'असु क्षेपे' इति धातुर्वा । नोपास्यति नोपक्षिपति ; न स्वयं स्वसंनिधिं प्रति आनयतीति । सर्वमिदमनायासप्राप्तसर्वसौख्य इत्यर्थाभिप्रायम् , न तु तत्संकल्पाभावेऽपि तस्य तानि भवन्तीत्यर्थकम् , 'इच्छात एव तव विश्वपदार्थसत्ता' इत्येतद्विरोधात् ।

अतः परमिति । 'ततो यदुत्तरतरम्' इति श्वेताश्वतरोपनिषदीव इह अतः पदं व्याख्येयमिति भावः । परशब्दस्य उत्कृष्टार्थकत्वे सर्वनयन इत्यादिपुलिङ्गानुरोधेन पर इत्येव श्रूयेत । अतोऽपि अतइति पदमेव नावधिसमर्पकमिति ध्येयम् । शरीरकारणभूतानामिति । प्राणमय इन्द्रियात्मेत्यादौ प्राणाधीनस्थितिप्रवृत्तिकेन्द्रियादिग्रहणवत्

इन्द्रियात्मा मनोमयः संकल्पात्मा विज्ञानमयः कालात्मा आनन्द-

आत्मशब्द स्वरूपमात्रपर । **प्राणमय इन्द्रियात्मेत्यनेनैकरीत्यात् ।** न हि प्राणापानादिपञ्चवृत्तिप्राण इन्द्रियस्वरूप । **प्राणमयः** मुख्य-प्राणशरीरकश्च स **इन्द्रियात्मा** प्राणबद्धानामपीन्द्रियाणामात्मा । **मनोमयः** मन प्रभृतिप्रधानपर्यन्ततत्त्वशरीरक इत्यर्थ । 'भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् । आत्मा च परमात्मा च त्वमेक· पञ्चधा स्थित' इति श्रीविष्णुपुराणवचनोपबृंहितत्वात् । *सकल्पात्मा । सङ्कल्पशब्दो मनोवृत्तिजन्यज्ञानाना प्रदर्शनार्थ । 'काम सङ्कल्पो विचिकित्सा श्रद्धा धृतिरधृति ह्रीर्धीर्भीरित्येतत् सर्वं मन एव'* इति श्रुताना मनोमूलाना कामसकल्पादीनाम् आत्मा सत्ताहेतु· **विज्ञानमयः** जीवात्मशरीरकश्च स । **कालात्मा** आदित्यादिक्षेत्रज्ञ-

---

देहापि देहाधीनस्थितिप्रवृत्तिकभूतविशेषग्रहण युक्त चेत्, भाष्यमिदं तदनुरोधेन नेयम् ।

ननु अन्नमयादिशब्दाः तैत्तिरीय इव देहादिमात्रपरा. । तेषाञ्च यथाक्रम भूतादिनिर्वाहकत्वादात्मत्व विमृश्यम् । अन्नरसमयस्य देहस्यानेकप्राण्युत्पत्तिहेतुत्वात् अनेकप्राणिसेव्यत्वात् पाञ्चभौतिकस्य सर्वस्य देहोपचयाद्यर्थतया देहशेषिकत्वाच्च भूतात्मत्वं देहस्य । विज्ञानमयस्य च कालात्मत्व भूतभविष्यदादिविविधकालसङ्ज्ञानस्य विज्ञानैकनिरूप्यत्वात् इत्यत्राह—अन्नमयादिशब्दानामिति । तैत्तिरीयेऽपि, 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा' इत्यादौ अन्नमयादिपदस्य देहादिमात्रपरत्वेऽपि 'एतमन्नमयमात्मानमुपसंक्रम्य' इत्यादौ विशिष्टपरमात्मपरत्वमेवेति ध्येयम्। आत्मशब्दस्वारस्यादिति। सर्वनयतः प्रशास्तेत्येतत्सामानाधिकरण्यादेवान्नमयादिपदाना परमा-

मयो लयात्मा ।

---

शरीरत्रय अहोरात्रादिकालचक्रनिर्वाहक । यद्वा आकलनस्य वा आकलयितृगा वा सर्वेषामात्मा निर्वाहक । अन्तर्यामित्वेन स्थितो जीवानामपरिच्छेदसामर्थ्यमापादयतीति यावत् । आनन्दमय इत्ये तदुपपादयति लयात्मेति ॥ लयस्यात्मा । आत्यन्तिकप्रलयरूपस्य मोक्षस्य आत्मा सत्ताहेतु , निर्वाहक । मोक्षप्रदत्वादिलक्षणादैश्वर्य प्रकर्षात् निरतिशयानन्दप्रचुर परमात्मेत्यर्थ । तैत्तरीयोपनिषदि हि 'अन्योऽन्तर आत्माऽऽनन्दमय' इति आनन्दमय प्रस्तुत्य, 'यतो वाचो निवर्तन्ते' इत्यन्तेनास्य निरतिशयानन्दयोगमुपपादयत् वाक्यजातम्, 'सोऽकामयत बहु स्या प्रजायेय', 'तदनुप्रविश्य—विज्ञानञ्चाविज्ञानञ्च', 'एष ह्येवानन्दयाति', 'भीषाऽस्माद्वात पवते' इति जगत्कारणत्व-चिदचिदन्तरात्मत्व - कृत्स्नप्रशासितृत्ववत् अनन्यसाधारण्येन(णेन ?) आनन्दयितृत्वेनापि निरतिशयानन्दयोगित्वमुपपादयति ।

---

त्मपरत्व सिद्धम् । यदि देहादिमात्रपरत्वप्रत्याशया प्रशास्तेत्यनेनैक-वाक्यत्वत्यागो मन्यते, तदाऽपि भूतात्मेत्यादिगत आत्मशब्द एव ता प्रत्याशा प्रतिरुणद्धीति भाव । भूतात्मेति । ग्राह्यात्मा ग्राहकात्मा ग्राह्यग्राहकरूपप्रपञ्चकारणप्रधानात्मा ग्रहीतृजीवात्मा ग्राहयितृहर्षी केशरूपश्च तथाऽऽत्मा दर्शित इति प्रतीयते ।

आनन्दमयो ल्यात्मेति । प्रलयादौ पूर्वमापादितान्यादृशाल्या जीवा स्वयमेव परमानन्दात्मनि परमात्मनि लयार्थं मोक्षे प्रवर्तन्ते । ईदृशलयनिर्वाहकत्वात् स स्वयमानन्दमय इति ज्ञायते । अनानन्दम यत्वे ह्यपुरुषार्थत्वात् तत्र लय न कश्चित् काङ्क्षेत् । किंतु अत्यन्तविलय विना पौन पुन्येन सुखी यावल्लाभमानन्दमनुबुभूषु प्रादुर्भावपर एव

ननु चक्षुरध्यात्ममित्यादिपर्यायेषु, 'यः प्राणे यो विज्ञाने य आनन्दे' इति जीवधर्मस्याऽऽनन्दस्य प्रकृतत्वात् तस्येह प्रत्यभिज्ञानात् तद्विकार उक्तोऽयमानन्दमय, न तु परमात्मा। आनन्दप्रकर्षस्य चित्प्रलयरूपस्तैमित्यहेतुत्वात् लयात्मकत्वञ्चोपपन्नमिति चेत् —नैतदुपपद्यते। 'तमात्मानमुपासीत', 'एष सर्वज्ञ एष सर्वेश्वर एष सर्वाधिपतिः' इत्यादिना आत्मत्वेन प्रतिपादितस्य सर्वेश्वरस्य आत्मशब्देनैव भूतेन्द्रियादीनामन्तरात्मतयाऽभिहितस्य जीवानन्दविकारत्वायोगात्। तैत्तरीयोपनिषदि, 'एष ह्येवानन्दयाति' इति जीवानन्दयितृत्वेनोक्तस्य आनन्दमयस्येह प्रत्यभिज्ञानात्। इहापि, 'य आनन्दे....सञ्चरति' इति जीवानन्दस्य तदधीनत्वावगमात्। अत एवानन्द [मय?] स्य स्वानन्दयितव्यजीवधर्मविकारत्वायोगात्, तत्र च 'एतमानन्दमयमात्मानमुपसंका-

---

स्यादिति भावः। ऐश्वर्यप्रकर्षात् निरतिशयानन्दप्रचुर इति। 'युवा स्यात् साधु युवाध्यायकः—स एको मानुष आनन्दः' इति श्रवणात् अस्मन्मते अनुकूलानां सर्वेषामानन्दशब्दवाच्यत्वात् आनन्दमयवल्लीगतं जगत्कारणत्वाद्यनेकविशेषपरं वाक्यं सर्वमपि तस्याऽऽनन्दमयस्य आनन्दांशानां निरूपकमेवेति भावः।

(अतः परमित्यादेरेवमप्यर्थः स्यात्—उक्तरीत्या ग्राह्यग्राहकतदभिमानिदेवता-ग्रहणकर्तृजीवाद्यन्तर्यामिभूतस्य परमात्मन उपासनायां कृतायाम्, अतःपरम् उपासनानन्तरं ग्राह्यग्राहकादिरूपान्नमय-प्राणमय-विज्ञानमयक्रमेण आनन्दमये स्वात्मनि लयरूपस्य मोक्षस्य निर्वाहको भवति स परमात्मेति। एवञ्च एकत्वं नास्तीत्याद्युपरितनवाक्यं मोक्षदशायाः किञ्चिद्रूपेण वैचित्र्यप्रदर्शनप्रवृत्तमिति।

मति' इत्यान दमयस्य प्राप्यत्वोक्त्या तत प्राप्यान्तरानुक्त्या च परम प्राप्यस्य तस्यैवाऽऽनन्दमयशब्देन प्रत्यभिज्ञानादात्यन्तिकप्रलयरूपमोक्ष निर्वाहकत्वस्यैव लयात्मशब्देन वक्तु योग्यत्वात् । अस्यामेवोपनिषदि, (९ ख) 'य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्त निर्बीजमेवाप्येति' इति जीवानन्दस्य तुरीया दर्वाचीनत्वेन वक्ष्यमाणत्वात् तुरीयस्य [तुरीयातीतस्य ?] परमप्राप्यतया वक्ष्यमाणत्वाच्च परमप्राप्यतया श्रुतिसिद्धस्यानन्दयस्य तुरीयातीतत्वेन तुरीयादर्वाचीनक्षुद्रानन्दविकारत्वानुपपत्तेश्च । एव व्याप्यत्व-निर्वाह्यत्व-तुरीयानतीतत्व-क्षुद्रत्वै आत्मत्वनिर्वाहकत्वपरमप्राप्यत्वतुरीयातीतत्वैश्च विरुद्धस्वभावत्वात् पूर्वापरवाक्यस्थान-दानन्दमयशब्दौ चातिदूर भिन्नार्थौ । न च जीवानन्दशरीरक परमात्मेति वाच्यम्-'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्द ब्रह्मणो विद्वान्' इति वाङ्मनसागोचरस्य ब्रह्मसम्बन्धित्वश्रवणात् , जीवानन्दस्य स्वसम्बन्धित्वेन सर्वप्राणिमनस्संवेद्यत्वाच्च भिन्नार्थयोरपि (रत्नापि ?) पूर्वापरवाक्ययोरिव **आनन्दान-दमयशब्दयोर्भिन्नार्थत्व युक्तम्** । तस्मात् **आनन्दमयो लयात्मेति** वाक्यस्य यथोक्त एवार्थ ।

एव सर्वान्तरस्यानन्दमयशब्दवाच्यस्य सर्वेश्वरस्य लयात्मत्व प्रसङ्गेन जगदप्ययस्थानभूतस्य तस्य चिदचिद्विलक्षणत्वानुपपत्तिम् तद्गत

---

ननु परमात्मन चिदचिद्वैलक्षण्यस्य तृतीयखण्ड एव व्युत्पादितत्वादत्र पुन किमिति तद्वचनमित्यत्राह लयात्मत्वप्रसङ्गेनेति । प्रासङ्गिकमत्रैतत्कथनमिति भाव ।

एकत्वं नास्ति, द्वैतं कुतः?

विकारादिहेयसंस्पर्शनञ्च आशङ्क्य परिहरति एकत्वं नास्ति द्वैतं कुत इति। सर्वजगदुपादानस्य सर्वाप्ययस्थानस्यापि सर्वेश्वरस्य प्रकृतिपुरुषाभ्यां स्वरूपैक्यं नास्ति। तस्य द्वैतं कुतः। चिदचिद्गतभेदान्वय कुतः। महदहङ्कारादिकार्यभेदो जन्मजराद्यवस्थाभेदो देवमनुष्यादिजातिभेदः शुक्लकृष्णादिगुणभेद गमनागमनादिक्रियाभेद खुरपुच्छशृङ्गाद्यवयवभेद इति अचिद्गत सर्वविध बाह्य द्वैतम्, सुखदु.खमोहरागद्वेषलोभभय-शोकमदमानमत्सरादिकमान्तरं चिद्गत द्वैतमपि सर्वेश्वरे न प्रसङ्गमर्हतीत्यर्थः।

ननु एकत्वं नास्तीत्यादिपर्यालोचने शून्यवाद एव श्रुतितात्पर्य-मवसीयते। तथा हि—न तावदिदमैक्यं निर्विषयमात्मं स्वसजातीय-रहितत्वरूपम्। सिद्धान्ते तादृशपरमात्मसद्भावेन तन्निषेधायोगात्। तथा श्रुत्यर्थवर्णने द्वैतं कुत इत्येतदसंगतेश्च। सजातीयद्वितीय-सद्भावे द्वैतनिषेधायोगात्। एवञ्च संख्यारूपमेव निषेध्यम्। तच्च धर्मिणि सति निषेद्धुमशक्यमिति धर्मिनिषेध एव पर्यवसानम्। एवमेकस्यैवाभावे द्व्यादेः का प्रसक्तिरिति द्वैतं कुत इत्युच्यते। मर्त्यं नास्ति इत्यादिकमपि तत्तन्निषेधपरं सत् सर्वशून्यत्वमेव ख्या-पयति। न भवतीत्यनुक्त्वा नास्तीति प्रयोगः अत्यन्ताभावं द्योतयति; न तु भेदम्। एवञ्चोपक्रमे, न सन्नासन्न सदसत् इतीदमपि सदादि-सर्वनिषेधपरमेव। तृतीयखण्डारम्भे असदित्येतदपि अभावार्थकमेव; तथा प्राच्यां व्यवहारदर्शनात्। अत एव निर्वाणमनुशासनमिति निर्वाणपदमपि साधु संगच्छते। निर्वाणो दीप इत्यादाविव निर्वाणं ह्यभाव एव। स एवानुशास्यमान इति तदर्थः। अतः शून्यवाद एव सुबालश्रुत्यर्थः किं न स्यादितीदृशीमाशङ्कामुपक्षिपति नन्वित्यादिना।

नन्वेकत्वसंख्याऽपि नास्ति। कुतः सजातीयविजातीयभेद इति अर्थ इति न वाच्यम्-"एष सर्वज्ञ एष सर्वेश्वर" इत्यादिभिः ज्ञानैश्वर्यादिगुणानां प्रमाणान्तराप्रतिपन्नानाम्, कृत्स्नस्य जगतः तद्विभूतित्वस्य च विहितत्वात्। विहितस्य च निषेधायोगात्। अनेकवाक्यप्रतिपन्नस्य एकवाक्येन बाधायोगात्। प्रथमवाक्यावगतस्य च चरमवाक्येन बाधा-

---

नन्विति प्रश्नद्योतकम्। अर्थ इत्यन्तेन प्रश्नसमाप्तिः। इति न वाच्यमिति तत्खण्डनम्। ननु विहितस्य निषेधायोगादिति कथम्? एकस्मिन् काले स्थितस्य कालान्तरे निषेधरूपशून्यवादे दोषाभावात्। सर्वज्ञ इत्यादिना प्रस्तुतस्यैव अतः परमित्यादिनाऽनुवादपूर्वकं पश्चात्काले लयात्मेति लयो वर्ण्यते, इत्यस्तु इत्यत्राह अनेकेत्यादि। छान्दोग्ये, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम्। तस्मादसतः सज्जायत इति। कुतस्तु खलु सोम्यैवं स्यादिति होवाच' इत्येवं कालविशेषे शून्यमात्रपरिशेष इति वादस्यापि खण्डनेन सद्रूपवस्तुसद्भावस्य प्रलयेऽपि स्थापनेन सत्कार्यवाददर्शनात् एवम्भूतनानाश्रुतिसिद्धार्थबाधेन शून्यवादस्य श्रुत्यर्थत्ववर्णनायोगात्। एवं शून्यवादेऽपि अभावोऽस्ति, न वा। नास्ति चेत्, स्वतः सद्भाव इष्टो भवति। अभावोऽस्ति चेत्, स एकोऽनेको वा। अभावे संख्या न भवतीति चेत्—तत् अनुभवविरुद्धम्। अस्ति चेत्, एकत्वं नास्ति द्वैतं कुत इत्यादिकमनुपपन्नमित्यादिकमपीह भाव्यम्।

विहितस्य च निषेधायोगादिति। द्वैतं कुत इति वाक्यं न सर्वज्ञत्वादिरूपद्वैतनिषेधकम्। तथा सति विधायकवाक्यस्यासत्यार्थप्रतिपादकतया अप्रामाण्यापत्तेः। एवमप्रामाणिकार्थप्रतियोगिकाभावस्य पारमार्थिकताया दुर्वचतया स्वयमप्यप्रमाणत्वापत्तेः। विहि-

मर्त्यं नास्ति, अमृतं कुतः?

योगात् । गुणविशेषविधानस्य सामान्यशब्देन बाधायोगात् । विशेष-निषेधे सामान्यनिषेधसङ्कोचस्य युक्तत्वाच्च । अतो यथोक्त एवार्थ ।

मर्त्यं नास्ति अमृतं कुत इति । मर्त्यत्वं नास्ति, अमृतत्वं कुतः । प्रसक्ते सति हि प्रतिषेध । मर्त्यत्वमिति सांसारिकस्वभावानामु-

तायाः क्रियाया निषेधे विकल्पेन वाक्यद्वयस्य प्रामाण्यम् । वस्तुनि विकल्पायोगात्तु एकतरस्याप्रामाण्यं दुर्वारम्॥ यदा यत्र यद्विधिः, तदा तत्र तन्निषेधायोगेऽपि देशान्तरे कालान्तरे च तन्निषेधो न दोषायेति चेत्—तर्हि देशकालविशेषस्वीकारात् कथमेकत्वस्य द्वैतस्य वा निषेधः? कथञ्च सर्वशून्यवादः? नित्यञ्च सर्वगत्वादिकं न कदापि तदधिकरण एव निषेद्धुं शक्यम् । युक्त्यन्तरमाह अने-केति । यद्यप्येकप्रमाणवाक्यप्रतिपन्नमस्थशास्त्यनिषेधम्, अथापि अनेकवाक्यप्रतिपन्नतया भूयसाम्न्यायेन विधिरेव बलीयानिति भावः । असञ्जातविरोधत्वादुपक्रमप्राबल्यादप्येवमित्याह प्रथमेति । सामान्यनिषेधस्य विहितव्यतिरिक्तविषयत्वस्यैव युक्तत्वादपि न विहितविशेषनिषेध इत्याह गुणविशेषेति । विशेषनिषेधे सामान्य-निषेधस्य पर्यवसानादप्येवमित्याह विशेषनिषेध इति। न च विधिस्थल एव छागपशुन्यायेन सामान्यविशेषपरता, न निषेधस्थल इति वाच्यम्—तत्रापि, 'वार्ताकं न भक्षयेत्,' 'श्वेतवार्ताकं न भक्षयेत्' इत्यत्र विशेषनिषेधपर्यवसानस्य पूर्वमीमांसकोक्ततया संप्रतिपन्नत्वात्। निषेधस्य प्रतियोग्यनुयोगिसापेक्षतया द्वैतसिद्धौ सर्वथा द्वैतनिषेधा-योगात् विशेषजिज्ञासाया विशेषनिषेधस्योपजीव्यत्वात् । लोकेऽपि तथा तात्पर्यस्य बहुल प्रयोगदर्शनाच्च ।

ननु एकत्वं नास्तीत्यादेः, आनन्दमये लयं प्राप्तस्य जीवस्य

नान्तःप्रज्ञो नबहिःप्रज्ञो नोभयतःप्रज्ञो नप्रज्ञानघनो नप्रज्ञो

पलक्षणम् । संसारित्वप्रसङ्गाभावात् परमात्मनो जीवात्मन इव तद्विनाश-रूपममृतत्वं नास्तीत्यर्थः ।

एवं चिदचिद्वैलक्षण्यमुक्त्वा कल्याणगुणेषु प्रथमप्रतिपादितं सार्वज्ञ्यमादरातिशयात् प्रपञ्चयति **नान्तःप्रज्ञ** इत्यादिना । अन्तरेव प्रज्ञा यस्य सोऽन्तःप्रज्ञः । अब्भक्ष इतिवत् अवधारणगर्भोऽयं निर्देशः । **नान्तःप्रज्ञः** । बाह्यमपि जानातीत्यर्थः । **न बहिःप्रज्ञः** । न बहिरेव जानाति, अपित्वन्तरपि जानातीत्यर्थः । कूपकच्छपः कूपाद्बहिर्न वेत्ति । भूतलस्थ. पुरुषः कूपान्तर्गतं न जानाति । सर्वेश्वरस्तु नैवम् ; अपितु सर्वपदार्थानामन्तर्बहिश्च जानातीत्यर्थः । **नोभयतःप्रज्ञः** । यद्यपि परिच्छिन्नरूपाद्यपेक्षया अन्तर्गतव(अन्तर्ब?)हिर्भागौ विद्येते, तथापि परमात्मन सर्वगतत्वात् बहिर्भागो नास्ति ; तदभावात् तदपेक्षान्तर्भागश्च नास्तीति नोभयत.प्रज्ञः ; अपितु सर्वगतः सर्वं जानातीत्यर्थः । **नप्रज्ञा-नघनः** न घनीभूतज्ञान· । घनत्व बहुलत्वम् । बाहुल्यञ्च प्रसरद्र व्यस्य करतलादिप्रतिहतिकृतम् । यथा रविकिरणादेः । अन्तःप्रतिहत-

आनन्दमयेन सह स्वरूपैक्यं न भवति । राज्ञो भृत्यस्येवात्यन्तद्वैतं नु मतराम् । पूर्वमेव तस्यान्तर्यामितया अपृथक्स्थितेः। मुक्तस्य मर्त्य= मरणादि न भवति । अमृतं तु 'आभूतसंप्लवं स्थानममृतत्वं तु भाष्यते, इत्युक्तं नतराम् । कर्माधीनजन्मत एवाभावेन मरणामृतयो-रुक्तयोरप्रसक्तेः इत्यर्थोऽस्तु—नान्तःप्रज्ञ इत्यादिना च, 'अन्तःप्रज्ञा भवन्त्येते सुखदुःखसमन्विताः' इत्युक्तवृक्षादिरूपजन्मभेदा विष्णु-पुराणोक्ताः अन्तःप्रज्ञादिशब्दवाच्या जीवस्य न भवन्ति मुक्ता-

नाप्रज्ञ , अपि नो विदित वेद्य नास्ति । इत्येतन्निर्वाणमनुशासनम् । इति वेदानुशासनम् । इति वेदनुशासनम् ॥

इति सुबालोपनिषदि पञ्चम खण्ड ॥

---

हेतुकथनीभावनिषेधात् प्रतिहति निषिद्धा भवति । अप्रतिहतज्ञान इत्यर्थ । **नप्रज्ञ.** प्रकृष्ट ज्ञान प्रज्ञा । अपरोक्षज्ञान प्रकृष्टज्ञानम् । इन्द्रिययोगाभ्यासादिजन्यज्ञानरहित इत्यर्थ । **नाप्रज्ञः** तथाऽपि न *प्रकृष्टज्ञानशून्य इत्यर्थ । अपितु हेतुनिरपेक्षस्वाभाविकसर्वसाक्षात्कारवा* निल्यर्थ । **नो विदित वेद्य नास्तीति** । तस्य सर्वेश्वरस्य विदितमतीत-ज्ञानविषयो नास्ति । **वेद्यम्** आगामिज्ञानविषयश्च नास्ति । किंतु सर्वं नित्यज्ञानगम्यमित्यर्थ । **इत्येतन्निर्वाणमनुशासनम्** । एव सर्वेश्वरस्य गुणविभूतिप्रकर्षवैशिष्ट्यविषयमिदमनुशासन मोक्षहेतु । **इति वेदानु शासनम्** वेदपुरुषस्योपदेश । अभ्यास समाप्तिद्योतक , आदरकृतो वा॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनो श्रीरङ्गराजदिव्याज्ञालब्ध
वेदव्यासापरनामधेयस्य श्रीसुदर्शनार्यस्य कृतिषु
सुबालोपनिषद्विवरणे पञ्चम खण्ड ॥ *
॥ श्रीसुदर्शनार्यमहादेशिकाय नम ॥
शुभमस्तु

---

*एतदुपरि इद भाष्य नोपलभ्यते । तावता एतदुपरि नेयमुप निषदिति तु न मन्तव्यम् । प्रत्यक्षविरोधात् एतद्भाष्यश्रीभाष्यादि-विरोधाच्च । उपरितनानि वाक्यानि हि श्रीभाष्यादावत्र च तत्र तत्रोदाहृतानि ।

वित्युच्यते, न प्रज्ञानघन इत्यादिना मुक्तस्य जाग्रत्स्वप्नसुषुप्तवैलक्षण्य-मुच्यते । अपि नो इत्यादिना च तस्य सार्वज्ञ्यम् । एतन्निर्वाणमिति च, 'निर्वाणमय एवायमात्मा ज्ञानमयोऽखिलः' इत्युक्तरीत्या आनन्दरूपता । तथाच आनन्दमये लीनस्य सार्वज्ञिकसार्वकालिक-ज्ञानभोगसाम्यात् तदविशेषात् लयात्मतेति पूर्वोक्तविवरणरूपत्व-मुपरितनसंदर्भस्येति चेन्न—

सर्वनयन इत्यादेः लयात्मेत्यन्तस्य परमात्मपरत्वात्, नान्तःप्रज्ञ इत्युपरितनप्रथमान्तानामपि तत्परत्वौचित्यात् मध्यवाक्यस्यापि तद्विषयत्वस्यावश्यकत्वात् । अन्यथा एकत्वं नास्ति इति अद्वैतमत-निषेधः ; द्वैतं नास्तीति द्वैतमतनिषेधः ; तेन विशिष्टाद्वैतमतसिद्धि-रित्यादिकथनस्याप्यापत्तेः । नान्तःप्रज्ञ इत्यादौ अस्तीत्यप्रयोगात् नञो भेद एवार्थः, न संसर्गाभावः । एवं तादृशतादृशात्मभेदे कथिते सर्वथा असत्त्वमापतेदिति नाप्रज्ञ इति तन्निषेधः कृतः । तर्हि कियत् तज्ज्ञानमित्यत्र सर्वविषयकमिति अपि नो विदितमित्यादिनोच्यते। ननु 'नाप्रज्ञं' इत्यत्र प्रज्ञा नाम प्रमा। अप्रज्ञत्वं भ्रान्तत्वम् । तन्निषेध इत्य-र्थोऽस्तु' इति चेत्—अत्यन्ताप्रसक्तनिषेधस्तदा स्यादिति। अपि नो विदि-तमित्यत्र वर्तमानवेदनविषयनिषेधाभावात् न सर्वनिषेधे तात्पर्यम् । तत् सिद्धं परमात्मनः सर्ववैलक्षण्यप्रतिपादकमिदं सर्वमिति ।

इतः परं सुबालोपनिषदि एकादश खण्डाः शिष्यन्ते । तेषां भाष्यादर्शनात् परिष्कारमात्रं भविष्यति ।

श्रीः

विवरणकृतां व्यासार्याणां प्रणम्य पदाम्बुजे
विनतनिखिलाचार्यश्रेणिर्विधित्सति विस्तरम् ।
अनधिगतान् अन्यां व्याख्यामशेषपरिष्कृति-
प्रवणहृदयः षष्ठात् खण्डात् स्वकीयकृतेर्मनाक् ॥

प्रथमे खण्डे नसन्नासन्नसदसत् किञ्चित् प्रलयकालस्थितं प्रत्यबोधि । तदेव सृष्टिपश्चाद्भाविनं प्रलयमुपवर्ण्य, परस्तात्सद्वा-

सन्नमद्सदिति अन्वयादि । तत्र, 'दिग्देशकालेष्वस्ताति:' इति पाणिनिस्मरणात् कालार्थकत्वस्यापि संभवात् परस्तादित्यस्य, 'तमः परे देव एकीभवति' इत्युक्तैकीभावानन्तरकाले इत्यर्थाङ्गीकारे, येन देवेनैकीभावः तमस उक्तः, स एव नसन्नासन्नसदसदित्युक्त इति प्रतीयत एव । तमसस्तत्रैकीभूततया देवस्यैव प्राधान्यात् तस्यैव नमदित्यादिना ग्रहणौचित्यात् । प्रथमखण्डे नसदित्यादिनोक्तदेव, 'तस्मात् तमः संजायते' इति तमआविर्भावोक्तेश्च । परस्तादित्यस्य, 'आदित्यवर्णं तमसः परस्तात्' इत्यादिश्रुतिशैलीमनुरुध्य देशपरत्वेऽपि, प्रकृतिमण्डले सृष्टिं विधाय विहारपरः परो देवः प्रलये एतद्व्यापारादुपरतः परस्तात् नसदित्याद्युक्तप्रकारेणावस्थित इत्युक्तं भवति । एतावता स परो देव इति प्रतिज्ञातम् । तृतीयखण्डे स एव चेतनाचेतनवैलक्षण्येन मन्तव्यात्मत्वेनोपदिष्टः । तदेवात्मत्वमुपपादयितुं प्रवृत्य चतुर्थे हृदयान्तः तस्य स्थितिं मनसि निधाय जीवस्य जाग्रदाद्यवस्थाः कथयित्वा, तत्र ग्राह्यग्राहकादिषु सर्वत्रायमात्माऽस्ति, हृदयाकाशे चेति तादृशात्मोपासनं प्रदर्शितम् । अथ तस्येतरवैलक्षण्यमुपवर्णितम्, 'एष सर्वेश' इत्यादिना ।

"षाड्गुण्याद् वासुदेवः पर इति स भवान् (भगवन्?) मुक्तभोग्यो बलाढ्यात्

बोधात् संकर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् ।
प्रद्युम्नः सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो

बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज ॥"

इत्युक्तरीत्या द्विकद्विकरूपेण विभक्तगुणमध्ये ज्ञानम्, ऐश्वर्यम्, पालनसामर्थ्यञ्च सर्वेश इत्यादिना निर्दिश्य तेन व्यूहत्वमुपक्षिप्य, स एवान्तर्यामितया सर्वसृष्टिस्थितिसंहारकारणमित्युपपाद्य, मुक्तौ लयोऽपि तत्रैवेत्युपरि उपदिष्टम् । स च जगन्निमित्तोपादानभूतो मोक्षप्रदः परो देव आनन्दमयः, स यश्चायं पुरुषे, यश्चासावादित्ये, पुण्डरीकाक्षः

॥ अथ षष्ठः खण्डः ॥

नैवेह किञ्चनाग्र आसीदमूलमनाधारम् ।

---

पुरुषोत्तमो नारायण इति च तत्र सुबोधमेव । अथापि उक्तोपासनफलभूतपरमपदप्राप्तिप्रकारपरिशीलनार्थमुपरि प्रवृत्तेयमुपनिषत् षष्ठे खण्डे परमपदस्वरूपमुपवर्णयन्ती पूर्वोक्तं कारणं नारायण इति च मुक्तकण्ठमाह । तेन तत्स्थानमेव परमं पदमिति प्रतिष्ठापितं भवति । तदा च परस्तान्नसदित्यत्र परस्तात्पदार्थोऽपि स्फुटं प्रदर्शितो भवतीति ।

तत्र कोऽसौ देवः परस्तात् स्थितः । यदि च स परस्तात् स्थितः, तदा तदाधारदेशादेः सद्भावावगमात् असदेवेदमग्र आसीदित्यादि कथम्? अथ सर्वसृष्ट्यारम्भे स देशो नास्ति, तर्हि तदाधारकः स देवोऽपि नास्तीति अन्यदेव किञ्चित् जगत्कारणं वक्तव्यम् । कारणं तु ध्येय इति श्रवणात् तदेव मुक्तये उपास्यं स्यात्, न तु प्रागुक्तो देव इत्याशङ्कायाम्—, न सृष्ट्यारम्भकाले सर्वं न पदार्थान्तरम्, नापि तस्माद् देवादन्यः कारणम्, येनान्योपासनं प्रसजेत् । स एव तु देवः सृष्टिस्थितिसंहारकारणमिति दशमखण्डपर्यन्तेन भागेनोपदिश्यते नैवेहेति । वाक्यमिदम् अन्तर्याम्यधिकरणे श्रीभाष्ये उपात्तम् । इह = तमोमण्डले । अमूलमिति अकारणकोक्तावपि आधारसापेक्षनित्यपदार्थान्तरवत् साधारत्वप्रतीतिः स्यात्, तद्व्यवच्छेदाय अनाधारमिति । उत्पत्तौ स्थितौ च परसापेक्षकार्यवस्तुविलक्षणम्, स्थितौ परसापेक्षनित्यपदार्थविलक्षणञ्च यत् प्रथमकारणम्, तत् इह प्रकृतिमण्डले किञ्चिद्रूपेण नासीदित्यर्थः । तथा च नित्यविभूतौ तस्यानेकात्मना तदाऽवस्थानेऽपि प्रकृतिमण्डले तथावस्थानाभावात् असद्वा इदमग्र आसीदिति प्राकृतकार्यात्मना दृश्यमानस्यैतन्नामरूपविभागराहित्यवर्णनमुपपन्नम् । परस्तादित्युक्तो देशश्च न कदाऽपि

इमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः ।

---

जायते, नापि नश्यति ; नापि तस्य शरीरं देवं प्रति आधारता ; अनाधारकत्वात् । प्रत्युत स देहोऽपि तद्देवधार्य एव । कामं तु तदीयो दिव्यमङ्गलविग्रहः तद्देहाधारको भवितुमर्हतीति । तावता न काचित् क्षतिरित्युक्तं भवति । अत्र किञ्चिदिति पदं, इमाः प्रजाः प्रजायन्त इति वाक्यविवक्षितकार्यान्तर्गतकिञ्चित्परम् ।

इमाः प्रजाः प्रजायन्त इत्यत्र तत इति पूरणीयम् । जनिकारणं स्पष्टं निर्दिशति दिव्यो देव एको नारायण इति । यद्वा प्रजायन्त इत्यन्तस्य पृथग्वाक्यत्वं विनैव निर्वाहे वाक्यभेदो न युक्तः । यदाहुः, 'संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति । अतः, 'दिव्यो देव एको नारायणः इमाः प्रजाः प्रजायन्ते' इतीदमेकं वाक्यम् । न च प्रजायन्त इति बहुवचनानुपपत्तिः ; 'सुवर्णं खदिराङ्गारसवर्णे कुण्डले भवतः' इति विधेयानुसारेणापि तिङ्विभक्तिवचनप्रयोगस्य महाभाष्ये दर्शितत्वात् । उदाहृतञ्चेदं न्यायपरिशुद्धौ । अत्र इमाः इति प्राकृत-पदार्थं निर्दिश्य कारणे तद्वैलक्षण्यं दिव्य इत्यादिना दर्शितम् । दिवि नित्यविभूतौ भवो दिव्यः । परस्त्विति प्रागुक्तविवरणमेतत् । देव इति पदे देवे इति प्रागुक्तपरामर्शः । प्रजारूपेण जननं तस्य लीलार्थं केवलम् । एवं जायमानोऽपि द्योतमान एव, अकर्मवश्यत्वादित्यु-च्यतेऽनेन । ब्रह्मरुद्रादीनामीदृशं देवत्वं नास्तीति एक इत्यनेनोक्तम् । अयमेक एव देवः ; अन्येषां तु जीवत्वात् देवत्वं न पुष्कलमिति च भावः । उपादानातिरिक्तनिमित्तकारणान्तरव्यवच्छेदो वा एक इति । देवान्तरशङ्कां दूरत एव निरस्यता नामविशेषेण तं निर्दिशति नारायण इति । एतन्नामार्थविशेषाश्च रहस्यग्रन्थेष्वनुसंधेयाः ।

पूर्वं प्रकरणेषु चक्षुरादिषु, महदादिषु च पृथिव्यादिषु यत्राऽऽत्मन उपासनमुक्तम् , स तत्र तत्रानुक्तानेकाकारोऽयमेव नारायण इत्याह

चक्षुश्च द्रष्टव्यं च नारायणः । श्रोत्रञ्च श्रोतव्यं च नारायणो घ्राणं च घ्रातव्यं च नारायणो जिह्वा च रसयितव्यञ्च नारायणः । त्वक् च स्पर्शयितव्यञ्च नारायणो मनश्च मन्तव्यञ्च नारायणो बुद्धिश्च बोद्धव्यञ्च नारायणोऽहङ्कारश्चाहङ्कर्तव्यञ्च नारायणः चित्तञ्च चेतयितव्यञ्च नारायणो वाक् च वक्तव्यञ्च नारायणो हस्तौ चाऽऽदातव्यञ्च नारायणः । पादौ च गन्तव्यञ्च नारायणः । पायुश्च विसर्जयितव्यञ्च नारायणः । उपस्थश्चाऽऽनन्दयितव्यञ्च नारायणः ।

धाता विधाता कर्ता विकर्ता दिव्यो देव एको नारायणः ।

आदित्या रुद्रा मरुतो वसवोऽश्विनौ ऋचो यजूंषि सामानि मन्त्रोऽग्निराज्याहुतिर्नारायणः ।

---

चक्षुश्चेत्यादिना । पदञ्च प्रजारूपेण चक्षुरादिरूपेण स जात इहेति ज्ञापितं भवति । यद्यपि मनोबुद्ध्यहङ्कारचित्तशब्दाः एकस्यैवान्तःकरणस्यावस्थाभेदविशिष्टस्य वाचकाः इत्युक्तं श्रीभाष्ये, 'अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते' इति-तथाप्यत्र पूर्वखण्डभाष्यगतिरेवानुसर्तव्या ।

धाता सर्वस्य स्रष्टा । विधाता श्रुत्यादिरूपशासनकर्ता । कर्ता पुण्यपापोदासीनरूपजीवकर्मप्रधानकर्ता । विकर्ता तज्जनितजीवसुखदुःखानुरूपलीलारसानुभावी । हेयसुखदुःखानुभवरूपनिकारस्तु न तस्य भवति । आरोपस्तु स्यात् । यथोक्तं नामसहस्रभाष्ये, "स्वार्थहर्षशोकाद्यभावेऽपि परार्थनत्प्रसक्तिरदोषः" इति । अर्थः= फलम् । प्रसक्तिः= आरोपः । परफलभूतदुःखाद्यारोपमात्रं भगवता स्वस्मिन् क्रियत इति तदर्थः । आराध्यदेवता-तत्प्रतिपादकवेद-तदाराधनादीनामपि तन्मयत्वमाह आदित्या इत्यादिना ।

उद्भवः संभवो दिव्यो देव एको नारायणः ।
माता पिता भ्राता निवासः शरणं सुहृत् गतिर्नारायणः ।

---

उद्भवः उत्पत्तिस्थानम्; संभवः प्रलयस्थानम्; 'प्रभवप्रलयस्थानम्' इति गीतोक्तेः। अथवा उद्भवः—अचेतनगतः स्वरूपविकारः। संभवः—चेतनस्य स्वभावविकारो देहप्राप्त्यादिः। लोके मातापित्रादिभावेन नियतां तद्भावः कर्माधीनः कादाचित्कश्चेति सोपाधिकः; नारायणस्य तु निरुपाधिक इत्याह मातेत्यादिना। ननु न स्वरूपेण मातृत्वादिकमिहोच्यते किन्तु लोके मात्रादिरूपेण प्रतिपन्नानां नारायणान्तर्यामित्वम्; चक्षुश्च द्रष्टव्यञ्चेत्यादिना अन्तर्यामित्वनिबन्धनस्य सामानाधिकरण्यस्यैव प्रक्रमात्। एवमेव चोपबृंहितमिदं गीतासु—

'पिताऽहमस्य जगतो माता धाता पितामहः।'
'गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्' इति—

इति चेत्—स्वरूपेण मातृत्वादिपरमप्युपबृंहणमस्ति। यथा

'नारशब्देन जीवानां समूहः प्रोच्यते बुधैः।
तेषामयनभूतत्वान्नारायण इहोच्यते॥
तस्मान्नारायणं बन्धुं मातरं पितरं गुरुम्।
निवासं शरणञ्चाहुर्वेदवेदान्तपारगाः॥' इति।

अत एव *नामसहस्रभाष्ये* शरणपदभाषणावसरे एतद्वाक्यमुपात्तम्, 'निवासः शरणं सुहृद् गतिर्नारायणः' इति। एतदनुसारेणैव पूर्वं धाता विधातेत्यादीनामपि साक्षादेव सामानाधिकरण्यं स्वीकृतम्, यत्र बाधः तत्र परं परम्परयेति कृत्वा। मात्राद्यनुकूलजनान्तर्यामित्वमिव प्रतिकूलान्तर्यामित्वमप्यस्य अविशिष्टमिति क एतद्वर्णनकृतो विशेषः। साक्षान्मात्राद्यर्थविशेषकथने च महिमातिशयः प्रदर्शितो भवति; अन्येषां मातृत्वादिकमेतदधीनमित्यर्थोऽप्यर्थसिद्धो भवतीति तादृशोपबृंहणभावः।

विराजासुदर्शनाजितासोम्यामोघाकुमाराऽमृतासत्यामध्यमानासीरा-शिशुरासुरासूर्याभास्वरा (शिशुसूर्याऽसुराभास्वती ?) विज्ञेयानि नाडी-नामानि दिव्यानि ।

गर्जति गायति वाति वर्षति । वरुणोऽर्यमा चन्द्रमाः कला कलिर्धाता ब्रह्मा प्रजापतिर्मघवा दिवसाश्चार्धदिवसाश्च कला. कल्पाश्चोर्ध्वं च दिशश्च सर्वं नारायणः ॥

पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥

---

सर्वेन्द्रियकन्दभूतहृदयसंबन्धिन्यो याः चक्षुरादिनाड्य आत्मा-धारत्वेन प्राङ् निर्दिष्टाः यो नाड्यामिति, तासामपि नारायणात्मकत्व-विवक्षया तासां नामानि पठति विराजेति । 'तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च' इत्युक्तरीत्या सर्वं कार्यं तदधीनमित्युच्यते गर्जतीत्यादिना । प्रधानदेवतानां प्रकृतिप्राकृतानामिव कालपरिणा-मादीनामप्यविशेषं तदन्तर्यामिकत्वमुच्यते वरुण इति । कला चन्द्र-कलादिः । कलिः अन्तिमयुगदेवता । न केवलमेतत्सर्गान्तर्गतम्, पूर्वोत्तरसर्वसर्गादिगतमपि स इत्युच्यते पुरुष इति । एवं तावत् प्राकृतप्रपञ्चाभेदनिर्देशमुखेन प्रपञ्चं प्रति आत्मत्वं तदीशानत्वादिरूप-मुपक्षिप्य परस्तादिति प्रागुक्तपरमपदैश्वर्यमपि तस्य विस्तृणाति उतेति । तत्र नामरूपविभागभाजां बहूनां सद्भावादेव एतत्खण्डारम्भे इहेति निर्देशः तद्व्यावृत्तये कृत इति ध्येयम् । अमृतत्वस्येशानः मोक्षप्रदः । यद्वा न विद्यते मृतत्वं कस्यापि यत्र, तत् स्थानममृतत्वम् । तस्येशान इति । यत् अमृतत्वम् अन्ने प्राकृतभोगे सति नातिरोहति नातिशयेन भवति । प्रकृतिमण्डलेऽपि प्रत्यक्षितपरतत्त्वानां प्रशमित-रागद्वेषादिकालुष्याणाम्, 'अमृतत्वञ्चानुपोष्य' इति सूचितम्, अमृत-

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत् परमं पदम् ॥
तदेतन्निर्वाणानुशासनम् । इति वेदानुशासनम् इति वेदानुशासनम् ।

॥ इति सुबालोपनिषदि षष्ठः खण्डः ॥

---

यद् भवति' इति श्रुतं किञ्चिद्रूपममृतत्वमस्तीति विमृश्य अति इति प्रयुक्तम्। यद्वा अमृतत्वाख्यं परं पदम् अन्नेन, "षैगुण्यं षड्गुणाढ्यञ्च द्विधास्तं परिकीर्तितम्। षैगुण्यमन्नं यद्वानामितरेषामथेतरत्" इत्युक्तेन भगवद्रूपेण ज्ञानशक्त्यादिगुणषट्कपूर्णेनान्नेन अतिरोहति = अधिकं प्रतिक्षणमेधते इत्यर्थः ।

तस्य स्थानस्य सदापश्यत्सूरिसंकुलत्वमाह तदिति । तदिति अप्राकृतार्थकम् । तेन विष्णुपुराणोक्त (२. ८.) ध्रुवाधारभूत-सत्य-लोकार्वाचीन-प्राकृतविष्णुपरमपदरूपसंनिकृष्टलोकव्यावृत्तिः । सदेति मुक्तव्यावृत्त्या सूरय इति नित्यसूरीणामेव ग्रहणम्। परमपदं वर्णयति दिवीति । दिवि अन्तरिक्षे आततं व्याप्तं चक्षुः सूर्य इव, ज्योतिर्मय-मिति यावत् । एवं मुक्तसेव्यमानमपि तदित्याह तदिति । तत् = तत्र यद्युद्युभिप्रसिद्धे, विप्रासः, 'विष्णुं क्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते तत्त्वदर्शी' इति तत्त्वज्ञानसंस्तवधीनविप्रभावाः, 'श्रोत्रियस्य चाकामहतस्य' इत्युक्ताः क्रमेण प्राप्तपरमपदाः विपन्यवः विविधपनायनपरायणाः जागृवांसः अत्यन्ताविर्भूतबोधाः समिन्धते परिपूर्णब्रह्मानुभवपरीवाहभूतकैङ्कर्यार्थहिनानन्तदिव्यदेहा दीव्यन्ति, यदेव विष्णोः परमं प्रकृष्टान्तररहितं पदम्, अन्यानि तु विष्णुपदानि अर्वाचीनानीति॥ एवमिह पूर्वोपदिष्टोपासनप्राप्यं परमपुरुषस्य विष्णोः नारायणस्य नित्यं स्थानं अमदा इत्यादिपूर्वोक्तधुत्यविरोधेन भावितम्॥

इति श्रीवात्स्यसुदर्शनार्य श्रीरङ्गरामानुजाचार्यरचितेषु
उपनिषद्भाष्यकारे सौबालषष्ठखण्डपरिष्कारः ॥

॥ अथ सप्तमः खण्डः ॥

*अन्तश्शरीरे निहितो गुहायामज एको नित्यः ;*

---

नन्वु प्रथमखण्डे, यस्य तमसः प्रलये देवे एकीभावः, तस्मात् भूताद्युत्पत्तिवर्णनात् तमस एवोपादानत्वं प्रतीयते । देवस्य तु, 'मृत्युमसृजत' इत्युक्तरीत्या निमित्तत्वम् । तृतीयखण्डे असद्वा इत्यत्रापि तस्योपादानत्वं न स्पष्टम् । पञ्चमखण्डे च चक्षुर्द्रष्टव्यादि-सर्ववस्तुगततया ततो भिन्नत्वेनैव स आत्मा निर्दिष्टः । षष्ठे तु देवे सर्वकार्याभेदवर्णनात् कार्याभिन्नं कारणं प्रतीतं तत् उपादानमिति च ज्ञेयं भवति । न च चक्षुरादिषु वर्तमानत्वेन प्रागुक्तस्य चक्षुराद्यभेदः संभवति, येन समानाधिकरणनिर्देशो मुख्यः स्यादित्याशङ्कायाम्— सर्वस्यापि वस्तुनः तं प्रति शरीरत्वात्, शरीरवाचिनाञ्च शब्दानां शरीरिपर्यन्तार्थकत्वस्य लोकवेदसंप्रतिपन्नत्वात् सामानाधिकरण्यं मुख्यमेव । अतः तत्तद्वस्तुविशिष्टं ब्रह्म कार्यं कारणञ्च भवतीति हेतोः षष्ठदर्शितमुपादानत्वमप्युपपन्नमिति बुबोधयिषया सर्वस्य तच्छरीरत्वं प्रपञ्चयति सप्तमे अन्तश्शरीर इति । जायमानानां प्रजानां सर्वासां शरीरस्यान्तः हृदयगुहायामस्य वर्तमानत्वात् अस्य शरीरस्य तत्त्वस्य प्रत्यगात्मनश्च तं प्रति शरीरत्वात्, 'इमाः प्रजाः प्रजायन्ते दिव्यो देव एकः' इति सामानाधिकरण्यमुपपन्नम् । शरीरान्तःस्थिति-दशायामिव शरीरात् पृथक्स्थितावपि जीवस्तत्स्वरूपमिक इति उपरितनरीत्या ज्ञातव्यम् । अस्मिन् शरीर इव, येषामिदं संघातरूपम्, तेषु पृथिव्यादिभूत—चक्षुरादिकरणेषु तत्कारणेष्वपि तच्छरीरत्वप्र-विशिष्टमिति सर्वमपि सामानाधिकरण्यं सुस्थमिति ज्ञापनाय पीठिकेयम् ।

न केवलं शरीरतया सर्वप्रतिपन्नवस्तुमात्रे तस्य आत्मतया स्थितिः, कार्यकारणात्मसु सर्वेषु पदार्थेष्वपि तस्य तथाभाव इति ज्ञाप-यितुं प्रायः सृष्टिक्रमव्युत्क्रमेण पृथिव्यादिप्रधानान्तसर्ववस्तुविवक्षया

यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरे सञ्चरन्, यं पृथिवी न वेद ; यस्यापः शरीरं योऽपोऽन्तरे सञ्चरन् यमापो न विदुः ; यस्य तेजः शरीरं यस्तेजोऽन्तरे सञ्चरन् यं तेजो न वेद ; यस्य वायुः शरीरं यो वायुमन्तरे सञ्चरन् यं वायुर्न वेद, यस्याकाशः शरीरं य आकाशमन्तरे सञ्चरन् यमाकाशो न वेद, यस्य मनः शरीरं यो मनोऽन्तरे सञ्चरन् यं मनो न वेद, यस्य बुद्धिः शरीरं यो बुद्धिमन्तरे सञ्चरन् यं

---

प्राधान्येन केषाञ्चित् तच्छरीरत्वमाह यस्य पृथिवीत्यादिना। बृहदारण्यके काण्वमाध्यन्दिनभेदेन द्विविधेऽपि अन्तर्यामिब्राह्मणे किञ्चिद्भेदेनायमर्थ एव प्रत्यपादि। एषां पर्यायाणां शरीरात्मभावप्रतिपादनार्थप्रवृत्तत्वात् शरीरमिति तस्य प्रथमतो निर्देशः। तत्र शरीरभावे परमात्मनः (नियाम्यत्वाधारत्वशेषत्वप्रतिसंबन्धिरूप) बहिर्वर्तित्वाशङ्काप्रयोजनतया अन्तर्वर्तित्वमात्रमाह यः पृथिवीमन्तरे सञ्चरन् इति। पृथिवीमन्तरे अन्तःपृथिव्याम्। सप्तम्यर्थे द्वितीया; 'य एतस्मिन् सर्वस्मिन्नन्तरे संचरति' इति पूर्वानुसारात्। सञ्चरन्निति तिष्ठन्नित्यर्थकम्, विभुनः परमात्मस्वरूपस्य चलनायोगात्। अन्तर्वर्तित्वञ्च यद्देशावच्छेदेन पृथिव्यादिकमस्ति, तत्र देशे सर्वत्र तेन सह वर्तमानत्वम्, संचरन्निति शब्दस्यार्थान्तरवर्णनात् अन्तर इति पदस्यानन्यथायोग्यार्थवर्णनं युक्तम्। आत्मनोऽन्तरेऽपि स्थितेर्वक्तव्यत्वादित्यन्यत्र विस्तरः। यं पृथिवी न वेदेति। प्रत्यक्षायोग्यस्यानुपलम्भमात्रेण न निषेध इति व्यक्तये एतदुक्तिः। ननु देवतारूपपृथिव्याः वेदितृत्वयोग्यता स्यात्। अचेतनायास्तु पृथिव्याः तदभावात् किमर्थं न वेदेत्युक्तिरिति चेत्—परमात्मवेदनविषये अचेतनतुल्यं चेतनस्याप्यसामर्थ्यमिति ज्ञापनार्थमेतदुक्तिरिति। भूतकथनं तन्मात्रोपलक्षणम्। मनआदिचतुष्टयमप्येकान्तःकरणप्रभेदः। पूर्ववत् महदहङ्कारग्रहणं वा।

बुद्धिर्न वेद ; यस्याहङ्कारः शरीरं योऽहङ्कारमन्तरे सञ्चरन् यमहङ्कारो न वेद ; यस्य चित्तं शरीरं यश्चित्तमन्तरे सञ्चरन् यं चित्तं न वेद ; यस्या-व्यक्तं शरीरं योऽव्यक्तमन्तरे सञ्चरन् यमव्यक्तं न वेद ; यस्याक्षरं शरीरं योऽक्षरमन्तरे सञ्चरन् यमक्षरं न वेद ; यस्य मृत्युः शरीरं यो मृत्युमन्तरे

---

मिन्द्रियान्तराणामप्युपलक्षणम्। अत्र आत्मपर्यायो नोक्तः, स बृहदारण्यके, 'य आत्मनि' इति, 'यो विज्ञाने' इति चोक्त इहापि ग्राह्यः। न चाक्षरपदेनेह आत्मनिर्देश एवेति वाच्यम्—अचेतनमध्य-पाठेन तदयोगात्। 'अक्षरात् परतः परः' इति अक्षरशब्दस्य अचेत-नेऽपि प्रयोगात्। पूर्वम्, 'अक्षरं तमसि लीयते' इत्युक्त्या अक्षरस्य तमसि लयादचेतनविषयत्वावसायाच्च। न हि चेतनोऽचेतने लीयते। न च लीयमानस्य तस्य क्षरत्वात् अक्षरत्वं कथमिति वाच्यम्—अचेतनसंबन्धिपरिणामान्तरात् पूर्वं न क्षरतीत्येतावता तद्वाचोयुक्तेः। अस्तु वा—तमोदशायां तदत्यन्तमस्फुटमभूत्। द्रव्यमिदं चेतनाचेतनात्मकमिति विवेकार्हता ततोऽस्तीति लक्षणया अक्षरपदेन तदुक्तिरिति। तदुक्तं प्राक् भाष्य एव, "चिदचिद्वस्तुनि अक्षरशब्द उपचरितः" इति। एवंसति चेतनविशिष्टाचेतनस्य परमात्मशरीर-त्वोक्तौ विशेषणेऽपि तत् उक्तं भवतीति कथ्यतामिति चेत्—काम-मस्तु। एवम् 'अन्तश्शरीरे' इति प्रथमवाक्येऽपि आत्मनो शरीरत्व-मभिप्रेतं स्यात्; गुहायामिति जीवग्रहणसंभवात्। एवम्, 'सर्व-भूतान्तरात्मा' इति वक्ष्यमाणपदेनापि तत्सिद्धिः। अथापि बृह-दारण्यके शाखाद्वये, 'य आत्मनि तिष्ठन्, यो विज्ञाने तिष्ठन्' इति शुद्धजीवान्तर्यामित्वस्यापि स्पष्टं कीर्तनं प्रकृतेऽप्यपेक्षितं ग्राह्यम्। मृत्युरिति स्वाप्नप्रमाणात् तम उच्यते। 'तमः परे देव एकीभवति' इति प्रागुक्तमेव, 'मृत्युर्वै परे देव एकीभवति' इति प्रसिद्धवन्निर्देक्ष्यते। ततोऽपि मृत्युस्तमः। तस्य मृत्युत्वं स्वयमविलयस्य सतः सर्वाचेतन-परिणामलयकरत्वात्।

सञ्चरन् यं मृत्युर्न वेद ; एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण एतां विद्यामपान्तरतमाय ददौ । अपान्तरतमो ब्रह्मणे ददौ । ब्रह्मा घोराङ्गिरसे ददौ । घोराङ्गिरा रैक्वाय ददौ । रैक्वो रामाय ददौ । राम. सर्वेभ्यो ददौ । इत्येवं निर्वाणानुशासनम् । इति वेदानुशासनम् इति वेदानुशासनम् ॥

॥ इति सुबालोपनिषदि सप्तमः खण्डः ॥

---

उक्तानां सर्वेषां यच्छब्दानां प्रति संबन्धी एष इति शब्दोऽयमिति महावाक्यमेतत् । ननु एतावन्ति चेत् अस्य शरीराणि, तर्हि तस्येतरशरीरप्रापकाः पाप्मानः परिसंख्यातुमशक्याः स्युः, तत्राह अपहतपाप्मेति । दिव्य इत्यनेन अप्राकृतदिव्यमङ्गलविग्रहसद्भाव एव एतच्छरीरभावोऽपि केवलतदिच्छाकृत इति भावः । इमं परब्रह्मपरमात्मनोः शरीरात्मभावं वेदान्तप्रतितन्त्रसिद्धान्तमबुध्यमानाः प्रायो भेदश्रुतित्यागेन अभेदम्, अद्वैतश्रुतीरुपेक्ष्य भेदञ्चाद्रियमाणाः अपक्वबुद्धीन् भ्रामयन्ति । तस्मात् रहस्यमिदं न प्रसर्तव्यमिति अत्र श्रद्धातिशयजननाय प्रकृतार्थप्रापक गुरुपरम्परामाह एतां विद्यामिति । अत एव भगवद्रामानुजस्वामिपादा एवैतद्रहस्यवेदितार इति प्रशस्यते, 'यथैतं यतिसार्वभौमकथितम्' इत्येवम् । ददावित्यत्र कर्त्रन्तराकथनात् चतुर्मुखस्यापि एतत्परत्वं प्रतीत्यतया वक्ष्यमाणत्वाचोचित्यात् नारायणः कर्तेत्यवसीयते । तस्य पूर्वप्रकृतत्वाच्च । अस्तु वा स एव इत्यारभ्य ददौ इत्यन्तमेकं वाक्यम् ; भेदे प्रमाणाभावात् । श्रीभाष्यादिषु नारायण इत्यन्तमात्रनिर्देशः तावन्मात्रस्य तत्रोपयुक्तत्वात् । न तेन तत्र वाक्यसमाप्तिप्रसक्तिः । अपान्तरतमायेति । 'अपान्तरतमो नाम वेदाचार्यः स उच्यते' इति तस्यैव सर्ववेदवेदित्वं भारते भणितम् । तत्र हि, 'सांख्यस्य वक्ता कपिलः' इत्यादितत्तन्मतप्रवर्तकमहर्षीनपेक्ष्यास्य महिमा गमितोऽस्ति । 'पाञ्चरात्रस्य कृत्स्नस्य वक्ता

॥ अथाष्टमः खण्डः ॥

अन्तश्शरीरे निहितो गुहायां शुद्धः सोऽयमात्मा ।

---

नारायणः स्वयम्' इति ततोऽतिशयितो नारायण एव, य इहापान्तरतमस्याचार्यो निर्दिष्टः । तस्यैव वेदव्यासरूपेणावतारश्चोक्तोऽस्ति इति । अपान्तरतमाः इति भारतपाठः ।

एवमत्यन्तरहस्यार्थभूतस्य शरीरात्मभावस्योपदेशेन पूर्वखण्डोक्तं सामानाधिकरण्यं निरूढम् ।

इति उपनिषद्भाष्यपरिष्कारे सौबालसप्तमखण्डपरिष्कारः ॥

ननु सत्यस्मिन् शरीरात्मभावे सर्वमेतदुपपद्यते । स एव न स्वीकर्तुं शक्यते । तथासति अखिलहेयप्रत्यनीकत्वेनाभिमतस्य सकलहेयसंश्रयत्वप्रसङ्गात् । न च अपहतपाप्मा दिव्य इति तस्य दुःखहेतुभूतकर्मविरहवचनान्नायं प्रसङ्ग इति वाच्यम्—कर्मणां हि दुःखहेतुत्वम् आत्मनः शरीरसंबन्धापादनेन । तत्र यदि कर्मबलाद्वा अन्यथा वा शरीरसंबन्धविशेषः प्राप्तः, तर्हि दुःखस्पर्शमवर्जनीयम् । अन्तश्शरीरे स्वेच्छया नियमनार्थं प्रविष्टस्यापि अपुरुषार्थयोगोऽवर्जनीयः । पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव । ततश्चायं प्रश्नः समाधातुमशक्य एव लक्ष्यते—यः खलु

'एको यस्यास्ति देहः स भवति विविधानन्तदुःखैकभोक्ता
विश्वं देहः प्रभोश्चेत् स कथमतिपतेत् विश्वदुःखानुभूतिम् !'

इति । एवमाशङ्कायाम्—'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः' इति न्यायेन परं तत्त्वमिदं परमविलक्षणं शास्त्रप्रतिपन्नम्, न तत्र सामान्यतोदृष्टन्यायावतार इति तस्य सर्वदोषदूरत्वं मुक्तकण्ठं वक्तुमष्टमः खण्ड आरभ्यते । निहितो गुहायां शुद्ध इति । स्वयमयं निहितः शरीरे, न मे दुःखलेशप्रसक्तिरिति । तदयं शुद्ध एवेत्यर्थः । शरीरस्य दुःखहेतुत्वोपयिकानि विशेषणान्यभिधाय तथात्वेऽपि हेयप्रतिभट-

सर्वस्य मेदोमांसक्लेदावकीर्णे शरीरमध्येऽत्यन्तोपहते चित्रभित्तिप्रतीकाशे गन्धर्वनगरोपमे कदलीगर्भवन्निःसारे जलबुद्बुदवच्चञ्चले निःसृतमात्मानमचिन्त्यरूपं दिव्यं देवमसङ्गं शुद्धं तेजस्कायमरूपं सर्वेश्वरम् अचिन्त्यमशरीरं निहितं गुहायाममृतं विभ्राजमानमानन्दं तं पश्यन्ति विद्वांस । तेन लये न पश्यन्ति ॥

॥ इति सुबालोपनिषदि अष्टमः खण्डः ॥

---

त्यमुपपादयति सर्वस्येत्यादिना । अत्यन्तोपहते = तत्तदवयवोपगतैः रोगादिभिः मलमूत्रादिसंगेन चोपप्लुते । निःसृतम् निर्दोषेण प्रविष्टम् । अन्तर्बहिर्व्याप्तम् । अचिन्त्यरूपम् अनुमानदूराद्भुतमङ्गलविग्रहम् । असङ्गम्, 'न मे कर्मफले स्पृहा' इत्युक्तप्रकारम् । तेजस्कायं ज्ञानस्वरूपम् । अरूपं रूपरसादिहेयरहितस्वरूपम् । अचिन्त्यम् स्वकीयदिव्यविग्रहवत् स्वयमप्यनुमानदूरम् । अशरीरम् स्वकर्माधीनशरीरविशिष्टविलक्षणम् । गुहायां हृदयाकाशे निहितम् । अमृतम् 'एष ते आत्माऽन्तर्याम्यमृतः' इति अन्तःस्थितावप्यमृतत्वेनोद्घुष्टम् अत्यन्तभोग्यभूतम् । विभ्राजमानम् 'अनश्नन्नन्योऽभिचाकशीति' इत्युक्तरीत्या विशेषतो द्योतमानम् । न केवलमुक्तिमात्रम् । दर्शनस्यापि संप्रतिपन्नत्वादत्र न संदेग्धव्यमित्याह आनन्दं तं पश्यन्तीति । गन्धर्वनगरं = मेघमण्डले उत्प्रेक्षिताः नगराद्याकाराः । तद्वत् क्षणविशरणशीलस्यापि शरीरस्य चित्रभित्तिप्रतीकाशत्वमिति कश्चिदतिशयोऽस्ति । यथा भित्तेरभावे चित्रं न शक्यं लेखितुम्, तथा शरीराभावे हार्दो न शक्य उपासितुम् । अतस्तत्र गुहानिहितमुपासितं परिच्छिन्नं लये जाते न पश्यन्तीत्याह तेन लये न पश्यन्तीति । इदञ्च लयविषयकजिज्ञासोत्पादनाय आचार्येण प्रस्तुतम् । प्रक्ष्यति चेममेव विषयं समनन्तरमेव शिष्यो रैक्वः । वस्तुतः, लयपर्यन्तमेवमुपासन-

॥ अथ नवम खण्डः ॥

अथ हैनं रैक्वः पप्रच्छ—भगवन्! कस्मिन् सर्वेऽस्तं गच्छन्तीति। तस्मै स होवाच—चक्षुरेवाप्येति। यश्चक्षुरेवास्तमेति, द्रष्टव्यमेवाप्येति। यो द्रष्टव्यमेवास्तमेति, आदित्यमेवाप्येति। य आदित्यमेवास्तमेति विराजमेवाप्येति। यो विराज(?)मेवास्तमेति, प्राणमेवाप्येति, य प्राणमेवास्तमेति, विज्ञानमेवाप्येति। यो विज्ञानमेवास्तमेति,

---

स्याऽऽवृत्तिरपेक्षितेति ज्ञापनायैतदुक्तिरिति च भाव्यम्।

इति उपनिषद्भाष्यपरिष्कारे सौबालाष्टमखण्डपरिष्कारः ॥

एवं सर्वान्तर्वर्तिनोऽपि सर्वदोषदूरत्वमुपवर्ण्य चक्षुराद्यात्मतया तदुपासनं स्थापितम्। एवमुपासीनस्य फलभूमत्वया लयप्रस्तावानुरोधेन लयमधिकृत्यैव पुनः रैक्वप्रश्नमुपक्षिपति अथ हैनमिति। सर्वे=चक्षुःश्रोत्रादिस्थानभेदेनोपासनप्रवृत्ताः सर्वे। यो यदुपासनप्रवृत्तः, तस्य तत्रैव लयः। अत्र चक्षुरादिपर्यायेषु एकैकत्रापि, 'यश्चक्षुषि यो द्रष्टव्ये' इत्यादिना करण-तद्विषय-तद्देवता-तन्नाडी-तन्निर्वाहकप्राण-तज्जन्यज्ञान-तज्जनितानन्द-तत्कन्दस्थान-भूतहृदयाकाशरूपतत्त्वपञ्चकान्तर्यात्मोपासनविधानात् तत्तद्रूपान्तर्यामिण्येव स स उपासको लीयते। तेन परमपदस्थ एव पुरुषे लयः संपद्यते इत्याशयेनाह तस्मै स होवाच चक्षुरेवेत्यादिना। अत्र चक्षुरादिपदानि पूर्वखण्डपर्यन्तोपपादितरीत्या, 'चक्षुश्च द्रष्टव्यञ्च नारायण' इत्यत्रेव परमात्मपर्यन्तानि। अतः उपासिते चक्षुश्शरीरके परमात्मनि लीयते, तल्लय एव द्रष्टव्यशरीरकपरमात्मलयः। एवं तत्तदवच्छिन्नात्मनि उपासिते सर्वत्र लयो द्रष्टव्यः। विराजामिति आकारान्तपाठो युक्तः पूर्वं तथा नाडीनामनिर्देशात्। अन्यथा तत्पर्यायतया विराट्पदमिदमिति मन्तव्यम्। तुरीयमेवाप्येतीति।

आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

श्रोत्रमेवाप्येति । यः श्रोत्रमेवास्तमेति, श्रोतव्यमेवाप्येति ।

---

पूर्वं हृदाकाशे इत्युक्तमेव स्थानप्रमाणादत्र तुरीयपदेन गृह्यते । तुरीयशब्दश्च, "जाग्रत्स्वप्नात्यलसतुरीयमायध्यात्मकमयदुपास्यः" इत्यादौ मूर्छिते प्रयुक्तः । जागरस्वप्नसुषुप्तिस्थानेषु त्रिषु सत्सु तुरीयं मूर्छास्थानम् । तदा हृदयाद् वियुज्य हृदाकाश एव जीवो वर्तत इति तदाकारं तुरीयक्षेत्रम् । इह च चक्षुरादिपदगत तुरीयपदमपि परमात्मपर्यन्तम् । एवमष्टकान्तरात्मन एवामृतत्वादिनोपासनस्य प्रागुक्तत्वात् तुरीये लीनस्य तत्र लय उच्यते तदमृतमित्यादिना । अत्र निर्बीजपदप्रयोगः लयकाष्ठाभूत—परवासुदेवात्मक—शुद्धपरमात्मस्वरूपस्य अमृतमित्यादिपदविवक्षितत्वज्ञापनार्थः ।

अयं प्रश्नाशयः—यथोपासनं प्राप्तिः तत्क्रतुन्यायसिद्धा । अतो यदुपास्यते तत्र लीयत इति वक्तव्यम् । चक्षुरादिनाशानन्तरञ्च तं न पश्यन्तीत्युपरम्या उपासिते लयः उपासकानां न सिद्ध्यतीति । समाधेराशयस्तु—चक्षुर्द्रष्टव्यादित्यादीनां बहूनामुपास्यतया बहुषु लय एकस्य कथं भवतीत्यपि विमृष्टव्यम् । चक्षुरादीनामनेकत्वेऽपि चक्षुराद्यन्तर्यामिण उपास्यस्यैकत्वात् उपास्यपरिच्छेदार्थमेषामुपयोगेऽपि तस्यैकस्यैव मुख्योपास्यत्वात् तत्रैव लयो वाच्यः । अतोऽयमुपासकः चक्षुरेवाप्येति, न त्वन्यम् । न च द्रष्टव्यादिषु लयः कुतो नेति शङ्काप्रसक्तिः, चक्षुर्द्रष्टव्यादीनामेकत्वादेतल्लयस्यैव तल्लयरूपत्वात् । एवमुपलभ्यमानकार्यविशिष्टोपासनाविधानात् तत्तत्कार्ये लय आवश्यक इति न मन्तव्यम् । कार्यात्मनस्तस्य, निर्बीजस्य च तस्यैकत्वात् निर्बीजप्राप्त्यर्थतयैव एवमुपासनस्य विवक्षितत्वादितीतिध्येयम् ।

एवं श्रोत्रमेवेत्यादिपर्यायेष्वपि द्रष्टव्यम् । प्रतिपर्यायं स्त्रीलिङ्ग-

यः श्रोतव्यमेवास्तमेति, दिशमेवाप्येति। यो दिशमेवास्तमेति, सुदर्शनामेवाप्येति। यः सुदर्शनामेवास्तमेति, अपानमेवाप्येति। योऽपान मेवास्तमेति, विज्ञानमेवाप्येति। यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति। य आनन्दमेवास्तमेति, तुरीयमेवाप्येति। यस्तुरीयमेवास्तमेति, तदमृतमशोकमभयमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

नासामेवाप्येति। यो नासामेवास्तमेति, घ्रातव्यमेवाप्येति। यो घ्रातव्यमेवास्तमेति, पृथिवीमेवाप्येति। यः पृथिवीमेवास्तमेति, जितामेवाप्येति। यो जितामेवास्तमेति, व्यानमेवाप्येति। यो व्यान मेवास्तमेति, विज्ञानमेवाप्येति। यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति। य आनन्दमेवास्तमेति, तुरीयमेवाप्येति। यस्तुरीयमेवास्तमेति, तदमृतमशोकमभयमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

जिह्वामेवाप्येति। यो जिह्वामेवास्तमेति, रसयितव्यमेवाप्येति। यो रसयितव्यमेवास्तमेति, वरुणमेवाप्येति। यो वरुणमेवास्तमेति, सौम्यामेवाप्येति। यः सौम्यामेवास्तमेति, उदानमेवाप्येति। य उदानमेवास्तमेति, विज्ञानमेवाप्येति। यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति। य आनन्दमेवास्तमेति, तुरीयमेवाप्येति। यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

त्वचमेवाप्येति। यस्त्वचमेवास्तमेति, स्पर्शयितव्यमेवाप्येति। यः स्पर्शयितव्यमेवास्तमेति, वायुमेवाप्येति। यो वायुमेवास्तमेति, मोघामेवा-

---

शब्दाः नाडीविशेषपराः। तदनन्तरमध्ययस्थानत्वेन कथिताश्च प्राणविशेषा इति बोध्यम्।

प्येति । यो मोघामेवास्तमेति, समानमेवाप्येति । यः समानमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

वाचमेवाप्येति । यो वाचमेवास्तमेति, वक्तव्यमेवाप्येति । यो वक्तव्यमेवास्तमेति, अग्निमेवाप्येति । योऽग्निमेवास्तमेति, कुमारामेवाप्येति । यः कुमारामेवास्तमेति, वैरम्भमेवाप्येति । यो वैरम्भमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

हस्तमेवाप्येति । यो हस्तमेवास्तमेति, आदातव्यमेवाप्येति । य आदातव्यमेवास्तमेति, इन्द्रमेवाप्येति । य इन्द्रमेवास्तमेति, अमृतामेवाप्येति । योऽमृतामेवास्तमेति, मुख्यमेवाप्येति । यो मुख्यमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

पादमेवाप्येति । यः पादमेवास्तमेति, गन्तव्यमेवाप्येति । यो गन्तव्यमेवास्तमेति, विष्णुमेवाप्येति । यो विष्णुमेवास्तमेति, सत्यामेवाप्येति । यः सत्यामेवास्तमेति, अन्तर्याममेवाप्येति । योऽन्तर्याममेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभय-

मशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

पायुमेवाप्येति । यः पायुमेवास्तमेति, विसर्जयितव्यमेवाप्येति । यो विसर्जयितव्यमेवास्तमेति, मृत्युमेवाप्येति । यो मृत्युमेवास्तमेति, मध्यमामेवाप्येति । यो मध्यमामेवास्तमेति, प्रभञ्जनमेवाप्येति । यः प्रभञ्जनमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

उपस्थमेवाप्येति । य उपस्थमेवास्तमेति, आनन्दयितव्यमेवाप्येति । य आनन्दयितव्यमेवास्तमेति, प्रजापतिमेवाप्येति । यः प्रजापतिमेवास्तमेति, नासीरामेवाप्येति । यो नासीरामेवास्तमेति, कुमारमेवाप्येति । यः कुमारमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयममेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

मन एवाप्येति । यो मन एवास्तमेति, मन्तव्यमेवाप्येति । यो मन्तव्यमेवास्तमेति, चन्द्रमेवाप्येति । यश्चन्द्रमेवास्तमेति, शिशुमेवाप्येति । यः शिशुमेवास्तमेति, श्येनमेवाप्येति । यः श्येनमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

बुद्धिमेवाप्येति । यो बुद्धिमेवास्तमेति, बोद्धव्यमेवाप्येति । यो बोद्धव्यमेवास्तमेति, ब्रह्माणमेवाप्येति । यो ब्रह्माणमेवास्तमेति, सूर्यमेवा-

प्येति । यः सूर्यमेवास्तमेति, कृष्णमेवाप्येति । य. कृष्णमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

अहङ्कारमेवाप्येति । योऽहङ्कारमेवास्तमेति, अहङ्कर्तव्यमेवाप्येति । योऽहङ्कर्तव्यमेवास्तमेति, रुद्रमेवाप्येति । यो रुद्रमेवास्तमेति, असुरामेवाप्येति । योऽसुरामेवास्तमेति, श्वेतमेवाप्येति । यः श्वेतमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

चित्तमेवाप्येति । यश्चित्तमेवास्तमेति, चेतयितव्यमेवाप्येति । यश्चेतयितव्यमेवास्तमेति क्षेत्रज्ञमेवाप्येति । य क्षेत्रज्ञमेवास्तमेति, भास्वतीमेवाप्येति । यो भास्वतीमेवास्तमेति, नागमेवाप्येति । यो नागमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

य एवं निर्बीजं वेद, निर्बीज एव स भवति । न जायते, न

---

निर्बीजत्वेन परमात्मनिर्देशफलं दर्शयति य एवं निर्बीजमिति । निर्बीज एवेति । जन्मप्रवाहहेतुपुण्यपापरहित एव भवतीत्यर्थः । एवञ्च जन्माभावे तदनुपक्ता अन्येऽपि विकारा नावकाशं लभन्त इत्याह न जायते न म्रियत इति । न म्रियत इत्यादि च, 'अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च' इति गीतम् । निरवयवत्वादसौ

म्रियते, न मुह्यते, न भिद्यते, न दह्यते, न छिद्यते, न कम्पते, न कुप्यते, सर्वदहनोऽयमात्मेत्याचक्षते ।

नैवमात्मा प्रवचनशतेनापि लभ्यते, न बहुश्रुतेन, न बुद्धिज्ञानाश्रितेन, न मेधया, न वेदैर्न यज्ञैर्न तपोभिरुग्रैर्न सांख्यैर्न योगैर्नाश्रमै । नान्यैरात्मानमुपलभन्ते । प्रवचनेन प्रशंसया व्युत्थानेन तमेतं ब्राह्मणाः शुश्रुवांसोऽनूचाना उपलभन्ते । शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति । सर्वस्यात्मा भवति, य एवं वेद ॥

इति सुबालोपनिषदि नवमः खण्डः ॥

---

न केनापि भूतेन प्रविश्य नाश्यतेति । सर्वदहन इति । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति प्रपञ्चहेतुकर्मदाहिज्ञानभासुर इत्यर्थः । पञ्चदशखण्डे वक्ष्यमाणं सर्वदहनत्वमपि द्रष्टव्यम् ।

परमात्मलाभोपायत्वेन प्रमाणप्रतिपन्नानां वैराग्याभावे अनुपायत्वमाह नैवमात्मा प्रवचनशतेनापीत्यादिना । "नायमात्मा प्रवचनेन" 'न वेदयज्ञाध्ययनैर्न दानैः' इत्यादिस्थल इव इहार्थो भाव्यः । एवमात्मा = एवम्भूत आत्मा। प्रवचनपदेन अध्यापनविवक्षायाम् बुद्धिज्ञानाश्रितपदेन मननग्रहणम्, व्यत्यासो वा । बुद्धिः मनसो निरूपणसामर्थ्यम् । ज्ञानं तदधीनो विवेकः । तदाश्रितमात्मनसंशीलनादीति वा । मेधा ध्यानम् । सांख्यं ज्ञानयोगः । योगः कर्मयोगः । अन्यैः दानहोमादिभिः । आवश्यकः परिकर उच्यते व्युत्थानेनेति । "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय" इति प्रयोगात् व्युत्थानं यथार्हं वैराग्यम्, न पुनः योगात् व्युत्थानम् । सत्यस्मिन् पूर्वोक्तप्रवचनादिकमपि सहकारीति ज्ञापयितुम् प्रवचनेनेति । इदमुक्तसर्वोपलक्षणम् । प्रशंसा उत्तमश्लोक-

॥ अथ दशम खण्ड ॥

अथ हैन रैक पप्रच्छ—भगवन्! कस्मिन् सर्वे सम्प्रतिष्ठिता भवन्तीति। रसातललोकेष्विति होवाच। कस्मिन् रसातललोका ओताश्च प्रोताश्चेति। भूर्लोकेष्विति होवाच। कस्मिन् भूर्लोका ओताश्च प्रोताश्चेति। भुवर्लोकेष्विति होवाच। कस्मिन् भुवर्लोका ओताश्च प्रोताश्चेति। सुवर्लोकेष्विति होवाच। कस्मिन् सुवर्लोका ओताश्च प्रोताश्चेति। महर्लोकेष्विति होवाच। कस्मिन् महर्लोका ओताश्च प्रोताश्चेति। जनोलोकेष्विति होवाच। कस्मिन् जनोलोका ओताश्च प्रोताश्चेति। तपोलोकेष्विति होवाच। कस्मिन् तपोलोका ओताश्च प्रोताश्चेति। सत्यलोकेष्विति होवाच। कस्मिन् सत्यलोका ओताश्च प्रोताश्चेति। प्रजापतिलोकेष्विति होवाच। कस्मिन् प्रजापतिलोका ओताश्च प्रोताश्चेति। ब्रह्मलोकेष्विति होवाच। कस्मिन् ब्रह्मलोका ओताश्च प्रोताश्चेति।

---

गुणानुवादादि। व्युत्थायेति निषिद्धवर्जनस्य सर्वस्योपलक्षणम्। तद्विधियते शान्त इत्यादिना। आत्मन्येव देह एव। न हि देहाभावे आत्मा द्रष्टुं शक्यते। आत्मनि जीवात्मनि इति वा। एतद्दर्शन फलमाह सर्वस्यात्मा भवति य एव वेदेति। वेद, पश्यतीत्यर्थः।

॥ इति उपनिषद्भाष्यपरिष्कारे सौबालनवमखण्डपरिष्कारः ॥

नमस परस्तात् परमात्मप्राप्त्या निर्वाणमनन्तरखण्डे वक्ष्यन् तम प्रकृतिकेऽत्र प्रपञ्चे सर्वस्य लोकस्य तादृशपरमात्मैकप्रतिष्ठितत्वमिद माह। तेन सर्वस्य हेयत्वम्, सर्वातिक्रमणेनान्यत्र नयनसमर्थत्वादि तस्य च ज्ञापित भवति। तथा षष्ठे यत् आरब्धम्, अमूलमनाधारम् इति, तत्र अमूलत्व तेन खण्डेन सर्वोत्पत्तिकारणत्वबोधिना,

सर्वलोका आत्मनि ब्रह्मणि मणय इवोताश्च प्रोताश्चेति। स होवाच--एवमेतान् लोकान् आत्मनि प्रतिष्ठितान् वेद, आत्मैव स भवति। इत्येतन्निर्वाणानुशासनम्। इति वेदानुशासनम् इति वेदानुशासनम् ॥

इति सुबालोपनिषदि दशमः खण्डः ॥

॥ अथैकादशः खण्डः ॥

अथ हैनं रैक्वः पप्रच्छ-भगवन्! योऽयं विज्ञानघन उत्क्रामन्, स केन कतरद्वाव स्थानमुत्सृज्यापक्रामतीति। तस्मै स होवाच — हृदयस्य मध्ये लोहितं मांसपिण्डम्, यस्मिंस्तद्दहरं पुण्डरीकं कुमुदमिवानेकधा विकसितम्। तस्य मध्ये समुद्रः। समुद्रस्य मध्ये कोशः। तस्मिन् नाड्यश्चतस्रो भवन्ति रमाऽरमेच्छाऽपुनर्भवेति। तत्र रमा पुण्येन

---

अव्यवहितपूर्वखण्डेन च लयहेतुत्वबोधिना विवृतमासीत्। अनाधारत्वं तु विवरीतुमयं खण्डः। अनेन अनन्तरखण्डवक्ष्यमाणापुनर्भवाख्यनाडीव्यतिरिक्तनाडीप्राप्याश्चानित्या लोका अधिगमिता भवन्तीति।

सत्यलोकशब्देन चतुर्मुखस्य तत्पुत्राणां प्रजापतीनाञ्च स्थानात् अन्यस्य तदधीनप्रजायासभूतस्य सत्यलोकाख्यस्य ग्रहणम्। मणय इवेति। सूत्रे इति शेषः। तथा च गीयते, 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इति। ओताश्च प्रोताश्चेति पूर्ववदासिकथनम्।

॥ इति उपनिषद्भाष्यपरिष्कारे सौबालदशमखण्डपरिष्कारः ॥

पञ्चममूलस्थानाधारस्य नारायणस्य चक्षुराद्यन्तर्यामितयोपासनानि उपवर्ण्य, पूर्वखण्डदर्शितसर्वलोक- तन्मूलप्रकृतिमण्डलातीतस्य षष्ठखण्डसंदर्शितस्य स्थानस्य प्राप्तिरूपमुपासनफलं वक्तुं गतिप्रकारं दर्शयितुमारभते अथ हैनमिति। नाड्यश्चतस्रो नाम्ना निर्दिशति रमेत्यादिना। तत्तन्नाडीद्वारा प्राप्यं स्थानमाह तत्र रमेत्यादिना। अत

पुण्यं लोकं नयति । अस्मा पापेन पापम् । इच्छया यत् स्मरति, तद-भिसम्पद्यते । अपुनर्भवया कोशं भिनत्ति । कोशं भित्त्वा शीर्षकपालं भिनत्ति । शीर्षकपालं भित्त्वा पृथिवीं भिनत्ति । पृथिवीं भित्त्वाऽपो भिनत्ति । अपो भित्त्वा तेजो भिनत्ति । तेजो भित्त्वा वायुं भिनत्ति । वायुं भित्त्वाऽऽकाशं भिनत्ति । आकाशं भित्त्वा मनो भिनत्ति । मनो भित्त्वा भूतादिं भिनत्ति । भूतादिं भित्त्वा महान्तं भिनत्ति । महान्तं भित्त्वाऽव्यक्तं भिनत्ति । अव्यक्तं भित्त्वाऽक्षरं भिनत्ति । अक्षरं भित्त्वा मृत्युं

---

एवान्यर्थानि नामानि । मोक्षार्थोपासनस्यैव प्रकृततरात् अपुनर्भवाख्य-नाडीसाध्यगतिमेव विस्तरेण विवक्षुः तत्राप्युपनिषदन्तराधिगता-दर्थादतिरिक्तमाह अपुनर्भवयेत्यादिना । कोशं—हृदयकोशम् । पृथिवीं भिनत्तीत्यादेः ब्रह्माण्डावरणभूताष्टकस्याहतदावरणसमष्टिसलिलादि-भेदनपरत्वं कार्याधिकरणश्रुतप्रकाशिकायामुक्तम् । अतः शीर्षस्थ-कपालभेदनात् परं आवरणपृथिवीभेदनात् पूर्वम् अर्चिरादिभिरब्ज-योनिपर्यन्तैः स्वस्वस्थाने अतिवाह्यमानत्वमप्यन्यश्रुतिशतप्राप्तिमात्र-संधेयम् । मनो भिनत्तीति । आकाशभेदन—भूतादिरूपाहङ्कारभेदन-मध्यपाठात् स्थानात् मनश्शब्दः शब्दतन्मात्रपरः । इन्द्रियाणि तन्मा-त्रेष्विति प्रागुक्तरीत्या तत्र सृष्ट्यारम्भे प्रलये च मनआदीन्द्रिय-संसर्गात् मनःपदेन तदुक्तिः । न च तन्मात्रस्य आवरणभावे किं प्रमा-णमिति वाच्यम्—अनेनैव वचनेन आवरणत्वानुमानात् । अनावरण-त्वेऽपि आकाशकारणत्व—अहङ्कारकार्यत्वसद्भावमात्रेणापि तद्भेदन-कथनोपपत्तेः । अस्तु वा सात्त्विकाहङ्कारो मनःपदविवक्षितः । आकाश-कारणत्वस्य तत्राभावेऽपि, तत्कारणत्वस्य भूताद्यभावेऽपि च तत्तदंशभेदनक्रमविवक्षया एवमुपवर्णनसंभवात् । मृत्युमिति तमसो

भिनत्ति । मृत्युर्वै परे देव एकीभवतीति परस्तान्नसन्नासन्नसदसत् ।
इत्येतन्निर्वाणानुशासनम् । इति वेदानुशासनम् इति वेदानुशासनम् ॥

इति सुबालोपनिषदि एकादशः खण्डः ॥

---

विवक्षेत्यपि स्थानप्रमाणादवगतमेव । न चाविनाश्यस्याभेद्यस्य तमसः कथं भेदनमिति वाच्यम् । अप्रतिघातिद्रव्याणां भेदनस्यानपेक्षिततया तत्तद्व्यतिक्रमस्यैव तत्तद्भेदनपदविवक्षितत्वात्, भिनत्ति—स्ववियुक्तं करोतीति सर्वत्रार्थः ।

मृत्युभेदनानन्तरं किमिति जिज्ञासायां परस्तान्नसदित्यादि वक्ष्यन्, कथं मृत्युभेदनानन्तरमन्यस्य भेदनं नास्तीति शङ्कानुन्मेषाय, यस्मात् मृत्योः कारणमन्यन्नास्ति, मृत्योः परे देवे एकीभावात्, तस्मात् तदुपरि भेदनीयं न किञ्चिदिति ज्ञापयितुमाह मृत्युर्वै इति । वैशब्दः, 'तम परे देव एकीभवति' इति प्रागुक्त हीति प्रसिद्धिं दर्शयति । अत्र, 'मृत्योः परे' इति प्रथमखण्डभाष्ये अनुवादः तत्रतत्र, अपुनर्भवाय कोशमिति चतुर्थ्यन्तानुवादवत् लेखकप्रमादकृत इति ध्येयम् । परस्तादिति । मृत्योरुपरीत्यर्थः । अत्र परस्तादित्यस्य एकीभावानन्तरमिति नार्थः । एकीभावस्य प्रकरणार्थत्वाभावात् । एकीभवतीति इतिशब्देन तस्य हेतुत्वेन समर्पितत्वाच्च । मृत्युभेदनानन्तरमित्यर्थस्तु अनन्वयात् नेष्यते । न हि मुमुक्षोरुत्क्रान्तस्य मृत्युभूतप्रकृत्यतिक्रमरूपभेदनात् पश्चात् सदसद्वादिविलक्षणमेवेह प्रकृतिमण्डलेऽस्ति । तस्य मुक्तिभागित्वेऽपि प्रपञ्चस्य सद्भावेन प्रलय इव तावन्मात्रस्थितिकथनायोगात् । अतः, 'दिग्देशकालेष्वस्तातिः' इति देशेऽपि स्मरणात् देशपरोऽयमस्तातिः । तत्र मृत्युभेदनादुपरि देश इत्यर्थायोगात् मृत्युदेशादुपरीत्यर्थ आश्रयितव्यः । यद्यपीह, 'नसन्नासन्नसदसत्' इत्यनेन प्राकृतप्रपञ्चरूपसृष्टिप्रलयगोचर—कार्यकारणभावापन्नलीलाविभूतिविलक्षणो भोगविभूतिरूपो देशो विव-

॥ अथ द्वादशः खण्डः ॥

ओं नारायणाद्वा अन्नमागतं पक्वं ब्रह्मलोके महासंवर्तके पुनः

---

क्षितु युक्तः—अथापि पूर्वम्, 'तस्मात् तमः संजायते' इति तमआदि-त्याद्युक्तस्य तमआविर्भावापादानत्वकथनात् तमआदिपदेन परमात्म-विवक्षा अवर्जनीयेति ध्येयम्। नित्यविभूतिविशिष्टपरमात्मपरत्वमस्तु इति चेत्—काममस्तु। परस्यादिति वाक्ये द्वितीयखण्ड इव अस्ती-त्यध्याहारं विहाय, प्राप्नोतीति वा प्राप्यत इति वाऽध्याहारे तु परस्तादित्यस्य मृत्युभेदनानन्तरमित्यर्थः स्यात्।

॥ इति उपनिषद्भाष्यपरिष्कारे सौबालैकादशखण्डपरिष्कारः ॥

एवं जगज्जन्मस्थितिध्वंसहेतुनारायणाख्यं सर्वान्तरं परं तत्त्वम्, तदुपासनम्, तत्फलञ्च मृत्युपर्यन्तं स्थानमुल्लङ्घ्यापरस्य तदुपरितन-देशविशेषप्राप्तिरूपमुपवर्णितमिति, वक्तव्यं सर्वमुक्तमेव। अतोऽत्रा-शान्तर्भूतमेव किञ्चित् विशदीक्रियते, यथा गीतासु द्वादशाध्याय-पर्यन्तोक्तमप्रश्नमेव परैरध्यायैः तथा, ओं नारायणाद्वा इत्यादिना [प्रतिखण्डमश्रूयमाणस्य प्रणवस्यात्र परं श्रवणात् उक्तार्थस्यैव पुनर्विशदीकरणार्थमारम्भ इति व्यज्यते। अथवा ओमिति उक्तोपा-सनमन्त्रनिर्देशः। वक्ष्यते हि महत् पदमिति। अथवा ओमिति चतुर्दशखण्ड इव स्थितं न श्रुत्यानुपूर्वीनिविष्टमित्यस्तु।] अत्र खण्डे अयाचितोपनतेन देहधारणं कार्यमित्युपदिश्यते। व्युत्थानेन तमेन-मुपलभन्ते इति प्रागुक्तम्। पुत्रवित्तादिक परित्यक्तवतो देहधारण-स्याप्यशक्यत्वे स्थिते कथं परमात्मशुश्रूषा? कथं नराश्च साक्षात्कार-पर्यन्ततदुपलम्भप्रसक्तिरित्यत्र अयाचितोपनतेन वर्तमान उपलभेते-त्युच्यत इह। 'यः सर्वज्ञः सर्ववित् तस्मादेतद् ब्रह्म नामरूपमन्नञ्च जायते', 'तस्माद्वा एतस्मादात्मनः ओषधीभ्योऽन्नम्' इत्युक्तरीत्या नारायणसृष्टमेव अन्नं प्राप्तं वस्तु तन्नाभिकमलोद्भवेन चतुर्मुखेन

पक्वमादित्ये पुनः पक्वं क्रव्यादि पुनः पक्वं जालकिलक्लिन्नं पर्युषितं पूत-
मन्नमयाचितमसंक्लृप्तमश्नीयात्; न कञ्चन याचेत ॥

॥ इति सुबालोपनिषदि द्वादशः खण्डः ॥

॥ अथ त्रयोदशः खण्डः ॥

बाल्येन तिष्ठासेत्। बालस्वभावोऽसङ्गो निरवद्यो मौनेन पाण्डि-

---

व्यष्टिपृथिव्यादिसृष्टिकाले पक्वं जीवजातभोगार्हं कृतम्। अथ चतु-
र्मुखपुत्रे रुद्रे पक्वम्। रुद्र एव महासंवर्तकः। संपूर्वकस्य वृतु धातोः
प्रलयोऽर्थः। समित्येकीभावे। प्रलयकारिषु यमादिषु रुद्रो महानिति
स महासंवर्तकः। तस्य चतुर्मुखप्रसादलब्धप्रभुत्वैश्वर्यतया पञ्च-
भूतात्मकतन्मूर्त्यन्तर्गतत्वादन्नस्य, तस्मिन् अस्य पक्वता। अथ भूत-
पञ्चकचन्द्रादित्ययजमानरूपरुद्रमूर्तिनिविष्टत्वादादित्यस्य, 'आदि-
त्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः' इति अन्नहेतुत्वात् पुनस्तत्र
तस्य पक्वता। क्रव्यात् = राक्षसः मांसभुक् हिंसकः। तस्मिन् पक्वत्वञ्च
सर्वस्य भगवदैश्वर्यविवेकविकलैर्दैवसंपद्रहितैः वातापिरक्षःप्रायत्वात्।
एवम्भूतमिदमन्नं यथा सृष्ट्यारम्भकालप्रभृति पक्वत्वेऽपि पर्युषितमिति
नोपेक्ष्यते, तथा मनुष्यपक्वमपि यातयामं पर्युषितमपि पर्युषितत्वदो-
षेणोपेक्ष्यं न भवति। तत् जालकिलक्लिन्नं चेत्, पूतं भवति। जलसमूहो
जालम्। तत्र किलं किरं कीर्यमाणं सत् क्लिन्नं क्लेदभाक् विशीर्णाव-
स्थमित्यर्थः। अर्थान्तरं वा निचार्यम्। असंक्लृप्तम्। इदं मे भविष्य-
तीति वा, भवत्विति वा अनुद्दिष्टं यदृच्छया केनचित् कारुणिकेन
आनीय समर्पितमश्नीयात्। वैराग्येण सर्वं त्यक्तवतो देहधारणार्थं
गृह्यमाणमिदमेव श्रेयस्करम्; न तु याचेतेति।

॥ इति उपनिषद्भाष्यपरिष्कारे सौबालद्वादशखण्डपरिष्कारः ॥

देहधारणार्थं कर्म कथितम्। मनःपरिपाकहेतुः कर्म कथ्यते।

त्येन निरधिकारतयोपलभ्येत । कैवल्यमुक्त निगमनं प्रजापतिरुवाच । महत् पद ज्ञात्वा वृक्षमूले वसेत कुचेलोऽसहाय एकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकाम । हस्तिनि सिंहे दंशे

---

बाल्येन तिष्ठासेदिति न कामचारवाद्भक्षस्त्वाद्यनुष्ठानम् ; किं तु माहात्म्यानाविष्कारः । न दम्भगार्हस्त्यपानम् ; किं तु स्वमहिमगोपनमपि । तदाह बालस्वाभावोऽसङ्गो निरवद्य इति । "बाल्यं च पाण्डित्यञ्च निर्विद्याथ मुनिः" इत्युक्तत्रये शिष्टयोरपि कथनं मौनेन पाण्डित्येनेति। मौनं नाम मुनित्वम् — ध्यानव्यतिरिक्तकालेऽपि आलम्बनभूतस्य भगवद्रूपस्य सगुणस्य पौनःपुन्येन संशीलनम् । पाण्डित्यञ्च श्रवणमननाभ्यां यथावदधिगतपरतत्त्वेन पुंसा आप्तोपदेशादुपास्यार्थपरिच्छेदः । मौनेन पाण्डित्येनेति इत्थम्भूतलक्षणे तृतीया । मौनपाण्डित्यविशिष्टोऽपि बालस्वभावो निरधिकार इवोपलभ्येतेति बालस्वरूपं विवृतं भवति । कैवल्यमुक्तं निगमनं प्रजापतिरुवाचेति । यदिदमुक्तं कैवल्यम् असङ्गत्वादिरूपम्, तदेव निगमनम् अवसानभावि, 'अमौनं मौनञ्च निर्विद्याथ ब्राह्मणः' इत्युक्तब्रह्मोपासननिष्पादकं प्रजापतिरुवोचदित्यर्थः । अत उपासनमेव कार्यमेवमित्याह महत् पदमिति । 'सर्वे वेदा यत् पदमामनन्ति' इति प्रसिद्धम् ओमित्येतत् पदं सार्थमधिगम्य वृक्षमूले वसेत् । न तु स्थिरं कुटीरमपेक्षेत । कुचेलः वस्त्रपरिष्करणानादरः । असहायः—द्वितीयसद्भावे तदर्थकार्यवैयग्र्यादिना समाधिप्रतिहतिः स्यादिति । सहायत्वेन अकल्पितपुरुषान्तरसाहित्यमपि न युक्तमित्याह एकाकीति । 'एकस्तपः' इति ह्युच्यते । आत्मकामः आत्मप्राप्तिकामः आप्तकामः सञ्जातात्मानुभवः निष्कामः वस्त्वन्तराभिलाषोत्पत्तिरहितः जीर्णकामः प्राग् उपचितकामनानाशवान् । अथ निर्भयत्वमुच्यते हस्तिनीत्यादिना । अननुभाव्यवस्तुविषये वैराग्यो-

मशके नकुले सर्पराक्षसगन्धर्वे मृत्यो रूपाणि विदित्वा न बिभेति कुतश्च नेति । वृक्षमिव तिष्ठासेत्; छिद्यमानोऽपि न कुप्येत, न कम्पेत । उत्पलमिव (उपलमिव ?) तिष्ठासेत्; छिद्यमानोऽपि न कुप्येत न कम्पेत । आकाशमिव तिष्ठासेत्; छिद्यमानोऽपि न कुप्येत न कम्पेत । सत्येन तिष्ठासेत । सत्योऽयमात्मा ।

सर्वेषामेव गन्धानां पृथिवी हृदयम्, सर्वेषामेव रसानामापो हृदयं सर्वेषामेव रूपाणां तेजो हृदयं सर्वेषामेव स्पर्शानां वायुर्हृदयं सर्वेषामेव शब्दानामाकाशं हृदयं सर्वेषामेव (सर्वासामेव?) गतीनाम व्यक्तं हृदयं सर्वेषामेव सत्त्वानां मृत्युर्हृदयम् । मृत्युर्वै परे देव एकीभवतीति । परस्तान्नसन्नासन्नसदसत् । इत्येतन्निर्वाणानुशासनम् । इति

---

त्पत्तावपि प्रसक्तदुःखपरिहारकामना हातव्येत्यत्राह हस्तिनीत्यादि। वृक्षं वृश्च्यमानं काष्ठम् । आर्षं ना क्लीबत्वम् । परमात्मैकनिमग्नमनस्को हि प्रह्लाद इव प्रबलं पीडितोऽपि न दुःखमनुभोक्ष्यते । तस्योचितानुचितसंघटनविघटने हि परमात्मनि आयतेते इति भगवत्यध्यवसायस्य दृढिमा । तदाह सत्येन तिष्ठासेदिति । 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्यत्रेव सत्यमिह ब्रह्म । सत्योऽयमात्मा । भगवति निक्षिप्तभरोऽयमात्मा तद्रक्षितो न विनश्यति; सत्यं एवावतिष्ठत इत्यर्थः ।

जातु दस्यादिभूताधीनदेहवियोगापत्तावपि मृत्युमण्डले तस्यावर्जनीयत्वात् आत्मनः सत्यस्याविनष्टतया च न खेदप्रसक्तिरित्याशयेनाह सर्वेषामेवेति । गन्धादीनां यथा पृथिव्यादिराधारः, तथा मृत्युशब्दवाच्यं तम एव तत्कार्यदेहभाजां सत्त्वानां प्राणिनामाधारभूतम् । तस्य च परमात्मना एकीभावोऽपि भवतीति अवर्जनीयः

वेदानुशासनम् ॥ इति वेदानुशासनम् ॥

॥ इति सौबालोपनिषदि त्रयोदश खण्ड ॥

॥ अथ चतुर्दश खण्ड ॥

ओं पृथिवी वाव्मापोऽन्नादा आपो वाव ज्योतिरन्नाद ज्योतिर्वात वायुरन्नादो वायुर्वानमाकाशोऽन्नाद आकाशो वावमिन्द्रियाण्यन्नादानि । इन्द्रियाणि वाव मनोऽन्नाद मनोवाव बुद्धिरन्नादा बुद्धिर्वान्नमव्यक्तमन्नादमव्यक्त वान्नमक्षरमन्नादमक्षर वाव मृत्युरन्नाद । मृत्युर्वै परे देव एकीभवतीति । परस्तान्नसन्नासन्नसदसत् । इत्येतन्निर्वाणानुशासनम् । इति वेदानुशासनम् इति वेदानुशासनम् ॥

॥ इति सुबालोपनिषदि चतुर्दश खण्ड ॥

---

सत्त्वनादा मृत्यो परस्तात्तु परमपदे सैवमिति भाव ॥

॥ इति उपनिषद्भाष्यपरिष्कारे सौबालत्रयोदशखण्डपरिष्कार ॥

चतुर्दशे खण्डे, सत्त्वाना मृत्यौ लय शरीरस्य पाञ्चभौतिकत्वात् भूतद्वारैव भवतीति व्युत्पादनार्थं पूर्वोक्तप्रलयप्रक्रियैवानूद्यते । इन्द्रियाणीति शब्दत मात्रग्रहणम् । मन इति अहंकारस्य बुद्धिरिति महत. ।

॥ इति उपनिषद्भाष्यपरिष्कारे सौबालचतुर्दशखण्डपरिष्कार ॥

मुमुक्षुर्निरपरोक्षासन किं पाञ्चभौतिकदेहलयस्थानभूतपृथिव्यादिलये क्रमेण तत्र पयन्त जाते पश्चादेव मुक्तो भवति, किं वा चरमशरीरप्रहाणसमनन्तरमेवेति     त्वयम मर्यनिपादक पूर्वखण्डानुसारेण विशये जात, सत्त्वेन गन्धु वस्तुषु ज्ञानाग्निदग्धसर्वकर्मतया कर्मायत्तसर्वचेतनद्रव्यदाहसामर्थ्यस्वास्थ्य विषये सर्वं दग्धबीजप्रायमङ्कुरोद्भेदासमर्थं भवतीति व प्रारब्धकर्मावसानश्च-

॥ अथ पञ्चदशः खण्डः ॥

अथ हैनं रैक्वः पप्रच्छ–भगवन् योऽयं विज्ञानघन उत्क्रामन्, स केन कतरद्वाव स्थानं दहतीति। तस्मै स होवाच–योऽयं विज्ञानघन उत्क्रामन्, प्राणं दहत्यपानं व्यानमुदानं समानं वैरम्भं मुख्यमन्तर्यामं प्रभञ्जनं कुमारं श्येनं श्वेतं कृष्णं नागं दहति। पृथिव्यापस्तेजोवाय्वाकाशं दहति। जागरितं स्वप्नं सुषुप्तं तुरीयं च महतां च लोकं परं च लोकं दहति। लोकालोकं दहति। धर्माधर्मं दहत्यभास्करममर्यादं निरालोकमतः परं दहति। महान्तं दहत्यव्यक्तं दहत्यक्षरं दहति। मृत्युं दहति। मृत्युर्वै परे देव एकीभवतीति। परस्तान्न सन्नासन्न सदसत्। इत्येतन्निर्वाणानुशासनम्। इति वेदानुशासनम् इति वेदानुशासनम्॥

॥ इति सुबालोपनिषदि पञ्चदशः खण्डः ॥

---

भाविमोक्षप्रतिबन्ध इत्युपपादयितुं पञ्चदशः खण्डः प्रारभ्यते। केन कतरदिति। सर्वदाहित्वे संमन्यमाने विद्यामाहात्म्येन दहतीति कारणं सुज्ञानम्। कतिपयमात्रदाहित्वे तु तदुचितं कारणान्तरं विमृश्यं स्यादिति कृत्वा प्रश्नवाक्ये केनेत्यस्य घटनम्। एतत्सूचनायैव योऽयं विज्ञानघन इति विशेषनिर्देशः। सर्वदाहित्वात् विद्यामाहात्म्य-रूपकारणस्य विज्ञानघन इत्यत एव विज्ञानसंभवात् न कारणं निर्दिष्टव्यमस्तीति उत्तरवाक्यमध्ये केनेत्येतदुत्तरग्रन्थोपेक्षणमिति ध्येयम्। प्राणमिति। प्राणापानादयः चतुर्दश वायुविशेषाः प्रागुक्ता एव। दहतीत्यस्य स्थितमपि कार्याक्षमं करोतीत्यर्थः। पृथिव्यापस्तेज इत्यत्र पृथिव्यप्तेज इति पाठः स्यात्। छान्दसो वा प्रयोगः। छिन्ना-पन्तत्वस्याऽऽवश्यकत्वात्। लोकालोकम् — भास्करकिरणसापेक्ष-प्रकाशं कियद्देशे, किञ्चिद्देशे च तदनपेक्षं स्थानम्। अभास्करमित्या-

॥ अथ षोडशः खण्डः ॥

सौबालबीजब्रह्मोपनिषत् नाप्रशान्ताय दातव्या ; नापुत्राय , नाशिष्याय ; नासंवत्सररात्रोषिताय । नापरिज्ञातकुलशीलाय दातव्या ; नैव च प्रवक्तव्या ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

---

विना भट्टारपर्यन्तसमष्टिग्रहणम् ॥

॥ इति उपनिषद्भाष्यपरिष्कारे सौबालपञ्चदशखण्डपरिष्कारः ॥

एतदुपनिषद्विद्यायाः परब्रह्मस्वरूप - प्रतितत्त्वभूतशरीरात्मभावादिविस्पष्टदर्शित्वात् परमं गोपनीयत्वमुच्यते षोडशे खण्डे । सौबालबीजब्रह्मोपनिषत् सौबालश्रुत्युत्पन्नमूलब्रह्मविद्या । अपुत्राय अशिष्याय पुत्रशिष्यव्यतिरिक्ताय । असंवत्सररात्रोषिताय संवत्सरसंख्याकदिनगणकृतगुरुकुलवासपुरुषव्यतिरिक्ताय । दातव्या प्रथममुपदेष्टव्या, प्रवक्तव्या अर्थविशदीकरणेन चिन्तनार्थमुपपादयितव्या न ।

यस्य देवे इति मन्त्रः श्वेताश्वतरीयेऽपि । देवे 'दिव्यो देव एको नारायणः' इति प्रागुक्ते एकस्मिन् अस्मद्गुरुदेवभावे जगद्व्यापारलीले श्रीमन्नारायणे । यथा देवे तथा गुरौ । 'साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् । मग्नान् उद्धरते लोकान् कारुण्यात् शास्त्रपाणिना' इत्युक्तरीत्या देवो नारायण एव गुरुरूपेणावतीर्णः । देवो देवरूपावस्थायां क्रोधादपि किञ्चित् कुर्यात्, शास्त्रेण च पातयेत् घातयेच्च, अस्यां पुनरवस्थायां कारुण्यादेव करोति शास्त्रेण पाणिना भवपारावारमग्नान् उद्धरति चेति अतिशयितोऽपि युज्यते भक्तिरत्र । एवं सति तावती या भक्तिः कथं न युक्तेति। एते कथिताः=पञ्चदशभिः खण्डैः कथिताः। गुरुभक्तिविरहिणस्तु कथिता अप्यर्थाः न प्रकाशन्ते ।

इत्येतन्निर्वाणानुशासनम् । इति वेदानुशासनम् इति वेदानुशासनम् ॥

॥ इति सुबालोपनिषदि षोडशः खण्डः ॥

[ओं पूर्णमदः—इति शान्तिः]

## ॥ इति शुक्लयजुर्वेदीया सुबालोपनिषत् ॥

॥ श्रीरस्तु ॥

---

एते यकथिता इति पदच्छेदे,—गुरुभक्तिरस्ति चेत्, तदनुग्रहेण अकथिता अप्यर्थाः स्वतः प्रकाशन्त इत्यर्थः । महात्मन इति । 'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इति गीतम् । वासुदेव इव गुरावपि तादृग्भक्तिशाली तु मुख्यो महात्मेति भावः । अस्मिन् पूर्वं विद्यागोपनस्य पश्चात् गुरुभक्तिप्रकर्षस्य चावश्यकत्वोपदेशात्; 'गुरुं प्रकाशयेद् धीमान् मन्त्रं यत्नेन गोपयेत्' इतीदमीदृशश्रुत्युपबृंहणमेवेति विज्ञेयम् ॥

गुरुणोभयमीमांसावल्लभत्वेन मानितः ।
यः पूर्वोत्तरमीमांसाप्रदीपस्तर्कवारिधिः ॥
विहितानेकसद्ग्रन्थो वात्स्यः श्रीवीरराघवः ।
तेन वेदान्तसौमित्रिमुनिपादाब्जसेविना ॥
श्रीरङ्गरामावरजमुनिसेवाप्तसत्क्रिया ।
ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ॥
प्राच्यव्याख्यानपश्चांशा सौबालोपनिषत् परा ।
इत्थं षोडशखण्डात्मा परिष्कारेण भूषिता ॥
अनपायदयाम्भोधिरच्छस्फटिकसप्रभः ।
अस्तु लक्ष्मीहयग्रीवो देवस्सन्नो गतिः सताम् ॥

इति श्रीवात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतिषु
उपनिषद्भाष्यपरिष्कारे सौबालपरिष्कारः सम्पूर्णः ॥

॥ शुभमस्तु ॥

## सुबालोपनिषदर्थसंग्रहकारिकाः

सुबालोपनिषत् शुक्लयजुर्वेदे क्वचित् स्थिता ।
एषा षोडशखण्डात्मा वक्ति नारायणं परम् ॥ १ ॥

नसन्नासन्नसदसत् प्रलये वस्तु तद्भवाः ।
समष्टिर्व्यष्टयो ब्रह्मा वर्णाद्याश्चाऽऽद्य ईरिताः ॥ २ ॥

वेदवैदिकवाक्सृष्टिर्यत् किञ्च मिथुनोद्भवम् ।
तत्सृष्टिश्च द्वितीयोक्ता लयक्रमसमन्विता ॥ ३ ॥

तृतीये तस्य चिदचिद्वैलक्षण्यविभावके ।
षडङ्गसाध्यमुदितं मुक्तये तदुपासनम् ॥ ४ ॥

जाग्रत्स्वप्नसुषुप्त्युक्त्या ततो वैराग्यवर्धनम् ।
चक्षुरादीनि करणान्युपादाय चतुर्दश ॥ ५ ॥

प्रत्येकमष्टके प्रोक्तं ध्यानं तस्याऽऽत्मनस्ततः ।
नारायणस्य चाशेषं परमञ्च पदं ततः ॥ ६ ॥

शरीरात्मत्वरूपोऽर्थः सप्तमे साम्प्रदायिकः ।
एवं सर्वशरीरित्वेऽप्यनवद्यत्वमष्टमे ॥ ७ ॥

उपासिते लयोऽथोक्तो निर्वीजे विलयात्मकः ।
दशमेऽस्मिन् अनाधारे सर्वाधारत्वमीरितम् ॥ ८ ॥

अपुनर्भवया नाड्या मुक्तिदेशगतिस्ततः ।
धृतिस्त्वपाचितेनाथ निष्ठा सा वाक्यधैर्यतः ॥ ९ ॥

मुक्तत्यक्तशरीरादि प्राप्य भूतादिकस्ताम् ।
शक्त्या लयादिति व्यक्त्यर्थं अन्नादि लयक्रमः ॥ १० ॥

स्वगन्धने जगत् सर्वं क्षीणशक्ति चिरान्वनः ।
मुक्तिः पञ्चदशे प्रोक्ता गुप्तिर्भक्तिश्च षोडशे ॥ ११ ॥

सौबाले स्पष्टमन्यकार्यचित्तत्वं शरीरता ।
नारायणस्य पारम्यं वाक्यतत्त्वादि चोदितम् ॥ १२ ॥

—:**:—

## सुबालोपनिषद्विषयसूची



### सुबालोपनिषद्गतानि ऋष्यादिनामानि



### शारीरके सुबालोपनिषद्वाक्यस्थलम्

सु ३. १-४-११—१२.

॥ शुभमस्तु ॥

श्रीः

# अग्निरहस्यब्राह्मणम्

## माध्यन्दिन — शतपथब्राह्मणे — दशमं काण्डम् ॥

१०-५-२.

यदेतन्मण्डलं तपति, तन्महदुक्थम्, ता ऋचः, स ऋचाँलोकः।

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः।

## अग्निरहस्यपरिष्कारः

श्रिया सह वृषाचलाञ्चलवनीषु शृङ्गारिणे
  दयादिगुणसद्मने दनुजलोकसंहारिणे।
क्रियामयमनोमयक्रतुसमर्च्यभूम्ने च ते
  मयाऽद्य भगवन् अयं शुभरूपोऽस्तु बद्धोऽञ्जलिः॥

यदेतन्मण्डलं तपतीत्यादिकमिदं ब्राह्मणं यद्यपि भाष्यकृता न व्याख्यातम्—अथापि उत्तरब्राह्मणविषयविचारात्मके पूर्वविकल्पाधिकरणे, "परेण च शब्दस्य ताद्विध्यं—" इति सूत्रे परशब्देन तदुपरितनब्राह्मणस्येव चकारेण तत्पूर्वभूतस्य एतद्ब्राह्मणस्यापि उत्तरब्राह्मणस्य क्रतुशेषत्वरहितप्रधानविद्याविशेषप्रतिपादकत्वे दृष्टान्ततयोपात्तत्वात्, तत्पूर्वसूत्रे, "न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः" इत्यत्र मृत्युवदिति एतद्ब्राह्मणविषयस्य दृष्टान्तीकरणात्, पूर्वविकल्पाधिकरणभूतानन्तराधिकरणशारीरभाष्याधिकरणादिषु, एतद्ब्राह्मणगतस्य, 'तं यथा यथोपासते, तदेव भवति' इति तत्क्रतुन्यायवाक्यस्य असकृदुदाहरणाच्च एतद् ब्राह्मणमपि वैशद्याय द्रष्टव्यं भवतीति सह प्रकाश्यते।

## सुबालोपनिषत्विषयसूची



## सुबालोपनिषद्गतानि ऋष्यादिनामानि



## शारीरके सुबालोपनिषद्वाक्यस्थलम्



॥ शुभमस्तु ॥

श्रीः

# अग्निरहस्यब्राह्मणम्

## माध्यन्दिन—शतपथब्राह्मणे—दशमं काण्डम् ॥

१०-५-२.

यदेतन्मण्डलं तपति, तन्महदुक्थम्, ता ऋचः, स ऋचाँल्लोकः।

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः।

## अग्निरहस्यपरिष्कारः

श्रिया सह वृषाचलाञ्चलवनीषु शृङ्गारिणे
 दयादिगुणसद्मने दनुजलोकसंहारिणे।
क्रियामयमनोमयक्रतुसमर्च्यभूम्ने च ते
 मयाऽद्य भगवन् अयं शुभकरोऽस्तु बद्धोऽञ्जलिः॥

यदेतन्मण्डलं तपतीत्यादिकमिदं ब्राह्मणं यद्यपि भाष्यकृता न व्याख्यातम्—अथापि उत्तरब्राह्मणविषयविचारात्मके पूर्वविकल्पाधिकरणे, "परेण च शब्दस्य ताद्विध्यं—" इति सूत्रे परशब्देन तदुपरितनब्राह्मणस्येव चकारेण तत्पूर्वभूतस्य एतद्ब्राह्मणस्यापि उत्तरब्राह्मणस्य क्रतुशेषत्वरहितप्रधानविद्याविशेषप्रतिपादकत्वे दृष्टान्ततयोपात्तत्वात्, तत्पूर्वसूत्रे, "न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः" इत्यत्र मृत्युवदिति एतद्ब्राह्मणविषयस्य दृष्टान्तीकरणात्, पूर्वविकल्पाधिकरणभूतानन्तराधिकरणशारीरभावाधिकरणादिषु, एतद्ब्राह्मणगतस्य, 'तं यथा यथोपासते, तदेव भवति' इति तत्क्रतुन्यायवाक्यस्य असकृदुदाहरणाच्च एतद् ब्राह्मणमपि वैशद्याय द्रष्टव्यं भवतीति सह प्रकाश्यते।

अथ यदेतदर्चिर्दीप्यते, तन्महाव्रतम्, तानि सामानि, स साम्नां लोकः। अथ य एष एतस्मिन् मण्डले पुरुषः, सोऽग्निः, तानि यजूंषि, स यजुषां लोकः ॥

सैषा त्रय्येव विद्या तपति। तद्धैतदप्यविद्वांस आहुः—त्रयी वा एषा विद्या तपतीति। वाग्घैव तत् पश्यन्ती वदति ॥ २ ॥

स एष एव मृत्युः, य एष एतस्मिन् मण्डले पुरुषः। अथैतद-मृतम्, यदेतदर्चिर्दीप्यते। तस्मात् मृत्युर्न म्रियतेऽमृते ह्यन्तः। तस्मादु न दृश्यतेऽमृते ह्यन्तः ॥ ३ ॥

तदेष श्लोको भवति, अन्तरं मृत्योरमृतमिति। अवरं ह्येतन्मृत्योर-मृतम्। मृत्यावमृतमाहितमिति। एतस्मिन् हि पुरुष एतन्मण्डलं प्रतिष्ठितं तपति। मृत्युर्विवस्वन्तं वस्त इति। असौ वा आदित्यो विवस्वान्। एष ह्यहोरात्रे विवस्ते। तमेष वस्ते। सर्वतो ह्यनेन परिवृतः। मृत्योरात्मा विवस्वतीति। एतस्मिन् हि मण्डल एतस्य पुरुषस्यात्मा। तदेष श्लोको भवति ॥ ४ ॥

तयोर्वा एतयोः उभयोरेतस्य चार्चिष एतस्य च पुरुषस्यैत-न्मण्डलं प्रतिष्ठा। तस्मान्महदुक्थं परस्मै न शंसेत्, नेदेतां प्रतिष्ठां छिनदा इति। एतां ह स प्रतिष्ठां छिनत्ति, यो महदुक्थं परस्मै शंसति। तस्मादुक्थशंसं भूयिष्ठं परिचक्षते। प्रतिष्ठां छिन्नो हि भवति। इत्यधिदैवतम् ॥ ५ ॥

अथाधियज्ञम्। यदेतन्मण्डलं तपति, अयं स रुक्मः। अथ यदेतदर्चिर्दीप्यते, इदं तत् पुष्करपर्णमापो ह्येताः आपः पुष्करपर्णम्। अथ य एष एतस्मिन् मण्डले पुरुषः, अयमेव स योऽयं हिरण्मयः पुरुषः। तदेतद्दैवतत्रयं मरुत्स्वेवोपधत्ते। नयनमध्ये सालु नस्यामूर्ध्व-मुत्तमामिति। तदेतदप्येति, य एष तपति। तस्मादग्निं नाद्रियेत परिम्लुम। अमुत्र ह्यस्य तदा भवतीत्यधियज्ञम् ॥ ६ ॥

---

अस्मिन् अग्निरहस्यब्राह्मणे मण्डलपुरुषे आदौ अग्नित्वभावनां ततो मृत्युत्वभावनाञ्च विधाय, मण्डलपुरुषस्याधिदैवतं स्थितस्य

अथाध्यात्मम् । यदेतन्मण्डलं तपति यश्चैष रुक्मः, इदं तच्छुक्लमक्षन् । अथ यदेतदर्चिर्दीप्यते यच्चैतत् पुष्करपर्णम्, इदं तत् कृष्णमक्षन् । अथ य एष एतस्मिन् मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषः, अयमेव स योऽयं दक्षिणेऽक्षन् पुरुषः ॥ ७ ॥

स एष एव लोकम्पृणा । तामेव सर्वोऽग्निरभिसम्पद्यते । तस्यै तन्मिथुनं योऽयं सव्येऽक्षन् पुरुषः । अर्धमु हैतदात्मनो यन्मिथुनम् । यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै । तद्यत् ते द्वे भवतो द्वन्द्वं हि मिथुनं प्रजननम् । तस्मात् द्वे-द्वे लोकम्पृणे उपधीयेते । तस्मादु द्वाभ्यां द्वाभ्यां चितिं प्रणयन्ति ॥ ८ ॥

स एष एवेन्द्रः, योऽयं दक्षिणेऽक्षन् पुरुषः । अथेयमिन्द्राणी । ताभ्यां देवा एतां विधृतिमकुर्वन् नासिकाम् । तस्माज्जायाया अन्ते नाश्नीयात्, वीर्यवान् हास्माज्जायते । वीर्यवन्तमु ह सा जनयति, यस्या अन्ते नाश्नाति ॥ ९ ॥

तदेतद्देवव्रतं राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति । तस्मादु तेषु वीर्यवान् जायते नृतचाका वयसां साक्षिमद्येन जनयति ॥

तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतः । तौ यदा मिथुनस्यान्तं गच्छतोऽथ हैतत्पुरुषः स्वपिति । तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वाऽसंविद इव भवति, एवं हैवैतदसंविद इव भवति । दैवं ह्येतन् मिथुनम् । परमो ह्येष आनन्दः ॥ ११ ॥

तस्मादेवंवित् स्वप्यात् । लोक्यं हैते एव तद्देवते मिथुनेन प्रियेण धाम्ना समर्धयति । तस्मादु ह स्वपन्तं धुरेव न बोधयेत्, नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति । तस्मादु हैतत् सुषुपुषः श्लेष्मणमिव मुखं भवति । एते एव तद्देवते रेतः सिञ्चतः । तस्माद्रेतस इदं सर्वं सम्भवति यदिदं किञ्च ॥ १२ ॥

---

अधिदैवताद्धिरण्मयपुरुषैक्यम्, अध्यात्म दक्षिणाक्षिगतपुरुषे तदुभयपुरुषैक्यञ्च प्रदर्श्य, अध्यात्मपुरुषे लोकम्पृणात्व दक्षिणाक्षिपुरुषे

स एष एव मृत्यु, य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष । तस्य हैतस्य हृदये पादावतिहितौ। तौ हैतदाच्छिद्योत्क्रामति। स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते। तस्माद् हैतत् प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥

एष उ एव प्राण । एष हीमा सर्वा प्रजा प्रणयति। तस्यैते प्राणा स्वा । स यदा स्वपिति, अथैनमेते प्राणा स्वा अपियन्ति। तस्मात् स्वाप्यय । स्वाप्ययो ह वै। तं स्वप्न इत्याचक्षते परोक्षं परोक्षम् । परोक्षकामा हि देवा ॥ १४ ॥

स एतै सुप्त न कस्यचन वेद । न मनसा सङ्कल्पयति । न वाचाऽन्नस्य रसं विजानाति। न प्राणेन गन्धं विजानाति। न चक्षुषा पश्यति। न श्रोत्रेण शृणोति। एतं ह्येते तदापीता भवन्ति। स एष एक सन् प्रजासु बहुधा व्याविष्ट । तस्मादेका सती लोकम्पृणा सर्वमग्निमनु विभवति। अथ यदेक एव, तस्मादेका ॥ १५ ॥

तदाहु —एको मृत्युर्बहव इति । एकश्च बहवश्चेति ह ब्रूयात्। यद् हासावमुत्र, तेनैक। अथ यदिह प्रजासु बहुधा व्याविष्ट, तेनो बहव ॥

तदाहु —अन्तिके मृत्युर्दूरा इति। अन्तिके च दूरे चेति ह ब्रूयात्। यद्धायमिहाध्यात्मम्, तेनान्तिके। अथ यदसावमुत्र, तेनो दूरे ॥१७

तदेष श्लोको भवति। अन्ते भात्यपश्रितो रसानां सक्षरेऽमृत इति । यदेतन्मण्डलं तपति, तदन्नम् । अथ य एष एतस्मिन् मण्डले पुरुष सोऽत्ता । स एतस्मिन्ननेऽपश्रितो भातीत्यधिदैवतम् ॥ १८ ॥

अथाध्यात्मम् । इदमेव शरीरमन्नम्। अथ योऽयं दक्षिणेऽक्षन् पुरुष, सोऽत्ता। स एतस्मिन्नन्ने अपश्रितो भाति ॥ १९ ॥

तमेतमग्निरित्यध्वर्यव उपासते, यजुरिति । एष हीदं सर्वं

---

इन्द्रत्वं सव्याक्षिपुरुषे इन्द्राणीत्वञ्च भावयित्वा, मण्डलदक्षिणाक्षिस्थपुरुषयोर्मृत्युं च प्राणं चञ्चारोप्य तत इदमुच्यते—

आदित्यमण्डलमिदं शरीरञ्चान्नम्। आदित्यपुरुषो दक्षिणाक्षि

युनक्ति। सामेति छन्दोगा । एतस्मिन् ह्येद सर्व समानम्। उक्थमिति बह्वृचा । एष ह्येद सर्वमुत्थापयति। यातुरिति यातुविद । एतेन ह्येद सर्व यतम्। विषमिति सर्पा । सर्प इति सर्पविद । ऊर्गिति देवा । रयिरिति मनुष्या । मायेत्यसुरा । स्वधेति पितर । देवजन इति देवजनविद । रूपमिति गन्धर्वा । गन्ध इत्यप्सरस ।

त यथा यथोपासते, तदेव भवति । तद्धैनान् भूत्वाऽवति । तस्मादेतमेवंवित् सर्वैरेवैतैरुपासीत । सर्व हैतद्भवति सर्व हैनमेतद् भूत्वाऽवति ॥ २० ॥

स एष त्रीष्टकोऽग्नि । ऋगेका, यजुरेका, सामैका । तद्या काञ्चर्चोपदधाति रुक्म एव तस्या आयतनम् । अथ या यजुषा पुरुष एव तस्या आयतनम् । अथ यां साम्ना पुष्करपर्णमेव तस्या आयतनम् । एष त्रीष्टक ॥ २१ ॥

ते वा एते उभे एव च रुक्म एतच्च पुष्करपर्णमेते पुरुषमपीत । उभे हि ऋक्सामे यजुरपीत । एष वेवैकेष्टक ॥ २२ ॥

स एष एव मृत्यु , य एष एतस्मिन् मण्डले पुरुषो यश्चाय दक्षिणेऽक्षन् पुरुष । स एष एवंविद आत्मा भवति । स यदैवंवि

---

पुरुषश्चात्मा । स परमात्मा । त यथायथोपासते, तदेव भवति । उपासकेन पुरुषेण यादृशावस्थाकाराद्यवच्छिन्नतया स्वयमुपासितो भवति, तादृशावस्थाकारावच्छिन्न एव भवन् स यथायथ तमुपासकमिह परत्र च रक्षति । तत्क्रतुनयविचार अस्मच्छान्दोग्यपरिशिष्ट द्रष्टव्य । शेष परस्तात्। अथ पुरुष त्रीष्टकाग्निमभिधत्ते । ऋग्यजुस्सामो पधेयेष्टकात्वात् अग्नेस्त्रीष्टकता । एकेष्टकश्च भाष्य । ऋक्सामयो र्यजुष्यप्ययात् यजुर्मात्रपरिशेषादकेष्टकत्वम् । एवम्भूतोऽय मण्डले दक्षिणे अक्षिणि च स्थित मृत्युत्वेन भाष्य । [सर्वसहर्तृत्वरूप-सामान्यधर्ममादाय मृत्युत्वभावनेति न सामान्यात्— इति सूत्र-भाष्ये स्थितम् । उपदिष्टे निर्दिष्टेरयोगात् मृत्युशब्दस्य गायत्रीसा-

दस्माॅल्लोकात् प्रेति, अथैतमेवात्मानमभिसम्भवति। सोऽमृतो भवति। मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥

इति अग्निरहस्ये पञ्चमाध्याये द्वितीय ब्राह्मणम् ॥

१०-५-३

नैव वा इदमग्रेऽसदासीन्नैव सदासीत्।

श्रीमते रामानुजाय नमः

[येनोपनिषदां भाष्यं रामानुजमतानुगम्।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥]

श्रीरङ्गरामानुजमुनिवरविरचिता अग्निरहस्यप्रकाशिका

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि।
क्रियतेऽग्निरहस्यस्य विवृतिर्विदुषां मुदे ॥

नैव वा इदमग्रे सदासीत् नैवासदासीत् = इदं जगत् सर्गाद्यसमये सर्वात्मना अभिव्यक्तनामरूपमपि नासीत्। सर्वात्मना स्वस्वरूपेणाप्यसन्नासीत्। विसृष्टानुन्मीलितचित्रवदासीदित्यर्थः ॥

---

इत्यवत् विवक्षितमित्यभ्याशयः स्यात्।] एवं भावितोऽयमात्मा स्वान्तरात्मत्वरूपेण यथावस्थिताकारेणोपास्यते चेत्, उपासकः प्रेत्यामृतो भवति। तस्य वस्तुनः एतदन्तरात्मत्वादिति।

इति वात्स्यचक्रवर्तिवीरराघवाचार्यकृतिषु
उपनिषद्भाष्यपरिष्कारे अग्निरहस्यभागगत-
पूर्वब्राह्मणपरिष्कारः।

**आसीदिव वा इदमग्रे नेवासीत् । तद्ध तन्मन एवास ॥ १ ॥**
**तस्मादेतदृषिणाभ्यनूक्तम् । नासदासीन्नो सदासीत्तदानीमिति नेव हि सन्मनो नेवासत् ॥ २ ॥**

---

**आसीदिव वा इदमग्रे नेवासीत् ।** स्वरूपेण सत्त्वात् सदिव, नामरूपव्यक्त्यभावात् असदिवेत्यर्थः । **तद्ध तन्मन आस ।** तद् सदा तन्मन प्रादुर्बभूव । तस्मिन् काले प्रथमतो मन सृष्टमित्यर्थः ॥१

**तस्मादेतदृषिणाभ्यनूक्तम् ।** यत एव सर्गाद्यसमयस्य तादृग्रूपत्वम्, अत एव सर्गाद्यसमयस्वरूप वेदेनाप्यनूक्तम्, **नासदासीदिति ।** उक्तोऽर्थः । **नेव हि सन्मनो नेवासत् ।** तस्मिन् समये उत्पन्नमपि मन किञ्चिदभिव्यक्तनामरूपत्वादसदपि न भवति, अत्यन्ताभिव्यक्तनामरूपत्वाभावात सदपि न भवतीत्यर्थः । २ ॥

---

(मनश्चिदाद्यग्निब्राह्मणभाष्यपरिष्कारः)

यथा ईशावास्यानुवाकः संहितान्तर्गतोऽपि शारीरकोपयुक्तः सर्वैरादृियते, तथा ब्राह्मणान्तर्गतोऽप्यग्निरहस्यभागोऽयमादरणीयः, शारीरके तृतीयतृतीये मनश्चिदाद्यग्निनाम्नस्य मनोमयस्य मनोरत्न निहितस्य मीमांसनात्, उपनिषदन्तरदर्शितवैश्वानरादिविद्याविधानदर्शनाच्चेति विभाव्य सूत्रभाष्याद्यर्थादिनाधर्मोपर्यसंपिपादयिषया उपनिषदन्तराणामिव अग्निरहस्यभागस्याप्यर्थं प्रकाशयितुमाचार्यो भाष्य भाष्यिष्यमाण सर्वस्वग्रन्थानुगत मङ्गलश्लोकगिरापि निबध्नाति स्मेति ।

तद्ध तन्मन एवासेति । मनश्चिदादयोऽग्नयो मनोमया इह वक्ष्यन्ते विद्यामयक्रतूपयोगितया । तत्र मनस एवोपयोगात् सृष्ट्यारम्भे मन एवेह कथितम् । न तावता तत्पूर्वसृष्टमहदादितत्त्वकारणानां व्यावृत्तिः । अपेक्षितमात्रेणोपक्रमः श्रुतिदर्शी ।

तदिदं मनः सृष्टमाविरबुभूषत् निरुक्ततरं मूर्ततरम्। तदात्मानमन्वैच्छत् । तत् तपोऽतप्यत । तत् प्रामूर्च्छत् ।

तत् षट्त्रिँशतँसहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मनोमयान् मनश्चितः ।

---

तदिदं मूर्ततरम् । एवं मनः सृष्टं ईषदभिव्यक्तनामरूपतया निरुक्तमपि मूर्तमपि निरुक्ततरतया [मूर्ततरतया च?] आविर्भवितुमैच्छत् । अत्यन्तनामरूपव्यापाराभिव्यक्तिमैच्छदित्यर्थः । तदात्मानं तपोऽतप्यत । [तत् मनश्शरीरकपरमात्मा ?] आत्मानं चिन्तयन् संकल्परूपं तपः कृतवानित्यर्थः । [मनःपरामर्शि तत्पदं ?] 'मृदब्रवीत्' इत्यादिवत् तदभिमानिदेवतापरं द्रष्टव्यम्। तत् प्रामूर्च्छत्। तत् मनः समुच्छ्रितं विस्तृ (स्तृ ?) तमभवदित्यर्थः । 'मूर्च्छा मोहसमुच्छ्राययोः' इति हि धातुः ।

तत् षट् ... मनश्चितः । तन्मन एव—षट्त्रिंशत्सहस्रदिनात्मकपुरुषायुषान्तर्गतैकैकदिनप्रभवमानसवृत्तिसंघाताः अग्नित्वदृष्ट्या उपास्यमानाः मनश्चितः । [तान् ?] आत्मनस्सम्बन्धिनः अर्कान् अर्चनीयान् मनोमयान् मनोनिष्पाद्यानपश्यदित्यर्थः । 'कर्मण्यग्न्याख्यायाम्' इति

---

मूर्ततरमिति । इष्टकचिताग्निरूपरूपमूर्ततुल्यमनोमयमनश्चिदाद्यनेकाग्निसंपादकत्वादस्य मूर्ततरत्वम् । मानसवृत्तिसंघाता इति । ननु मनश्चित्पदस्वारस्यानुरोधेन मनस एवाश्रितत्वम् । तस्यैव तत्तद्दिनावच्छिन्नत्वेन भेदकल्पनया अनेकत्वोपपत्तेरिति चेत्—उपरि, 'सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति प्राणिप्रयत्नसाध्यत्वस्य स्पष्टमवगमात् मनसस्तदभावात् मनोव्यापारग्रहणम् । एवञ्च भेदकल्पनक्लेशोऽपि नेति ।

मनश्चीयत इत्यर्थे क्विप् । श्येनचिदादिशब्दवत् असौ क्विबन्तो निष्पन्नः । मनश्चितो नामाग्नय इति यावत् ।

---

क्विबन्तो निष्पन्न इति । अतः इष्टकचितशब्दवत् अयमकारान्त इति न मन्तव्यम् । उपरि मनश्चित्सु इति प्रयोगोऽप्यस्ति । एवं वाक्चित इत्यादिरपि क्विबन्त एव । सर्वोऽयं तकारान्तबहुवचनान्तः । न तु इष्टकचितशब्दवत् अकारान्तैकवचनान्तः । इष्टकचित इत्यस्य इष्टकाभिश्चित इति विग्रहः । 'इष्टकेषीकामालानां चिततूलभारिषु' इत्यनुशासनात् चितशब्दे परे इष्टकाशब्दे ह्रस्वः । चितशब्दः तत्र क्तान्तः । मनश्चित्पदं तु श्येनचित्पदवत्, 'कर्मण्यग्न्याख्यायाम्' इति सूत्रनिष्पादितम् । तत्र कर्मणीत्यनुवर्तते । कर्मणि उपपदे कर्मकारकरूपार्थे चिनोतेः क्विप् स्यात् अग्निवाचित्वे इति तदर्थः । अग्निरत्र आहवनीयाग्न्याधारस्थण्डिलविशेषः । एवञ्चात्र चित् इत्यस्य चितशब्दस्येव चयनकर्मार्थकत्वेऽपि तदुपपदभूतमनःश्येनादिशब्दाः इष्टकाशब्दवत् न चयनकरणवाचकाः ; किन्तु चीयमानवस्तुपराः । 'श्येनचितं चिन्वीत' इत्यस्य हि श्येन इव यो भवति अग्निश्चीयमानः, तमग्निं चिन्वीतेत्यर्थः । आहवनीयाधारभूतस्थलविशेषस्य श्येनपक्षिसमानाकारतया निर्माणात् श्येनपक्षिणः चीयमानस्थलस्य चाभेदारोपात् श्येनचित् इति तत् स्थलमुच्यते । तद्वत् मनश्चित् इत्यत्रापि मनसः, मतौ वस्तुतश्चीयमानस्याग्नेश्चाभेदारोपो द्रष्टव्यः । तत्र, 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन्' इति मनस्संघटितेषु षट्त्रिंशत्सहस्रेषु अग्नित्वकथनात् मनोव्यापारसंघाताः तावन्त एवाग्नय इति मनश्चिदित्यत्र मनःपदं तादृशसंघातपरं ग्राह्यम् । तेष्वेकैकसंघातेऽपि चित्याग्न्यभेदारोपः । व्यापारसंघातानामनेकत्वात् अग्न्यनेकत्वादृष्टं चित इति बहुवचनम् । अत्रायं विशेषः—श्येनचिदित्यत्र श्येनस्य अग्निरूपस्थलस्य च मूर्तत्वात् अग्नौ श्येनतादात्म्यकल्पना श्येनसदृशाकारसंपादनेन क्रियते । इह तु मनोव्यापाराणाममूर्ततया

तेषु मनसैवाऽऽधीयन्त । मनसाऽचीयन्त । मनसैषु ग्रहा अगृह्यन्त । मनसाऽस्तुवत । मनसाऽशंसन् ।

तेषु—। एषु मनश्चिदाद्यग्निषु उपयुक्तान्या(न्या ?)धानचयन-ग्रहणस्तोत्रशस्त्राण्यपि मनोनिष्पाद्यान्येवेत्यर्थः । ननु सर्वेषां मनोव्यापाराणामग्नित्वदृष्ट्या क्रोडीकृतत्व त् आधानचयनग्रहणस्तोत्रशस्त्रादिदृष्टि-विषयो मनोव्यापारो नास्तीति शङ्क्यम्--केषांचित् व्यापाराणामग्नित्व-दृष्ट्या क्रोडीकारस्य केषांचित् तदुपयोग्याधानचयनस्तोत्रादि-व्यापारत्वेन क्रोडीकारस्य वा (च ?) संभवात् नानुपपत्तिः ।

सदृशाकारसंपादनायोगात् अभेदारोपमात्रम् । तत्रापि क्रतावुप-युज्यमाने स्थलविशेषरूपाग्नौ क्रतुकाले मनोव्यापारतादात्म्यभाव-नेति न मन्तव्यम् ; 'मनोमयेषु मनश्चित्सु मनोमयमक्रियत' इति श्रुतेर्मनोमयत्ववेदनेन पूर्वोक्तमानसव्यापारसंघाते अग्निरूपस्थल-विशेषस्यारोपणपूर्वकंतत्र अग्नौ यत्कर्तव्यमर्धकार्यक्रियमाणत्वभावनाया ज्ञापनात् । तथा च मनश्चित इत्यस्य अग्नित्वेन भावनीयान् मानस-व्यापारसंघातानित्यर्थः पर्यवस्यति । मूले अग्नीनिति पदं स्पष्टार्थं प्रयुक्तम् । अग्न्यारयायामेव किंचिद्विधानात चित्पदेनैव तत्सिद्धेः ।

आधानेति । मूले मनसैवाधीयन्त इत्यत्र आधीयन्त इत्येव पदच्छेदात् आधानमेव वक्तुं शक्यम्, नान्यत् । तथैवोपरि, तान्ये-वादधतीति च वक्ष्यते । आधानचयनादीनां भावनामात्ररूपाणामत्र कथनात् वास्तवाधानचयनादिकं नास्तीति सिद्धया क्रत्वन्तर्गते चित्याग्नौ न मनोव्यापारादिभावना । अत एव वास्तवचयनाद्य-भावात् नात्र वास्तवक्रतुरपीति लभ्यते ।

तर्हि भावितानामग्नि-आधान-चयन-ग्रहणादीनां कुत्रोप-योगः ? किं पूर्वोक्तक्रतिपयमात्रे भावनीयम्, उतान्यदपीति जिज्ञा-

यत् किं च यज्ञे कर्म क्रियते, यत् किं च यज्ञियं कर्म, मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत ।

तद्यत् किंचेमानि भूतानि मनसा संकल्पयन्ति, तेषामेव सा कृतिः। तानेवादधति, तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति, तेषु स्तुवते, तेषु शंसन्ति। एतावती वै मनसो विभूतिरेतावती विसृष्टिरेतावन्मनः ।

---

यत् . अक्रियत । यज्ञप्रयोगे यत् प्रधानं कर्म क्रियते, यच्च यज्ञोपयुक्तं तदङ्गभूतं कर्म ग्रहणस्तोत्रशस्त्रादिकम्, तत् सर्वं मनोमयेषु मनश्चित्सु मनसैव मनोमयमक्रियतेत्यर्थः ।

तद्यद्...कृतिः । तत् तस्मात् लोके सर्वैः भूतैः क्रियमाणा मनोव्यापाराः सर्वेऽपि एतन्निष्पाद्यानां चित्यमयानां मनश्चितां निष्पादकव्यापारा इत्यर्थः । मनोव्यापारत्वावच्छिन्नेषु सर्वेषु क्रियमाणतया अभिरहस्ये सकलमनोव्यापाराश्रिततया सर्वेषां मनोव्यापाराणां साध्यमन्ताग्निनिष्पादकत्वादिति भावः ।

तानेव शंसन्ति । सर्वाणि भूतानि विदुषा सम्पाद्येषु मनश्चित्सग्निषु उपयुक्तानि आधानचयनग्रहणस्तोत्रशस्त्राणि निष्पादयन्तीत्यर्थः । एतावती...मनः । मनस एतेऽन्वयः । सर्वे तदधीनाः तत्कार्यभूता एव इत्याम हात्म्यशालिन इत्यर्थः ।

---

सायामुच्यते यत् किंचेति । यज्ञस्य कर्मेति प्रयोक्तव्ये यज्ञे कर्मेति प्रयोगात् यज्ञपदं, 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यत्रेव प्रयोगपरमिति विज्ञायते भावप्रकाशिकायाम् । यद्वा यज्ञपदं यथाश्रुतमेवास्तु । यज्ञत्व सामर्थ्यं । यज्ञो हि नाम प्रक्षेपाङ्गको देवतोद्देश्यको द्रव्यत्यागः । तथा च यज्ञस्वरूपान्तर्गतमुद्देशत्यागादिरूपं कर्मेति यज्ञे कर्मेत्यस्यार्थः । तेन प्रधानकर्मग्रहणम् । अङ्गं सर्वं यज्ञियं कर्मेत्यनेन गृह्यते ।

षट्त्रिँशत् सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान् यावानसौ पूर्वः ॥ ३ ॥

तन्मनो वाचमसृजत । सेयं वाक् सृष्टाऽऽविरबुभूषन्निरुक्ततरा मूर्ततरा। साऽऽत्मानमन्वैच्छत्। सा तपोऽतप्यत। सा प्रामूर्च्छत् । सा षट्त्रिँशतँ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् वाङ्मयान् वाक्चितः

---

षट्....पूर्वः। षट्त्रिंशत्सहस्रसंख्याकानामर्चनीयानामग्नीनामेषां मध्ये एकैकोऽप्यग्निः पूर्वोक्तेष्टकचिताग्निसदृश इत्यर्थः । इष्टकचितस्याग्नेः स्वाङ्गभूतक्रतुद्वारेण यत् फलम् , तदेव मनश्चिदादीनामपि विद्यामयक्रतुद्वारेण फलमित्यर्थः । एवमुत्तरत्रापि ॥ ३ ॥

वाक्चितः— वागिन्द्रियव्यापाराः ।

---

वाक्चितो वागिन्द्रियव्यापारा इत्यादि। मनश्चिच्छब्दे उक्तया रीत्या वाक्चिदादिपदेष्वपि व्युत्पत्तिः प्रदर्शनीयेति, 'आत्मनोऽग्नीनर्कान् वाङ्मयान्' इति वाक्संबन्धिषु वाग्विकारेषु अग्नित्वकथनबलेन वाक्पदं वाग्व्यापारपरम्, चित्पदं चयनकर्मभूताग्निपरम्, उभयोरभेदारोपः इत्येव सिद्ध्यति । अथापि अग्निपदसमभिव्याहारादेव वाग्व्यापारेषु अग्न्यभेदलाभात् व्युत्पत्तिप्रदर्शनार्थं तावदुक्तावपि अन्ततः वाग्व्यापारमात्रं वाक्चित्पदेनेह विवक्षितुं युक्तमिति निष्कृष्यैवमुक्तम् । रीतिरि[illegible] पदेऽप्यन्ततो भाव्या, 'अग्नीन्... मनश्चितः' इत्यत्र । 'मनो[illegible]' इत्यत्र [illegible] अग्नि[illegible]दान्तरा-
चित्पदमग्निसमर्प[illegible] इत्याद्य[illegible]धवा

ते वाचैवाऽऽधीयन्त वाचाऽचीयन्त वाचैषु ग्रहा अगृह्यन्त वाचा-स्तुवत वाचाऽशँसन्। यत्कि च यज्ञे कर्म क्रियते, यत्किं च यज्ञियं कर्म, वाचैव तेषु तद्वाङ्मयेषु वाक्चित्सु वाङ्मयमक्रियत। तद्यत् किं चेमानि भूतानि वाचा वदन्ति, तेषामेव सा कृतिः। तानेवाऽऽदधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु शँसन्ति। एतावती वै वाचो विभूतिरेतावती विसृष्टिरेतावती वाक्। षट्त्रिँशत् सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान् यावानसौ पूर्वः ॥ ४ ॥

सा वाक् प्राणमसृजत। सोऽयं प्राणः सृष्ट आविर्बुभूषन्निरुक्ततरो मूर्त्ततरः। स आत्मानमन्वैच्छत् स तपोऽतप्यत। स प्रामूर्च्छत्। स षट्त्रिँशतँ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्प्राणमयान्प्राणचितः। ते प्राणेनैवाधीयन्त प्राणेनाचीयन्त प्राणेनैषु ग्रहा अगृह्यन्त प्राणेनास्तुवत प्राणेनाशँसन्। यत्कि च यज्ञे कर्म क्रियते यत्कि च यज्ञियं कर्म प्राणेनैव तेषु तत् प्राणमयेषु प्राणचित्सु प्राणमयम-क्रियत। तद्यत्कि चेमानि भूतानि प्राणेन प्राणन्ति तेषामेव सा कृतिः। तानेवाऽऽदधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु शँसन्ति। एतावती वै प्राणस्य विभूतिरेतावती विसृष्टिरेतावान् प्राणः। षट्त्रिँशत् पूर्वः ॥ ५ ॥

स प्राणश्चक्षुरसृजत। तदिदं चक्षुः सृष्टमाविर्बुभूषन्निरुक्ततरं मूर्त्ततरम्। तदात्मानमन्वैच्छत् तत्तपोऽतप्यत तत् प्रामूर्च्छत्। तत् षट्त्रिँशतँ सहस्राण्यपश्यदात्मनोऽग्नीनर्कांश्चक्षुर्मयांश्चक्षुश्चितः। ते चक्षुषैवाऽऽधीयन्त चक्षुषाचीयन्त चक्षुषैषु ग्रहा अगृह्यन्त चक्षुषास्तु-वत चक्षुषाशँसन् यत्कि च यज्ञे कर्म क्रियते यत्कि च यज्ञियं कर्म

वाचैवेत्यादि। वाग्व्यापारात्मकेष्वग्निषु वाग्व्यापारात्मकानि कर्माणि वाचैवाक्रियन्त—वाग्व्यापारेणैवाक्रियन्त। वाग्व्यापार एव यत्संबन्धिकर्मरूपा आख्या इति यावत्। (४) ॥ एवमग्रेऽपि।

चक्षुर्ष्वेव तेषु तच्चक्षुर्मयेषु चक्षुश्चित्सु चक्षुर्मयमक्रियत । तद्यत्किं चेमानि भूतानि चक्षुषा पश्यन्ति तेषामेव सा कृतिः। तानेवाऽऽदधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु श॒ँसन्त्येतावती वै चक्षुषो विभूतिरेतावती विसृष्टिरेतावच्चक्षुः। षटत्रि॒ँशत्...पूर्वः॥६

तच्चक्षुः श्रोत्रमसृजत। तदिद॒ँश्रोत्र॒ँस्पष्टमाविरबुभूषन्निरुक्ततरं मूर्ततरम्। तदात्मानमन्वैच्छत्। तत्तपोऽतप्यत तत्प्रामूर्च्छत्। तत्षट्त्रि॒ँशत॒ँसहस्राण्यपश्यदात्मनोऽग्नीनर्कान्छ्रोत्रमयाञ्छ्रोत्रचितः । ते श्रोत्रेणैवाऽऽधीयन्त श्रोत्रेणाचीयन्त श्रोत्रेणैषु ग्रहा अगृह्यन्त श्रोत्रेणास्तुवत श्रोत्रेणाश॒ँसन्। यत्किंच यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म श्रोत्रेणैव तेषु तच्छ्रोत्रमयेषु श्रोत्रचित्सु श्रोत्रमयमक्रियत। तद्यत्किं चेमानि भूतानि श्रोत्रेण शृण्वन्ति तेषामेव सा कृतिः । तानेवाऽऽदधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु श॒ँसन्ति । एतावती वै श्रोत्रस्य विभूतिरेतावती विसृष्टिरेतावच्छ्रोत्रम् । षट्त्रि॒ँशत्.. ...पूर्वः ॥ ७ ॥

तच्छ्रोत्रं कर्मासृजत। तत्प्राणानभिसममूर्च्छदिम॒ँसंदेव(?) महत्संदेहमकृत्स्नं वै कर्मर्ते प्राणेभ्यः। अकृत्स्ना उ वै प्राणा ऋते कर्मणः ॥८

तदिदं कर्म स्पष्टमाविरबुभूषत् निरुक्ततरं मूर्ततरम् । तदात्मानमन्वैच्छत् तत् तपोऽतप्यत तत्प्रामूर्च्छत्। तत्षट्त्रि॒ँशत॒ँसहस्राण्यपश्यदात्मनोऽग्नीनर्कान् कर्ममयान् कर्मचितः। ते कर्मणैवाऽऽधीयन्त कर्मणाचीयन्त कर्मणैषु ग्रहा अगृह्यन्त कर्मणास्तुवत कर्मणाश॒ँसन्। यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म कर्मणैव तेषु तत्कर्ममयेषु कर्मचित्सु कर्ममयमक्रियत । तद्यत्किं चेमानि भूतानि कर्म कुर्वते तेषामेव सा कृतिः । तानेवाऽऽदधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु श॒ँसन्ति । एतावती वै कर्मणो विभूतिरेतावती विसृष्टिरेतावत्कर्म । षट्त्रि॒ँशत् . पूर्वः ॥ ९ ॥

---

कर्मचितः—वागिन्द्रियातिरिक्तकर्मेन्द्रियव्यापाराः ।

तत् कर्माग्निमसृजत । आविस्तरां वा अग्निः कर्मणः । कर्मणा ह्येनं जनयन्ति ; कर्मणेन्धते ॥ १० ॥

सोऽयमग्निः सृष्ट आविस्तरामभवत् निरुक्ततरो मूर्ततरः । स आत्मानमन्वैच्छत् स तपोऽतप्यत स प्रामूर्छत् स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कानग्निचितः । तेऽग्निमया आधीयन्ताग्निमयाश्चीयन्ताग्निमयेषु ग्रहा अगृह्यन्ताग्निनास्तुवन्नाग्निनाशंसन् । यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म अग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत । तद्यत्किं चेमानि भूतान्यग्निमिन्धते तेषामेव सा कृतिः । तानेवाऽऽदधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु शंसन्ति । एतावती वा अग्नेर्विभूतिरेतावती विसृष्टिरेतावानग्निः । षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः ; तेषामेकैक एव तावान् यावानसौ पूर्वः ॥ ११ ॥ ते हैते विद्याचित एव । तान् हैतानेवंविदे सर्वदा सर्वाणि

---

अग्निचितः जाठराग्निव्यापाराः । ते हैते विद्याचित एव । एते मनश्चिदादयः सर्वेऽपि विद्याचिताः विद्यया चिता इत्यर्थः । न तु मनश्चिदादीनामेव विद्यारूपचित्त्व (चित्त्वमेव ?) बोध्यते । तस्य सिद्धत्वेन विद्याचित एवेत्यवधारणवैयर्थ्यप्रसङ्गात् । अतो विद्याचित एवेत्यस्य, विद्यामयमानसग्रहादेः क्रियामयद्वादशाहादिवत्स्वर्थत्ववत् विद्यामयस्य मनश्चिदादेः प्रसक्तस्य क्रियामयत्वस्वर्थत्वस्य प्रतिषेधार्थत्वमेव ॥

तान् ह स्वपते । एवंविदे विद्यामयक्रतुमते आसते स्वपते च सर्वाणि भूतानि सर्वदा अग्निं चिन्वन्तीत्यर्थः । सार्वकालिकसंभृत-

---

तस्य सिद्धत्वेनेति । "वाङ्मनश्चक्षुरादिव्यापाराणामिष्टकादिवत् चयनानुपपत्तेर्मनसा संपादिताग्नित्वेन विद्यारूपत्वे सिद्धेऽपि" इति भाष्योक्तरीत्या सिद्धत्वेनेत्यर्थः ।

स्वपते इत्येतत् एवंविदे इत्यस्य विशेषणम् ।

भूतानि चिन्वन्त्यपि स्वपते। विद्यया हैवैत एवंविदश्चिता भवन्ति ॥१२॥

कर्तृकर्मनोव्यापाराः अग्नित्वदृष्टिविशिष्टाः विद्यावत्पुरुषशेषभूताः चयनरूपा एवाऽऽसन्नित्यर्थः। अत्र सर्वभूतकर्तृकर्मकालव्यापिमनोव्यापाररूपाग्नेः परिमितकालकर्तृकक्रियामयकरत्वनुप्रवेशासामर्थ्यात् विद्यामयक्रतावनुप्रवेशसामर्थ्याच्च मनश्चिद्रूपोऽग्निः न मानसग्रहवत् क्रियामयक्रत्वनुप्रवेशी; अपि तु विद्यामयक्रत्वनुप्रवेशीति द्रष्टव्यम्। ते हैते विद्याचित एवेत्येतद्व्यर्थं विवृणोति विद्यया हैवैत एवं विदश्चिता भवन्ति। एवंविद पुरुषस्य "विद्यया विद्यामयेन क्रतुना संबद्धाः मनश्चिदादयः चिता भवन्तीत्यर्थः" इति भगवता भाष्यकृतोक्तम्। "अत्र विद्ययेति विद्या प्रयोजनतया हेतुः। विद्यार्थं चिता इत्यर्थः" इति व्याख्यातृभिर्व्याख्यातञ्च। अत्र विद्यया हैवैत इति वाक्यस्य ते हैते विद्याचित एवेति वाक्यविवरणरूपत्वस्य भाष्य एवाविष्कृतत्वात् विद्याचित एवेत्यस्यापि विद्यार्थं चित इति पूर्वोक्त एवार्थ इत्यर्थः॥

इति मनश्चिदाद्यग्निविद्यामयक्रतुब्राह्मणप्रकाशिका॥

---

विद्यार्थं चित इति पूर्वोक्त एवार्थ इति। ननु कर्मण्यग्न्याख्यायामिति सूत्रेण श्येनचिदादिवत् विद्याचिदादिनपि निष्पाद्यमिति विद्यार्थं चित इति कथम्? सत्यम्। अथाप्यत्र विद्यापदं न मनोव्यापारवाग्व्यापारादिगताग्नित्वभावनापरम्। अग्नित्वभावनायां चित्पदार्थाग्न्यभेदानन्वयात्। मनश्चिनः वाक्चितः इत्यादिषु व्यापारेष्वग्न्यभेदारोपस्यैव प्रागुक्तत्वात्। चित्पदार्थाग्न्यभेदारोपस्य मनोव्यापारादिगताग्नित्वभावनायां पुनरुक्तत्वाच्च। अतः विद्यापदं भावनाविषयव्यापारलाक्षणिकं वाच्यम्। अग्नित्वभावनारूपविद्याविषयभूता व्यापाराः चित्पदार्थभूताग्नय इत्युक्तं भवति। अत्राप्या-

हा ओषधयश्च वनस्पतयश्च पुरीषमाहुतयः समिधोऽग्निर्लोकम्पृणा।

तद्वा एतत् सर्वमग्निमेवाभिसम्पद्यते। तत् सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते।

---

कर्तव्येत्यर्थः। **पशवः सूददोहाः**। सूददोहाः–'सूदयेदकः दोहाः ता अस्य सूददोहसः' इत्युपधेया इष्टकाः। आग्नेयेषु सूददोहेषु पशुत्वबुद्धिः कार्येत्यर्थः।

**ओषधयश्च वनस्पतयश्च पुरीषम्**। इष्टकासन्ध्याच्छादनार्थं गोमयेषु ओषधिवनस्पतित्वबुद्धिः कार्येत्यर्थः। **आहुतयः समिधः**। स्थण्डिलाग्नौ क्रियमाणासु आहुतिषु इन्धनत्वबुद्धिः कर्तव्या। **अग्निर्लोकम्पृणा**। भूततृतीयरूपोऽग्निः लोकंपृणच्छिद्रंपृणेति मन्त्रोपधेया इष्टकेत्यर्थः। 'पृण प्रीणने' इत्येतस्मात् तौदादिकात् लोकं पृणतीत्ये तस्मिन्नर्थे मूलविभुजादित्वात् कप्रत्यये, 'लोकस्य पृणे मुं वक्तव्यम्' इति मुमागमे स्त्रीत्वात् टापि लोकम्पृणेति रूपसिद्धिः।

**तद्वा एतत् सर्वमग्निमेवाभिसंपद्यते**। 'अयं वाव लोक' इत्यादिनिर्दिष्टं भूलोकसमुद्रजलमनुष्यपश्वादिकं सर्वं भूततृतीयमग्निमेवाभिसंपद्यते। अग्निलीनं भवतीत्यर्थः। **तत् सर्वोऽग्निर्लोकम्पृणा**

---

'पृण प्रीणने' इति पाठः शुद्धः; न तु प्रीण प्रीणन इति। न चात्र दर्शिता प्रक्रिया पूर्वविकल्पाधिकरणान्तिमसूत्रश्रुतप्रकाशिकाविरुद्धेति वाच्यम्—तत्र दृश्यमानस्य टीकापाठस्य अशुद्धत्वात् लोकम्पृणारूपसुप्रसिद्धेप्रकाविषयत्वात् मूलस्य। लोकम्पृणाया लोकम्पृणात्वम्, छिद्रम्पृणाशब्द इव चयनभूप्रदेशापूरकत्वरूपार्थं तस्य शब्दस्य व्युत्पत्तिप्रदर्शनेन कामं वर्ण्यताम्। विवक्षितो वाक्यार्थः पुनरयमिति।

स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसम्पद्यते ॥१

अन्तरिक्षँ ह त्वेवैषोऽग्निश्चितः। तस्य द्यावापृथिव्योरेव संधिः परिश्रितः। परेण ह्यन्तरिक्षं द्यावापृथिवी संधत्तः। ताः परिश्रितो वयाँसि यजुष्मत्य इष्टका वर्षँसूददोहा मरीचयः पुरीषमाहुतयः समिधो वायुर्लोकम्पृणा। तद्वा एतत्सर्वं वायुमेवाभिसम्पद्यते। तद् सर्वोऽग्निर्लो　　पद्यते ॥ २ ॥

द्यौर्ह त्वेवैषोऽग्निश्चितः। तस्यापः एव परिश्रितो यथा ह वा इदं कोशः समुब्जित एवमिमे लोका अप्स्वन्तस्तद्या इमाँल्लोकान् परेणापस्ताः परिश्रितो देवा यजुष्मत्य इष्टका यदेवैतस्मिँल्लोकेऽन्नं तत्सूददोहा नक्षत्राणि पुरीषमाहुतयः समिध आदित्यो लोकम्पृणा तद्वा एतत्सर्वमादित्यमेवाभिसम्पद्यते। तत्सर्वोऽग्निर्लो　　पद्यते ॥ ३ ॥

आदित्यो ह त्वेवैषोऽग्निश्चितः। तस्य दिश एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं दिशः समन्तं परियन्ति रश्मयो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मय-

---

र्णामभिसम्पद्यते। 'एषोऽग्निश्चित' इत्यादिनिर्दिष्ट सर्वावयवयुक्तोऽग्नि लोकम्पृणामिष्टका मात्रं समाप्तो भवतीत्यर्थः। लोकम्पृणाया पूरणार्थत्वेन तदन्तत्वादग्निसमाप्तेरित्यर्थः। ततश्च सर्वाभिमपत्तिकर्मभूते भूतशब्दे यामौ सर्वावयवयुक्तस्थण्डिलाग्न्यभिसपत्तिकर्म(धर्म)भू-लोकम्पृणाद्दृष्टिरुप-पद्यत इति भाव

स यो हैतदेव...सर्वमभिसंपद्यते। एवम्-उक्तेन प्रकारेण एतत् एतमग्निम्—लिङ्गव्यत्ययश्छान्दस —लोकम्पृणा यो वेद, एनं विद्वांसम् एतत् सर्वं तमभिसपद्यते। शेषभूततया आश्रयतीत्यर्थः। एवमुत्तरेष्वपि। उत्तरत्रोपयोगमान्द्यात् नार्थो लिख्यते।

स्तद्यत्परिश्रित्सु यजुष्मतीः प्रत्यर्पयति रश्मींस्तद्दिक्षु प्रत्यर्पयत्यथ यद-न्तरा दिशश्च रश्मींश्च तत्सूददोहाः अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वं दिश इति चैव रश्मय इति चाख्यायते । तत्सर्वोऽग्निर्लो . ॥ ४ ॥

नक्षत्राणि ह त्वेवैषोऽग्निश्चितः । तानि वा एतानि सप्त-विँशतिर्नक्षत्राणि सप्तविँशतिः सप्तविँशतिर्ह्योपनक्षत्राण्येकैकं नक्षत्रमनूपतिष्ठन्ते तानि सप्त च शतानि विँशतिश्चाधिषट्त्रिँशत्ततो यानि सप्त च शतानि विँशतिश्चेष्टका एव ताः परिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि-षट्त्रिँशत् स त्रयोदशो मासः स आत्मा त्रिँशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव षट्त्रिँश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरँ हि शिरोऽथ यदन्तरा नक्षत्रे तत्सूददोहा अथ यन्नक्षत्रेष्वन्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा । तद्ध एतत्सर्वं नक्षत्राणीत्येवाख्यायते । तत्सर्वोऽग्निर्लो ॥ ५ ॥

ता वा एता एकविँशतिर्बृहत्यः । एकविँशो वै स्वर्गो लोको बृहती स्वर्गो लोकः। तदेष स्वर्गं लोकमभिसम्पद्यत एकविँशं च स्तोमं बृहतीं च छन्दः ॥ ६ ॥

छन्दाँसि ह त्वेवैषोऽग्निश्चितः। यानि वा एतानि सप्त छन्दाँसि चतुरुत्तराणि तेषाँ सप्त च शतानि विँशतिश्चाक्षराण्यधि षट्त्रिँशत्ततो यानि सप्त च शतानि विँशतिश्चेष्टका एव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्म-त्योऽथ यान्यधि षट्त्रिँशत् स त्रयोदशो मासः स आत्मा त्रिँशदा-त्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव षट्त्रिँश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरँ हि शिरः ॥ ७ ॥

तस्यै वा एतस्य षट्त्रिँशदक्षरायै बृहत्यै यानि दश प्रथमान्य-क्षराणि सा दशाक्षरैकपदाथ यानि विँशतिः सा विँशत्यक्षरा द्विपदाथ यानि त्रिँशत् सा त्रिँशदक्षरा विराडथ यानि त्रयस्त्रिँशत् सा त्रयस्त्रिँशदक्षराथ यानि चतुस्त्रिँशत् सा चतुस्त्रिँशदक्षरा स्वराडथ यत्सर्वश्छन्दोभिरयमग्निर्मितस्तदतिच्छन्दास्ता उ सर्वा इष्टका एवेष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्री तेनैव गायत्रोऽग्नि-र्मेदाय इति त्रीण्यक्षराणि त्रिपदा गायत्री तेनो एवैष गायत्रोऽथ यदन्तरा छन्दसी तत्सूददोहा अथ यच्छन्दस्स्वन्नं तत्पुरीषं ता आहु-तयस्ताः समिधोऽथ यच्छन्दाँसीत्याख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वं छन्दाँसीत्येवाख्यायते । तत्सर्वोऽग्निर्लो ॥ ८ ॥

ता वा एता एकविँशतिर्बृहत्य । एकविँशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेव स्वर्गं लोकमभिसम्पद्यत एकविँशं च स्तोमं बृहतीं च छन्द ॥ ९ ॥

संवत्सरो ह त्वेवैषोऽग्निश्चित । तस्य रात्रय एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य रात्रयोऽहानि यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहान्यथ या अमूः षट्त्रिँशदिष्टका अतियन्ति य स त्रयोदशो मास आत्माऽर्ध-मासाश्च ते मासाश्च चतुर्विँशतिरर्धमासा द्वादश मासा अथ यदन्तराहोरात्रे तत्सूददोहा अथ यदहोरात्रेष्वन्नं तत्पुरीषं या आहु-तयस्ताः समिधोऽथ यदहोरात्राणीत्याख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वमहोरात्राणीत्येवाख्यायते । तत्सर्वोऽग्निर्लो ॥ १० ॥

ता वा एता एकविँशतिर्बृहत्य । एकविँशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेव स्वर्गं लोकमभिसम्पद्यते एकविँशं च स्तोमं बृहतीं च छन्द ॥ ११ ॥

आत्मा ह त्वेवैषोऽग्निश्चित । तस्यास्थीन्येव परिश्रितस्ताः

षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि मज्जानो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानोऽथ या अमूः षट्त्रिँशदिष्टका अतियन्ति यः स त्रयोदशो मास आत्मा प्राणः स तस्य त्रिँशदात्मन्विधाः प्रतिष्ठायां द्वे प्राणेषु द्वे शीर्षन्द्वे तद्यत्ते द्वे भवतो द्विकपालँ हि शिरोऽथ येनेमानि पर्वाणि संततानि तत्सूददोहा अथैतत्त्वं येनायमात्मा प्रच्छन्नो लोमच्छन्दाँसीति तत्पुरीषं निवपति ता आहुतयो यदश्नाति ताः समिधोऽथ यदात्मे-स्यापद्यते तल्लोकम्पृणा । तद्वा एतत्सर्वमात्मेत्येवास्यायने । तत्सर्वोऽग्निर्लोके ॥ १२ ॥

ता वा एता पञ्चविँशतिर्बृह ॥ १३ ॥

सर्वाणि ह त्वेव भूतानि सर्वे देवा एषोऽग्निश्चितः । आपो वै सर्वे देवाः सर्वाणि भूतानि ता हैता आप एवैषोऽग्निश्चितस्तस्य नाव्या एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्याः समन्तं परियन्ति नाव्या उ एव यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्त्यथ यदन्तरा नाव्ये तत्सूददोहा अथ या अमूः षट्त्रिँशदिष्टका अतियन्ति यः स त्रयोदशो मास अयमेव स योऽयँ हिरण्मयः पुरुषः ॥ १४ ॥

तस्यैते प्रतिष्ठे रुक्मश्च पुष्करपर्णं चापश्चादित्यमण्डलं च स्रुचौ बाहू ताविन्द्राग्नी द्वे स्वयमातृण्णे इयं चान्तरिक्षं च तिस्रो विश्वज्योतिष एता देवता अग्निर्वायुरादित्य एता ह्येव देवता विश्वं ज्योतिर्द्वादशर्तव्याः स संवत्सरः स आत्मा पञ्च नाकसदः पञ्च पञ्चचूडाः स यज्ञस्ते देवा अथ यद्विकर्णी च स्वयमातृण्णा चाश्मा पृश्निर्यश्चितेऽग्निर्निधीयते सा पञ्चविँशी लोकम्पृणार्धं यजुः षट्-त्रिँशी सोऽस्यैव सर्वस्याप्ययमात्मा स एष मर्त्यामर्त्यो मर्त्ये स

एष सर्वैः कामैः सम्पन्न आपो वै सर्वे कामाः । स एषोऽकामः सर्वकामो न ह्येतं कस्यचन काम ॥ १५ ॥ तदेष श्लोको भवति—

विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यान्ति नाविद्वाꣳसस्तपस्विन. ॥ इति ।

न हैव त लोकं दक्षिणाभिर्न तपसाऽनेवंविदश्नुते ॥ एवंविदाꣳ हैव स लोकः ॥ १६ ॥

अंब्रे पुरीषम् चन्द्रमा आहुतयो नक्षत्राणि समिधो यच्चन्द्रमा नक्षत्रे वसत्याहुतिस्त समिधि वसत्येतद्वा आहुतेरामेषा प्रतिष्ठा तस्मादाहुतिर्न क्षीयते एतद्ध्यस्या अयमेषा प्रतिष्ठाऽथ यद्देवा इत्याचक्षते तल्लोकम्पृणा । तद्वा एतत्सर्व देवा इत्येवाख्यायते ॥१७

तदेतदृचाऽभ्युक्तम्—विश्वे देवा अनु तत्ते यजुरिति। सर्वाणि ह्यत्र भूतानि सर्वे देवा यजुरेव भवन्ति । तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद लोकम्पृणामेव भूत्वैतत्सर्वमभिसम्पद्यते ॥ १८ ॥

ता वा एताः एकविꣳशतिर्बृहत्य । एकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेव स्वर्गं लोकमभिसम्पद्यत एकविꣳशं च स्तोमं बृहतीं च छन्दः ॥ १९ ॥

---

विद्यया तदारोहन्तीति । अत्र चित्याग्निविधिप्रकरणे देवयानश्रवणं प्रासङ्गिकम् अहीननयात् पर्वविद्याप्रकरणान्वयि स्यात् इति कार्याधिकरणभुतप्रकाशिकायामुक्तम्। अत अहीननयादित्यस्य, 'तिस्र एव साह्नस्योपसदः, द्वादशाहीनस्य' इति ज्योतिष्टोमप्रकरणे द्वादशोपसत्त्वश्रवणेऽपि अहीनपदमुख्यार्थानुरोधेन प्रकृतज्योतिष्टोमानन्वितस्य तस्य द्वादशोपसत्त्वस्य अहीने उत्कर्ष इति (३ ३ ८) पूर्वमीमांसोक्तन्यायादित्यर्थ । तथा च विद्यया देवयानप्राप्तिर्यद्यपि अकामत्वे पुसः संपन्ने सति संभाव्या, तादृशमकामत्व चित्याग्निविद्यया सर्वकामसंपन्नस्य भवति क्रमेणेतीहार्थोऽभिमत स्यात् ।

१०. ५. ५.

कुथिहं वाजश्रवसोऽग्निं चिक्ये । तँहोवाच सुश्रवाः कौश्यो गौतम ! यद्ग्निमचैषीः, प्राञ्चमेनमचैषीः प्रत्यञ्चमेनमचैषीर्न्यञ्चमेन-मचैषीरुत्तानमेनमचैषीः ॥ १ ॥

यद्यु हैनं प्राञ्चमचैषीः, यथा पराच आसीनाय पृष्टतोऽन्नाद्य-मुपाहरेत्, तादृक् तत् न ते हविः प्रतिग्रहीष्यति ॥ २ ॥

यद्यु वा एनं प्रत्यञ्चमचैषीः, कस्मादस्य तर्हि पश्चात्पुच्छमकार्षीः॥

यद्यु वा एनं न्यञ्चमचैषीः । यथा नीचः शयानस्य पृष्ठेऽन्नाद्यं प्रतिष्ठापयेत् तादृक् तद्वैव ते हविः प्रतिग्रहीष्यति ॥ ४ ॥

यद्यु वा एनमुत्तानमचैषीः, न वा उत्तानं वयः स्वर्गं लोकमभि-वहति, न त्वा स्वर्गं लोकमभिवक्ष्यत्यस्वर्ग्य उ ते भविष्यतीति ॥ ५ ॥

स होवाच—प्राञ्चमेनमचैषं प्रत्यञ्चमेनमचैषं न्यञ्चमेनमचैष-मुत्तानमेनमचैषँ सर्वा अनु दिश एनमचैषमिति ॥ ६ ॥

स यत्प्राञ्चं पुरुषमुपदधाति । प्राच्यौ स्रुचौ तत्प्राङ् चीयतेऽथ यत्प्रत्यञ्चं कूर्ममुपधाति प्रत्यञ्चि पशुशीर्षाणि तत्प्रत्यङ् चीयतेऽथ यन्न्यञ्चं कूर्ममुपदधाति न्यञ्चि पशुशीर्षाणि नीचीरिष्टकास्तन्न्यङ् चीयतेऽथ यदुत्तानं पुरुषमुपधात्युत्ताने स्रुचावुत्तानमुलूखलमुत्ताना-मुखां तदुत्तानश्चीयतेऽथ यत्सर्वा अनु दिशः परिसर्पैमिष्टका उपद-धाति तत्सर्वतश्चीयते ॥ ७ ॥ अथ ह कोपा धावयन्तः निरूढशिर-समग्निमुपाधावयाञ्चक्रुः तेषाँहैक उवाच थीर्धं शिरः श्रियमस्य निर्वाहीत् सर्वज्यानि ज्यास्यत इति । स ह तथैवास ॥ ८ ॥

अथ हैक उवाच । प्राणा वै शिरः प्राणानस्य निर्वाहीत्क्षिप्रेऽमुं (क्षिप्रममुं) लोकमेष्यतीति स उ ह तथैवास ॥ ९ ॥

ऊर्ध्वो वा एष एतच्चीयते । यद्दर्भस्तम्बो लोगेष्टका: पुष्करपर्णँ रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजूरेत:सिचौ विश्व-ज्योतिर्ऋतव्ये अषाढा कूर्मोऽथ हास्यैतदेव प्रत्यक्षतमाँशिरो यच्चिमेऽग्निर्निधीयते तस्मान्न निरूहेत् ॥ १० ॥

इदञ्च चिन्तितं गुणोपसंहारपादे । तत्र-मनश्चिदादयो विद्यामयामय क्रियामयक्रतुवत्ञ्चतया किया एव । एषाञ्च चितीनां फलाकाङ्क्षाया पूर्ववत्, 'असद्वा इदमग्र आसीत्' इतीष्टकचिताग्नेः प्रस्तुतत्वात् तस्य च क्रत्वव्यभिचारित्वेन क्रतूपस्थापकत्वात् तेन च क्रतोः संनिहिततया, संनिहितेन क्रतुना एकवाक्यत्वेन कल्प्यते । न च तस्य क्रतोरिष्टकचिताग्न्यविरुद्धत्वात् कथं तत्र विद्यामयस्य मनश्चिदादेरग्नेः समावेश इति वाच्यम्, विकल्पेन समावेशोपपत्ते । न च—एककार्यत्व एव विकल्प स्यात्, न हीष्टकचिताग्ने विद्यामयमनश्चिदाद्यग्नेश्चैककार्यत्वं संभवति, इष्टकचित ग्नि कार्यस्याग्निधारणस्य विद्यामयैर्मनश्चिदादिभि कर्तुमशक्यत्वात्—इति वाच्यम्—'अग्निमिति पेषात्'

वार्तिके—पश्वर्थत्वश्रवणादिति । वार्तिकस्य पश्वर्थत्वश्रवणात् इत्यर्थः । ननु चयनसंस्कृतस्थण्डिलविशेषरूपाग्नी आहवनीयरूपाग्निनिक्षेपेण तत्र होमकरणात् अस्ति स्थण्डिलस्य यागसंबन्धः । ईदृशस्थण्डिलमन्तरेणापि यागः क्रियताम् । तदा उत्तरवेदिमात्रमाहवनीयाधारः । चयनपक्षे उत्तरवेद्याऽस्य समुच्चयः । तत्र, श्येनचितं चिन्वीत स्वर्गकामः इत्यादिवाक्यबलात् स्थण्डिलगतश्येनाकारतादेः फलं स्वर्गादीत्यपीष्यते । अथापि इष्टकचितस्याग्नेरपि पश्वादिफलार्थत्वेऽपि आहवनीयाधारतया यागोपकारकत्वात् गुणफलसंबन्धविधावर्णनसंभवात् क्रत्वाश्रितेन इष्टचितेन फलसिद्धिः सुवचा । न हि इष्टकचितस्येवाऽऽहवनीयाधारत्वं विद्यामयस्य संभवति । अतः क्रत्वाश्रितत्वस्य दुर्वचत्वे क्रतुमध्यनिवेशायोगात्, कथं तेन सह विकल्प इति चेन्न—'तेषामेकैक एव तावान् यावानसौ पूर्वः' इति वाक्येन इष्टकचितकार्ये विद्यामयविनियोगात् आहव-

इति सूत्रे वार्तिके, 'पशुकामश्चिन्वीत' इत्यत्र पश्वर्थत्वश्रवणात् पश्वादि लक्षणफले विद्यामयस्यापि साधनत्वसंभवात् विकल्पोपपत्तेः। न च विद्यारूपस्य क्रियाङ्गत्वं न दृष्टमिति वाच्यम्—द्वादशाहे दशमेऽहनि अविवाक्य नामके विहितस्य मानसग्रहस्य विद्यामयस्यापि क्रियामयक्रत्वङ्गत्वदर्शनात्। किञ्च, 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इति विद्यामयेषु मनश्चिदादिषु इष्टकचितात्मिकार्यातिदेशात् तद्वदेव क्रियामयक्रतूपकारका.—इति, "पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्", "अतिदेशाच्च" इति द्वाभ्यां सूत्राभ्यां पूर्वपक्षं प्राप्य सिद्धान्तितम्—

' विद्यैव तु निर्धारणात् दर्शनाच्च ।" मनश्चिदादिः विद्यैव = विद्यामयक्रत्वङ्गभूतेत्यर्थः । विद्यारूपत्वस्य पूर्वपक्षेऽपि सत्त्वेन तस्य असाधनीयतया विद्याशब्दस्य विद्यामयक्रतुशेषत्वार्थकत्वस्यैव युक्तत्वात्। **निर्धारणात्** = 'विद्याचित एव' इति निर्धारणादित्यर्थः । विद्यामया-

नीयाग्निधारणस्य साक्षादभावेऽपि तद्ध्यानमात्रस्य कार्यकारत्वस्वीकारात्। अस्तु वा दृष्टविधया इष्टकचितस्याहवनीयाधारत्वमिव विद्यामयस्यापि अदृष्टविधया तत्; वचनबलात्। नास्ति वचनस्यातिभार इति न्यायात्। मानसग्रहस्य मनसैव निष्पाद्यग्रहणासादनस्तोत्रशस्त्रादिकतया तत्र स्तोत्रशस्त्रादीनां स्वरूपेणासत्त्वे ज्ञानस्य वास्तवस्तोत्रशस्त्रादिवत् क्रतूपकारकल्पनवत् इहापि कल्पनस्य संभवात्। अग्निरहस्ये कर्मकाण्डे एषामनुबन्धादेव प्रकरणात् क्रतूपकारकल्पनं हि सुकरमिति पूर्वपक्ष्याशयात्। विद्याशब्दस्येति। सूत्रे लाक्षणिकविद्याशब्दप्रयोगः विद्याचित एवेति श्रुत्यनरोधेनेति तदर्थविचारावसरे दर्शितमनुसंधेयम्।

नामेव मनश्चिदादीनां विद्याचित एवेत्युक्ति 'शेषिणोऽपि विद्यामयत्वमेव, न क्रियामयत्वम्' इति प्रतिपादयति। न च विद्यामय एव क्रतुरिति अत्र न दृश्यत इति वाच्यम्—'यत् किञ्च यज्ञे कर्म क्रियते, यत् किञ्च यज्ञियं कर्म' इति वाक्येन यज्ञानां तदङ्गानाञ्च मनोमयत्वप्रतिपादनेन विद्यामयक्रतोर्दर्शनाच्च विद्यामयक्रतुशेषत्वमेवेत्यर्थः।

ननु, 'यत् किञ्च यज्ञे कर्म क्रियते यत् किञ्च यज्ञियं कर्म, मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत' इत्यत्र विद्यामयक्रतुप्रतीतावपि तत्र विध्यश्रवणात् न विद्यामयक्रतुशेषता, अपितु पूर्वप्रस्तुतेष्टकचितावभ्युपस्थितत्वात् क्रियामयशेषतैवोचिता। अतो विद्यामयक्रतुशेषता बाध्यत इत्यत्राह—

"श्रुत्यादिबलीयस्त्वाच्च न बाधः"। श्रुतिलिङ्गवाक्यानां प्रकरणात् बलीयस्त्वेन श्रुत्याद्यवगतस्य विद्यामयक्रत्वन्वयस्य प्रकरणेन न बाधः कर्तुं

---

विध्यश्रवणादिति। नात्र विद्यामयक्रतुस्वरूपविधायकवाक्याभावो विवक्षितः। तत्सद्सद्भावविचारस्य, 'अनुबन्धादिभ्य.' इत्युपरितनसूत्रे कार्यत्वात्। किन्तु पूर्वमुक्तं विद्यामयक्रतुं प्रति उक्तविधानामग्नीनामङ्गत्वबोधको विधिर्न श्रूयत इति। तथाच विनियोजकप्रमाणाभावात् न तदङ्गत्वम्। क्रियामयक्रत्वङ्गत्वं तु प्रकरणरूपप्रमाणात् भवतीति भाव.।

न शेषित्वश्रुतित्वमिति। शेषित्वमुद्देश्यत्वम्, शेषत्वञ्च तदतिरिक्तकृतिकारकत्वम्। तत् यया विभक्त्या शक्त्योच्यते, सा श्रुतिः। अतो द्वितीयाविभक्तिः शेषित्वे श्रुतिः; यथा व्रीहीनवहन्तीति। तृतीया तु तदतिरिक्तकरणत्वरूपकारकवाचिनीति अङ्गत्वे श्रुतिः; यथा, व्रीहिभिर्यजेतेति। न च विद्याया अङ्गत्वमिहेष्टम्। अतः

श्रूयते। 'विद्यया हैवैते एवंविदश्चिता भवन्ति' इति वाक्यगता विद्ययेति तृतीया श्रुतित्वेन विवक्षि[illegible]। ननु तृतीयायाः शेषत्वश्रुतित्वेऽपि न शेषित्वश्रुतित्वम्। [illegible] विद्ययेति तृतीयाश्रुत्या न विद्यामयक्रतोः शेषित्वं प्रतिपादितुं शक्यम् [illegible] इति चेत्— तर्हि, ते हैते विद्याचित एव। विद्यया हैवैते एवं[illegible] भवन्ति' इति वाक्यद्वयगत एवकारः श्रुतित्वेन विवक्षितोऽस्तु। [illegible] एवकारश्रु[illegible] क्रियामय क्रतुशेषत्वे व्यवहर[illegible] विद्य[illegible]क्रतुशेष्यमर्थात् सिध्यति [illegible], 'त नू'

---

करणत्वरूपमर्थमुपेक्ष्य प्रयोजनतया हेतुत्वविवक्षया हेतौ तृतीयेयम्। स चार्थो लाक्षणिको न करण[illegible] मुख्य इति न तस्य श्रुत्योपनीत[illegible]त्वमिति भावः। इत्थम्भूतलक्षणतृतीयापक्षेऽप्येवं श्रुतित्वाभाव एव।

अर्थात् सिद्ध्यतीति। ननु एवकारसमभिव्याहृतेन पदेन यत्र यत्संबन्धो यो बोध्यते, तत्र तदन्यतादृशसंबन्धनिषेध एवकारेण क्रियते। यथा भूतल एव घट इत्यत्र घटस्य भूतलवृत्तित्वे बोध्यमाने तदन्यवृत्तित्वनिषेधः एवकारेण। एवञ्चेह यदि विद्याशेषत्वमग्नीनां न बोध्यते, एवकारेण तदन्यक्रियामयक्रतुशेषत्वं न निषिध्येत। यदि च तदर्थं साक्षात् तद् बोध्यते, तर्हि अर्थात् सिद्धिरिति कथमुच्यत इति चेत्—उच्यते। विद्याचित एवेत्यत्र विद्याचिच्छब्दः विद्याङ्गत्वमेषां न स्पष्टमाह। [illegible]र्थश्च संदिग्धः। एवकारस्य पूर्वोक्तरीत्या कश्चिदर्थो निश्चित। [illegible] विद्याचिच्छब्दस्य यादृशार्थस्वीकारे एवकारार्थस्य[illegible] न स्यात्, तादृशोऽर्थः स्वीकार्य इति परिशील्य एवकारेण विद्येतराङ्गत्वनिषेधे क्रियमाणे तस्य सार्थक्यमित्यवधार्य विद्याचित्पदेन विद्याशेषत्वबोधने एवकारेण तदर्थोक्त्यसंभवात् पूर्वोक्तरीत्या एवकारार्थसिद्ध्यर्थमेव विद्याचित्पदं तदर्थकतया पश्चादवधार्यते। अतोऽर्थात् सिद्ध्यतीत्युक्तम्। 'सिद्ध्यतु नाम तथैव। अथापि

हैतानेवंविदे सर्वाणि भूतानि' इति सर्वभूतसंकल्प्यापिचयनाय मनसा सपाद्यस्य परिमितकर्तृकक्रियामयक्रत्वनुप्रवेशास मर्थ्यान सामर्थ्यलक्षण-लिङ्गविरोधेन क्रियामयक्रत्वनुप्रवेशो व्युदस्ते विद्यामयक्रतुशेषत्वं सिद्ध्यति। तथा, एवंविदे सर्वाणि भूतानि चिन्वन्ति' इति विद्यासमभिव्याहाररूप-वाक्यवशादपि विद्यामयक्रतुशेषत्वसिद्धिः। ननु एवंविदे इति चतुर्थी-श्रुत्यैव विद्यायाः शेषित्वावगमात् समभिव्याहारलक्षणवाक्यस्य विद्यामय-क्रतुशेषत्वबोधकत्वं कुतोऽभ्युपेयमिति चेत्, एवंविदे इति चतुर्थी-श्रुत्या विद्यावतः शेषित्वबोधनेऽपि विद्यायाः शेषित्वाबोधनेन वाक्येनैव विद्यामयक्रतोः शेषत्वस्य बोधनीयत्वात्।

ननु विद्यामयक्रतौ विध्यनुपलम्भात् कथं तच्छेषत्वमित्यत्राह, "अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्'। यज्ञानुबन्धि ग्रहस्तोत्रशस्त्रादीनाम्, 'मनसाऽस्तुवत मनसाऽशंसन्' इत्यादिना श्रावणत्वात् तेषाञ्च क्रतुव्यभिचारित्वात्, क्रियामयस्य च क्रतोरसम्भव-स्योक्तत्वात् विद्यामयक्रतुविधिकल्पने यथा 'स यदि सोमं बिभक्ष

विद्याचित्पदमेव श्रुतिरस्तु' इति चेन्न—विवक्षितस्यार्थस्य लक्षणयैव लभ्यतया तत्र तस्य श्रुतित्वसम्भवात्। एवकार एव तु श्रुतिः। अन्य सम्बन्धनिषेधरूपमुख्यार्थकत्वात्। तत्र सूत्रे श्रुतिपदमेवकारपरमिति।

क्रतोरसम्भवस्येति। क्रतोरेतद्विद्यासम्भवस्येत्यर्थः। यथेत्यादि। न सोममिति इत्यन्तं एतद् वाक्यं समाप्तम्। उपरि श्रेत्यादि तदुप-पादकवाक्यान्तरम्। 'स्तिभिनी फलानि। 'तद् यदेतत् सोम क्रीणीयात्, तदेतानि फलानि क्रीणीयात्' इति बह्वृचब्राह्मणात्" इति सोमनाथीये। अत एव स्तिभिनीचमसस्य फलचमस इति सोत्र नामेति द्रष्टव्यम्। दृष्टत्वादिति। अयं भावः—राजन्यवैश्ययोर्यजतयद्विके

पिबेत् न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तस्मै भक्षं प्रयच्छेत्, न सोमम्' इति। अत्र यागार्थद्रव्यसंस्कारभक्षणसंगत्या स्तिभिनीचमसेषु (नीषु?) यागान्तरकल्पनस्य दृष्टत्वात्। अनुबन्धादीति आदिशब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते। प्रज्ञान्तरपृथक्त्ववत्। यथा प्रज्ञान्तरं दहरविद्यादिकं क्रियामयात् क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते, एवमनुबन्धादिभिर्विद्यामयः क्रतुः कल्प्यत इत्यर्थः। दृष्टश्चानुवादस्वरूपेषु कल्प्यमानो विधिः। तदुक्तम्, 'वचनानि त्वपूर्वत्वात्' इति।

---

सोमयागे राज्ञे वैश्याय वा यजमानाय न सोमं भक्ष्यत्वेन दद्यात्; किंतु दधिमिश्रन्यग्रोधफलरसम्। सोमवत् फलान्यपि आनाय्य संपिष्य दध्ना संमेल्य तं संपादयेदिति प्रकृतवाक्ये श्रूयते। किमत्र यागं सोमेन कारयित्वा यजमानाय फलरसो भक्षणाय परमुपयोक्तव्यः, किं वा अनेन यागोऽपि कार्य इति मीमांसितं तृतीयपञ्चमे, 'फलचमस' इत्यादिभिः सूत्रैः (४७–५१)। सिद्धान्तितञ्चैतम्—'न सोमम्' इति सोमरसभक्षणस्य बाधनात् तस्य च यागोपयुक्तद्रव्यसंस्कारकतया प्रतिपत्तिकर्मत्वात् फलरसभक्षणस्यापि प्रतिपत्तिकर्मत्वप्रतीत्या, यागोपयोगाभावे च प्रतिपत्तित्वासिद्धेः एतत्साध्ययागविधिरुन्नीयत इति। अतो यजमानसंबन्धिचमसे गृहीतः फलरसः सोमयागाङ्गत्वेन विधीयते विधिकल्पनया सोमबाधेन; सोमद्रव्यकस्य फलद्रव्यकत्वायोगात्। तद्वदिहापि मानसग्रहस्तोत्रशस्त्रादेः क्रियामयक्रतुनिवेशानर्हस्य विद्यामयक्रत्वङ्गत्वस्य एषितव्यतया विधिकल्पनेति। अत्रायं विशेषः—तत्र स्थित एव सोमयागे सोमबाधेन फलद्रव्यविनियोगविधिमात्रम्, इह तु विद्यामयक्रतूत्पत्तिविधिरपीति। एवमप्यविशिष्टा विधिकल्पनोभयत्र।

फलचमसस्थलमिदं विधिकल्पनोदाहरणतया वैशद्यार्थमुक्तम्।

ननु, 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इत्यतिदेशेन प्रकृतेष्टकचितामितुल्यत्वावगमात् क्रियामयकत्वनुपवेशोऽवगम्यत इति चेत्—तत्राह, "न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः"। न ह्यतिदेशबलाद् सर्वथा साम्यं वक्तव्यम्; येन क्रियामयक्रत्वनुप्रवेशः स्यात्। स्वशेषिभूतक्रतुद्वारा फलजनकत्वरूपविवक्षितसामान्यमात्रेणाप्यतिदेश उपपद्यते। 'स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः' इत्यत्र संहर्तृत्वसामान्यविवक्षयाऽपि मृत्युशब्दः प्रयुक्तः। न तु सर्वथा साम्यं विवक्षित्वा। तथात्वे मृत्युवत् मण्डलपुरुषस्यापि मृत्युलोकप्राप्तिः स्यात्। अतो विवक्षितसाधर्म्यमात्रेणापि, 'तेषामेकैक एव तावान्' इत्यतिदेशः उपपद्यते।

"परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः"। परेण च ब्राह्मणेन अस्यापि मनश्चिदाद्यभिधायिनः शब्दस्य ताद्विध्यं = तद्विधत्वं = विद्यामयप्रतिपादकत्वमवगम्यते। परस्मिन् हि ब्राह्मणे, 'अयं वाव लोक एषोऽग्निश्चितः। तस्याऽऽप एव परिश्रितो मनुष्या यजुष्मत्य इष्टकाः' इत्यारभ्य, 'सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते। स यो हैतदेवं वेद लोकम्पृणाम् एनं भूतमेतत् सर्वमभिसंपद्यते' इति सर्वभूताभिसंपत्तिफलायाः

न त्विह सूत्रे तद्विरक्षा। तत्र फलचमसयागसंबन्धस्येवात्र विद्यामयक्रतुतत्संबन्धयोरत्यन्ताश्रुतत्वाभावात्। 'यत् किञ्च यज्ञे कर्म क्रियते यत् किञ्च यज्ञियं कर्म ...मनोमयमक्रियत' इति श्रवणात्। विधिः परं न श्रूयते। अतः ईदृशस्थलान्तराभिप्रायेण दृष्टश्चेति सूत्रखण्डं व्याख्याति दृष्टश्चेत्यादिना।

मण्डलपुरुषस्यापीति। विषयोऽयं पूर्वब्राह्मणस्थितः।

१०. ५. ६.

[ वैश्वानरविद्या ]

अथ हैतेऽरुणे औपवेशौ समाजग्मुः सत्ययज्ञः पौलुषिर्महाशालो जाबालो बुडिल आश्वतराश्विरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यः। ते ह वैश्वानरे समासत। तेषां ह वैश्वानरे न समियाय ॥१
ते होचुः—अश्वपतिर्वा अयं कैकेयः सम्प्रति वैश्वानरं वेद। तं

क्रियामयक्रत्वनङ्गभूताया विद्यायाः प्रतिपादनदर्शनेन मनश्चिदादीनां सापादिकाग्नीनां न क्रियामयक्रत्वनुप्रवेशित्वम्। ननु मनश्चिदादीनां क्रियानुबन्धाभावे अग्निरहस्ये कर्मकाण्डेऽनुबन्धः किमर्थमित्यत्राह—भूयस्त्वात्त्वनुबन्धः। मनश्चिदादिषु सम्पादनीयानामन्यङ्गानां भूयस्त्वात् तत्सन्निधानादिहानुबन्धः कृत इति स्थितम् ॥

इति अग्निब्राह्मणप्रकाशिका।

वैश्वानरविद्या प्रस्तूयते अथ...समियाय। पुलुषपुत्र सत्ययज्ञनामा, महागृहस्थो जबालासुतः, अश्वतराश्वसुतो बुडिलनामा, भाल्लविसुत इन्द्रद्युम्ननामा, शार्कराक्षसुतो जननामा एते पञ्चापि महर्षय उपवेश(शि?) सुतस्यारुणस्य समीपमागता। ते सर्वेऽपि महर्षय वैश्वानरे विश्वेषां नराणां नेतरि परमात्मनि समासत एकीभूय विचारं कृतवन्तः। तेषाञ्च वैश्वानरविषये बुद्धिर्न समियाय न सङ्गताऽभूत् = ऐकमत्यं न गता। परस्परं विवदमाना एव स्थिता इत्यर्थः ॥ १ ॥

उपवेशसुतस्येति। बृहदारण्यकान्ते (८–५) अरुणः उपवेशिशिष्यत्वेनोक्तः, 'उद्दालकोऽरुणात्, अरुण उपवेशेः, उपवेशिः कुश्रेः' इति। ते इति अरुणप्रभृतिसर्वग्रहणम्। सत्ययज्ञादयः पञ्च महर्षयः

गच्छामेति । ते हाश्वपतिं कैकेयमाजग्मुः । तेभ्यो ह पृथगावसथान्

---

ते....प्रोवाच । केकयसुतः अश्वपतिः अधुना वैश्वानरमुपास्ते, तमभ्यागच्छामेत्युक्त्वा तमाजग्मुः । तेभ्यः प्राप्तेभ्यः प्रत्येकं गृहान्

---

छान्दोग्येऽपि निर्दिष्टाः । परन्तु महाशालजाबालस्थाने तत्र प्राचीनशाल औपमन्यवः । तत्र प्राचीनशाल इति श्रुतिनामेति अन्वयप्रायन्यायानुसारेण भाष्यम् । इह महाशालपदं महागृहस्थार्थकमुक्तम् । महाशालशब्दमिदं तत्र, 'ते हैते महाशाला महाश्रोत्रियाः' इति सर्वेषां विशेषणतया प्रयुक्तत्वात् यौगिकमवसीयते; जाबालोऽयमप्यौपमन्यव एवेति अत्रोपरि औपमन्यवेति संबोधनादेव ज्ञायते । तदयञ्च प्राचीनशालश्चैक इति युक्तम् । परन्त्वयं जाबालः छान्दोग्यसत्यकामविद्यादिप्रसिद्धो जाबालश्च यद्येकः, तर्हि सत्यकामस्य तस्य उपमन्युः पितेति इतो विज्ञेयम् । अन्योऽप्ययं भवितुमर्हति । सर्वथा महर्षयः पञ्चेमे एव छान्दोग्येऽपि निर्दिष्टा इति सुवचम् । एवमश्वपतिः कैकेयोऽप्युभयत्र समानः । तत्रोद्दालक आरुणिः गौतम उक्तः, अत्र तस्य पिता अरुण औपवेशिर्गौतम उक्त इति भेदः प्रतीयते ।

एवं तत्तदुपास्यांशवर्णनेऽपि वैलक्षण्यं लक्ष्यते—तत्र मूर्धोपासक औपमन्यवः, इह तु जनः शार्कराक्ष्यः; तत्र चक्षुरुपासकः सत्ययज्ञः, इहेन्द्रद्युम्नः, तत्र प्राणोपासक इन्द्रद्युम्नः इह बुडिलः; तत्र मध्यकायोपासको जनः, इह जाबालः; तत्र बस्त्युपासको बुडिलः, इह सत्ययज्ञ इति। गौतमस्तूभयत्र पादोपासक एव। एवमुपपादनवैषम्येऽपि तत्तदुपास्याकाराणां सर्वेषां मेलनं वैश्वानरविद्यायामित्येतदुभयत्राविशिष्टम् । अन्याशास्यार्थवादमात्रत्वात् तद्वैषम्यं नोपास्याकारभेदमावक्ष्यति । कथावैषम्यशङ्का तु कल्पभेदकल्पनया वा विभिन्नवैश्वानरोपासकत्ववर्णनमात्रतात्पर्येण वा परिहार्या ।

यत्तु किञ्चित् उपास्यांशेऽपि वैलक्षण्यं प्रतीयमानम्, यथा तत्र दिव उक्तं सुतेजस्त्वमिह आदित्यस्योक्तं विश्वरूपत्वस्थाने, दिवस्तु

पृथगपचितीः पृथक्साहस्रान्त्सोमान् प्रोवाच। ते ह प्रातरसंविदाना एव समित्पाणयः प्रतिचक्रमिरे, उप त्वा यामेति ॥ २ ॥

स होवाच—यन्नु भगवन्तोऽनूचाना अनूचानपुत्राः, किमिदमिति। ते होचुर्वैश्वानरँह भगवान्त्सम्प्रति वेद। तं नो ब्रूहीति।

---

प्रत्येकं पूजाञ्च कृत्वा, 'सहस्रदक्षिणैः सोमैर्यक्ष्ये। युष्मभ्यं च बहु धनं दास्यामि। तावन्तं कालमुषित्वा अनुगृह्णन्तु' इति प्रार्थयामास। ते... त्वा यामेति। ते षडपि महर्षयः अपरेद्युः प्रातःकाले त्वरया परस्परमसंमन्त्र्यैव समिद्भारहस्ताः, 'त्वां शिष्यास्सन्तः उपगच्छाम' इति प्राप्ताः॥

स....किमिदमितीति। हे पूज्याः भगवन्तः! श्रुताध्ययनसंपन्नाः तादृशकुलप्रसूताश्च भवथ। भवतां किमविदितम्? यदिदं समिद्भारहस्ततया मदुपसर्पणम्, तत् किं कस्य हेतोः? ते होचुः....

---

अतिष्ठात्वमिति किञ्चिदिति,—तत्र शब्दभेदेऽपि अनुसंधेयोऽर्थ एकरूप एवेति श्रुतप्रकाशिकायामेव समाहितमस्ति। प्रादेशमात्रत्वं परम् एकतामापादयितुमशक्यं मिथमाणं विचार्यां विकल्पेन निविशते इति परिशीलनीयम्। छान्दोग्ये निरूपणसरणी मूर्धादि रादान्तक्रम आदृतः, इह तु पादादिमूर्धान्तक्रम इत्यपि किञ्चित्। प्राणाहुत्यर्थङ्गविस्तरश्छान्दोग्ये विशिष्यते। फलभेदशङ्काऽप्येवं परिहार्येत्यलम्।

अनुगृह्णन्तु इति प्रार्थयामासेत्यनेन एषां प्रतिग्रहे अत्यन्तनैःस्पृह्यं द्योतितम्। अत एव हि असद्द्रव्यबुद्ध्या प्रतिग्रहमुपेक्षेरन्निति शङ्कया राज्ञा तत्परिहारः कृतः; यदिदम्—

> 'न मे स्तेनो जनपदे न कदर्यो न मद्यपः।
> नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः॥'

...र्शितं छान्दोग्योपनिषदा।

स होवाच—सम्प्रति खलु न्वा (वा ?) अहं वैश्वानरं वेद। अभ्याधत्त समिध, उपेताः स्थेति ॥ ३ ॥

स होवाचारुणमौपवेशिम्। गौतम! कं त्वं वैश्वानरं वेत्थेति पृथिवीमेव राजन्निति होवाच। ओमिति होवाच। एष वै प्रतिष्ठा वैश्वानर.। एतं हि वै त्वं प्रतिष्ठा वैश्वानरं वेत्थ। तस्मात् त्वं प्रतिष्ठितः प्रजया पशुभिरसि। यो वा एतं प्रतिष्ठा वैश्वानरं वेद, अप

---

मृहीति। स्पष्टोर्थः। स स्थेति। स चाश्वपतिर्ब्राह्मणानां अब्राह्मणैरुपनयनम् अनुचितमिति मत्वा, हे महर्षय! अहं वैश्वानरं जान एव। उपेताः स्थ। यूयं पूर्वमेव स्वाचार्यैः कृतोपनयना एव। अथवा उपस्वा यामेत्युक्त्वैव यूयमुपेतप्राया एव = शिष्यत्वेनोपागतप्राया एव। आनीताश्च समिधः स्वस्वाग्निषु प्रक्षिपत। केवलं मैत्र्यैवोपदेक्ष्यामीति [उवाचेति ?] भाव ॥ ३ ॥

वैश्वानरे विवदमानान् तान् आलोच्य ज्ञाताज्ञातांशबुभुत्सया तान् प्रत्येकं प्रष्टुमुपक्रमते स होवाच वेत्थेति। गौतमगोत्रत्वात् गौतमेति संबोधनम्। इतर आह पृथिवीमेव राजन्निति होवाच। पृथिवीशरीरकात्मानमुपासे इत्युवाचेत्यर्थ। अङ्गीकरोति ओमिति। उपदेष्टव्यांशमुपदिशति एष वै प्रतिष्ठा—। त्वया उपास्यमानपृथिवीशरीरकवैश्वानरात्मा प्रतिष्ठा। पृथिव्या सर्वभूताधारत्वात् प्रतिष्ठात्वम्। ततश्च सर्वभूताधारत्वलक्षणगुणयोगनिमित्तप्रतिष्ठासञ्ज्ञोऽयं त्वदुपास्यमान पृथिवीशरीरको वैश्वानरात्मेत्यर्थ। एत हि सर्वमाप्नुरेति। स्पष्टोऽर्थ। एवं फलप्रदर्शनेन प्रलोभ्य तस्य वैश्वानरात्मपादतया वैश्वान

---

भाव इति। उपनयनमकृत्वैवोपदेश इत्ययं पत्र छान्दोग्यैकरस्यम्।

पुनर्मृत्युं जयति ; सर्वमायुरेति । पादौ त्वेतौ वैश्वानरस्य । पादौ ते ग्लास्येताम्,(पादौ तेऽविदितावभविष्यताम्)यदि ह नागमिष्य इति॥

अथ होवाच सत्ययज्ञं पौलुषिम्, प्राचीनयोग्य! कं त्वं वैश्वानरं वेत्थेति । अप एव राजन्निति होवाच, एष वै रयिर्वैश्वानरः । एतँ हि वै त्वं रयिं वैश्वानरं वेत्थ । तस्मात् त्वं रयिमान् पुष्टिमानसि । यो वा एतँ रयिं वैश्वानरं वेद, अप पुनर्मृत्युं जयति ; सर्वमायुरेति । वस्ति(?)स्त्वा एष वैश्वानरस्य । वस्ति त्वाहास्यत्, यदि ह नागमिष्य इति । (वस्तिस्तेऽविदितोऽभविष्यत् । यदि ह नागमिष्य इति वा ॥)

अथ होवाच महाशालं जाबालम्—औपमन्यव! कं त्वं वैश्वानरं वेत्थेति । आकाशमेव राजन्निति होवाच । ओमिति होवाच, एष वै बहुलो वैश्वानरः । एतं हि वै त्वं बहुलं वैश्वानरं वेत्थ । तस्मात् त्वं बहुः प्रजया पशुभिरसि । यो वा एतं बहुलं वैश्वानरं वेद, अप पुनर्मृत्युं जयति ; सर्वमायुरेति । आत्मा त्वा एष

रात्मत्वपर्याप्त्यधिकरणं (णत्वं) न भवति । अतो मत्समीपमागत्य अस्य श्रोतव्यस्यार्थस्याश्रवणे तव पादौ ग्लानौ भविष्यत इत्याह पादौ.... इति । एवमुत्तरत्रापि । पादावविदितावभविष्यतां यदि नागमिष्य इति पाठे अविदितौ अज्ञातौ = नष्टावित्यर्थः ॥ ४ ॥

अथ होवाच सत्ययज्ञं... । प्राचीनयोग्येति सत्यज्ञस्य नामान्तरम् । रयिः धनम् । वस्तिः मूत्रस्थानम् । अहास्यत् अत्यक्ष्यत् । 'ओ हाङ् त्यागे' । शिष्टं स्पष्टम् ॥ ५ ॥

अथ होवाच महाशालं... । भूतान्तरापेक्षया आकाशस्य विपुलत्वात् बहुलत्वम् । आत्मा मध्यकाय इत्यर्थः । छान्दोग्ये समान-प्रकरणे मध्यकायवाचिसंदेहशब्दश्रवणात् । शिष्टं स्पष्टम् ॥ ६ ॥

वस्ति वेत्यत्र वस्तिस्त्वा इतिस्यात्। अत्रसर्वेषत्रा इत्यत्र वा इत्येवस्यात्।

वैश्वानरस्य। आत्मा त्वाहास्यत्, यदि ह नागमिष्य इति (आत्मा तेऽविदितोऽभविष्यत्, यदि ह नागमिष्य इति वा।) ॥ ६ ॥

अथ होवाच बुडिलमाश्वतराश्विम्—वैयाघ्रपद्य! कं त्वं वैश्वानरं वेत्थेति। वायुमेव राजन्निति होवाच। ओमिति होवाच, एष वै पृथग्वर्त्मा वैश्वानरः, एतं हि वै पृथग्वर्त्मानं वैश्वानरं वेत्थ। तस्मात् त्वां पृथग्रथश्रेणयोऽनुयान्ति। यो वा एतं पृथग्वर्त्मानं वैश्वानरं वेद, अप पुनर्मृत्युं जयति, सर्वमायुरेति। प्राणस्त्वा एष वैश्वानरस्य। प्राणस्त्वाहास्यत्, यदि ह नागमिष्य इति। (प्राणस्तेऽविदितोऽभविष्यत्, यदि ह नागमिष्य इति वा) ॥ ७ ॥

अथ होवाचेन्द्रद्युम्नं भाल्लवेयम्—वैयाघ्रपद्य! कं त्वं वैश्वानरं वेत्थेति। आदित्यमेव राजन्निति होवाच। ओमिति होवाच, एष वै सुततेजा (सुतेजा) वैश्वानरः। एतं हि त्वं सुततेजसं वैश्वानरं वेत्थ। तस्मात्तवैव सुनोऽयमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति। यो वा एतं सुततेजसं वैश्वानरं वेद, अप पुनर्मृत्युं जयति, सर्वमायुरेति। चक्षुस्त्वा एतद्वैश्वानरस्य। चक्षुस्त्वाहास्यत्, यदि ह नागमिष्य।। (चक्षुस्तेऽविदितमभविष्यत्, यदि ह नागमिष्य इति वा) ॥ ८ ॥

---

अथ होवाच बुडिल....। वायोर्वियद्गति(र्विविधगतिः)मत्त्वात् पृथग्वर्त्मत्वम्। त्वां पृथग्रथश्रेणयोऽनुयान्ति। रथपङ्क्तयो नानादेशस्थाः त्वामनुयान्तीत्यर्थः। शिष्टं स्पष्टम् ॥ ७ ॥

अथ होवाचेन्द्रद्युम्न .। शोभनं तेज यस्य स सुतेजाः। सुततेजा इति पाठेऽपि स एवार्थः। अभिषुत एव सोम अयमानः पीयमानः पच्यमानः अग्निषु हूयमान। अक्षीयमाणः गृहेषु तिष्ठति। तस्य गृहे सर्वदा सोमयागा अनुवर्तमाना भवन्तीत्यर्थः ॥ ८ ॥

अथ होवाच जनं शार्कराक्ष्यम्—सायवस ! कं त्वं वैश्वानरं वेत्थेति । दिवमेव राजन्निति होवाच । ओमिति होवाच, एष वा अतिष्ठा वैश्वानरः । एतं हि वै त्वमतिष्ठां वैश्वानरं वेत्थ । तस्मात् त्वं समानान् अति तिष्ठसि । यो वा एतमतिष्ठां वैश्वानरं वेद, अप पुनर्मृत्युं जयति ; सर्वमायुरेति । मूर्धा त्वा एष वैश्वानरस्य । मूर्धा त्वाहास्यत् , यदि ह नागमिष्य इति । (मूर्धा तेऽविदितोऽभविष्यत् , यदि ह नागमिष्य इति वा) ॥ ९ ॥

तान् होवाच । एते वै यूयं पृथग्वैश्वानरान् विद्वाँसः पृथगन्नमघस्त । प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नाः । तथा तु व एनान् वक्ष्यामि, यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति ॥१०

---

अथ होवाच जनं... । अतीत्य तिष्ठतीत्यतिष्ठाः । दिवः सर्वलोकान् अतीत्य स्थितत्वात् अतिष्ठात्वम् ॥ ९ ॥

तान् होवाच...। एतादृशा यूयं वैश्वानरान् पृथक्पृथक् उपासीनाः पृथगेव अन्नं भोग्यजातमनुभवथ । न तु सर्वलोकसर्वभूत सर्वात्मस्वरूपात्मानुभवो वोऽस्तीति भावः । प्रादेशमात्रमिव.... संपन्नाः । देवाः सूर्यादयः यदा उपासनया प्रादेशमात्रमभिसंपन्नाः प्राप्ता इव भवन्ति, तदा ते विदिता भवन्ति ।

द्युमूर्धपृथिव्यादिपरिच्छिन्नस्य कथं प्रादेशमात्रत्वाभिसंपत्तिः ? इत्याह तथा तु वः....संपादयिष्यामीति । यथा द्युप्रभृतयः प्रादेशमात्रमभिसंपद्यन्ते, तथा वक्ष्यामीत्यर्थः ॥ १० ॥

---

प्रादेशमात्रत्वप्रकारविशेषयोरिति । एतदुपपादनक्रमः छान्दोग्यभाष्यपरिष्कारयोर्द्रष्टव्यः । नन्वत्र वैश्वानरविद्यायाम् , 'अप पुनर्मृत्युं जयति, सर्वमायुरेति' इति आयुष्कालमध्ये मरणं विना पूर्णायुः-

स होवाच मूर्धानमुपदिशन्, 'एष वा अतिष्ठा वैश्वानर इति; चक्षुषी उपदिशन्नुवाच, एष वै सुतेजा वैश्वानर इति, नासिके उपदिशन्नुवाच, एष वै पृथग्वर्त्मा वैश्वानर इति, मुख्यमाकाशमुपदिशन्नुवाच, एष वै बहुलो वैश्वानर इति, मुख्या अप उपदिशन्नुवाच, एष वै रयिर्वैश्वानर इति, चुबुकमुपदिशन्नुवाच, एष वै प्रतिष्ठा

---

स ह . . । मूर्धानम् उपदिशन्=कराग्रेण दर्शयन् उवाच । एष वै... । प्रसिद्धे उपासकमूर्धनि अतिष्ठासञ्ज्ञकवैश्वानरमूर्धभूतद्युलोकदृष्टि कर्तव्येत्यर्थ । एवमुत्तरत्रापि द्रष्टव्यम् । मुख्यमाकाशं... । मुख्याकाशः आस्यान्तर्गताकाश । मुख्या अप । अत्रापि मुख्यशब्दस्य पूर्ववदर्थ । चुबुकमुपदिशन् । अधराधोवयवविशेष. चुबुकशब्देनोच्यते । ततश्च प्रादेशपरिमिते मूर्धचुबुकान्तराले त्रैलोक्यशरीरकस्य वैश्वानरस्याऽऽत्मन संपादितत्वात् प्रादेशमात्रत्वम् । यथा

---

प्राप्तिरूपफलश्रवणात्, छान्दोग्ये तु 'को न आत्मा किं ब्रह्म' इत्युपक्रमानुसारेण ब्रह्मविद्यात्वावगमात् ब्रह्मप्राप्तिरूपफलाङ्गीकाराच्चोभयोर्भेदात् प्रादेशमात्रत्वं तत्र तत्र व्यवस्थितमिति कथनसंभवात् कथं वैकल्पिकरूपनाद् इति चेन्न–उपाख्यानशैलीसाम्यात् विश्वलोकशरीरकत्वोपासनविधानाद्वैक्यस्य प्रतीयमानतया फलैक्यस्यापि स्वीकारात्। अप पुनर्मृत्युं जयतीति मृत्योरपजयो हि मोक्ष एव भवितुमर्हति । यथा नाचिकेतब्राह्मणोक्तो मृत्योरपजयो मोक्षः 'सर्वमायुरेति' इत्येतत्तु मोक्षोपयोगिविद्यानिष्पत्त्यपेक्षितमायुरानुषङ्गिकं दर्शयेत् । यथा छान्दोग्ये प्राणाग्निहोत्रप्रस्तावे, 'तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेन' इति । अत एव सर्ववेदान्तप्रत्ययाधिकरणे श्रीभाष्यम्–"फलसंयोगोऽप्युभयत्रापि ब्रह्मप्राप्तिरूपोऽविशिष्टः" इति ।

वैश्वानर इति। स एषोऽग्निर्वैश्वानरो यत् पुरुषः।

स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं

---

एकस्मिन्नग्नीषोमीययागे शाखाभेदेन विहितयोः एकादशद्वादशकपालत्वयोः विकल्पेन अनुष्ठानम्; न तु यागभेद, एवमेकस्यां वैश्वानरविद्यायां छान्दोग्यवाजसनेयकशाखाम्नातप्रादेशमात्रत्वप्रकारविशेषयोः विकल्पेनानुष्ठानम्। नैतावता विद्याभेदः शङ्कनीयः।

स एषोऽग्निर्वैश्वानरो यत् पुरुषः। यच्छब्दः प्रसिद्धिपरः। 'सहस्रशीर्षा पुरुष' इत्यादिवेदान्तवाक्येषु प्रसिद्धो य. पुरुषः, स एव वैश्वानरोऽग्निः। अत्र अग्निशब्दः अपर्यवसानवृत्त्याऽग्निशरीरकपरमात्मपरः।

स यो....एति। द्युप्रभृतिमूर्धादिमत्त्वात् पुरुषविधत्वम्।

---

अग्निशब्दोऽपर्यवसानवृत्त्येति। ननु किमत्र विनिगमकम्? अग्निशब्द एव, 'साक्षादप्यविरोधं जैमिनिः' इति दर्शिताग्निनयनार्थकोऽस्तु, वैश्वानरपदञ्चापर्यवसानवृत्त्या परमात्मपरम्। अस्तु वा अग्निपदोक्ते विशिष्टेऽर्थे विशेषणमात्रान्वयि जाठराग्निस्वरूपं वैश्वानरत्वं विशेषभूतम्। पदद्वयमपि वा यौगिकमेव भवतु—इति चेन्न—वैश्वानरपदस्य विद्याप्रक्रमप्रभृतिश्रूयमाणतया, तत्र द्युपृथिव्यादिशरीरकतया, दीपोक्तरीत्या ब्रह्मपदस्थानःपन्नतया च जाठराग्निग्रहणासंभवे स्थिते तदा जाठराग्निग्रहणस्यावश्यकत्वानङ्गमेन च बाधकबलात् अनन्यथासिद्धाग्निलिङ्गाभावाच्चोपक्रमे वैश्वानरपदं यौगिकमित्यवधारणात्। अग्निपदमप्यत्र श्रूयमाणं यौगिकं भवतीति तु न शङ्क्यम्, अन्तः प्रतिष्ठितत्वरूपलिङ्गस्यात, प्राणाहुत्याधारत्वरूपस्य च लिङ्गस्य छान्दोग्ये प्रतीयमानतया लोकप्रसिद्धस्योदर्याग्नेरपि ग्राह्यत्वादिति।

वेद, अप पुनर्मृत्युं जयति, सर्वमायुरेति ; न हास्य ब्रुवाणश्चन वैश्वानरो हिनस्ति ॥ ११ ॥

---

पुरुषेऽन्तःप्रतिष्ठितत्वञ्च पुरुषान्तर्गतजाठराग्निशरीरके परमात्मन्युपपद्यते । सूत्रितञ्च, "शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते" इति । अत्र च वक्तव्यं **छान्दोग्योपनिषत्प्रकाशिकायामुक्तम्**, तत्रैवानुसन्धेयम् ।

**न हास्य ब्रुवाणश्चन वैश्वानरो हिनस्ति ।** वैश्वानरविद्यानिष्ठत्वाभावेऽपि वैश्वानरविद्याप्रतिपादकोपनिषत्पाठकमपि तत्प्रतिपाद्यः परमात्मा संसाराम्बुधौ न पातयतीत्यर्थः ॥ ११ ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमद्वाधूलाचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनि-
पादसेवासमधिगतपारमहंस्यस्य
**श्रीरङ्गरामानुजमुनेः कृतिषु**
**अग्निरहस्यप्रकाशिका ॥**
शुभमस्तु ॥

---

छान्दोग्योपनिषत्प्रकाशिकायामिति । वैश्वानराधिकरणसूत्राणां प्रायश्छान्दोग्यवाक्यग्रहणेन प्रवृत्तत्वात् तत्रैव तदधिकरणरचना कृता । एवं तृतीयतृतीयगतं भूमाद्यधिकरणमपि तत्रैव रचयित्वा दर्शितमिति ध्येयम् ।

१. १०. ६.

## [ शाण्डिल्यविद्या ]

सत्यं ब्रह्मेत्युपासीत । अथ खलु क्रतुमयोऽयं पुरुषः । स यावत्क्रतुरयम् अस्माल्लोकात् प्रैति, एवंक्रतुर्हामुं लोकं प्रेत्याभिसंभवति । स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्ध

---

अग्निरहस्यान्तर्गतस्य शाण्डिल्यविद्याभागस्य शारीरके तृतीयतृतीये *समानाधिकरणे विचारितत्वात् स भागोऽपि भाष्यभावेऽपि* व्याख्याय प्रकाश्यते । तदधिकरण(    )रचनाप्रकारो बृहदारण्यको(७-६-१.)पनिषद्भाष्यपरिष्कारयोर्द्रष्टव्यः । एतच्छाण्डिल्यविद्यावाक्यार्थवर्णनविवरणादिकमपि छान्दोग्यो(३-१४.)पनिषद्भाष्यपरिष्कारयोर्यथावद् द्रष्टुमुचितम् । अतो नात्र प्रतन्यते । सत्यमित्यस्य निर्विकारमिति प्रसिद्धोऽर्थः । तदर्थादरणे ब्रह्मोपासनस्य सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वरूपस्वरूपनिरूपकधर्मविशिष्टतयैव सर्वत्रोपास्यतायाः आनन्दाद्यधिकरणसिद्धत्वात् नात्र वाक्ये किञ्चिद् विधेयमस्तीति स आत्मानमुपासीतेति वाक्य एव सर्वगुणविशिष्टपरमात्मोपासनमिति नात्र पक्षे क्लेशः । यदा तु सत्यपद छान्दोग्ये; 'सर्वं खल्विदं ब्रह्म' इत्युक्तसमानार्थकत्वसिद्धये, बृहदारण्यके (७-४.), 'तदेतत् त्र्यक्षरं सत्यमिति । स इत्येकमक्षरम्, तीत्येकमक्षरम्, यमित्येकमक्षरम्' इत्यत्रोक्तरीत्या चेतनाचेतनसर्वनियन्तृ इत्यर्थपरमिष्यते, तदा उक्तविधसत्यत्वविशिष्टब्रह्मोपासने प्रथमवाक्येन विहिते, स आत्मानमिति वाक्येन प्राप्तोद्देशेनानेकगुणविधाने वाक्यभेद इति शङ्का प्राप्नोति। तत्र प्रथमवाक्ये उपासनोत्पत्तिविधिः, 'एवंक्रतुर्ह' इति वाक्येऽधिकारविधानम्, 'स आत्मानम्' इति वाक्ये प्रयोगविधानम्। *संभवति च प्रयोगान्वयितयाऽपि गुणानां विधानमिति छान्दोग्ये*

सर्वेरसः सर्वा अनु दिशः प्रभूत सर्वमिदमभ्यात्तमवाक्यनादरम्, यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयः, यथा ज्योतिरधूमम् एव, ज्यायान् दिवो ज्यायानाकाशात् ज्यायानस्यै पृथिव्यै ज्यायान् सर्वेभ्यो भूतेभ्यः। स प्राणस्यात्मा। एष म आत्मा। एतमित आत्मानं प्रेत्याभिसम्भविष्यामीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः। एवमेतदिति ॥ २ ॥

इति अग्निरहस्यम् ॥

(शतपथब्राह्मणे शुक्लयजुर्वेदीये बृहदारण्यकोपनिषदः पूर्वं स्थितम् अग्निरहस्यम्। तत्र ब्रह्मसूत्रोपयोगि यावत् तावदत्र मुद्रितम्।)

श्रीरस्तु

---

भाष्यानुसारेण परिष्कारे प्रपञ्चितमनुसन्धेयम्। सत्यमित्यारभ्य सर्वं वा, यथा व्रीहिरित्यादिकं वा, एष म आत्मेत्यादिकमेव वा शाण्डिल्यानुसन्धानमस्तु। सर्वथा अप्राप्त सर्वेसु रसलान्वयितया शरीरार्थं छान्दोग्योक्तसर्वकामत्वादिगुणान्तरवत् इत्यलमधिकेन। अक्षरार्थस्तावत्—क्रतुरुपासनम्। एवंक्रतुः=एवम्भूतोपासनवान्। उपासनप्रचुरो हि पुरुषः। तस्मादुपासनानुगुणफलभाक्त्वात् यत्प्रकारकोपासनमनुष्ठायेमं लोकं विसृजति, अमुत्र लोके तत्प्रकारप्राप्तिमान् भवति। अतः परिशुद्धमनोज्ञाद्य सर्वप्राणधारकं भास्वररूपमव्याहृताकाशस्वरूपात्मभूतमिच्छागृहीताभिमतदिव्यमङ्गलविग्रहं मनोवेगसपत्नमप्रतिहतसकलपमधुष्यधारणशक्तिं सर्वगन्धं सर्वरसं सर्वदिग्व्यापितस्वीकृतसर्वकल्याणगुणं ब्रह्मादिस्तम्बपर्यन्तसर्वजगत्तृणीकरणेन जोषमासीनमवाप्तसमस्तकामतया आदरं याभावादादररहितं परमात्मानमुपासीतेति। यथा व्रीहिरित्यादिना अणीयस्त्वमुपासनार्थं कल्पितमुक्तम्। हिरण्मयविग्रहदृष्टान्त उच्यते यथा ज्योतिरधूममिति।

सामानाधिकरण्यमुच्यते ज्यायानिति । श्रद्धा निश्चयः । यस्य, अहमेवम्भूतं प्राप्स्यामीति दृढोऽध्यवसायः, सोऽवश्यं प्राप्स्यत्येव । न तत्र संशयोऽस्तीति ।

भाष्यार्थो विस्तरो द्रष्टव्यः । एतत् एतद्विषयकं सर्वत्रप्रसिद्धमधिकरणं 'समानएवञ्चाभेदात्' इति समानाधिकरणञ्चेति ।

श्रीमद्वेदान्तरामानुजलक्ष्मणयोगिनोः ।
शिष्येणैव विनीतेन वात्स्यचक्रवर्तिना ॥
ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
श्रीवीरराघवेणाग्निरहस्यञ्च परिष्कृतम् ॥

इति वात्स्यचक्रवर्तिश्रीराघवाचार्यकृतेषु
उपनिषद्भाष्यपरिष्कारे अग्निरहस्यभाष्यपरिष्कारः ।

शुभमस्तु

—.**:—

| | |
|---|---|
| शारीरके अग्निरहस्य वाक्यस्थलम् — | ३-३-४४-५०. |
| शारीरके वैश्वानरवाक्यस्थलम् — | १-२-२५-३३ |
| शारीरके शाण्डिल्यवाक्यस्थलम् — | ३-३-१९. |

## अग्निरहस्यागतानि ऋष्यादिनामानि

## अग्निरहस्यभाष्यार्थसंग्रहकारिकाः

शारीरके शतपथस्थ ह्यग्निरहस्यगम् ।
समानाधिकरणं पूर्वविकल्पाधिक्रियाद्वये ॥ १ ॥
वैश्वानराधिक्रियायामपि यस्माद् विचारितम् ।
तस्मात् तदर्थजातस्य संग्रहः क्रियतेऽधुना ॥ २ ॥
सर्वसंहरणान्मृत्युरित्युक्तः पुरुषः परम् ।
आदित्यमण्डलादिस्थपुरुषो ध्येय विमुक्तये ॥ ३ ॥
खण्डान्तरे तत्र मोक्षः क्रतुर्विद्यामयोऽद्भुत ।
पुनः स्वायुर्गतैकैकदिनसंपत्तिषु स्वयम् ॥ ४ ॥
मनोवाक्चक्षुरादीनां व्यापारेषु विभाव्यते ।
यत्र चित्याग्निराधानस्तोत्रशस्त्रमहादि च ॥ ५ ॥
अथ चित्याग्निसंबद्धा विद्या काचन दर्शिता ।
वैश्वानरात्मविद्या च छान्दोग्ये विस्तृता हि या ॥ ६ ॥
एतत् सर्वं [illegible] ।
शाण्डिल्यविद्या छान्दोग्यबृहदारण्यकस्थिता ॥ ७ ॥

शुभमस्तु

## अग्निरहस्यभाष्यविषयसूची

श्रीः

# महोपनिषत् ॥

[ओम् आप्यायन्त्विति शान्तिः ।]

अथातो महोपनिषदं व्याख्यास्यामः । तदाहुः—एको ह वै

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

महोपनिषत्प्रकाशः ।

नारायणं निखिलचेतननिर्विशेषं नाथं चतुर्मुखमहेशमुखस्य हेतुम् ।
नानाविधागमनुतं निखिलात्मभूतं नारायणाद्रिनिलयं नियतं नमामि ॥

श्रीभाष्ये, 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इति वाक्यस्य नारायणपारम्यप्रतिपादनार्थमुदाहरणात्, अस्य च वाक्यस्यात्र महोपनिषदि दर्शनात् इयमादरणीयेति स्थितम् ।

आचार्यतल्लजैश्च श्रीमद्वेदान्तदेशिकैः सच्चरित्ररक्षायां सुदर्शनपाञ्चजन्यधारणविधौ इत्थं प्रत्यबोधि—, "एतेन महोपनिषदः कैश्चिदनुदाहृतत्वचोद्यमपास्तम् । कति कति दृश्यन्ते भाष्यकारादिभिरुपात्ता उपनिषदः । न केवलं भगवद्रामानुजमुनिभिरेव महोपनिषदुपात्ता ; अपि तु तत्परमाचार्यैर्भगवद्यामुनमुनिभिरपि पुरुषनिर्णये समुपात्ता । न चैवमेकसिद्धान्तनिष्ठैरेव तदुपादानम् ; अपि तु तद्विरुद्धसन्मात्रब्रह्मभेदाभेदनिष्णातैः यादवप्रकाशैरपि भगवद्गीताभाष्येऽष्टमाध्याये । तथा तन्मतानुसारिभिर्नारायणार्यैरपि तत्त्वनिर्णये श्रुतितात्पर्यनिर्णयाधिकारे सोपबृंहणनानाविधश्रुतिशिखरनिकरोदाहरणावसरे महोपनिषद्वाक्यान्, 'एक एव नारायणः' इत्यादिकान् चतुरो मन्त्रान् उदाहृत्य, 'एषा चोपनिषत्, एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ' इत्यादिभिरितिहासैः, 'तत्क्रोधसंभवो रुद्रः प्रसादाच्च पितामहः', 'यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः' इत्यादिभिः पुराणैश्चोपबृंहिता' इत्युक्तम्" इति ।

नारायण आसीत् । न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यो न चन्द्रमाः । स एकाकी न रमेत । तस्य ध्यानान्तःस्थस्य यज्ञस्तोममुच्यते । तस्मिन् पुरुषाश्चतुर्दश जायन्ते ।

---

अनेन ब्रह्मरुद्रकारणतया नारायणप्रतिपादिकाया महोपनिषदः प्रामाण्यमास्थेयमिति सिद्धम् ।

परन्तु केयं महोपनिषदिति किञ्चिद् विचारणीयं लक्ष्यते, यदत्र सच्चरित्ररक्षासूक्तौ महोपनिषद्वाक्यतया चत्वारो मन्त्राः, 'एक एव नारायण' इत्याद्या नारायणार्योदाहरणतया वेदिताः अस्यां महोपनिषदि न लक्ष्यन्ते । न केवलमेतावत् । अत्रैव ग्रन्थे पूर्वं परमेश्वरसंहितावचनोदाहरणावसरे, 'स्नापयेद् ब्रह्मसूक्तस्थैर्मन्त्रैरष्टभिरेव च' इति, 'दक्षिणे तु भुजे विप्र इति पञ्चमेन वै' इति, 'ब्रह्म सर्वस्य वशिनमित्याद्यैर्मनुभिः क्रमात् । महोपनिषदन्तस्थैर्दिक्स्थितैः कलशाष्टकैः । एक एव नारायण इति मध्यमेन तु' इति चोदाहृत्यैव विवृतम्—अत्र ब्रह्मसूक्तमिति महोपनिषन्मध्यगताः सहस्रशीर्षं इत्याद्याः एकोनविंशतिर्मन्त्राः । तत्रोपरितना अष्टौ मन्त्राः, 'सर्वस्य वशिनम्' इत्याद्याः । तत्र, 'दक्षिणे तु भुजे विप्र' इति पञ्चमो मन्त्रः । 'एक एव नारायण' इति महोपनिषदाद्यो मन्त्रः—इति । न चैते मन्त्राः अस्यां महोपनिषदि यथावत् सत्त्वे लक्ष्यन्ते । तस्मादन्या काचित् महोपनिषदानुपूर्वी अवश्यमेव गवेषणीयाऽस्ति, महोपनिषद्द्वयमित्यत्र मानाभावे । अस्मदीयः सच्चरित्ररक्षानुबन्धोऽपि द्रष्टव्यः ।

अथाप्यस्यामपि महोपनिषदि श्रीभाष्योदाहृतवाक्योपलम्भात् नारायणपारम्यस्य निर्विचिकित्सं प्रतिपादकत्वाच्चैतन्मूलकादानमपि स्थाने ।

एको ह वै नारायण इति सृष्ट्यारम्भे नारायणमात्रसद्भावश्रवणात्, नारायणपदस्य श्रियःपत्यौ रूढत्वात्, ब्रह्मेशानादेः तदा सद्भावप्रतिषेधाच्च नारायणपारम्यं निर्विचिकित्सम् । यज्ञस्तोम-

एका कन्या। दशेन्द्रियाणि। मन एकादशं तेजः। द्वादशोऽहंकारः। त्रयोदशकः प्राणः। चतुर्दश आत्मा। पञ्चदशी बुद्धिः। भूतानि पञ्च तन्मात्राणि। पञ्च महाभूतानि। स एकः पञ्चविंशतिः पुरुषः। तत्पुरुषं पुरुषो निवेश्य। नास्य प्रधानसंवत्सरा जायन्ते। संवत्सराऽधिजायन्ते।

अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाऽध्यायत। तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायते बिभ्र-

---

मुच्यते इति। आराधनोपयोगिरस्तु यूह उच्यते उपरितनवाक्यै-रित्यर्थः। उपरि देहेन्द्रियादिसंघाततत्कारणादिकथनात्। पुरुषाः चतुर्दश जायन्ते इत्यस्य विवरणम् दशेन्द्रियाणीत्यादिना। एका कन्येत्यस्य विवरणम् पञ्चदशी बुद्धिरिति। आत्मेति शरीरमुच्यते। स एकः पञ्चविंशतिः पुरुषः। मनआदीनां बहूनामेषां स्वामी जीव एको भवति। एकैकस्यापि जीवस्येमानि बहूनि पृथक्पृथगुपकरणानीत्यर्थः। अत्र, 'जगति जीव एक एवास्ति' इति न विवक्षितम्। किन्तु एतेषां बहूनां स्वामी एको जीवो भवतीत्यर्थज्ञापनमात्रं चिकीर्षितम्। पुरुषस्य पञ्चविंशत्वं चतुर्विंशतिविधप्रकृतिप्राकृतपदार्थाधिकत्वात्। तत् पुरुषं पुरुषो निवेश्येति। पुरुषो नारायणः पुरुषं जीवं निवेश्य तत् पूर्वोक्तं मनआदिकमेकसंघातापन्नं करोतीति शेषः।

नास्य प्रधानसंवत्सरा जायन्ते। संवत्सरशब्दः प्रजापतौ चतुर्मुखे तत्रतत्र प्रयुज्यते। तस्य संवत्सररूपायुर्गणनया सृष्टिव्यग्रत्वात्। प्रजापतिरूपः संवत्सरः प्रधानभूतो येषाम्, ते जीवाः अस्य परमात्मनः सकाशात् साक्षान्न जायन्ते तस्मात् प्राक्। किन्तु संवत्सरात् प्रजापतेः अधि ऊर्ध्वं जायन्ते।

नारायणापेक्षया निकृष्टस्यापि महादेवस्य चतुर्मुखापेक्षयाऽप्यतिशयो विद्यते। अत एव हि विप्रु ब्रह्मणः पारम्यपक्षे निविष्टा नैव लक्ष्यन्ते लोके। विवादस्तु नारायणस्य महादेवस्य वा कतरस्य

चिरयम्। यत्र सत्यं ब्रह्मचर्यं तपो वैराग्यं मन ऐश्वर्यं सप्रणवा व्याहृतय ऋग्यजु सामाथर्वाङ्गिरस सर्वाणि छन्दांसि, तान्यङ्गे समाश्रितानि। तस्मादीशानो महादेवो महादेव ॥

अथ पुनरेव नारायण सोऽन्यत्कामो मनसाऽध्यायत। तस्य ध्यानान्तस्थस्य ललाटात् स्वेदोऽपतत्। ता इमा प्रतता आप। ततस्तेजो हिरण्मयमण्डम्। तत्र ब्रह्मा चतुर्मुखोऽजायत। सोऽध्यायत् पूर्वाभिमुखो भूत्वा भूरिति व्याहृतिर्गायत्रं छन्द ऋग्वेदोऽग्निर्देवता। पश्चिमाभिमुखो भूत्वा, भुवरिति व्याहृतिस्त्रैष्टुभं छन्दो यजुर्वेदो वायुर्देवता। उत्तराभिमुखो भूत्वा, स्वरिति व्याहृतिर्जागतं छन्द सामवेद सूर्यो देवता। दक्षिणाभिमुखो भूत्वा महरिति व्याहृतिरानुष्टुभं छन्दोऽथर्ववेद सोमो देवता।

सहस्रशीर्षं देवं सहस्राक्षं विश्वशम्भुवम्।
विश्वत परमं नित्यं विश्वं नारायणं हरिम् ॥
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति।
पतिं विश्वेश्वरं देवं समुद्रे विश्वरूपिणम् ॥
पद्मकोशप्रतीकाशं लम्बत्याकोशसन्निभम्।
हृदयं चाप्यधोमुखं सततं सीत्कराभिश्च ॥
तस्य मध्ये महानर्चिर्विश्वार्चिर्विश्वतोमुखम्।

---

पारम्यमित्येवेत्याशयेन चतुर्मुखात् प्रागेव महादेवं महापुरुषलम्भित जन्मभूमानं श्रुतिराह अथेति। एतावताऽस्य ब्रह्मापेक्षया पूर्वोत्पन्नत्वं न मन्तव्यमिति ज्ञापनाय पूर्वं नास्येत्यादिवाक्यम्।

भूत्वेत्यत्र अध्यायदित्यस्यानुषङ्ग। देवतेत्यन्तवाक्येषु अजायन्तेत्यध्याहार। सहस्रशीर्षमित्यादि प्रथमान्तं वक्ष्यम्। यद्वा द्वितीयान्तमेव, उपजीवतीत्यत्रान्वयसम्भवात्। 'विश्वमेवेदं पुरुष' इति तु प्रधानतापयमध्यगतमवान्तरवाक्यम्। सीत्कराभिरिति सिराभिरित्यर्थ। सततं = सततवान् हृदयमधोमुख ...

एका कन्या। दशेन्द्रियाणि। मन एकादशं तेजः। द्वादशोऽहंकारः। त्रयोदशकः प्राणः। चतुर्दश आत्मा। पञ्चदशी बुद्धिः। भूतानि पञ्च तन्मात्राणि। पञ्च महाभूतानि। स एकः पञ्चविंशतिः पुरुषः। तत्पुरुषं पुरुषो निवेश्य। नास्य प्रधानसंवत्सरा जायन्ते। संवत्सराद्धिजायन्ते।

अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाऽध्यायत। तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायते बिभ्र-

---

मुच्यते इति। आराधनोपयोगिवस्तुव्यूह उच्यते उपरितनवाक्यैरित्यर्थः। उपरि देहेन्द्रियादिसंघाततत्कारणादिकथनात्। पुरुषाः चतुर्दश जायन्ते इत्यस्य विवरणम् दशेन्द्रियाणीत्यादिना। एका कन्येत्यस्य विवरणम् पञ्चदशी बुद्धिरिति। आत्मेति शरीरमुच्यते। स एकः पञ्चविंशतिः पुरुषः। मनआदीनां बहूनामेषां स्वामी जीव एको भवति। एकैकस्यापि जीवस्येमानि बहूनि पृथक्पृथगुपकरणानीत्यर्थः। अत्र, 'जगति जीव एक एवास्ति' इति न विवक्षितम्। किन्तु एतेषां बहूनां स्वामी एको जीवो भवतीत्यर्थज्ञापनमात्रं चिकीर्षितम्। पुरुषस्य पञ्चविंशत्वं चतुर्विंशतिविधप्रकृतिप्राकृतपदार्थाधिकत्वात्। तत् पुरुषं पुरुषो निवेश्येति। पुरुषो नारायणः पुरुषं जीवं निवेश्य सत् पूर्वोक्तं मनआदिकमेकसंघातापन्नं करोतीति शेषः।

नास्य प्रधानसंवत्सरा जायन्ते। संवत्सरशब्दः प्रजापतौ चतुर्मुखे तत्रतत्र प्रयुज्यते। तस्य संवत्सररूपायुर्गणनया सृष्टिव्यवस्थात्। प्रजापतिरूपः संवत्सरः प्रधानभूतो येषाम्, ते जीवाः अस्य परमात्मनः सकाशात् साक्षान्न जायन्ते तस्मात् प्राक्। किन्तु संवत्सरात् प्रजापतेः अधि ऊर्ध्वं जायन्ते।

नारायणापेक्षया निकृष्टस्यापि महादेवस्य चतुर्मुखापेक्षयाऽप्यतिशयो विद्यते। अत एव हि त्रिपु ब्रह्मणः पारम्यपक्षे निविष्टा नैव लक्ष्यन्ते लोके। विवादस्तु नारायणस्य महादेवस्य वा कतरस्य

श्रीः

श्रीमते नारायणाय नमः

# नारायणोपनिषत् ॥

[ ओम् सह नाववत्विति शान्तिः । ]

ओम् । अथ पुरुषो ह वै नारायणोऽकामयत, प्रजाः सृजेयेति । नारायणात् प्राणो जायते ; मनः सर्वेन्द्रियाणि च ; खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । नारायणात् ब्रह्मा जायते । नारायणात् रुद्रो जायते । नारायणात् इन्द्रो जायते । नारायणात्

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## नारायणोपनिषत्परिष्कारः ।

श्रीश्रीनिवासकरुणैकनिरूढभूम-
वेदान्तलक्ष्मणयतीन्द्रकटाक्षलक्ष्यम् ।
श्रीरङ्गलक्ष्मणमुनिं प्रणिपत्य मूर्ध्ना
नारायणोपनिषदं परिष्करोमि ॥

वेदेषु सर्वेष्वपि पठ्यमाने पुरुषसूक्तेऽन्यत्र च पुरुष इति यः प्रसिद्धः पुरुषोत्तमः, स एव, नारायण इत्यपि नानाम्नायप्रसिद्धः । भगवन्मन्त्रेषु व्यापकमन्त्रास्त्रयः प्रधानभूताः । प्रधानतमस्तु श्रीमदष्टाक्षरनामा नारायणमन्त्रः । विष्णुगायत्री च विष्णुनारायणवासुदेवपदेषु नारायणशब्दमेव प्रथमतो गृह्णाति । वासुदेवशब्दमपेक्ष्य विष्णुशब्दं विश्वतः श्रुतिषु प्रयुक्तम् । ततोऽपि नारायणशब्दमेवाधिकतरमभ्यस्यते । नारायणपदस्य निरङ्कुशो महिमा निखिलापेक्षितार्थनिरूपणक्षमता च रहस्यग्रन्थतो यथावदधिगन्तव्यौ । तदियं नारायणोपनिषत् निखिलवेदवेद्यतया निरवधिकप्रभावनारायणमन्त्रोपास्यतया च तमेव पुरुषं नारायणं प्रतिबोधयितुं तस्य ब्रह्मरुद्रादिसर्वजगत्कारणत्वं सर्वेश्वरत्वमाद्यञ्च यथायथं प्रथममाह—अथ पुरुष इत्यादिना ।

तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः ॥
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स ईशानः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥

इति महोपनिषत् ॥*

शुभमस्तु

स्पष्टः । अस्य सहस्रशीर्षमित्यादेरर्थो नारायणानुवाके तैत्तिरीयगते विशदं द्रष्टव्यः । अथोत्तरोपनिषत्कोशे अशुद्धिबाहुल्यं सम्यगवधारितम् । अतस्तत्रतत्र यथावस्थितः पाठोऽप्यन्विष्य ग्राह्यः ।

इति श्रीवात्स्यचक्रवर्ति-वीरराघवाचार्यकृतिषु
उपनिषद्भाष्यपरिष्कारे महोपनिषत्परिष्कारः ।
शुभमस्तु ॥

*एतावत्पर्यन्ता महोपनिषत् बहुपरिग्रहेण प्रामाण्यं निर्विवादं लभते । एतदुपरितनास्तु पञ्चाध्यायाः विस्तृता अनुष्टुप्छ्लोकात्मकाः शुकजनकनिदाघादिनानापुरुषवृत्तान्तनिबन्धरूपाः पुराणशैलीमनुरुन्धानाः अविस्रम्भादनावश्यकत्वाच्च न प्रकाश्यन्ते । अत्रायमपि कश्चिदूहः पदं लभते । तदाहुरित्यतःपूर्वैव महोपनिषत् भाव्या । तद्व्याख्यानार्थं प्रवृत्तेन अथातो महोपनिषदं व्याख्यास्यामः इत्युपक्रम्य महोपनिषद् समस्तां तदाहुरित्यादिना यथामति पठित्वा सैषा तत्सारार्थस्य जिज्ञापयिषया शुकादिवृत्तान्तमयैः पञ्चभिरध्यायैः सामान्यतो व्याख्यायीति । अवश्यमन्या काचिदानुपूर्वी महोपनिषदोऽस्तीति परिष्कारेऽदर्शयाम । उपलम्भे साऽप्यानुपूर्वी प्रकाशयिष्यते ।

—:०:—

श्रीः

श्रीमते नारायणाय नमः

# नारायणोपनिषत् ॥

[ओम् सह नाववत्विति शान्तिः ।]

ओम् । अथ पुरुषो ह वै नारायणोऽकामयत, प्रजाः सृजेयेति । नारायणात् प्राणो जायते ; मनः सर्वेन्द्रियाणि च ; खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । नारायणात् ब्रह्मा जायते । नारायणात् रुद्रो जायते । नारायणात् इन्द्रो जायते । नारायणात्

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## नारायणोपनिषत्परिष्कारः ।

श्री श्रीनिवासकरुणैकनिरूढभूम-
वेदान्तलक्ष्मणयतीन्द्रकटाक्षलक्ष्यम् ।
श्रीरङ्गलक्ष्मणमुनिं प्रणिपत्य मूर्ध्ना
नारायणोपनिषदञ्च परिष्करोमि ॥

वेदेषु सर्वेष्वपि पठ्यमाने पुरुषसूक्तेऽन्यत्र च पुरुष इति यः प्रसिद्धः पुरुषोत्तमः, स एव, नारायण इत्यपि नानाम्नायप्रसिद्धः । भगवन्मन्त्रेषु व्यापकमन्त्रास्त्रयः प्रधानभूताः । प्रधानतमस्तु श्रीमदष्टाक्षरनामा नारायणमन्त्रः । विष्णुगायत्री च विष्णुनारायणवासुदेवपदेषु नारायणपदमेव प्रथमतो गृह्णाति । वासुदेवपदमपेक्ष्य विष्णुपदं विश्वतः श्रुतिषु प्रयुक्तम् । ततोऽपि नारायणपदमेवाधिकतरमभ्यस्यते । नारायणपदस्य निरङ्कुशो महिमा निखिलापेक्षितार्थनिरूपणक्षमता च रहस्यग्रन्थतो यथावदधिगन्तव्या । तदियं नारायणोपनिषत् निखिलवेदवेद्यतया निरवधिकमहिमनारायणमन्त्रोपास्यतया च तमेव पुरुषं नारायणं प्रतिबोधयितुं तस्य ब्रह्मरुद्रादिसर्वजगत्कारणत्वं सर्ववस्त्वात्मभावञ्च यथाक्रमं प्रथममाह—अथ पुरुष इत्यादिना ।

प्रजापतिः प्रजायते। नारायणाद् द्वादशादित्या रुद्रा वसवः। सर्वाणि च्छन्दांसि नारायणादेव समुत्पद्यन्ते। नारायणात् प्रवर्तन्ते। नारायणे प्रलीयन्ते। एतदृग्वेदशिरोऽधीते ॥ १ ॥

अथ नित्यो नारायणः। ब्रह्मा नारायणः। शिवश्च नारायणः। शक्रश्च नारायणः। कालश्च नारायणः। दिशश्च नारायणः। विदिशश्च नारायणः। ऊर्ध्वं च नारायणः। अधश्च नारायणः। अन्तर्बहिश्च नारायणः। नारायण एवेदं सर्वम्, यद् भूतं यच्च भव्यम्। निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणः। न द्वितीयोऽस्ति कश्चित्। य एवं वेद, स विष्णुरेव भवति। एतद्यजुर्वेदशिरोऽधीते ॥ २ ॥

ओमित्यग्रे व्याहरेत्। नम इति पश्चात्। नारायणायेत्युपरिष्टात्। ओमित्येकाक्षरम्॥ नम इति द्वे अक्षरे। नारायणायेति पञ्चाक्षराणि। एतद्वै नारायणस्याष्टाक्षरं पदम्। यो ह वै नारायणस्याष्टाक्षरं पदम-

---

ब्रह्मरुद्रादीनां प्रजानां प्राण-करण-पञ्चभूतमयकलेवरकलितजनितया प्रथमतः प्राणाद्युत्पत्तिमपि नारायणादाह नारायणादिति। अत्र निमित्तवदुपादानत्वस्यापि विवक्षितुं युक्तत्वात् नारायणपदानि यथार्हं चेतनाचेतनात्मकसूक्ष्मविशेषणविशिष्टपराणि भाव्यानि। एवं नारायणस्य सर्वकारणत्वमधिगमितम्। (१)

अथ सर्वोपादानत्वाद्युपयुक्तं शरीरात्मभावनिबन्धनं सार्वात्म्यं तस्याऽऽह अथ नित्य इति। अन्यत्र च श्रुतिषु जन्मस्थितिलयहेतुत्वपुरस्सरं सार्वात्म्यमुद्घुष्यते 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः', 'ऐतदात्म्यमिदं सर्वम्' इति ; 'सर्वं खल्विदं ब्रह्म तज्जलानिति' इति च। नित्यो नारायण इत्यस्य ब्रह्मादिवत् स न नश्यतीत्यर्थः। अथवा उपरितनवाक्यैकरस्याय, नित्यसूर्यात्मा नारायण इत्यर्थो ग्राह्यः। विष्णुरेव = विष्णुसमः। (२)

अथ तदुपासनोपयुक्तं मन्त्रमाह ओमिति। अष्टाक्षरं पदमिति।

ध्येति, अनपब्रुवः सर्वमायुरेति ; विन्दते प्राजापत्यं रायस्पोषं गौपत्यम् । ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति । एतत् सामवेदशिरोऽधीते ॥ ३ ॥

---

पद्यते=प्रतिपाद्यते तत्त्वहितपुरुषार्थमयं प्रमेयमनेनेति पदमिदं वाक्यरूपमेव ग्राह्यम् । तथा च प्रयोगः, 'कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः' इति । इमानि श्रुतिवाक्यानि मनसिकृत्य च श्रीमति रहस्यत्रयसारे पद्यं न्यबन्धि,—

> 'तारं पूर्वं तदनु हृदयं तच्च नारायणाये-
> त्याम्नायोक्तं पदमवयतां सार्थमाचार्यदत्तम् ।' इति ।

अत्र तच्च=नानाश्रुतिप्रसिद्धञ्च नारायणेति तृतीयं पदमवयतामिति व्याख्यान्ति । तथा च पूर्वं तारं प्रणवमवयतां तदनु हृदयं नमःपदमवयताम्, अथ तत् नारायणेति च पदमवयतामिति व्याख्यातृसंमतोऽन्वयक्रमः । अत्रान्यविधेऽन्वय एव औचित्यं पश्यन्ति, यथा—पूर्वं तारं भवति । तत् अनु=ततः पश्चात् हृदयं भवति । तच्चेत्यत्र अनु इत्येतदनुकृष्यते । तच्चानु=नमःपदानन्तरञ्च नारायणेति पदं भवति । इत्याम्नायोक्तम् 'ओमित्यग्रे व्याहरेत्' इत्यादिप्रकृतश्रुत्या एवं घोषितं पदं 'नारायणस्याष्टाक्षरं पदम्' इति पदशब्दोपात्तं मन्त्रमवयतामिति । ननु तारमिति नपुंसकं प्रणवरूपार्थे अप्रसिद्धमिति चेन्न—तथा सति श्रुताविव श्लोकेऽपि, तारं व्याहरेदिति पदाध्याहारसंभवात् । तदनु इति च समस्तं पदमस्तु । तदेकदेशस्य अनु इत्यस्योपरि विभज्यानुषक्तोऽस्तु । वस्तुतस्तु तारपदं नपुंसकं प्रसिद्धमेव । यथा अथर्वशिरसि, 'स ओङ्कारः यः प्रणवः—सोऽनन्तः तत् तारम्' इति, 'अथ कस्मादुच्यते तारम्? यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात् तारयति, त्रायते च, तस्मादुच्यते तारम्' इति च स्पष्टं नपुंसकमेव निर्दिष्टम् । (३)

प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपम् । अकार उकारो मकार इति । तानेकधा समभरत् तदेतदोमिति । यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् । ओम् नमो नारायणायेति मन्त्रोपासको वैकुण्ठभुवनं गमिष्यति। तदिदं पुण्डरीकं विज्ञानघनम् । तस्मात् तडिदाभमात्रम् ।

ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः ।
ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरुच्यते ॥ इति ।

सर्वभूतस्थमेकं नारायणं कारणपुरुषमकारणं परं ब्रह्मोम् । एतदथर्वशिरोऽधीते ॥ ४ ॥

प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत् सायं प्रातरधीयानो पापोऽपापो भवति ।

---

प्रणवे अक्षरविभागं दर्शयति प्रत्यगिति । अकारोकारमकारात्मकं प्रणवस्वरूपं प्रत्यगानन्दं ब्रह्म प्रतिपादयतीत्यर्थः । अकारवाच्यब्रह्मैकशेषभूतः प्रत्यगात्मेति प्रणवार्थः । तच्छेषत्वं च तदतिशयायहत्वं तदानन्दहेतुव्यापारकारिणि प्रत्यगात्मन्यस्तीति भवति ब्रह्म प्रत्यगधीनानन्दशालि । अतः तत् प्रत्यगानन्दम् । अथवा प्रत्यक् = स्वस्मै स्वयं प्रकाशमानम् । उकारोऽवधारणप्रणवेऽर्थः, लक्ष्मीवाचको वा । पुण्डरीकं शुभ्रम् । उत्कृष्टं वा । यथा बृहदारण्यके आदित्यमुपतिष्ठमान आह–(८.३.)–'दिशामेकपुण्डरीकमसि। अहं मनुष्याणामेकपुण्डरीकं भूयासम्' इति । तडिदाभमात्रं कार्त्स्न्येन ज्योतिर्मयम् । तमसः परस्तात् स्थिते वैकुण्ठभुवने तमसः क्वचिदपि न प्रसक्तिः । तदीयज्योतिर्मयत्वपरिशीलने प्रकृतिरियं तमोवत् अन्धकारवत् अध्यवसेया भवतीति तम इत्युच्यते । नारायणमिति, गमिष्यतीत्यत्रान्वेति । (४)

वेदचतुष्टयशिरसां निर्दिष्टानामध्ययनस्य फलं दर्शयति प्रातरिति । 'तदन्तर्भावात् त्वां न पृथगभिधत्ते श्रुतिरपि' इति न्यायेन नारायणाभिधायि पदं सर्वं तद्वक्षःस्थलनित्यवासया श्रिया सहित-

माध्यंदिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात् प्रमुच्यते । सर्ववेदपारायणपुण्यं लभते । नारायणसायुज्यमवाप्नोति, श्रीमन्नारायणसायुज्यमवाप्नोति, य एवं वेद ।

[ओम् सह नाववत्विति शान्तिः ॥]

इति नारायणोपनिषत् ॥

श्रीरस्तु

—:**:—

---

मेव नारायणमाहेति अष्टाक्षरमन्त्रे उकारस्यान्यार्थकत्वेऽपि लक्ष्मीरुक्तप्राया ; किंतु उकारस्य लक्ष्मीपरत्वे 'उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा' इति स्मरणादित्याशयेन श्रीमन्नारायणेत्युक्तम् ।

इति वात्स्यचक्रवर्ति-वीरराघवाचार्यकृतिषु

उपनिषद्भाष्यपरिष्कारे । नारायणोपनिषत्परिष्कारः ।

शुभमस्तु

—०—०—

महोपनिषन्नारायणोपनिषदर्थसंग्रहः

नारायणस्य पारम्यं ब्रह्मेशाद्युद्भवस्ततः ।
अन्तर्यामित्वमैक्यञ्च महोपनिषदीरितम् ॥ (१)

देहिनां हृदयस्यान्तर्मध्यश्यामतनोर्हरेः ।
योगिध्येयतया स्थित्याऽप्यन्तर्यामित्वमीरितम् ॥ (२)

ऋग्यजुः साम चाथर्व वेद इत्येतदंशभाक् ।
नारायणोपनिषद्व्याह नारायणं परम् ॥ (३)

ब्रह्मरुद्रेन्द्रमुख्यानां ततो जन्म तदात्मताम् ।
श्रीमदष्टाक्षरमनुं प्रणवस्याक्षरादि च ॥ (४)

तत्तदंशक्रमेणोक्त्वा मुक्तिहेतोरितो मनोः ।
सर्वश्रुतिजपाद्याप्यं फलञ्च बहु माऽब्रवीत् ॥ (५)

श्रीः

# पुरुषसूक्तभाष्यम् *

प्रसङ्गात् पुरुषसूक्तभाष्यमपि लिख्यते (?) ।
तयः सपक्षसंमूतिविमूनिपरिमूतय ॥
पुरुषाय नमस्तस्मै परस्मै विश्वयात्मने ।
तं प्रणम्यादिपुरुषं जगतामादिकारणम् ॥
दुर्ज्ञाने पौरुष सूक्तं व्याकरोमि यथामति ।

श्रीपाद्मे पुराणे— 'इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ॥
अतः श्रुतिभ्यः सर्वाभ्यो बलवत् समुदीरितम् ।
इद पुरुषसूक्तं हि यजुष्यष्टादशर्चकम ॥
ऋग्वेदे षोडशर्चं स्यात् पञ्च वाजसनेयके ।
सामवेदे तु सप्तर्चं तथैवाथर्वणेऽपि च ॥
वेदेषु याजुषं वेदमवलम्ब्य वदाम्यहम् ।
मदर्वाचीनता प्रेक्ष्य नोपेक्षन्तां मनीषिणः ॥
श्रुतिषु प्रबला[मन्त्रा ?]स्तेष्वप्यध्यात्मवादिनः ।

---

*मद्रनगरीय—अडैयारकोशालये इदं पुरुषसूक्तभाष्यमन्यकर्तृकत्वेन प्रकाशितमिदानीम् । तथैव स्वीकारेऽपि न क्षतिः । श्रीरङ्गरामानुजस्वामिकृतत्वेन क्वचित् निर्देशस्तु उपनिषदां भाष्यमिवेदमप्येतत्कृतं स्यादिति ऊहमात्रेणेति तदा वक्तव्यम् । व्याख्यानशैल्यपि विभिन्नरूपैव लक्ष्यते । अथाप्यवश्यादरणीयत्वात् मुद्रणं स्थाने । अशुद्धिबहुलैव मातृकाऽत्रोपलब्धा । अथापि यथाशक्ति शोधनं कृत्वा प्रकाश्यते । मद्रनगरप्राच्यमातृकाकोशालये मातृका द्रष्टव्या ।
अत्र प्रसङ्गादित्युपक्रमात् इतः प्राक् प्रणीतं किमिति विमृश्यम् ।

तत्रापि पौरुषं सूक्तं न तस्माद् विद्यते परम् ॥

(ऋषिच्छन्दोदेवताविनियोगफलप्रदर्शनम्)

तत्रैव, भगवान् शौनकः—

....पुरुषसूक्तस्य ऋषिर्नारायणः स्मृतः ।
छन्द आनुष्टुभं सूक्तं तिस्रोऽन्त्यास्त्रिष्टुभो मताः ॥
परमः योमवासी च पुरुषो देवताऽभवत् ।
प्रथमां विन्यसेत् वामे द्वितीयां दक्षिणे करे ॥
तृतीयां वामपदे च चतुर्थीं दक्षिणे तथा ।
पञ्चमीं वामजानौ तु षष्ठीं दक्षिणके तथा ॥
सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा ।
नवमीं नाभिदेशे तु दशमीं हृदये तथा ॥
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ।
त्रयोदशीं दक्षिणे तु आस्यदेशे चतुर्दशीम् ॥
अक्ष्णोः पञ्चदशीं न्यस्य षोडशीं मूर्ध्नि विन्यसेत् ।
एवं न्यासविधिं कृत्वा पश्चादङ्गानि समालभेत् ॥
प्रायश्चित्ते जपे चैव विष्णोराराधने तथा ।
मोक्षे वश्येऽभ्युपस्थाने सुपुत्रप्रापणेऽपि च ॥
सर्वकामफलावाप्तावारोग्ये मृत्युनाशने ।
एतेष्वर्थेष्विदं सूक्तं मुनयो विनियुञ्जते ॥

प्रायश्चित्त...द्वाधूल —'यत्रयत्र कर्मभ्रेषो यजुर्भ्रेषो वा, तत्रतत्र पुरुषं

ध्यायेत् । पुरुषसूक्तमुच्चरेत् । पूर्णत्वात् पुरुष इति विज्ञायते ।

**यमस्मृतौ**— ब्रह्मयज्ञे जपेत् सूक्तं पौरुषं चिन्तयन् हरिम् ।
स सर्वान् जपते वेदान् साङ्गोपाङ्गान् द्विजोत्तम ॥
जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पग ।
सकृज्जप्त्वास्यवामीयं शिवसङ्कल्पमेव च ॥
जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पग ॥

**बोधायनम्**—मातृदुहितृस्नुषास्वसृसवर्णाविधवागमनादौ जले निमज्जन् चिन्तयन् पुरुषं सूक्तं त्रिरुच्चारयेत्, तदानीमेव पूतो भवति । विप .. .. स्नात पवित्राणि यथाशक्ति जपेत् विशेषत .. शब्दाभ्यां सदृशीमि ॥

**ऋग्विधाने शौनको वदति**—

'पुरुषस्य हरे सूक्तं सर्वपापप्रणाशनम् ।
वक्ष्ये पुरुषसूक्तस्य विधानं चार्चनं प्रति ॥
आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम् ।
द्वितीययाऽऽसनं दद्यात् पाद्यं चापि तृतीयया ॥
चतुर्थ्याऽर्घ्यं प्रदातव्यं पञ्चम्याऽऽचमनीयकम् ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥
यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च ।
दशम्या पुष्पदानं स्यात् एकादश्या तु धूपकम् ॥
द्वादश्या दीपदानं स्यात् त्रयोदश्या हविस्तथा ।

चतुर्दश्याऽञ्जलिं कुर्यात् पञ्चदश्या प्रदक्षिणम् ॥
षोडश्योद्वासनं कुर्यात् एवमाराधयेत् हरिम् ।
स्नाने वस्त्रे निवेद्ये च दद्यादाचमनीयकम् ॥
दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥

मोक्षे योगवासिष्ठे—*

'संसारान्मोक्षमिच्छन् यः सत्यजेदेषणात्रयम् ।
निस्पृहः सर्वकामेभ्यः समलोष्टाश्मकाञ्चनः ॥
गुरोः पादौ तु सगृह्य स्नाचम्य प्रयतो भवेत् ।
मनश्च पावनं कृत्वा सन्त्यजेदेषणात्रयम् ॥
ततो गच्छन् हरेर्वेश्म पावनं सुमनोहरम् ।
ततो मनोगतान् कामान् सर्वान् त्यक्त्वा प्रसन्नधीः ॥
अनिकेतः स्थिरमतिरादिदेवे जनार्दने ।
येन केन चिदाच्छन्नो येन केनचिदाशितः ॥
मेघच्छन्न इवाऽऽदित्यो भस्मच्छन्न इवानलः ।
आत्मानं गूहमानस्तु सर्वभूतदयान्वितः ॥
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ।
एकान्ती यतचित्तात्मा त्यक्तसर्वपरिग्रहः ॥
ध्यायन् नारायणं देवं हृदयाम्भोजमध्यगम् ।

---

*ज्योतिरधिकरणश्रुतप्रकाशिकायां योगवासिष्ठात् वचनान्तरमुदाहृतम् ।

दिग्देशकालावस्थाद्यैरनवच्छेद्यवैभवम् ॥
सर्वदा पौरुषं सूक्तं मनसैव जपेच्छुचिः ॥' इति ।

किञ्च, योगवासिष्ठे —

'यः पौरुषस्य सूक्तस्य जानात्यर्थं यथा तथा ।
स जन्मनीह मुक्तः स्यात्, पुराणेषु च दर्शनात् ॥
विष्णुः पुरुषसूक्तार्थः पुरुषोऽध्यवसीयते ।'

उत्तरभागाध्याये —

'सर्वं वशं मम भवेदिति सञ्चिन्तयन् मुनिः ।
जपेत्तु पौरुषं सूक्तं प्रणिपत्य जनार्दनम् ॥
यद्वशे वर्तते कृत्स्नं चराचरमिदं जगत् ।
वशे भवति तस्येदं जगत् सर्वं मुनेरपि ॥' इति ।

आपस्तम्बः—'सहस्रशीर्षा पुरुष इत्युपहिता पुरुषेण नारायणेन यजमा उपतिष्ठते' । उपहिताम् = इष्टकाभिः कृतोपधानामित्यर्थः ।

बाधूलसूत्रे— नारायणदृष्टेन पुरुषदैवतेनोपहितां चितिमुपतिष्ठमान स्ता जन्मनि पुरुषो भवेदिति—

आयुष्मत्पुत्रावाप्तौ ऋग्विधाने—

'पुत्रेच्छुर्ब्राह्मणः शुद्धः सुप्रसन्नमना भवेत् ।
पौरुषेण च सूक्तेन जुहुयादाज्यमन्वहम् ॥
पायसान्नं चरुं कृत्वा तेनैव जुहुयाच्छुचिः ।
हुतशिष्टं चरुं शुद्धमश्नीयातां च दम्पती ॥
एवं त्रिंशद्दिनादूर्ध्वं गर्भो भवति सुस्थितः ।

सर्वलक्षणसम्पन्न पुत्रो भवति पावन ॥' इति ।

**श्रीशास्त्रे**—सर्वकामावाप्त्यादिषु पुरुषसूक्तसमाराधनेन अचिरात् सर्वान् कामान् आप्नोतीति ॥

(*पुरुषसूक्तावतारणम्*)

एव छन्दास्यृषीन् देव विनियोग तथा फलम् ।
उक्त्वा तु पौरुषं सूक्तमवतारयितुं यते ॥

**श्रीशास्त्रे**— पुरुषसूक्तसहितायां भगवान् सनत्कुमारो नारदमुनये भगवद्दृशानुपदिशन् पुरुषसूक्तमवतारयामास । तत्र नारद परिप प्रच्छ, सर्वव्यापिन पुरुषस्य किमर्थं शरीरपरिग्रह इति ॥ तत्राह—

'पुरा नारायणो देव कृपया परयाऽन्वित ।
देवतिर्यङ्मनुष्यादीन् वीक्ष्य ससारमध्यगान् ॥
एव सञ्चिन्तयामास सस्मरन् वैभव स्वकम् ।
स्वत प्रमाणवाक्यानि दुर्विज्ञान वदन्ति माम् ॥
'अणोरणीयान् महतो महीयान्' 'निर्गुणो गुणी ।'
दिग्देशकालावस्थाद्यैरनवच्छेद्यवैभव ॥
वृद्धिक्षयविहीनश्च सत्यकामो निरञ्जन ।
विनेन्द्रियेण सर्वज्ञो विना पादेन सर्वग ॥
अनासोऽनुभवन् गन्धान् स्पृशन् सर्वमपाणिक ।
शृण्वन् श्रुतिं विना शब्दमजिह्वो लेलिहन् रसम् ॥
साधनेन विना साध्यं सर्वं संसाधये ऽहम् ।
तस्मात् सर्वप्रमाणैस्तु सुदुर्ज्ञानतरो ऽहम् ॥

मम रूपमविज्ञाय लोके मोक्षो न सिध्यति ।
तस्मात् संसारचक्रेऽस्मिन् भ्राम्यन्त्येते सुदुस्तरे ॥
उद्धरेयमिमान् सर्वान् यातायातशताकुलान् ।
इति संचिन्त्य मनसा स्वच्छन्दोपात्तविग्रहम् ॥
हित्वौपनिषदं रूपं प्रमाणानामगोचरम् ।
सर्वेषां स्तुतिभिर्योऽयं दृष्टमात्रेण मोक्षदम् ॥
सर्वकल्याणसंपूर्णं गुणराशिसमाश्रयम् ।
सहस्रावयवोपेतमादद्दे रूपमद्भुतम् ॥' इति ।
ब्रह्माण्डपुराणे क्षीराब्धिवर्णने—

उक्तश्च—न ते रूपमित्यादि—

'सहस्रकन्धरं चारु तुङ्गोरस्स्थलमुन्नतम् ।
सहस्रबाहुसंयुक्तमिन्दिरावरमन्दिरम् ॥' इति च ॥

श्रीभूमी यस्य देव्यौ सकलमुनिवराः किंकराः रक्षमण्डं
सृष्ट्याद्याः शिल्पलीलाः विधिमुखविबुधाः पुत्रपौत्रादयोऽपि ।
वैकुण्ठं नाम धाम स्तुतिकृदुपनिषत् शासनं शास्त्रवर्गः
सोऽयं वैकुण्ठ [नाथः ?] श्रियमतिशयिनीं वैष्णवीं वो ददातु ॥

---

तदयं पुरुषसूक्तभाष्यपरिष्कारे संग्रहः

ऋग्वेदे षोडशर्चं प्रथितहरिपरं पौरुषं सूक्तमेतत्
सप्तर्चं साम्नि चाथर्वणवचसि यजुष्येव षड्दशर्चम् ।
अर्चास्वावाहनादौ विशदमृच इमाः ऋत्विग्धाले नियुक्ताः
आयुष्मत्पुत्रकाम्याहुति-वृजिनहति-ब्रह्मयज्ञादिके च ॥

श्रीः

श्रीमते पुरुषाय नमः

# पुरुषसूक्तम् ।

हरिः ओम् । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।

सहस्रशीर्षा पुरुषः....। सहस्रशब्दोऽनन्तवचनः । सहस्राणि

---

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## पुरुषसूक्तभाष्यपरिष्कारः ॥

यो हि व्यूह्य विरिञ्चादि सृजत्याश्रितमुक्तिदः ।
महते पुरुषायास्मै परस्मै श्रीमते नमः ॥ १ ॥

अयि हृदय ! किमर्थं क्लिश्यसे कल्मषाणां
हरणमतिपवित्रं पौरुषं सूक्तमस्ति ।
अधिगमयति यस्याऽऽलोड्य सर्वं प्रमेयं
यतिपतिमतकर्मीभ्यादरोऽभिज्ञवर्गः ॥ २ ॥

सर्वत्र वेदे श्रुतमादराद्धि स्मृतीतिहासादिविवेचितार्थम् ।
शारीरके सूक्तमिदं न नूनं मीमांसितं ब्रह्मपरत्वदार्ढ्यात् ॥ ३ ॥

यद्यपि ज्योतिरधिकरणश्रुतप्रकाशिकायाम्, ‘पुरुषसूक्तं कस्मात् सूत्रकारेण न निरूपितमित्याशङ्क्य, संदेहाभावादिति समाहितम्-अथापि चिदचिद्विलक्षणपुरुषविशेषपरत्वविषये संशयलेशस्याप्यभावेऽपि तत्तन्मन्त्रघटकपदवाक्यार्थयोजनाप्रकारनिर्धारणं दुष्करमेव लक्ष्यते । अर्थवर्णनार्थप्रवृत्तेषु उपनिषत्स्मृतीतिहासपञ्चरात्रग्रन्थेषु नैकरूप्यमुपलभ्यते । अधिकृतमनुप्रयुज्यमानस्य चास्यार्थोऽवश्यमेवाधिगन्तव्यः। ‘योऽर्थज्ञ इत् सकलं भद्रमश्नुते’ इति च श्रुतिः । अत इदमपि सूक्तं भाषितमस्ति । अत्रोपक्रमे प्रसङ्गादिति निर्देशात् किमिदं भाष्यं ग्रन्थान्तरमध्यनिविष्टम्, स्वतन्त्रं वेति विमृश्यमस्ति । ग्रन्थान्तेऽपि द्रष्टव्यम्। विस्तरेण पीठिकां विधाय व्याख्यातुमारभते सहस्रेति ।

शिरांसि, सहस्राण्यक्षीणि, सहस्रं पादाः यस्य स **सहस्रशीर्षा सहस्राक्षः सहस्रपादुक्तः** । 'शीर्षन् छन्दसि' इति शिरश्शब्दस्य शीर्षन्नादेशः । गीयते हि, 'अनन्तबाहूदरवक्त्रनेत्रम्' इति । पादशब्दः उपलक्षणार्थः । 'सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्व-मावृत्य तिष्ठति ॥' इति । मन्त्रान्तरे च भवति, 'विश्वतश्चक्षुरुत विश्वतो-मुखो विश्वतोबाहुरुत विश्वतस्पात्' इति । [एवं प्रसिद्धाः]पादादयो (1) भगवत एव सङ्कल्पविकल्पकल्पितामाकृततेजोमयदेहगता [इह] उच्यन्ते । (2) यद्वा त्रैलोक्यशरीरत्वादस्य सुरनरतिर्यग्गताः पादादयः तदीया इत्युपचर्यन्ते । (3) यद्वा पादादिकार्यगमनदर्शनवचनादिलक्ष-णार्थः । तेन सहस्रपात्त्वेन सर्वगतत्वं, सहस्राक्षत्वेन सर्वदर्शित्वं, सहस्र-शीर्षत्वेन सर्वाधारत्वञ्च, सर्वलोकाभिषिक्तत्वञ्च सर्वसुखप्रदानत्वम् (ञ्च!) सर्वरक्षणप्रतिश्रवणत्वञ्च सर्वरक्षापेक्षाश्रवणत्वञ्च, (!) केशादिपादान्तो-(त्तमु!)क्तत्वात् सर्वावयवत्वेऽपि (वेष्वपि!) सहस्रत्वं चोक्तम् । अक्षोप-लक्षणेन पञ्चेन्द्रियत्वो(त्वमु)क्तं सिद्धम् । तथा च श्रुति–'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति । 'गामाविश्य च भूतानि धारयाम्यहमोजसा' इत्यादि च । यद्वा सर्वाधिकत्वं सर्वज्ञत्वं सर्वशक्तित्वं च सिद्धम् ।

(1) [1]पुराणत्वात् पुरुषः । तथा च श्रूयते—'अन्तरतः कूर्मं भूतं सर्पन्तं तमब्रवीत् । मम वै त्वङ्मांसा समभूत् । नेत्यब्रवीत्-[पुनश्च

---

1 विशेषणपदानि त्रीणि प्रथमं बहुधा व्याख्याय पुरुषपदं व्याख्याति पुराणेति ।

भगवान् कूर्मरूप प्रत्याह ।] — पूर्वमेवाहमिहासमिति । तत् पुरुषस्य पुरुषत्वम्। सहस्रशीर्षा पुरुष । सहस्राक्ष सहस्रपाद् भूत्वोदतिष्ठत्' इति।
(2) यद्वा पूर्णत्वात् पुरुष । तेनेद पूर्ण पुरुषेण सर्वम्' इति श्रुते ।
(3) यद्वा शरीराख्ये पुरि शयनात् पुरुषः । शकारस्य षकारादेश ।
श्रीविष्णुस्मृतौ—'पुरमाक्रम्य सकल शेते यस्मान्महाप्रभु ।
तस्मात् पुरुष इत्येव प्रोच्यते तत्त्वचिन्तकै ॥' इति।

(4) यद्वा पुरुशब्दो बहुपर । वन षण सभक्तौ । बहूना बहुभिर्वा भजनात् पुरुषः । (5) यद्वा— षण दाने । बहुदानात् पुरुषः । [1]एतद्गुणोपेतो भगवान् वासुदेव नान्य इत्यर्थ ।

पाद्मे पुराणे— भगवानिति शब्दोऽय तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥
सर्वलोकप्रतीत्या च पुरुष प्रोच्यते हरि ।
त विना पुण्डरीकाक्ष नान्य पुरुषशब्दभाक् ॥
ब्रह्माद्या देवता सर्वा यक्षतुम्बुरुकिन्नरा ।
ते सर्वे पुरुषाशत्वादुच्यन्ते पुरुषा इति ॥' इति ।

श्रीमदुत्तररामायणे अगस्त्यवचनम्—
असौ रामो महाबाहुरतिमानुषचेष्टया ।
तेजोमहत्तया चाऽपि सस्मारयति पूरुषम् ॥ इति ।

श्रीहरिवशे— 'गोवर्धनादिधरणात् नाथ ! न दसुतोऽपि सन् ।

---

1 एतद्गुणेति । पुराणत्व-पूर्णत्व-पुरशयन-बहुसेवितत्व-बहुप्रदायित्वरूपपुरुषशब्दार्थपञ्चक तदन्यपूर्वोक्तसर्वत्वर्थ ।

पुरुषस्यांशसंभूतं त्वां वयं निरणैष्म हि ॥' इति ।

स्कन्दपुराणे— 'यथा भास्करशब्दोऽयमादित्ये प्रतितिष्ठति ।
यथा चाग्नौ बृहद्भानुर्यथा वायौ सदागतिः ॥
यथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते ।
तथा शङ्करशब्दोऽयं महादेवे व्यवस्थितः ॥' इति ।

श्रीविष्णुपुराणे— 'देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः ।
श्रीनाम्नी लक्ष्मीर्मैत्रेय ! नानयोर्विद्यते परम् ॥' इति ।

श्रीनारसिंहे— स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः ।
प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्यात् वैभवादपि ॥ इति ।

वैष्णवे पुराणे— 'स एव वासुदेवोऽयं साक्षात् पुरुष उच्यते ।
स्त्रीप्रायमितरत् सर्वं जगद्ब्रह्मपुरस्सरम् ॥' इति ।

अर्वाचीनाः कवयोऽपि—

'संहृत्य लोकान् पुरुषोऽधिशेते', 'श्रीवत्सलक्ष्मा पुरुषश्च साक्षात्।' 'तमसः परमं तमव्ययं पुरुषं योगसमाधिना रघुः ।', 'हरिर्यथैकः पुरुषोत्तमस्तनः ।' इत्यादिभिर्वचनैः पुरुषो वासुदेव इति सिद्धम् ॥

**स भूमिं विश्वतो वृत्वा**— एवम्भूतः सः भूमिं भूम्यादिलोकजातं विश्वतः सर्वतो वृत्वा व्याप्य, यद्वा भूमिं जगत्कारणं प्रकृतिं विश्वतः कार्यवर्गैः सह वृत्वा अत्यतिष्ठत् दशाङ्गुलम् । यथाऽऽह, 'अणोरणीयान् महतो महीयानिति–'अणुत्वेन महत्त्वेन द्विधा

तिष्ठति केशव । तत्र पौरुषसूक्तेन महत्त्वमुपवर्णितम् ॥' इति । तस्मात् ■ भूतानि व्याप्य ततोऽधिको भवतीत्यर्थः । एतदुक्तं भवति—योऽयं सहस्रशीर्षा पुरुषः, स पुरुषो भूम्यादिलोकजातं व्याप्य तस्माल्लोकजातात् दशाङ्गुलमत्यतिष्ठत् ।

अथ दशाङ्गुलशब्दस्यार्थ उच्यते—

अत्र दशाङ्गुलशब्देन न दशाङ्गुलवचनम्, अपरिच्छिन्नस्य पुरुषस्य [1]परिच्छेदप्रसङ्गात् । तर्हि कोऽर्थः ? उच्यते—

(१) (?) दशदशानन्त्यन्तयोरित्येतस्मिन्नचूप्रत्ययः [2]अतिकोटि योजनयोरिति एतस्मिन्नौणादिकः उलचूप्रत्ययः । तस्मादनन्तयोजनमिदमतीत्यातिष्ठदित्युक्तं भवति ।

पाद्मपुराणे भुवनकोशाध्याये—

'भूमेश्च ब्रह्मकोशस्याप्यन्तरालं कियत् ? वद ।
योजनानामनन्तत्वात् दशाङ्गुलमिदं विदुः ॥' इति ।

सात्वतसंहितायां पुरुषसूक्तार्थे—

सहस्रशब्दोऽनन्तवचनः । पुरुषशब्दो वासुदेवपरः । भूमिशब्देन भूम्यादयो लोका उच्यन्ते । दशाङ्गुलशब्दोऽनन्तयोजनमाहेति ।

---

1 परिच्छेदेति। लोकजातमतिक्रम्य अङ्गुलिदशकमितं यथा, तथा तिष्ठतीत्युक्तौ परिछिन्नत्वं स्यादित्यर्थः ।

2 वाक्यमशुद्धम् । एतदर्थस्तु—नात्र तत्पुरुषस्याङ्गुलेरिति अच्प्रत्ययः । किं तु अनन्तयोजनेत्यर्थे दशाङ्गशब्दात् औणादिक उलच्प्रत्ययः । लोकजातमतिक्रम्यानन्तयोजनास्तिष्ठतीत्यर्थ इति ।

(२) यद्वा अङ्गुल(लि ?)शब्दो गुणपर । दशगुणवस्त्वन्तरभूतानि अतीत्यातिष्ठत् । किं तदिति । [दशोत्तरा आप ?] [1]दशोत्तरो वह्नि, वह्नेर्दशोत्तरो वायु, वायोर्दशोत्तर व्योम, व्योम्नो दशोत्तरोऽहङ्कार, अहङ्काराद् दशोत्तरो महान्, महतो दशोत्तरमव्यक्तम् । समस्तमिह वस्त्वतीत्यातिष्ठदित्यर्थ ।

केचिदेव व्याचक्षते—दशाङ्गुलशब्दो हृदयाकाशवाचक । भूम्यादिलोकान् व्याप्य हृदयाकाशमत्यतिष्ठत् । दशाङ्गुळपरिमाण हृदयाकाश अणोरणीयआकारेणान्तरात्मतया अत्यतिष्ठत् । धकारस्य स्थाने तकारश्छान्दस इति अध्यर्थोऽयमतिशब्द इति—तन्न युक्तम् । श्रूयमाणस्यातिशब्दस्य मुख्यार्थसम्भवे सति अध्यर्थवचनस्यायुक्तत्वात् । विश्वत इति हृदयस्यापि कबलीकृतत्वाच्च । 'अणुत्वेन महत्त्वेन' इत्यादिना, 'दहरादिमवाक्येन तस्याणुत्व प्रदर्शितम्' इति योगवासिष्ठे स्पष्टवचनाच्च । दहरशब्द सूक्ष्मपर्याय ।

नन्वेव हि पूर्वमुक्तम्—अय पुरुष इति, सर्वदेशसर्वकाला परिच्छिन्नविध वेष विहाय सर्वेषा दर्शनस्तुतिसमाराधनार्थं परिच्छिन्न कञ्चन वेषमादत्त इति । प्रत्युताऽन्यथा वदति, अस्य परिच्छिन्नोऽप्यय वेष प्राप्त पूर्ववदपरिच्छिन्न इति। कथ परिच्छिन्नत्वेन स्तूयत इति ॥

अस्य चोद्यस्य परिहार पाद्मेऽभिहित । स उच्यते—'आदत्ते यादृश रूप जगत् त्रातु पर पुमान् । स तादृशेन रूपेण दुर्ज्ञानो जायते हरि ॥ तथाप्यमूर्त पुरुष स्तोतयोग्यो न जायते । त ...

[1] दशोत्तराण्यावरणानि यानि चेति स्तोत्ररत्ने श्रीभगवद्यामुनपादा ।

... ... ... ... नारायणात् निर्वाणाय च कल्पते ॥'

श्रीमात्स्ये अगस्त्यवचनम् —

'तस्यावनिगतस्येह प्रत्यक्षस्यापि ते वपुः ।
न ज्ञायते च तत्त्वेन परं रूपं कुतस्तव ॥
मीनात्मा यादृशोऽसि त्वं तादृशस्त्वमसि प्रभो ।
वयं त्वामीदृश इति वेदितुं नोत्सहामहे ॥'

श्रीमदुत्तररामायणे अगस्त्यवचनम् —

'शरीरे तव पश्यामि जगत् सर्वं रघूद्वह ।
तेजसा च सुदुर्दर्शो मध्याह्न इव भास्कर ' इति ॥

[1]अस्य [स्तोत्रयोग्यत्वाय मूर्तिः । स्वकार्याय न [?]] परिग्रहो न कार्य इत्यर्थः । अशरीरोऽपि सन् सर्वं करोत्येव । इन्द्रियपरिग्रहो न कार्य इत्यर्थः । अनिन्द्रियोऽपि सन् तत्तदिन्द्रियकार्यं करोत्येव । 'अपाणिपादो जवनो गृहीता', 'अन्धो मणिमविन्दत्, तमनङ्गुलिरावयत् । अग्रीव प्रत्यमुञ्चत्' इत्यादि ।

एवं देशतो व्याप्तिमुक्त्वा कालतो व्याप्तिमैश्वर्यं चैवमाह पुरुष एवेदं सर्वमिति । यदिदं वर्तमानं कार्यजातम्, तत् सर्वं पुरुष एव । तदुपादानत्वात् सर्वस्य । न हि कार्यमुपादानेन विनाऽस्ति । **यद्भूतं** अतीतं वस्तु, तदपि पुरुष एव । **यच्च भव्यम्** = भविष्यच्च पुरुष एव ।

1. मूर्तिः स्तुतये भवतीत्युक्तम् । मूर्तिपरिग्रहो न स्वकार्यार्थमित्युच्यतेऽत्र ।

उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

प्रपञ्चपुरुषयोरीश्वरेशित यभावात् समानाधिकरण्यपदेश, 'ग्रामोऽस्म देवदत्त ' इतिवत्। कार्यकारणभावाद्वा, 'पानीय प्राणिना प्राणा ' इतिवत्। एवमेव श्रुतिस्मृतीतिहासपुराणेषु सामानाधिकरण्यवादा द्रष्टव्या । 'वासुदेव सर्वम्,' 'सर्वं खल्विद ब्रह्म तज्जलानिति शान्त उपासीत।', इति,

'ज्योतींषि शुक्राणि च यानि लोके त्रयो लोका लोकपालास्त्रयी च।
त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव ॥
सर्वे देवा सर्ववेदा सशास्त्रा सर्वे यज्ञाश्च कृष्ण ।
'ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ॥
नद्य समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥' इति ।

महाभारते— य एष देवकीपुत्र पुरस्तादवतिष्ठते ।
स एव पुरुषो भूत भव्य चापि तथा भवत् ॥'

एवमस्य कालतो व्याप्तिमुक्त्वा अयमेव सृष्टिकार्यजात-चेतन वर्गस्य (?) सर्वदेशकालमोक्षपद इत्याह—**उतामृतत्वस्येशान** इति । **उत** किञ्च अयमेव पुरुष **अमृतत्वस्य** मोक्षस्य **ईशानः** । सायु ज्यादिचतुर्विधमोक्षप्रदो भवति । 'मोक्षे नित्येऽमृते देवे कीर्तित त्वमृत बुधै ' इति नैघण्टुकोक्तत्वात् अमृतशब्दो मोक्षपर्याय । मोक्षस्येशानो भवति । अन्नेन यदतिरोहति, तस्य शरीरवर्तिनो जीवजातस्य मोक्ष प्रति भगवानेवेष्ट यत् कार्यजातमन्नेन अदनीयेन भोग्यद्रव्येण स्वकारणमतीत्य रोहति, 'अन्नाद्भूतानि जायन्ते' इति श्रुति । अहरहरशितेनान्नेन पूर्वपूर्वबाल्यकौमाराद्यवस्था अतीत्य यत् जीवजात **रोहति** वर्धते, तस्य

**एतावानस्य महिमा अतो ज्यायाँश्च पूरुषः।**

मोक्षप्रदाने विष्णुरीशानो भवतीत्यर्थ । **मोक्षधर्मे,** 'अन्नाज्जातस्य सर्वस्य मनुष्यादेरकारणात् । निर्वाणदायी भवति कृपया पुरुषोत्तम ' इति । (२)

उक्तं सर्वेश्वर [महिमान] मुपसंहरति **एतावानस्य महिमा।** एतत्परिमाणम......णोऽस्य **महिमा** विभूतिमात्रम् । **अतो ज्यायांश्च पूरुषः।** अतः ईदृशात् महिम्न **ज्यायान्** प्रशस्य [स्यतर ?] श्रेष्ठ । यत एव पुरुष सकलानपि लोकान् व्याप्य तिष्ठति यतश्च समस्तवस्तुजातमसौ सृजति, यतश्च संसारिणो मोक्षस्यायमीष्टे, अत एतावानस्य महिमा ।

**शतपथब्राह्मणे** अध्यात्मखण्डे प्रतिपादितम् — "यदाऽय **नारायणाख्य** पुरुषो महान् भवति, तदानीमेवाणुर्भवति । यदाऽय व्याप्तो भवति, तदैव प्रादेशिको भवति । यदैव भूमा भवति, तदैव परमव्योम्नि भवति । यदा एक एव भवति, तदा अनेक । यदाऽय प्राकृतो भवति, तदैवाप्राकृतो भवति । यदा विषयवशो भवति, तदै वोपरतो भवति । यदा नरको भवति, तदानीमेव स्वर्गो भवति । यदा स्त्री भवति, तदैव पुरुषो भवति । यदा मनुष्यो भवति, तदा देवो भवति । यदा सर्वं भवति, तदा शून्यो भवति । यदा प्रपञ्चो भवति, तदा प्रपञ्चाद्भिन्नो भवति । यदा बद्धो भवति, तदैव मुक्तो भवति । यदा शुक्लो भवति, तदा कृष्णो भवति । यदा शरीरी भवति, तदा अशरीरी भवति । यस्मात् यानि यानि विरुद्धस्वभावानि, तानि सर्वाणि तदानीमेवास्मिन् लीनानि भवन्ति, तस्मादयमीश इति दुर्ज्ञान , दुर्वच , दुर्ध्यान । तस्मात् ज्येष्ठ । वाङ्मनसोरगोचर " इति ।

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

**हरिवंशे पुरुषसूक्तप्रकरणे नारदस्तुतौ,** 'देशत कालतो वाऽपि मोक्षदत्वाच्च (?) वेधस । हरेर्विभूतिमात्रं तु केवलं प्रतिभावितम् ॥ अतो महिम्न स्वरूपांशात् ज्यायानेव परः पुमान् । ज्यायस्त्वं तस्य तत् सर्वं सुदुर्ज्ञानतरं भवेदिति ॥ ब्राह्मणेभ्योऽखिलेभ्यश्च भूतजातेभ्य एव च । ब्रह्मादिभूतसंघेभ्यो ज्यायानेव पर पुमान् ॥ ओजसो रूपतो वापि यशसो वीर्यतोऽपि च । विभुत्वातिशयाद्वापि ज्यायानेव जनार्दन ॥ इति ।

**महाभारते —** 'एकतो वा जगत् कृत्स्नमेकतो वा जनार्दन ।
सारतो जगत कृत्स्न दतिरिक्तो जनार्दन ॥' इति ।

**श्रीभगवद्गीतायाम् —** "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षर सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम ॥" इति ।

**श्रीनारसिंहे—** "ब्रह्मादिस्तम्बपर्यन्तं जगत् स्थावरजङ्गमम् ।
सर्वमेवास्य महिमा स च ज्यायानतो हरि ॥" इति ।

[1]अथवा—अस्य परिदृश्यमानस्य चराचरात्मकस्य प्रपञ्चस्य महिमा एतावान् परिच्छिन्न । अतः अस्मात् प्रपञ्चात् पुरुषो ज्यायान् अपरिच्छिन्नप्रभाव ।

अस्य ज्यायस्त्वमेव प्रपञ्चयति **पादोऽस्य विश्वा भूतानि ।** अस्य दुर्ज्ञानस्य पुरुषस्य **विश्वा भूतानि** चराचरात्मकानि पादः अंश

1 अस्येति मौल पद परमात्मपरतया व्याख्यातम्, प्रपञ्चपरतया व्याख्याति अथवेति ।

कलामात्रमित्यर्थः । सृष्ट्यादिशक्तेरेकदेशः । तदीयशक्तिलेशविजृम्भित मिद जगद् गीयते,–'विष्टभ्याहमिद कृत्स्नमेकांशेन स्थितो जगत्' इति । श्रीविष्णुपुराणे— यस्यायुतायुतांशे विश्वशक्तिरियं स्थिता' इति । अत्रैव गोपीनां वचने— 'यस्याखिल महीव्योमजलाग्निपवनात्मकम्।

ब्रह्माण्डमल्पकांशांशे तोऽयामत्वा कथ वयम् ॥'' इति ।

श्रीनारसिंहे— 'यदंशांशतदंशांशलेशलवलेशत ।

उत्पन्नश्च प्रलीनश्च जगत् सर्वे चराचरम् ॥' इति ।

त्रिपादस्यामृत दिवि । त्रय पादा यस्य, तत् त्रिपा दुक्तम् । त्रिशब्दो चतुर्थपर । अस्य निरतिशयज्ञानानन्दवैराग्यैश्वर्यादिभि रनेकै सुगुणैरुपेतस्य रूपममृत दिवि । अमृतम् अमरणधर्मकमित्यर्थ । दिवि परमे स्थाने । यत् परमपदवाच्य सूरय सदा पश्यन्ति । "द्युशब्द परमे व्योम्नि स्वर्गे वियति कथ्यते ।'' इति

वैकुण्ठसंहितायाम् —''अनन्तायामविस्तारो वैकुण्ठ समकीर्तित ।

तस्मादस्य त्रिपादांशो वैकुण्ठो भासतेतराम् ॥'' इति ।

एव सात्त्वतसंहितायां वासुदेवस्य चतुर्व्यूहाध्याये, 'अत्र पाद शब्द चतुर्थांश (शवचन ?) । त्रिपाच्छब्द त्रिपादवचन' ।

पुरुषसंहितायां वैकुण्ठसंहितायाञ्च,—

'सदाङ्घ्रिपुरुषो विष्णु सर्वव्यापी सनातन ।
शरीरात् स्वाज्जगत् त्रातु सङ्कर्षणमभावयत् ॥
स च प्रद्युम्नसज्ञस्तन् अनिरुद्धमभावयत् ।
तस्मात् ब्रह्मा समुत्पन्नो जगत् स्रष्टु चराचरम् ॥

त्रिपादूर्ध्वं उदैत् पुरुषः पादोऽस्येहाभवात् पुनः।

> एवं चतुर्धा सम्भूय स्वात्मानं पुरुषोत्तमः ।
> अण्डे ह्यप्राकृते नित्यं त्रिपादेन विराजते ॥
> इतरेण च पादेन प्राकृतेऽण्डे विराजते ।
> जगत्सृष्ट्यादिकार्याणि कर्तुकामः सलीलया ॥' इति । (३)

उक्तमेवार्थान्तरविवक्षयाऽनुवदति–**त्रिपादूर्ध्व उदैत्। उदैत्** = उद्गतवान्। यद्वा स एष **त्रिपादि**ति त्रिपादः पुरुष **उर्ध्वं** प्रकृतिमण्डलादूर्ध्वम् **उदैत्** उदगच्छत् ।

त दुर्शन पुरुषं विहाय तस्य चतुर्थांशमनिरुद्धाख्यं नारायणमदूरविप्रकर्षेण स्तोतुमारभन्ते । **पादोऽस्येहाभवात् पुनः** । अस्य **पादः** एकदेशः **इह अभवत् पुनः** ससारचक्रे भोग्यभोगायतनादिरूपेण पुनरभवत् =पुनः पुनः प्रवर्तते। अभवादित्याघ्वर्ययवपाठे दीर्घ छान्दसः।

यद्वा भगवद्व्यूहाभिप्राय **पादोस्य विश्वा भूतानी**त्यादि । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाकारो भगवाश्चतुर्व्यूहो भवति। अत्र भगवत स्तुरीयो भागः अनिरुद्धाभिधानः विश्वानि भूतान्यधिष्ठाय सृष्ट्यादीनि करोति । पूर्ववत् कार्यकारणयोरभेदवादः । इतरैस्त्रिभिर्भागैर्वासुदेवसङ्कर्षणप्रद्युम्नाख्यैरपेनममृतममविनाशि परमसुखरूप **दिवि** नाकपृष्ठे वसति। उक्तमेव व्यनक्ति **त्रिपा**दिति। वासुदेवादिरूपैस्त्रिपात् पुरुष **ऊर्ध्वः** वाङ्मनसयोरगोचरस्सन् **उदैत्** प्रकृतिपाकुनमयात् सुदूरमुत्क्रान्तवान् । **इह** ससारमण्डले अस्य **पादः** अनिरुद्धाभिधानः भगवानभवत् । पुनः पुनः सृष्ट्यादौ प्रवर्तत इति । तथा च पुराणे तत्त्वाध्याये—

ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥ ४ ॥

"सर्वस्याथ जगन्नाथ, सर्वात्मा भूतभावन ।
महतः प्रळयस्यान्ते जगत् स्रष्टुं समुद्यत ॥
परमव्योमनिलयो वासुदेव सनातन ।
शरीरात् स्वाज्जगत् त्रातुं सङ्कर्षणमभावयत् ॥
स चाण्डजातमसृजन् महाभूतानि पञ्च च ।
दशोत्तराणि सर्वाणि परस्तात् प्रकृतेर्व्यधात् ॥
तत्रस्थानाञ्च भूतानामन्योन्यानुभवाय च ।
प्रद्युम्न भावयामास सदा कामरसप्रदम् ॥
एवमप्राकृतान्येव बाह्यान्यण्डानि केशव ।
सृष्ट्वा प्राकृतं चाण्डं स्रष्टुं वभे समानसम् ॥
ततः स वासुदेवोऽयं प्रद्युम्नादुदपादयत् ।
सर्वस्य जगत. कोशमनिरुद्धाह्वये हरिम् ॥
स चानिरुद्धो भगवानादौ जलमभावयत् ।
जले तस्मिन् प्रचिक्षेप निजवीर्यं जगन्मयम् ॥
तद् हिरण्याण्डमभवत् अण्डात् ब्रह्मा व्यजायत ।
स भूताना च सर्वेषामग्रे जातः पितामह ॥
जगन्निर्मातुमुद्युक्तः समन्ताद्विक्रमे...... ।
ततः संवद्धभानोऽयं सृष्टिश्चात्मना व्यधात् ॥" इत्यादि ।

संप्रति विवक्षितां प्रपञ्चसृष्टिं वक्तुमुपक्रमते ततो विष्वङ् व्यक्रामदिति । समन्तादर्थे विष्वङ् निपातिन । ततः पश्चात् पुरुषः

तस्माद् विराडजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥ ५ ॥

---

ततः महत्त्वबलवशात् पश्चात् तेन पादनारायणेन व्यक्रामत् उद्यममकरोत् । किमुद्दिश्य । साशनानशने अभि । अशनेन सह वर्तत इति साशनं जङ्गमवस्तु । अशनमस्य नास्तीत्यनशनं स्थावरं वस्तु । ते उभे प्रति, विष्वक् सर्वतः चराचरात्मकं समस्तं जगत् प्रति मानससंकल्परूपं सृष्टिव्यापारमकरोदित्यर्थः । (४)

तस्मात् विराडजायत । तस्मादेवं व्यापारवतः पुरुषात् विराड जायत । विराट्च्छब्देन महदादिरूपेण विविधं राजतीति हिरण्मयमण्डमुच्यते । विराजो अधि पूरुषः । विराजोऽनन्तरं पुरुषश्चतुर्मुखाख्योऽध्यजायत । तथाऽऽह मनुः —

'ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः ॥
सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥' इति ।

स जातो अत्यरिच्यत । तस्मात् ब्रह्मा अतिरिक्तोऽभवत् । पश्चाद् भूमिमथो पुरः । अथो शब्द....र्थः । विभक्तिव्यत्ययेन भूमेः पश्चात् पुरस्ताच्चोर्ध्वं चात्यन्तं प्रवृद्धो व्याप्तो बभूवेत्यर्थः । सर्वत्राति-वृद्धकायोऽभवत् ।

शाम्भव्यपुराणे — पुरुषसूक्तसंहितायां—'आदिश्वतस्रणा...

दित्यादि । स तस्मात् व्यापारानन्तरम् । अथ पादनाराय णात् मूल प्रकृतिरजायत । सा प्रकृति पादनारायणशासनात् महद हङ्कारादीन् पदार्थानजनयत् । एव सूक्ष्माया सृष्टौ, कृपया ॥ पाद नारायण स्थूलसृष्टयर्थं चतुर्मुखमभिदध्यौ । तद्ध्यानात् दनन्तरमथ विराज पश्चात् पुरुषश्चतुर्मुखाख्य अजायत । पश्चात् पुरतश्चाति रिच्यते । अतिरेको वृद्धि । सर्वकार्यक्षमोऽतिवृद्धकायोऽभवत् । वृद्ध कायस्सन् तूष्णीमास्त ... अनिरुद्धनारायणोऽप्राक्षीत् । ब्रह्मन् ! किं तूष्णीं भवसीति । अज्ञानादिति होवाच । ब्रह्मन् ! तवेन्द्रियाणि देवान् ऋत्विज कृत्वा त्वदीय च कलेवर हवि कृत्वा मा हविर्भुज ध्यात्वा स्वय्यग्नौ निवेदय । मदङ्गस्पर्शमात्रेण जगत्कोशभूत त्वत्कायो वृद्धिष्यते । तस्मादुद्भूतानि प्राणिजातानि यथापूर्वं निर्मान् त्वष्टा भवष्यसि । य एव सृष्टियज्ञ जानाति, स जन्मनीह मुक्तो भवतीति ।

ईदृशस्य ब्राह्मणस्योपरि वतरति ।

श्रीवराहपुराणे— "सिसृक्षोरनिरुद्धारूयादण्ड प्रथममुद्भभौ ।

अण्डाद्ब्रह्माऽभ्यजायत निर्मातु सकल जगत् ॥

स जातमात्रो भगवानवर्धत समन्तत ।

त प्रवृद्धमहाकाय ब्रह्माण रचिताञ्जलिम् ॥

जगत्सृष्टिमजानन्तमनिरुद्धो हरिर्जगौ ।

त्वमिन्द्रियैर्देवसङ्घै कुरु यज्ञ समाहित ॥

त्वच्छरीर हविर्ध्यात्वा मा ध्यात्वा च हविर्भुजम् ।

तस्माद् यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।
पशूँस्ताँश्चक्रे वायव्यान् आरण्यान्, ग्राम्याश्च ये ॥ ९ ॥

तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे।
छन्दाँसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ १० ॥

---

ब्रह्मणे त्वा महसे । महते ब्रह्मणे त्वाम् [समर्पयामि ?] । ओमित्यात्मानमुपहार आत्मामौ युञ्जीत । स एव जीवात्मपरमात्मयोग इति । प्रकृतमनुसरामः ॥ (८)

तस्माद् यज्ञात् सर्वहुत इति । सर्वं जुहोति [1]त्यजतीति अङ्गयागो न भवतीति गार्ग्यायणाः । सर्वहुत् पशुः[2] सर्वहुतो यज्ञाख्यात् ब्रह्मणः पृषदाज्यं संभृतमभूत्। पृषदाज्यं याज्ञिका दधिमिश्राज्यं प्रचक्षते । अत्र तु सृज्यमानिजननहेतुभूतं वीर्यं पृषदाज्यं भवतीति प्रोच्यते। तद्यथा चित्ररूपं भवति, एवमेव पशुनी(पशोर्नी?)लादि विचित्रभूतं वस्तु जातं भूतमित्यर्थः। पशूँस्ताँश्चक्रे वायव्यान् । वायुशब्देन वायुमताऽन्तरिक्षेण गतिर्लक्ष्यते। वायव्यान् पशून् पुरुषश्चक्रे ससर्ज। आरण्यान् व्याघ्रादीन्। आरण्यशब्दः पशुविशेषणम्; ग्राम्यशब्दश्च । ग्राम्याश्च ये पशवः मार्जारादयः, वराहादयो वा, तान् चक्रे; वायव्या ये आरण्याः, तानपि चक्रे । (९)

तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे । ऋग्वेदः सामवेदश्च प्रादुरभूताम् । छन्दाँसि जज्ञिरे तस्मात् । गायत्र्यादीनि अजायन्त । यजुस्तस्मादजायत । यजुः यजुर्वेदश्च ।

---

1 पशुयागे हृदयादिपश्वङ्गानामवदानेन यागः पृथक् भवति । तथाऽत्र न भवतीत्यर्थः । 2 पशुरिति । तथाचात्र यज्ञशब्दे यज्ञसाधनपरम्।

तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥ ११ ॥
यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य को बाहू काबूरू पादावुच्येते ॥ १२ ॥
ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।

---

**तस्मादश्वा अजायन्त** । यज्ञसंबन्धिन अश्वा । **ये के चोभयादतः, गावो ह जज्ञिरे तस्मात्** । अधरोत्तरभागयोरुभयोर्दन्ता येषाम्, ते रासभादय । ते च गावश्च जज्ञिरे । **तस्मात् जाता अजावयः** । अजाश्चावयश्च जज्ञिरे । क्वचित् विशब्दो बहुवचनान्त इति कृत्वा [अजा इति पृथक्कृत्य मृगा पक्षिणश्च जाता इति व्याकुर्वते ?] ॥

पुरुषस्य मुखाद्यव[1]यवप्रकारान् पृच्छति **यत् पुरुषं व्यदधुः** । यदा पुरुषसंज्ञ पशुत्वेन देवा व्यदधु, तदा **कतिधा व्यकल्पयन्** । किंप्रकार मुखाद्यवयव कल्पितवन्त इत्यर्थ । प्रश्नार्थं व्यनक्ति **मुखं किमस्य**— मुखात् किमिति वक्तव्ये मुखमित्यादिप्रथमानिर्देश कार्यकारणयोरभेदविवक्षया । **काबूरू पादावुच्येते** । अस्य पुरुषस्य किंप्रकार मुखम् । उत्पाद्यमानेषु ब्राह्मणादिषु वर्णेषु अस्य मुख किमासीत् । बाहू च किंप्रकारौ । काबूरू आस्ताम् । कौ च पादावुच्येते । (१२)

परिहरति **ब्राह्मणोऽस्य मुखमासीत्** । ब्राह्मणजातिरजायत । अनेन ब्राह्मणजातिकारणभावो मुखस्य प्रकार उक्त । एवमुत्तरत्रापि द्रष्टव्यम् । **बाहू राजन्यः कृतः** । बाहुभ्या क्षत्रियजातिरकारीत्यर्थ ।

**ऊरू तदस्य यद् वैश्यः** । यत्[2] वैश्यनामा जातिर्भवति, तदस्य

---

1 अवयवप्रकारान्–अवयवकार्यविशेषान्, अवयवगतान् कारणत्वप्रकारान् वा । 2 यत्वद विलक्षणगुणवैषम्ययुक्तसंस्थानपरम् ।

ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ॥ १३ ॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद् वायुरजायत ॥ १४ ॥
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन् ॥ १५ ॥

---

पुरुषस्य ऊरुभ्यामजायतेत्यर्थः। यच्छब्दो. सामान्यवचनत्वात् नपुंसकनिर्देशः। मुखादीनां ब्राह्मणादिभिरभेदवादः कार्यकारणभावकृत । ब्राह्मणं प्रकृत्य मनुः — 'तं स्वयंभूः स्वकादास्यात् तपस्तप्त्वाऽऽदितोऽसृजत्' इति ।

तथा, 'लोकाना तु विवृद्ध्यर्थं मुखबाहूरुपादत. ।
ब्राह्मण क्षत्रियं वैश्य शूद्रं च निरवर्तयत् ॥' इति ।

पद्भ्यां शूद्रो अजायत ।(?)सकारभावश्छान्दसः। निसर्गसिद्ध शूद्रवर्ण.।

अथ यष्टव्याना देवताना सृष्टिमाह—चन्द्रमा मनसो जातः । चक्षोस्सूर्यो अजायत । चक्षुर्भ्यामिति विभक्तिव्यत्ययं करोति । मुखादिन्द्रश्चाग्निश्च। अजायेतामिति संबन्ध । प्राणाद्वायुरजायत । सिद्धोऽर्थः।

[1]अनुष्ठितयज्ञाना (?) ब्राह्मणादीनामुपभोगाय लोकानां सृष्टिमाह नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमि रिति । समवर्तत इत्यनुषङ्ग । दिशः श्रोत्रात् समवर्तन्त । तथा लोकाँ अकल्पयन् । तथा, यथा अतीते कल्पे देवा(?) अकल्पयन् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।', 'नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥', 'दिवं च पृथिवीं चान्तरिक्षमथो सुव ' इति ।

---

1 प्राक्तनलोकस्य कर्माधीनत्वज्ञापनाय अनुष्ठितयज्ञानामिति ।

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते ॥१६॥
धाता पुरस्ताद् यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।

---

एवं सृष्टियज्ञं समाप्य पुनरपि त्रिपादं महान्तं पुरुषं कः साक्षात् जानातीति प्रश्नमुखेन स्तोतुमारभते । ब्रह्मादिस्तम्बपर्यन्तस्य जगतः परमकारणं पुरुषं प्रतिपुरुषसूक्तसूक्तरूपं को वेति ? तत्राह **वेदाहमेत-मिति** । सहस्रशीर्षेमि(र्षा इ?)त्युक्तमेतं महान्तं पुरुषमहं वेद जानामि । नान्यः कश्चित् वेद वेत्तीति वेदानामात्मनो वचनम्, अस्य सूक्तस्य ऋषेर्नारायणस्य वाक्यं वा । किंस्वरूपम् ? आदित्यवर्णम् । 'आदित्यवर्णं पुरुषं वासुदेवं विचिन्तयेत्' इति **मोक्षधर्मे** । क्व अवस्थितं वेत्ति?(त्सि?) । **तमसस्तु पारे** । तमश्शब्देन प्रकृतिरुच्यते । प्रकृतेः परस्तात् स्थितं वेत्ति(द्मि?)। तमसः परमो धातेत्यस्ति । किंव्यापारम् ? **महान् पुरुषः** । [कदा?] । **सर्वाणि रूपाणि विचित्य धीरः** । सृष्टानां चराचरात्मकानि रूपाणि **विचित्य** समुत्पाद्य, अथवा वैविध्येन च बुध्वा तेषां नामानि च कृत्वा तैः तान्यभिवदन् **धीरः** धिया रममाणः परमविद्वान् **अभिवदन्** तैस्तैर्नामभिराभिमुख्येन वदन् यदा आस्ते, तदा तं पुरुषं वेत्ति(द्मि?) । इतश्चाह वेद्मि । कोऽसावेवंविधः पुरुषः ? क्वायमास्ते? विशदं ब्रूहि [इति?] चेत्, अहमप्यविप्रकर्षेण जानामि, न वेद्मीत्याह **धाता पुरस्ताद्यमुदा जहारेति** । पूर्वस्मिन् काले चतुर्मुखो यम् आत्मनः कारणभूतमुदा-जहार='तमब्रवीत् त्वं पूर्वं समभूः । त्वमिदं पूर्वं कुरुष्व' इत्यादिपूदा-हृतवान् । तथा **शक्रः प्रविद्वान्** प्रकृष्टज्ञानः शक्रः [विप्रश्चत्ति वासुदेवे

अधिगतपुरुषोत्तमतत्त्वज्ञान इन्द्रो य परमकारणत्वेनोदाहृतवान् इन्द्र-प्रतर्दनसंवादे, 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' इत्यादौ श्रुतौ। तथा प्रदिशश्चतस्र॰। प्रदिशश्च यमुदाहुः। दिक् छब्देन दिग्वर्तिनो ज्ञानवन्त उच्यन्ते। दिगधीना पुरुषा उपलक्ष्यन्ते। तथा श्रीमद्रामायणे विश्वामित्रवचनम्,

'अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्।
वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिता॥' इति।

तत्रैव रावणवधानन्तरं रामं प्रति ब्रह्मणो वाक्यम्। यथाह—

'भवान्नारायणो देवः श्रीमान् चक्रायुधो विभुः। एकशृङ्गवराहस्त्वं भूतभव्यसपत्नजित्। अक्षरं ब्रह्म पारं त्वं मध्ये चान्ते च राघव॥

लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः।
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः॥' इति।

अत्रैव लक्ष्मणं प्रति दशरथवाक्यम्, यथा—

'एतत्तदुक्तमव्यक्तमक्षरं ब्रह्म निर्मितम्।
वेदानां हृदयं सौम्य गुह्यं रामः परंतप॥' इति।

अत्रैव मन्दोदरीवाक्यम्, यथा—

'व्यक्तमेष महायोगी परमात्मा सनातनः। अनादिमध्यनिधनो महतः परमो महान्॥ तमसः परमो धाता शङ्खचक्रगदाधरः। श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः॥' इति। वेदोऽपि स्वकण्ठेन महान्तं पुरुषं वक्तुमशक्नुवन् तदीयानि चिह्नानि आहेत्यवगन्तव्यम्।

तमेव विद्वान् अमृत इह भवति नान्य पन्था अयनाय विद्यते॥१७
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाक महिमान सचन्ते यत्र पूर्व साध्या सन्ति देवा ॥
**इति याजुष पुरुषसूक्त पूर्णम् । ॥ श्रीरस्तु ॥**

---

**तमेव विद्वानमृत इह भवति ।** श्रुतिवदति । त परम पुरुष **एव** जगतामादिकारण विद्वान् जानन् **अमृत इह भवति** इहैव जन्मनि अमृतो भवति । ससारबन्धान्मुक्तो भवति । **नान्यः पन्था अयनाय विद्यते ।** **अयनाय** मोक्षाय परविद्यपुरुषज्ञानादन्य पन्था न विद्यते । 'अयन निलये मार्गे मुक्तौ चापि प्रकथ्यते' इति निघण्टु । इद पुरुषसूक्तप्रतिपाद्यपुरुषज्ञान मोक्षोपाय इति ।

उपक्रान्त सृष्टियज्ञमुपसहरति **यज्ञेन यज्ञमयजन्त देवाः ।** यज्ञसाधनभूतचतुर्मुखाख्यपशुहविषा **यज्ञमयजन्त** सृष्टियज्ञमकुर्वत—[1]धातुरनुवाद । **देवा** साध्या देवा तदिन्द्रियाणि वा । **तानि धर्माणि प्रथमान्यासन् ।** (?) सृष्टियज्ञनामिदेवाना सर्वविषया व्यवहारा **धर्माणि प्रथमानि** मुख्यानि लोकश्रेयस्साधनान्यासन् । मोक्षहेतुतया प्रधानभूता इत्यर्थ । **ते ह नाक महिमानः सचन्ते ।** मह पूजायाम् । मनिन्प्रत्यय । पूजय त = भगवन्त नारायणमर्चयन्त नाक सचन्ते । कमिति सुखनाम । अक=दु ख । तत् यत्र नास्ति, तन्नाक परमव्योम प्राप्नुवन्त । भगवच्चोदितो ब्रह्मा लोकसृष्टि तदाराधन बुद्ध्याऽनुष्ठि(ष्ठाय त ?)तो वैकुण्ठाख्य पर पद प्राप्तवान् । अयमन्त

---

1 अयजन्तेत्यत्र धातु पाक यजतीत्यत्रेव द्वितीयान्तोक्तानुवादमात्रमित्यर्थ ।

प्रासवन्तः । बह्वृचपाठे अडागमाभावश्छान्दसः । तैत्तिरीयपाठे भूतार्थे । 'नाकोऽम्बरेऽपि च स्वर्गे परमव्योम्नि च स्थितः' इति । 'एको विष्णुर्जगत्स्वामी वासुदेवः सनातनः' इति श्रीवाराहेऽप्यस्ति । **यत्र पूर्वे साध्याः सन्ति देवाः** । यत्र नाके पूर्वे पूर्वस्मिन् साध्या नाम देवाः सूरयो वर्तन्ते ।

(?) पतिमिति......देवमेवैतत्सूक्तं व्याचक्रिरे । **तस्मात् विराड जायत** । विराडाख्यः प्रजापतिरजायत । **विराजो अधि पुरुषः** । वैराजो मनुर्नाम पुरुष । **यत् पुरुषेण हविषा देवाः** । देवाः मन्वादयः जगत्सिसृक्षव । **तेन देवा अयजन्त**—साध्यानामृषीणां देवानाञ्च पुराकल्पे ध्यानमययज्ञानुष्ठानानुकीर्तनम् । तस्माद्यज्ञादिति ध्यानमयात् यज्ञात् जगदुत्पत्तिवादः । **यत् पुरुषं व्यदधुः** । पुरुषं परमपुरुषं यं सहस्रशीर्षत्वादिविशेषणविशिष्टं जगन्मूलकारणत्वे व्यदधुः, तं **कतिधा व्यकल्पयन्** कियत्प्रकारं न्यरूपयन्त देवाः । प्रश्नविवरणमुत्तरञ्च पूर्ववत् । **तथा लोकाँ अकल्पयन्** । ब्राह्मणादीनां भूम्यादीनां लोकानाञ्च परमपुरुषमुखाद्यवयवेभ्य. सृष्टिर्यथा कथिता, तथा **देवा अकल्पयन्** निश्चितवन्तः । एवं सृष्टान् लोकान् व्यनक्ति.....

**यज्ञेन यज्ञमयजन्त** ध्यानमयेन जीवात्मयज्ञेन यज्ञात्मान नारायणमययजन्त देवाः । **तानि धर्माणि प्रथमान्यासन्** । एवं कृताः ध्यानमययज्ञाः मोक्षहेतुतया मुख्या धर्मा आसन् । तेन देवा आ (?) याजिनो....नाक वैकुण्ठाख्य प्रासवन्त इति ।

एतद्ब्रह्मयज्ञं(?) तद्व्याख्यातृभिर्व्याख्यातं श्रुतिस्मृतीतिहासपुराणैः नारा-

यणादण्डोत्पत्तिमण्डाद्ब्रह्मोत्पत्तिं प्रतिपादयद्भिः [1]अनादृतमित्यनादरणीयम्।
अतोऽयमेव व्याख्यानप्रकारः प्रशस्यत इति।

---

1 अनूदिते व्याख्याने परमात्मविग्रहादेव वर्णाद्युत्पत्तिरुक्ता।
अत इति। सर्ववेदनिविष्टे सर्ववेदाध्ययनफलप्रदे सर्वसारभूते नित्यब्रह्मयज्ञोपयुक्ते पुरुषसूक्तेऽस्मिन् आदरमतिशयितं वहन्तो महान्तो विविधं व्याख्यायोपबृंहणमकुर्वन्। एवं मुद्गलोपनिषदादयः श्रुतयः श्रीपञ्चरात्रग्रन्थाश्चैतदर्थविशदीकरणैकपरा इति चैतावता विदितमेव। अत एतदर्थवर्णनप्रणालिकाः विभिन्नाः प्राप्ताः। सर्वथा श्रीमतो नारायणस्य भगवतः पुरुषोत्तमस्य पारम्यमत्र प्रस्फुटमावेदयन्त इत्यत्र सर्वेषामेकवाक्यतैव। तत्तदभिमतयोजनाभेदपर्यालोचनया व्याख्यानामर्थभेदस्य व्यक्तत्वेऽपि तद्योजनादर्शितः सर्वोऽप्यर्थः सर्वैर्व्याख्यातृत्वेन संमन्तुमर्ह एव। तत्र प्रमेयाणामनेकत्वात् वाक्यानामाश्रयसंग्रहात् तेषां सर्वेषामत्र वाक्येषु निवेशप्रदर्शनस्याशक्यत्वात्, सकृत्प्रयुक्तस्य वाक्यस्यानेकार्थकल्पना न युक्तेत्याशयाच्च स्वस्वाभिमतमेकैकमर्थं केचित् प्राचीकशन्। अन्ये पुनरेकतमनिष्कर्षे उदासीनाः बहूनप्यर्थान् एकैकस्मिन् वाक्ये, एवं वा, एवं वेति निष्कृष्य समघटयन्। यथा—

प्रकृतौ परिभ्रमतां जीवानामनन्तत्वात् एषां शीर्षादिकमादायैव सहस्रशीर्षत्वादिकं भगवतः केचिददर्शयन्। सर्वशरीरिणस्तस्य न तत्र घटते। स्वयमेव शीर्षसहस्रादिशालि रूपं दिव्यं विमर्शनीयमन्ये। तदपि भगवद्गीतादिप्रामाण्यात् विश्वरूपदर्शिनो भगवतः सुस्थितमेव। शीर्षाद्यभावेऽपि शीर्षादिकार्यकरणशक्तत्वात् सहस्रशीर्षत्वादिव्यपदेश इति परे। तदपि, 'अपाणिपादो जवनः' इत्यादिश्रुतिबलात् स्वीकर्तव्यमेव। अन्यथा अप्राकृतरूपाश्रयरहितस्थले कार्यानिष्पत्तेः। एवं दशाङ्गुलपदेऽपि सामान्यतः आनन्त्यं विवक्षन्ति

केचित्। दशगुणवस्तुव्यापनं दशविधवस्तुव्यापनमेव वा भगवति निरूपयन्त्यन्ये। 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इत्यत्र चातुर्व्यूहविवक्षां विनेयार्थं वर्णयन्ति केचित्। अन्ये तद्विवक्षयैव। 'विराडजायत, विराजोऽधिपूरुषः' इत्यत्र क्रमेण प्रकृतिर्जीवाविर्भाववर्णनं केषाञ्चिदभिमतम्। अनिरुद्धचतुर्मुखयोराविर्भावमन्ये आहुः। ब्रह्मणो मनोश्चोद्भवं परे। सर्वमिदं प्रमाणान्तरप्रमितमेव।

अथ यो यज्ञः प्रस्तुतः, 'यत् पुरुषेण हविषा देवा यज्ञमतन्वत' इत्यादिना, किमसौ बाह्यद्रव्यहोमसंवलित एव, उत ध्यानमय इति परामर्शे, मुखादिन्द्रश्चाग्निश्चेति अंशैरपि अन्याविशेषमत्र एवोत्पादनीयतया ध्यानमय एवायं युक्त इति इत्येव प्रायो ध्यानपक्षमेव परिगृह्णन्ति। बाह्ययागापेक्षया हार्दयागस्य विशेषतो भगवत्समाराधनत्वं व्यक्तमन्यत्र। पुरुषरूपञ्च हविः चतुर्मुखशरीरम्। ध्यानस्य ध्यातृसमवेतेन्द्रियसाध्यत्वात् देवशब्द इन्द्रियपर इति केचित्। नित्यसूरीणामपि अभिमानितया नियन्तृतया श्रीविष्णुपुराणादिप्रतिपन्नत्वात् नित्यसूरिविशेषा एव साध्या देवा इत्यन्ये। परिधयः समिधश्च विशिष्यानिर्दिष्टाः यथाव्याख्यं विमृश्य निधार्याः। वेदान्तपुष्पाञ्जलावस्माभिरित्थमुक्तम्—"चत्वार्यक्षाणि चान्तर्दश च महदहङ्कारभूतानि देहस्थानि त्रिसप्त मन्ये बहिरपि महदादीनि लक्ष्मीश सप्त" इति।

एवं तावत् तत्तद्ग्रन्थोक्तं सर्वमपि परामर्शे, संकलय्य समादरणीयमेव भवेदिति नैकस्मिन् पक्षे अभिनिविश्य पक्षान्तरस्य असत्त्वमापादनीयमिति विभाजनमुचितं लक्ष्यते। एवं स्थिते यदिदं किञ्चिदिह प्रस्तुतमस्ति प्रकृतभाष्ये, किं सर्वमिदं तत्तद्वचनविशेषेभ्य उत्पन्नतयेह वर्णितं चतुर्मुखशरीरावच्छिन्नतया वर्ण्यमानं संमन्तव्यम्, उत परमपुरुषविग्रहादेवेति विवादे द्वितीयः पक्षो न ग्राह्य इति। अत्र किञ्चिद् वक्तव्यं लक्ष्यते—तत्रतत्र पक्षान्तराणामसत्त्वाभाववत् अत्राप्यसत्त्वाभावः संमन्यताम्। अतः साऽपि योजना कामं भातीति।

कल्पादौ चतुर्मुखशरीरात् विविधा वैकृतसृष्टिर्भवतीति श्रीविष्णुपुराणे (१. ५.) प्रतिपादितमिति तत्र न संदेहः। तथा हि तत्र देवादिसृष्टिमुपवर्ण्य, 'एतानि सृष्ट्वा भगवान् ब्रह्मा तच्छक्तिचोदितः' इति तिर्यक्स्थावरसृष्टिं प्रस्तुत्य, तत्र कृतयुगस्य ध्यानप्रधानत्वेऽपि त्रेतायुगस्य यज्ञप्रधानत्वात् तदा ग्राम्यारण्यविभागोऽपि पशूनां तेन कृत इति कथयित्वा, 'गौरजः पुरुषो मेषश्चाश्वाश्वतरगर्दभाः। एतान् ग्राम्यान् पशूनाहुः आरण्यांश्च निबोध मे। श्वापदा द्विखुरा हस्तिवानराः पक्षिपञ्चमाः। औदकाः पशवः षष्ठाः सप्तमाश्च सरीसृपाः' इति ग्राम्यान् अन्यांश्च पृथक् परिगणय्य, तस्यैव चतुर्भ्यो मुखेभ्यः ऋगादिचतुर्विधवेदादिसृष्टिमभिधाय, 'नाम रूपञ्च भूतानां देवादीनां चकार सः' इत्यादिनोपसंहृतम्। एवमपि तत्रैव, १-१२. ध्रुवस्तोत्रे पुरुषसूक्तार्थविवरणे परमपुरुषविग्रहादेव सर्वेषामुत्पत्तिरभिहितेति स्वरसतः प्रतीयते। तथा हि शंखप्रान्तेन स्पृष्टवन्तं ध्रुवः प्रत्यक्षमागतं गोविन्दं ध्रुव एवं स्तौति—

'बृहत्त्वाद् बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम्।
तस्मै नमस्ते सर्वात्मन् योगिचिन्त्याविकारवत्।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
सर्वव्यापी भुवः स्पर्शात् अत्यतिष्ठद् दशाङ्गुलम्।
यद्भूतं यच्च वै भव्यं पुरुषोत्तम तद् भवान्।
त्वत्तो विराट् स्वराट् सम्राट् त्वत्तश्चाप्यधिपूरुषः।
अत्यरिच्यत सोऽधश्च तिर्यगूर्ध्वं च वै भुवः।
त्वत्तो विश्वमिदं जातं त्वत्तो भूतभविष्यती।
त्वद्रूपधारिणश्चान्तः सर्वभूतमिदं जगत्।'

'त्वत्तो यज्ञः—', 'त्वत्तोऽश्वाश्च—', 'त्वन्मुखाद् ब्राह्मणाः—', 'अक्ष्णोः सूर्योऽनिलः प्राणात्', त्वत्तः सर्वमभूदिदम्' इति। अत्र साक्षात् गोविन्दः सर्वत्र युष्मच्छब्दैरभिधीयते। अधिकृत्य इत्युक्तः

श्रीशास्त्रपुरुषसंहितायाम् —, (मुद्गलोपनिषदि)

"सहस्रशीर्षा इत्यत्र सहस्रोऽनन्तवाचकः ।
अनन्तयोजनं प्राह दशाङ्गुळवचस्त्विदम् ॥
अत्र प्रथमया विष्णोर्देशतो व्याप्तिरुच्यते ।
द्वितीययाऽस्य विष्णोः कालतो व्याप्तिरीरिता ॥
विष्णोर्मोक्षप्रदातृत्वकथनं च तृतीयया ।
एतावानिति मन्त्रेण वैभवं कथितं हरेः ॥
एतेनैव च मन्त्रेण चतुर्व्यूहोऽपि भाषितः ।
त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम् ॥
तस्माद्विराडित्यनया पादनारायणाद्धरेः ।
प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता ॥

---

अधिकारिपुरुषः चतुर्मुखस्तु परोक्षतो निर्दिश्यते । तत्कार्यकथनावसरे च 'अत्यरिच्यत सोऽधस्तात्' इत्येवम् । त्वद्रूपधारिण इत्यर्धस्य च, 'तस्य चतुर्मुखस्यापि जगदिदमन्तश्चेत्, किमुनस्तवेति भावः' इति श्रीविष्णुचित्तीये विवरणं कृतम् । तथा च त्वद्रूपधारिणस्तस्याङ्गेभ्य इत्यनुक्त्वा त्वत्त इत्येव सर्वत्र निर्देशः सर्वस्य परमपुरुषजन्यत्वं दर्शयति । अवान्तरसर्गेषु चतुर्मुखकर्तृकसर्वसृष्टिसद्भावेऽपि आदिसृष्टौ भगवानेव सर्वं सृजतीति नामसहस्रभाष्येऽप्युक्तम् । श्रीदेशिकचरणाभिमतश्चेदमित्यादिकमिह वक्तव्यं सुबालोपनिषत्परिष्कारे अस्माभिरुक्तम्; यत्र मूलश्रुतिः चतुर्मुखकर्तृकसृष्टिपरेव भगवत्कर्तृकसृष्टिपराऽपि लक्ष्यत इति भङ्ग्या व्यञ्जयाम । वेदान्तपुष्पाञ्जलावप्यस्मदीये इदं द्रष्टव्यम् । अतोऽन्यादृशव्याख्यानमपि उपादेयमेव भवेदिति ।

यत्पुरुषेणेत्यनया सृष्टियज्ञ समीरितः ।
सप्ते परिधयश्चापि समिधश्च समीरिता ॥
तं यज्ञमिति मन्त्रेण सृष्टियज्ञः समीरित ।
अनेनैव च मन्त्रेण मोक्षश्च समुदीरित ॥
तस्मादिति च मन्त्रेण जगत्सृष्टि समीरिता ।
वेदाहमिति मन्त्राभ्या वैभवं कथित हरे ॥
यज्ञेनेत्युपसंहारः सृष्टेर्मोक्षस्य चेरित ।
य एवं [illegible] विजानाति स हि मुक्तो भवेत् ॥" इति ।

तथा मुद्गलोपनिषदि पुरुषसूक्तस्य वैभव विस्तरेण प्रतिपादितम्। सेयमुपनिषदुच्यते—वामदेव आङ्गिरस स्तपूर्वपञ्चासमन्वारब्ध अत्रि-पत्न्या अनसूयाया गर्भ एव शयानो ब्रह्म वेदयाञ्चक्रे । स हि गर्भे पुरो हित्वा ब्रह्मलोकमुपचक्राम । मध्ये ध्यानमुपनिषयुवाच । भगवास्तु गर्भपञ्जरमेवाभिनिविशमानो विज्ञानब्रह्म आनासि तोपाय (?) । अक स्मात्किञ्चिद्विगतासंगस्सर्वैः वन्द्यमानोऽध्वन पारमुपगच्छसि । तदेतदि हाश्चर्यम्, यद् बालस्य गुरुमनुपेत्यापोऽधिगन्तुश्च भगवतोऽकस्मात् विशब्दो ब्रह्मप्रत्यय , विपरीतस्य विपरीतम् । सोऽहं भगव उप त्वा सेदिवाञ्चाऽस्मीत्यादिभिश्चतुर्भि खण्डैरिन्द्राय भगवान् ज्ञानमुपदिशन् पुनरपि सूक्ष्मश्रवणाय प्रणतायेन्द्राय परमरहस्यमुत पुरुषसूक्तार्थे द्वाभ्या खण्डाभ्यामुपादिशत् । तौ [द्वौ] खण्डावुच्येते—

योऽयमुक्त , स पुरुषो नामरूपज्ञानागोचर ससारिणामतिदुर्ज्ञानं चेप विहाय क्लेशादिसंक्षयान् देवादीनुज्जिहीर्षुतया सहस्रकलावयवकल्याणं

दृष्टिमात्रेण मोक्षदं वेषमाददे । तेन वेषेण (रूपेण) भूम्यादिलोकत्रयं व्याप्यानन्तयोजनमत्यतिष्ठत्। स पुरुषो नारायणो भूतं भव्यं भविष्यच्चासीत्। स एव सर्वेषां मोक्षदश्चासीत् । स च सर्वस्मात् महिम्नो ज्यायानासीत्। स च ज्यायान् महापुरुष आत्मानं चतुर्धा कृत्वा त्रिपादेन परमव्योम्नि भासते ; इतरेण चतुर्थेनानिरुद्धेन नारायणाख्येन विश्वान्यासृजत् । स च पादनारायणो जगत् स्रष्टुं प्रकृतिमजनयत् । सा च प्रकृतिः ब्रह्माण्डभूता, यत्र स ब्रह्माणमजनयत् । स समृद्धकायस्सन् सृष्टिकर्म न जज्ञिवान् । सोऽनिरुद्धनारायणस्तस्मै सृष्टिमुपादिशत्, 'ब्रह्मन् ! तवेन्द्रियाणि याजकानि ध्यात्वा जगत्कोशभूतं त्वन्मथिकलेवरं हविर्ध्यात्वा मां हविर्भुजं ध्यात्वा वसन्तमाज्यं ध्यात्वा ग्रीष्ममिध्मं ध्यात्वा शरदृतुं पुरोडाशं ध्यात्वा पृथिव्यप्तेजोवाय्वाकाशाहङ्कारबुद्धिं परिधिं ध्यात्वा पञ्च भूतानि तन्मात्राणि ज्ञानकर्मेन्द्रियाणि अन्तःकरणं चैकविंशतिं समिधं मय्येवाग्नौ त्वं योजय । मदङ्गस्पर्शनात् त्वत्कलेवरं बृंहिष्यति। ततः त्वत्कायात् सूक्ष्मसृष्टिहेतुभूतं पृषदाज्यं भविष्यति । सर्वाणि (?) निविडा पश्चाद्यः प्रादुर्भविष्यन्ति । ततश्चराचरं जगद्भविष्यति । एतेन जीवात्मनो योगेन मोक्षप्रकारोऽपि कथ्यत इत्यनुसन्धेयम् — इति प्रथमः ।

स इमं सृष्टियज्ञं जानाति मोक्षप्रकारञ्च, सर्वमायुरेति ; अरोगश्च भवति ; श्रीमांश्च भवति ; पुत्रपौत्रादिसमृद्धो भवति । विद्वांश्च भवति। महापातकात् पूतो भवति । सर्वगमनात् पूतो भवति । कामक्रोधादिभिरबाधो भवति । सर्वेभ्य पापेभ्य पूतो भवति । इहैव जन्मनि पुरुषो

भवति । तमेवं पुरुषसूक्तार्थमतिरहस्यं राजगुह्यं देवगुह्यं गुह्यादपि गुह्यतरं नादीक्षितायोपदिशेत् ; नाभियवादिने ; नायज्ञशीलाय ; नासंवत्सरवासिने ; नासंतुष्टाय ; नानधीतवेदाय । गुरुरप्येवम्भूत· शुचौ देशे पुण्ये नक्षत्रे प्राणान् आयम्य पुरुषं ध्यायन् उपसन्नाय शिष्याय दक्षिणे कर्णे सकृत् पुरुषसूक्तार्थमुपदिशेत् । न बहुशो वदेत् । यातयामं भवतीत्य.... तूर्णमुपदिशेत् । एवं कुर्वाणोऽध्येताऽध्यापकश्च इह जन्मनि पुरुषो भवति— इति द्वितीय: खण्ड ॥

इति पुरुषसूक्तभाष्य सपूर्णम् ॥

[एतदनन्तरम्—"* सहस....ईरिता । पूर्वस्मिन्ननुवाके मुमुक्षूपास्यं परं ब्रह्म अकारवाच्यः स एव परमेश्वर इति सादरमुक्तम् । अस्मिन् प्रसङ्गे सकलवेदान्तेषु कारणत्वेन नारायणानुवाके ...क्रियते । 'लिङ्गभूयस्त्वात्' इत्यस्मिन्नधिकरणे भगवान् भाष्यकारो रामानुजमिश्रो बहुभिर्न्यायकलापैरेवमुदीरितवान्" इत्यन्न मातृकाकोशेऽस्ति । अतोऽपि पुरुषसूक्तभाष्ये किञ्चिन्महाग्रन्थभागनिविष्टमिति ज्ञायते ।]

---

इत्थं पौरुषसूक्तभाष्यमुपलभ्यामुष्य, कोशद्विधा-
भावात् सत्यपि बहुलक्षणमुनेस्तत्कर्तृतासंशये ।
ईशाद्यागममौलिभाष्यवदिदं सूक्तार्थसंवेदनं
साधु स्यादिति सज्जनप्रियधिया प्राकाश्यमानीयत ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
श्रीवीरराघवार्येण वात्स्यसच्चक्रवर्तिना ॥

सूक्तसंख्याधिक्यमालक्ष्य याजुषक्रमतादरम् ।
भाष्यं पुरुषसूक्तस्य संग्रहेण परिष्कृतम् ॥

इति पुरुषसूक्तभाष्यपरिष्कारः ।

शुभमस्तु ॥

## पुरुषसूक्तार्थसंग्रहकारिकाः

प्रोक्तः पुरुषसूक्ते स पुरुषोऽद्भुतविग्रहः ।
प्रकृतिप्राकृतात्मा च त्रिपाद् यस्यामृतं दिवि ॥ १ ॥

ब्रह्माणं जनयित्वा तद्यज्ञसंराधितः श्रुतीः ।
लोकान् प्राणभृतो वर्णांश्चतुरो देवतादिकम् ॥ २ ॥

निर्माति निखिलैरीड्यः स्थितः स तमसः परे ।
स उपास्यः ; ततो मुक्तिः, नान्यः पन्था इतीरितम् ॥ ३ ॥

## पुरुषसूक्तमन्त्रसूची



## पुरुषसूक्तविषयसूची

श्रियै नमः

## श्रीरङ्गनाथमुनिप्रणीतश्रीसूक्तभाष्यसंग्रहः ॥

श्रीपराशरभट्टार्य श्रीरङ्गेशपुरोहित ।
श्रीवत्साङ्कसुत· श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥
यत्पदाम्भोजघटिता भणितिर्दुर्लभान्यपि ।
पदानि परमां मुक्तिं सूते तां श्रियमाश्रये ॥
श्रियः सूक्तं समुदितं यज्जपो मङ्गलावहः ।
अशरण्यशरण्यं तत् व्याकुर्मो भोगमोक्षदम् ॥

—o—o—

सर्वेश्वरेश्वरी लक्ष्मीर्भोगमोक्षप्रदायिनी ।
आधयाऽऽवाह्यते देवी श्रीनिवासात् हरिप्रिया ॥

---

श्रीः

### श्रीसूक्तपरिष्कारः

यत् पूरुषः पौरुषसूक्तवेद्यो लक्ष्मीश्च पत्न्याविति वेदसाक्ष्यात् ।
नारायणः श्रीश इति प्रतीतः, तत् सूक्तमस्या अपि योज्यतेऽत्र ॥

श्रीसूक्तमन्त्रैः प्राधान्येन श्रिय उक्तानि विशेषणानि श्रीवेंकटेशकल्याणचरितकाव्येऽस्माभिरेवं क्रमेण समग्राहिषत—

"इयं हि सा दिव्यसुवर्णवर्णा धनप्रदा सैन्यसमृद्धिहेतुः ।
सौशील्यभव्यैश्वरभानदया परं शरण्यत्वयशोनिधानम् ॥
विलग्नाभिमाना भृशकीर्तिधात्री शमन्यलक्ष्म्याः धनभूसमृद्धिः ।
संकल्पितस्वान्तगतेरितानां विधायिनी विश्रुतभव्यजन्मा ॥
स्निग्धान्नपानार्पणपुष्टलोका संह्लादयित्री शुभधर्मनेत्री ।
विशेषतोऽशेषफलप्रदात्रीत्यमंस्त तां स धुनिवृन्दबन्धुः ॥" इति ।

हरिः ओं । हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥

हिरण्यवर्णामित्यादि । हे जातवेदः—लक्ष्मीपते ; जातं स्वतसिद्धं वेदः—धनं वा, ज्ञानं वा यशो वा, यस्य स जातवेदाः । हिरण्यवर्णां-हितरमणीयाम् । हितत्त्वं अपेक्षितार्थसाधकत्वम् ; रमणीयत्वं प्रीत्यनुरूपत्वम् । हरिणीं—सर्वपापहरणशीलाम् , सुवर्णरजतस्रजाम्—स्वसौन्दर्यलावण्यानुगुणनित्यनिर्मलविराजमानस्रग्वस्त्राभरणोद्भासिताम् , चन्द्रां सर्वाह्लादकारिणीम् हिरण्मयीं—हिरण्यादिसर्वधनप्रचुरां लक्ष्मीम्-सर्वसुरासुरमनुजमुनीन्द्रादिभिर्लक्षणीयां-प्रार्थनीयाम् ; सर्वैश्वर्यनिमित्तमृनदिव्यलक्षणसंपन्नां वा । जातवेदो म आवह-एवंभूतां लक्ष्मीं स्वरसमाश्रयणोन्मुखस्य सर्वोपकरणसमृद्ध्यर्थम् , आवह—सन्निधापय । लक्ष्मीनिरीक्षणादेव सर्वेषां सर्वसमृद्धिः ॥ १ ॥

पूर्वेणाऽऽवाहितां लक्ष्मीं सर्वमङ्गलदायिनीम् ।
अनन्यगामिनीं नित्यां द्वितीयेन नियच्छति ॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषान् अहम् ॥ २ ॥

तां—पूर्वोक्तसमस्तकल्याणगुणगणप्रकाराम् । लक्ष्मीं-चतुर्मुखशतमखादिसकलसुरासुरप्रार्थनीयविभवलक्षणाम् , मे–मत्सेवार्थं । आवह–मयि सन्निधापय । कथमित्यपेक्षायां अनपगामिनीम्—मत्समीपादन्यत्र कदाचित् कचिदपि तु नेच्छन्तीं , यथा मयि नित्यानपायिनी, तथा कुरु । यस्याम्—सकलापेक्षितप्रदातृत्वेन श्रुतिस्मृतिसिद्धायां, हिरण्यम्—

हिरण्यरूप्यादि, **गाम्**—गोमहिषादिजीवधनम्, **अश्वम्**—रथगजतुरगादिवाहनसमृद्धिम्, **पुरुषान्**—दासीदासादिपरिचारकान् सर्वैर्विभवैर्विहीनोऽहं **विन्देयम्**—सर्वां विभूतिं लभेयेति ॥ २ ॥

जगत्सर्गस्थितिध्वंसव्यापनादिषु कर्मसु ।
स्वप्रेयांसं तृतीयेन क्रीडन्तमनु धावनीम् ॥ आह्वयति ।

**अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।**
**श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥**

**अश्वपूर्वा**—व्यापनभरणनियमनादिजगद्व्यापारेषु, अश्वः—व्यापनशीलो भगवान् यस्याः पूर्वप्रदेशे, सा अश्वपूर्वा ताम्। **रथमध्याम्**—रथानां ईहाशीलानां रंहणशीलानां वा जीवानां **मध्ये**—हृदयगुहायां आत्मत्वेन या तिष्ठति सा **रथमध्या** । यद्वा, रथस्य-शरीरस्य, श्रीनिवासस्य सर्वेश्वरस्य सौन्दर्यलावण्याद्याकाराप्राकृतषड्शक्तिमयदिव्यविग्रहस्य, 'शरीरं रथमेव च' इति श्रुतिप्रसिद्धे, मङ्गलाकारे वक्षःस्थले नित्यसन्निहिताम्[1] । **हस्तिनादप्रबोधिनीम्**—गजेन्द्राद्याश्रितार्तनादे परमकृपाम्बुधेः सर्वेश्वरादपि प्रथमप्रबोधनशीलाम् ।

पूर्वधिस्यैव [वा] योजना । **अश्वपूर्वाम्**—यस्याः प्रयाणकाले सेनाग्रे असंख्येयानि अश्ववृन्दानि पुरस्ताद्गच्छन्ति, ता अश्वपूर्वाम् । **रथमध्याम्**-यस्याः सेनामध्ये मणिमयानि दिव्यानि रथकदम्बानि सन्निहितानि भवन्ति, तां **रथमध्याम्** । **हस्तिनादप्रबोधिनीम्**—पद्मवनवासित्वात् पद्मप्रियाणां गजानां नादे प्रबुद्ध्यमानाम् ॥ ३ ॥

---

1 रथमध्यशब्दात् अर्श आद्यचि रथमध्या तामिति विग्रहे तात्पर्यम्।

संस्तूय नामभिर्दिव्यै प्रसन्ना करुणाननाम् ।
चतुर्थेन पुनर्देवीं सुस्मिता परिपश्यति ॥

**कां सो(स्मितां)स्मयां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीं पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥**

**काम्**-सुखस्वरूपाम् । नाममालायां-'नमामि भार्गवीं रुयातिं सुखां सौम्यां सुखप्रदाम्' इति । 'अथवा संसारसागरनिमग्नैः स्वोत्तरणाय प्रष्टव्यां **काम्** । **सोस्मयाम्**—उत्स्मयसहिताम् । तकारलोपश्छान्दसः । **हिरण्यप्राकाराम्** — नानारत्नमयसुवर्णमयप्राकारपरिवृताऽऽनन्दमयदिव्यमण्डपान्तर्निवासिनीम् । **आर्द्राम्**— दयार्द्रहृदयाम् । **ज्वलन्तीम्** लावण्यमयेन स्वतेजसा सर्वान् लोकान् भासयन्तीम् । **तृप्ताम्**—भगवत्सश्लेषजनितेन महानन्देन स्वयं तृप्ताम् । **तर्पयन्तीम्**-कान्तिशान्त्याकरमधुरशीतलविलोकनामृततरङ्गपरम्परया तापत्रयतप्तं प्राणिजातमाह्लादयन्तीम् । तथा **पद्मे स्थिताम्** स्वसौन्दर्यसौकुमार्यानुगुणसुगन्धशीतलसुखस्पर्शपद्मासनासीनाम् । **पद्मवर्णाम्** पद्मोदरसहोदराम्, अशेषजनवर्णनीयलावण्यमयदिव्यशोभाम् । **तां श्रियं** सर्वैः सर्वप्रकारैः समाश्रयणीयां **इह** तच्छेषैकस्वरूपे मयि, **उपह्वये** तदनुकूलाञ्जलिमुद्रादिभिरभिमुखीकरोमि ॥ ४ ॥

आहूतामागतां देवीं पञ्चमेन प्रपद्य ताम् ।
नाशं तु सहभार्याया अलक्ष्म्या वृणुते ततः ॥

**चन्द्रां प्रभासां यशसा ज्वलन्तीं**
**श्रियं लोके देवजुष्टामुदाराम् ।**

**तां पद्मनेमि(मीं) शरणमहं प्रपद्ये**
**अलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥**

**चन्द्रां**—'चदि आह्लादने'। निरतिशयानन्दरूपामिति यावत्। **प्रभासां**-प्रकृष्टतया भासमानाम् ; शुद्धसत्त्वप्रकाशशुभाश्रयदिव्यमङ्गलविग्रहाम्। यद्वा **प्रभासां**— सर्वस्य लोकस्य सहस्रेन्दुसमप्रकाशाम्। **यशसा** देवस्य सर्वेश्वरस्य सहधर्मचारिणीत्वेन सर्वलोकविदितेन गुणवत्त्वसौभाग्येन यशसा ज्वलन्तीम् अनुकूलाननुकूलास्वादतापकरदिव्यज्योतिःस्वरूपाम्। यद्वा, **यशसा ज्वलन्तीम्**-निरतिशयमङ्गलविभूत्यादिमत्तया तथाविधगुणविभूत्यादिमत्तया अनुग्रहैकस्वरूपतया च दीप्यमाना **श्रियं**-सर्वसमाश्रयणीयाम्। यद्वा, 'शृणोति श्रावयति' इत्याद्युक्तप्रापकत्वोपयुक्तसमस्ताकारवतीम्। **लोके**-विभूतिद्वये। **देवजुष्टां**-देवैः चतुर्मुखशिवशतमखहुतवहादिदेवैः अनन्तगरुडादिभिः देवोत्तमैश्च स्वपदलाभाय तदनुगुणसमृद्धये आनन्दानुभवाय च यजनभजनमननादिभिः **जुष्टां** सेव्यमानाम्। यद्वा, **देवजुष्टां**-देवेन निरुपाधिकक्रीडनादिमता "दिव्यो देव एको नारायण" इत्युक्तदेवेन, **जुष्टाम्**— निरतिशयप्रीतिविषयीकृताम्। **उदाराम्**-तेभ्य सुरादिभ्य सर्वकामवर्षिणीम्। उक्तं च भट्टपराशरपादैः श्रीगुणरत्नकोशे—

---

५. मं—सर्वाह्लादस्वभावां जगति हरिवपुर्भाधिकानुप्रभासं
कीर्त्याऽनुग्राहिकैर्नेत्यघतपनतनु पद्धियर्थात्यपूर्णाम्।
अत्यन्तंविष्णुहृद्यामनवधिफलदां पाणिभूपाब्जलीला-
वद्यासेषप्रपञ्चां विधिवदिह फलोपायसिद्ध्यै प्रपद्ये॥ इति एतदर्थः।

"ऐश्वर्यमक्षरगतिं परमं पदं वा कस्मैचिदञ्जलिभरं वहते वितीर्य । अस्मै न किंचिदुचितं कृतमित्यथाम्ब त्वं लज्जसे कथय कोऽयमुदारभावः ॥" इति । **पद्मनेमिम्**—पद्ममेव नेमिं नयनसाधनं यस्याः सा पद्मनेमिः । करतलकलितेन पद्मेन समाश्रितानां सर्वेषां सर्वमनिष्टमपहाय सर्वकालं स्वचरणाम्भोजं प्रापयन्तीमित्यर्थः । **ताम्**–अहिर्बुध्न्यसंहितादिषु लक्ष्मीतन्त्रादिषु प्रसिद्धवैभवां सर्वेश्वरीम् , **अहम्** अत्यन्ताकिञ्चनोऽहमुपायान्तरशून्यः **शरणं प्रपद्ये** । श्लो– इह चामुत्र चानिष्टनिवृत्तीष्टाप्तिसिद्धये ।

साक्षाल्लक्ष्म्याः पदाम्भोजे भूयास्तां शरणं मम ॥

**त्वां वृणे**—त्वच्चरणारविन्दयुगलमेव परमोपायमध्यवस्यामि । अनया प्रपत्त्या त्वत्प्राप्तिविरोधिनी **अलक्ष्मीः** दुस्सहमार्या मे त्वत्स्मृति-कीर्तनादौ प्रवृत्तात् मत्तः **नश्यताम्**—नश्यतु ॥

[1]यद्वा, **शरणं प्रपद्ये**—निरपेक्षमदभिमतसाधकत्वाध्यवसाय-पूर्वकं तव चरणारविन्दयोर्भरन्यासं करोमि । **अलक्ष्मीः**—'सा हि श्रीरमृता सताम्' इत्युक्तब्रह्मविद्याया अभावः मे ब्रह्मविद्याविरोधि पापाक्रान्तस्य **नश्यताम्**—क्षिप्रं नश्यतु । **त्वां वृणे**—अनुग्रहैकरूपां मम मातरं गोप्तृत्वेन, **वृणे**—यथावस्थितमोक्षोपायनिष्पत्त्यर्थं प्रार्थये ॥

अस्मिन् मन्त्रे श्रीशब्दे आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनरूपं मङ्गद्वयमनुसन्धेयम् । अहंशब्दे आकिञ्चन्यानुसन्धानरूपं कार्पण्यं अङ्गमनुसन्धेयम् । त्वां वृणे इत्यत्र गोप्तृत्ववरणरूपमङ्गमनुसन्धेयम् । शरणं

1 प्रथमं मोक्षार्थप्रपत्तिपरतया व्याख्याय अथ उपायसिद्ध्यर्थ-प्रपत्तिपरतया व्याख्याति यद्वेति ।

**प्रपद्ये** इत्यत्र महाविश्वासरूपमङ्गं भरन्यासरूपोऽङ्गी चानुसन्धेये । एवं मन्त्रार्थमनुसन्धाय श्रीप्रपदनानुष्ठानं कर्तव्यमिति संप्रदाय. ॥ ५ ॥

श्रीसाधकेन बैल्वेन फलेन श्रीविघातिन ।
षष्ठेऽलक्ष्मीश्च तद्विघ्नान् मायादीन् नाशयत्ययम् ॥

**आदित्यवर्णे तपसोऽधिजातो**
**वनस्पतिस्तव वृक्षोऽथ बिल्वः ।**
**तस्य फलानि तपसा नुदन्तु**
**मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ ६ ॥**

**आदित्यवर्णे** । बाह्यान्तरसकलतमोनिरोधितेजोमयदिव्यस्वरूपे ! **तपसोऽधिजात.**-**तपसः**-सैवैश्वर्यान्तिव सङ्कल्पात्, **अधिजातः** सर्वमङ्गलान्यधिकृत्य जात-समुद्भूत । **वनस्पतिः**-वनाना पति, सर्वेषा वृक्षसमूहानामधिपतित्वेन प्रसिद्ध । **अथ**-मङ्गलस्वरूप । **बिल्वः** । "श्रीकामो जुहुयादग्नौ पत्रैर्बिल्वैस्तथा फले"। **तस्य फलानि तपसा** स्वदीक्षानिरीक्षणादिना सर्वविघ्नान्, **नुदन्तु**-नाशयन्तु ।

के ते विघ्नकरा इत्याशङ्कायामाह--**मायान्तरायाश्च बाह्या अलक्ष्मीः** । **माया**-अन्यथाज्ञानमन्यथाप्रवृत्तिश्च । **अन्तरायाः** बद्धजनादिविघ्ना । **बाह्याः**--लक्ष्मीसंबन्धरहिता , **अलक्ष्मीः**-लक्ष्मीप्रतिभटभूता । सर्वान् तान् विनाशयन्तु । ते सर्वे श्रीसंबन्धविरोधिन । **अलक्ष्मीः**-दुस्सहपत्नी, 'तत्सहचारिण्यश्च'[1] ।

---

1 मायान्तरायाः अन्यथाज्ञानादिरूपआन्तरविघ्नवर्ताः । अतो भाषच् । बाह्याश्चान्या.। अलक्ष्मीरिति विशेष्यं द्वितीयाबहुवचनान्तम् इति व्याख्यानमुचितम् ।

उपैतु मां देवसखः (देवि सह)
कीर्तिश्च (मणिना)मुनिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्
कीर्तिमृद्धिं ददातु मे ॥ ७ ॥

विवैश्वर्यादिप्राप्तिनिदानकीर्त्यादिकमर्थ्यते। हे देवि मां त्वदाश्रयं, कीर्तिः-विवैश्वर्यादिकृता प्रथा, मणिना-रत्नादिभिः सह युगपत्, उपैतु-प्राप्नोतु । अहं अस्मिन् लोके प्रादुर्भूतोऽस्मि-त्वत्प्रसादात् प्रवृद्धोऽस्मि। कीर्तिम्, ऋद्धिं-धनादिसमृद्धिं च मे-मह्यं ददातु दिशतु। सा लक्ष्मी इति शेषः ॥ ७ ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वान् निर्णुद मे गृहात् ॥ ८ ॥

क्षुत्—अन्नेच्छा। क्षुत्पिपासामिति समासो वा । पिपासां—विषयस्पृहा, मलां-मलसन्नद्धाम् । अलक्ष्मीं-प्रतिभटरूपाममङ्गलरूपाम् । ज्येष्ठाम्-दुस्सहपत्नीम् अलक्ष्मीं-दर्शनायोग्याम् । हे लक्ष्मी, सर्वान् एतान्, त्वत्समाश्रयणबलेन मे गृहात्-असद्गृहात्,नाशयामि-त्याजयामि। अभूति इत्यादि। हे देवि। अभूतिं गृहक्षेत्रारामदासीदासादि-विभूतिनिरोधिनीम् । असमृद्धिम्-धनधान्यस्वर्णरूप्यादिसमृद्धिनिवारिणीं सर्वां पूर्वोक्तां सविभूतिकां ज्येष्ठाम्, मे गृहात्-त्वदाश्रयगमनयोजनम्म मम गृहात्, मत्सर्वम्पिदेशविशेषात्, निर्णुद-त्याजय ॥ ८ ॥

अलक्ष्म्यादीन् पराणुद्य स्वगृहात् पुनरेव ताम् ।
सर्वेश्वरीं श्रियं देवीं नवमेनाह्वयत्ययम् ॥

**गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**
**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥**

**गन्धद्वाराम्**–गन्धशब्देन लक्ष्मीसमाराधनोपकरणभूतानि पुष्पधूपदीपनैवेद्यानि समाराधनक्रियालम्बनभूतानि सर्वाण्युपलक्ष्यन्ते । तानि द्वाराणि यस्यास्ताम् । **दुराधर्षाम्**—अभक्तैरमङ्गलैः पूर्वोक्तोपायरहितैश्च प्राप्तुमशक्याम् । **नित्यपुष्टाम्** सर्वकालसर्वदेशसर्ववस्तुष्वपि सर्वदा पुष्टाम् । [1]**करीषिणीम्**–कर्षवतीम्, मृद्वतीं वा । **ईश्वरीं सर्वभूतानाम्**–चतुर्मुखशिवशतमखप्रभृतिदेवासुरसिद्धगन्धर्वमनुजादीनां सर्वेषां भूतानां नित्यसूरीणां च **ईश्वरीम्**–नियन्त्रीं, स्वामिनीं । यद्वा 'अशू व्याप्तौ' इति धातोः, "ईच्चोपधायाः" इति अकारस्थाने ईकारे वरच्प्रत्यये च, ईश्वरशब्दो निष्पन्नः व्याप्तिवाची । तथाच सर्वभूतेश्वरीं सर्वभूतनियन्त्रीं, व्यापिनीं वा । "नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥" इति । अन्यत्रापि "त्वयैतत् विष्णुना चाम्ब जगत् व्याप्तं चराचरम् ॥" इति ।

**ताम्**—उक्तगुणलक्षणाम् । **इहोपह्वये**—पूर्वमलक्ष्म्यादिदूषिते इदानीं तत्त्यागात् देव्यागमनयोग्ये, **उपह्वये**–सर्वसमृद्ध्यर्थमाह्वयामि । **श्रियं**–पुरुषकारत्वेनोपायत्वेन चाऽऽश्रीयमाणाम् । 'शॄ हिंसायाम्' इति आश्रितदोषनिवर्तकत्वम् । 'श्रु श्रवणे' इति आश्रितानामार्तनादं स्वयं श्रुत्वा भगवन्तं प्रति श्रावकत्वम् । 'श्रा परिपाके' इति आश्रितदोषान् अपहाय, "श्रीणाति च गुणैर्जगत्" इति आश्रितगुणपूरकत्वम् ।

---

[1] करीषशब्दो गोमयवाची ।

"शृणाति निखिलान् दोषान् श्रीणाति च गुणैर्जगत् ।
श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ॥" इति ।

अत्रेदं तत्त्वम्—सत्-ब्रह्म-आत्म-नारायणशब्दाः छागपशुन्यायेन सामान्यविशेषभावनया नारायणे देवताविशेषे पर्यवसन्नाः यथा, तद्वत् श्रद्धा—विष्णुपत्नी—श्रीशब्दाः सामान्यविशेषभावनया तन्न्यायेन लक्ष्मीरूपे देवताविशेषे पर्यवसन्नाः ॥

नन्वेवं श्रियोऽप्यनन्याधीनत्वे पतिवन्मुख्येश्वरत्वे, सर्वागमानामेकेश्वरपरत्वाभावादैककण्ठ्यं न स्यादिति चेन्न—अन्योन्येच्छाविघातकयोः अन्योन्यगुणप्रधानभावगन्धरहितयोः अन्योन्यसाहित्यानादरेण जगद्व्यापारेषु पृथक् पृथक् प्रवृत्तिमतोर्द्वयोरीश्वरयोः प्रतिपादने हि आगमानामैककण्ठ्यहानिः । इह त्वनयोर्दांपत्यादिवचनबलात् अन्योन्येच्छाविघातराहित्ये समप्रधानभावराहित्ये जगद्व्यापारेषु पृथक्प्रवृत्तिराहित्यादौ च सर्वागमानां तात्पर्याभ्युपगमात् ऐककण्ठ्यमुपपन्नम् । सर्वागमानामीश्वरव्यक्त्यैक्यपरत्वरूपमैककण्ठ्यं तत्र दुरुपपादम्, श्रीश्रीशविषयसर्वभूतेश्वरत्ववचनयोर्द्वयोरपि तुल्यबलत्वेन तयोरन्यतरस्यापि अन्यथानेतुमशक्यत्वात्। अतो दंपत्योरन्योन्येच्छाविघातादिराहित्ये तात्पर्यं वा, पत्युः प्रधानत्वेन प्रधानीकृत्यतात्पर्यं वा[निरीक्ष्य?] सर्वागमानामैककण्ठ्यं निर्वाह्यम्।

यथा भगवतो नियन्त्रन्तराभावेन तदैश्वर्यं स्वापेक्षयोत्कृष्टावधिरहितम्, तथा देव्या अपि नियन्त्रन्तराभावात् तदैश्वर्यमपि स्वापेक्षया उत्कृष्टावधिरहितम् । उक्तार्थे प्रमाणं च, बलाबलवैषम्यनियामकाभावेन समतुलारूढं परस्परबाधायनर्हम् उभयोरप्यविशिष्टं सर्वभूतेश्वरत्ववचनम् । स्तोत्ररत्ने

भगवन इव, **चतुश्लोक्यां** देव्या स्वाभाविकानवधिकातिशयेशितृत्व रूप पतिवत् मुख्यमीश्वरत्व **यामुनाचार्यैः** कण्ठरवेण प्रतिपादितम् ।
"स्वाभाविकानवधिकातिशयेशितृत्व, नारायण त्वयि न मृष्यति" इति,

"यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभु
नाल मातुमियत्तया निरवधि नित्यानुकूल स्वत ।" इति ।

**भगवद्भाष्यकारैरपि पृथुमखे,** 'भगवन्नारायणाभिमतानुरूपस्वरूप रूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासख्येयकल्याणगुणगणाम्' इति, **वेदार्थसग्रहे** च "अभिमतस्वानुरूपस्वरूपरूपविभवैश्वर्यशीलाद्यनवधि-कमहिममहिषी" इति प्रतिपादितम्। **श्रीवत्सचिह्नमिश्रैरपि** 'देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायत" इति अनवधिकमाहात्म्य प्रतिपादितम् । तदात्मजैश्च **भट्टपराशरपादैः**—

"अस्येशाना जगत इति तेऽधीमहे या समृद्धि
श्रीश्रीसूक्त बहुमुखयते तां च शाखानुशाखम् ॥" इति ।

एवमनन्याधीनत्वेन पत्या समस्वातन्त्र्य कण्ठरवेण वर्णित **श्रीगुण-रत्नकोशे,** "युवयो स्वातन्त्र्यमत्यङ्कुशम्" इति । अतोऽस्या **नार-**शब्दार्थत्व "नरसबन्धिनो नारा " इति व्युत्पत्तिबलेन, सबन्धश्चात्र प्रतिपाद्यार्थ्यमात्रम्, न तु स्वनो नियाम्यत्वम्, **भगवच्छास्त्रे,** "सर्वैश्वर्य गुणोपेता नित्य तद्धर्मधर्मिणी ।" इति । अस्यार्थ –सर्वेश्वरत्वधर्मविशिष्टा, **नित्य** सर्वकालेषु **तद्धर्मधर्मिणी** । तच्छब्देन भगवानुच्यते । **तद्धर्माः** शारीरकाध्यायचतुष्टयनिर्दिष्टकारणत्वाबाध्यत्वोपायत्वोपेयत्वसर्वा तर्या मित्वसर्वशरीरत्वादयो धर्मा देव्या अपि धर्मा इति तद्धर्मधर्मिणी

इत्युक्तम् ॥ देव्याः सर्वव्यापकत्वसर्वान्तर्यामित्वसर्वनियन्तृत्वादिप्रति पादकानि श्रीविष्णुपुराणभगवच्छास्त्रवचनानि प्रागेव दर्शितानि । यथा,

"लक्ष्म्या समस्तश्चिदचित्प्रपञ्चो व्याप्यस्तदीशस्य तु साऽपि सर्वम् ।
तथाऽपि साधारणमीशितृत्वं श्रीश्रीशयोर्द्वौ च सदैकशेषी ॥" इति ।

तस्यायमर्थः–चिदचिदात्मकः सर्वप्रपञ्चः लक्ष्म्याः शेषभूतः । सा च देवी भगवच्छेषभूता । यद्यपि भगवदपेक्षया उभयोः शेषत्व मेकरूपं वक्तव्यम्, तथाऽपि देव्याः सर्वेश्वरत्वप्रतिपादकश्रुतिस्मृत्यादि बहुप्रमाणविरोधात् स्वतश्शेषत्वाभावे सिद्धे, ऐच्छिकशेषत्वमादाय पर्यवस्यति । प्रपञ्चविषये तु बाधकाभावात्, स्वाभाविकशेषत्वम् । एवं देवीप्रपञ्चयोर्वैषम्यसूचकः तथाऽपीति शब्दः। **साधारणमीशितृत्वं**— साधारणम् एकम् इति पर्यायत्वात् उभयगतमीश्वरत्वं व्यासक्तमेकम्; शेषित्वमपि व्यासक्तमेकम्, एकवचननिर्देशात् इति । उक्तं च **श्रीराम मिश्रैः**–"उभयाधिष्ठानं चैकं शेषित्वम्" इति। एवं व्यासक्तशेषित्वेश्वरत्व परेयं श्रुतिरिति भावः । तदभिप्रायेण "एकः शास्ता" इत्येकत्ववादः उपपद्यते । एवं देव्याः सर्वभूतेश्वरत्वे न किंचित्सकटमित्यलमतिविस्तरेण ॥

कामानां दशमे वाचामाकूतीनां च सत्यताम् ॥ ९ ॥
समृद्धीनां च सत्यत्वं यशसश्च प्रतायते ॥
**मनसः काममाकूतिं वाचस्सत्यमशीमहि ।**
**पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥**

**मनसः कामं**–मनसा काम्यमानमर्थजातम् । **आकूतिम्**— अभिप्रायगतं मनोरथपरिकल्पितमर्थम्, वाचः संबन्धि, वाचा याच्यमानम्

सर्वप्रकाराभिलषितमन्नम् । **पशूनां रूपं** – जीवधनसमृद्धिम् । **अन्नस्य** अदनीयस्य । **रूपं**-रूप्यते प्रकाश्यतेऽनेनेति रूपम् । अन्नसमृद्धिहेतुभूतं सर्वम् । **सत्यम्**-अवितथं यथावस्थितलक्ष्मीप्रसादं, **अशीमहि**-अभिलषेम । किं च सा **श्रीः**, **मयि**—लक्ष्मीचरणकमलयुगलपरिचरणपरे पूर्वोक्तमर्थजातं तत्समृद्धिं प्रथितं **यशश्च श्रयताम्**-प्राप्यतामित्यर्थः ॥ १०

> अवतीर्णा जगत्यर्थे कर्दमस्य गृहे रमा ।
> या तामेकादशे लक्ष्मीं तन्मुखेनार्थयत्यसौ ॥

> **कर्दमेन प्रजाभूता मयि संभव कर्दम ।**
> **श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥**

हे **कर्दम**प्रजापते, **कर्दमेन** त्वया, **प्रजाभूता**—प्रजात्वेन स्वीकृता । 'अभूततद्भावे च्विः' इत्यादिना च्विः । ईत्वाभावः छान्दसः । या पुत्रीत्वेन स्वीकृता तां **श्रियम्** । **मयि**-श्रीसमाराधके **संभव**-संभावय । किं च हे कर्दम, त्वत्पुत्रीं श्रियम् , **मे कुले**-लक्ष्मीचरणारविन्दपरिचरणपरस्य मम पुत्रपौत्रज्ञातिसंबन्ध्यादिष्वपि **वासय**--नित्यनिवासिनीं कुरु । तामेव विशिनष्टि **मातरम्**-सर्वभूतजननीत्वात् अस्माकमपि जननीम् , **पद्ममालिनीं**-पद्ममालालङ्कृतां सौन्दर्यलावण्याद्याकारतया सर्वाह्लादकारिणीं श्रियम् ॥ ११ ॥

> आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
> नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥

आपः-भगवदायतनभूताः, । स्निग्धानाम्-आज्यतैलमधुप्रभृतीनां कारणभूताः याः, ता आपः, स्निग्धानि-आज्यादीनि तानि मम-

**गृहे सृजन्तु**-उत्पादयन्तु । हे चिक्लीत-भगवदन्त पुरद्वाररक्षक ; **मे**-लक्ष्मीचरणाम्भोजभक्तस्य मम गृहे, मद्भवनद्वार इव, त्वम नित्य सन्निहितो भव । चिक्लीतो नाम भगवदन्त पुरद्वाररक्षक । तथा च पौराणिका· पठन्ति, "पद्मो गदो निधि शङ्खश्चतुर्दंष्ट्रो गजस्तथा । कल्याण सर्पपद्मास्याश्चिक्लीतो गृहरक्षका ॥" इति ।

किंच हे चिक्लीत। **देवीं**-द्योतनशीला, **मातरम्**—अखिललोक जननीं असज्जननीं **श्रिय**-सर्वसमाश्रयणीया, **मम कुले**—असत्पुत्र-पौत्रादिके **निवासय च**-असत्कुलसमृद्धि च त्वमेव सवर्धयेत्यर्थ ॥ व्यवहितस्य'नि' इत्युपसर्गस्य वासयेत्यनेन सबन्ध ॥ १२ ॥

देवासुरमनुष्याद्यैरीड्या पद्मवासिनीम् ।
त्रयोदशे पुनर्देवीं लक्ष्मीं प्रार्थयते हरे ॥

**आर्द्रां पुष्करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् ।**
**चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽऽवह ॥ १३ ॥**

**आर्द्रां**-दयार्द्रहृदयतया तापत्रयतप्तान् प्राणिनो दृष्ट्वा द्रूयमान चेतस्तया तान् स्वकटाक्षामृतैरभिवर्षयन्तीं। **पुष्करिणीं**-पुष्करवर्तिनीम्, श्रीनिलयकर्णिकोदरनिवासिनीं "श्रीनिलयधृतकरकमलवरयुत" इत्यादि तन्मन्त्रे । **यष्टिं** यजिक्रियास्वरूपाम्, परमयागमूर्ताम्, यष्टव्या वा । **पिङ्गलां**—भगवच्छायानन्यधारणीयशीतलमनोहराह्लादकरदिव्यवर्णाम् । **पद्ममालिनीं**—दिव्यरूपोद्भूतपद्ममालालङ्कृता "श्रीनिलयमालाधा रिणी" इति तन्मन्त्रे । चन्द्रां हिरण्मयीं इत्यादे पूर्ववत् योजना । अत्रापि जातवेदश्शब्देन श्रिय पतिमेव सम्बोधयति ॥ ॥ १३ ॥

आदरातिशयेनैव पूर्वोक्तामविशेषतः ।
चतुर्दशे पुनः प्राह द्वयं तत्सर्वरक्षकम् ॥

**आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ।**
**सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽऽवह ॥ १४ ॥**

अत्र 'पुष्टिं', 'सुवर्णां', 'सूर्यां', 'हेममालिनीं' इत्येतावन्मात्रो विशेषः । अन्यत् सर्वं पूर्ववत् ॥

**पुष्टिं**—अखिलसमृद्धिरूपाम् । **सुवर्णां**-प्रतिकूलानुकूलभीषणरमणीयाप्राकृतदिव्यरूपाम् । **सूर्यां**—सर्वेश्वरवत् सकलचेतनाचेतनव्यापनभरणनियमनशीलाम् । 'सुष्ठु ईरयन्ती' इति सूर्या; ताम् । "राजसूयसूर्य" इत्यादिना निपातः । "सूर्य आत्मा जगतस्तस्थुषश्च" इति। **पुष्टिमिति** प्राप्यत्वमुक्तम् । **सुवर्णामिति** प्रापकत्वमिति विशेषः ॥१४

[1]अन्तिमेनाद्य सूक्तार्थतात्पर्यातिशयात् पुनः ।
अनन्यगामिनीं देवीं संनियच्छन् नियच्छति ॥

**तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥ १५ ॥**

इति श्रीसूक्तं संपूर्णम् ।

अयमत्र विशेषः-हिरण्यं....पुरुषान्— पूर्वोक्तकुप्याकुप्यजीवधनदासादिकमशेषधनजातं यस्यां प्रधानेश्वरैश्वर्यां प्रणिपातप्रसन्नायाम् अखिलजनन्यां असज्जनन्या **प्रभूतं**-निरवधिकातिशयं **विन्देयं**-लभेय,

---

1 अद्य=सूक्तावसाने । सूक्तेति । प्रभोः स्वगुणकेत्यर्थः । तात्पर्यम्=आस्था । संनियच्छन्=भगवन्तं नियच्छन् ।

**त्वां**–सर्वसंपदा नवपर्याप्तसमृद्धिमतीं करुणासाभिमुखीं सर्वेश्वरेश्वरीं श्रियं त्वच्चरणारविन्दपरिचर्यैकविनोदे स्वज्ञानबलशक्तिक्षमादयासौहार्दादिसर्व-कल्याणगुणैस्तव दास्यैकरसे मयि, जातवेदः श्रियः पते! **अनपगामिनीं** अन्यत्र [1]सर्वत्राप्यपगमनशंकारहिता यथा[स्यात् ?] तथा संनिधापय ॥

एवमेतत्सूक्तोक्तसकलार्थजातं जानता अनेनार्चनहोमजपतर्पणा-दिकं कुर्वतां तस्याः प्रसन्नपावनकान्तिशान्त्याकरवदनारविन्दनिवेशित-मनोनयनबुद्धीनां तच्चरणारविन्दभजनयजनमननस्मरणकीर्तनवन्दनादि-परममङ्गलाचरणानां भगवत्पादाम्भोजविन्यस्तसमस्तभराणामनन्यभावानां पुरुषाणामैहिकमामुष्मिकं वा भोगजातम् , साक्षात्परमपदाधिष्ठातृभूतपरम-पुरुषचरणारविन्दनित्यकैङ्कर्यरसिकपरमसूरिपरिषन्महिष्ठत्वादिकमपि सकलं सुलभमिति सकलश्रुतिस्मृतीतिहासपुराणसिद्धान्तः ॥

यतीन्द्रमाहात्म्यसिकात् प्रणतार्तिहरात् गुरोः ।
सत्संप्रदायसिद्धोऽर्थः श्रीसूक्तस्य विनिश्चितः ॥

**इति श्रीरङ्गनाथमुनिविरचितश्रीसूक्तभाष्यसंग्रहः ॥**

---

1 अनपगामिनीमित्यस्य अपगमनं स्वरितेत्यर्थः तद्रहितामित्यर्थोऽलम्।

लक्ष्मीतन्त्रादयो यत्र श्रीसूक्तार्थाः सुविस्तृताः ।
श्रियो नारायणस्येव पारम्यं बोधयन्ति नः ॥ १ ॥

महिमानं श्रियः श्रीमद्यामुनार्यानुसंहितम् ।
चतुःश्लोक्यामभाषिष्ट श्रीमद्वेदान्तदेशिकः ॥ २ ॥

तत्र सर्वं समालोच्य निरधार्यन्ततो हि यत् ।
यच्चात्र भाष्ये भट्टार्यशिष्यपादावधारितम् ॥ ३ ॥

उभयस्यैकरस्यात् तत् लक्ष्मीनारायणात्मकम् ।
मुख्योपाय उपेयश्च शेषीश्वर्गमिति स्थितिः ॥ ४ ॥
इत्थमीशाद्युपनिषत्परिष्कारविधायिना ।
श्रीसूक्तभाष्यं संगृह्य परिष्कृत्यात्र योजितम् ॥ ५ ॥

इति श्रीवात्स्यवीरराघवाचार्यकृते उपनिषद्भाष्यपरिष्कारे
श्रीसूक्तभाष्योपपरिष्कारः ।

—:**:—

## ऋक्सूची



श्रीसूक्तानन्तरमिदेऽपि महानुसंधीयन्त इमानि —
पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि ।
विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ॥
श्रियं जातः श्रिय आनिर्याय श्रियं वयो जरितृभ्यो दधातु ।
श्रियं वसाना अमृतत्वमायन् भजन्ति सद्यः सविता विदध्युन् ॥
श्रिय एवैनं तच्छ्रियामादधाति संततमृचा वषट्कृत्यं संधत्त
संधीयते प्रजया पशुभिः य एवं वेद ।
महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥

शुभमस्तु

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

# द्वयोपनिषत्परिष्कारः

श्रीमत्त्रयीशिखरलक्ष्मणसंयमीन्द्रसेवात्तमन्त्ररत्नर एष तदर्थविस्थै
श्रीरङ्गलक्ष्मणमुनेश्चरणाब्जसेवी दृष्टां द्वयोपनिषदश्च परिष्करोमि ॥

प्रपन्नजनसंतानकूटस्थश्रीपराङ्कुशमुनि – श्रीभगवन्नाथमुनिपरम्पराप्राप्तेषु प्रतितन्त्रेषु यदन्यतमं प्रपत्तिरूपं हितम्, तत्र करणमन्त्रतया तैरादृतं तावत् द्वयमिति मन्त्ररत्नम्। यत् खलु श्रीभगवद्रामानुजमुनिना गद्ये, 'अत्र द्वयम्' इति, 'येन केनापि प्रकारेण द्वयवक्ता' इति, 'द्वयमर्थानुसंधानेन सह सदैवं वक्ता' इति चाभ्यस्य निर्दिष्टमनन्तरैः तत्संप्रदायप्रवर्तकैः सर्वतोमुखविहितपरश्शतव्याख्यामुखरितनिखिलदिङ्मुखं विजयते । यस्य खलु सकृदुच्चारणेन यथोपदेशकृतेन, विश्वामित्रोपदिष्टमन्त्रजपेन शुनश्शेफ इव पुरुषपशुः, सर्वोऽपि पुरुषो बद्धो भगवतः श्रीमतो नारायणस्य निरवग्रहेणानुग्रहेण नियतं बन्धाद् विमुच्यत इति रहस्यविदो निश्चिन्वन्ति, तस्यास्य मन्त्ररत्नस्य द्वयाख्यस्य प्रकाशिकेयं द्वयोपनिषत् ।

अस्य द्वयस्य विषये श्रुतिः प्रथमं प्रमाणं स्थितमिति श्रीदेशिकचरणैः श्रीमति रहस्यत्रयसारे संदर्शितमेव । तथा 'सारनिष्कर्षाधिकारश्लोके—'उपनिषदमृताब्धेरुत्तमं सारमार्याः' इत्युपनिषत्सारत्वकथनात् अष्टाक्षरचरमश्लोकयोः अथर्वनारायण-गीतोपनिषद्गतत्ववत् द्वयस्यापि किञ्चिदुपनिषद्गतत्वमुदितम्। तदधिकारमध्ये च, 'द्वयमपि कठश्रुत्याधुकरीत्या सकृत् स्वोच्चारणकर्तुः सर्वप्रकारेण कृतकृत्यताकरणचणप्रभावशालि' इति द्वयस्य कठश्रुतिगतत्वमभ्यधायि । तत्र सारास्वादिन्याम्, 'यः सकृदुच्चारः संसारतारको भवति' इति श्रुतिवाक्यमुपात्तम् । सारप्रकाशिकायाम्, 'तत् द्वयं सकृदुच्चारः संसारविमोचनं भवति' इति वाक्यानुपूर्वी गृहीता । द्वयाधिकारे चाचार्यैः, 'द्वयम् इदं कठवल्ल्यां पृथक्पृथगुपदिश्य संमेल्यानुसंधे-

यतया विहितत्वात् भगवच्छास्त्रे श्रीप्रश्नसंहितादिषु वर्णोद्धारादीन्यपि विधाय प्रतिपादितत्वाच्च श्रुतिमूलतान्विकमन्त्रमूलम्। इदं पूर्वाचार्यवाक्यमिति केषाञ्चिदुक्तिश्च, आप्ता उपदेष्टार इत्यादरणार्थं वा, परमाचार्यं सर्वेश्वरः एव भगवच्छास्त्रे समुपदिष्टवानित्यतो हेतोर्वा भवितुमर्हति' इति अस्य कठवल्लीरूपश्रुतिगतत्वमप्यवादि। अत्र सारास्वादिन्याम्—कठवल्ल्यामष्टाक्षरप्रकरणे एव द्वयस्य पूर्वखण्डमुपदिश्य, 'पूर्णमदः' इत्यादिकं पठित्वा, 'परमपुरुषायेति खण्डद्वयं समेत्य सदुच्चारयेत्' इति विहितत्वाम् इति व्याख्यायि। सारप्रकाशिकायां विभज्योक्ति मूलनिर्दिष्टं, 'अथातः श्रीमद्द्वयोत्पत्तिः। वाक्यौ द्वितीयं। पट पदानि। अर्था(र्थाः) दश। पञ्चविंशति अक्षराणि। पञ्चदशाक्षरं प्रथमम्। दशाक्षरमपरम्। नवाक्षरं प्रथमपदम्। द्वितीयतृतीयचतुर्थानि त्र्यक्षराणि। पञ्चाक्षरं पञ्चमम्। द्व्यक्षरं षष्ठं 'इत्यादिषु विभज्योक्त'' इति मुखान्तरेण विवृता। तत्तोपात्तानि वाक्यानि स्वर्गीणि उपनिषद्गतानीति स्पष्टम्। तत्र श्रीप्रश्नसंहितादिगतवर्णोद्धारक्रमश्च सारास्वादिन्याम्, 'श्री प्रथमाक्षरम्। मकारो द्वितीयाक्षरम्' इत्यादिक्रमेणेति वाक्येन विशदितः। सारप्रकाशिकायां तत्र, "नवार्णं विद्धि हृदयं त्रिवर्णं शिरो मतम्। शिखार्णं त्र्यक्षरं विद्धि कवचं तद्वदेव हि। अस्त्रं पञ्चाक्षरं नेत्रं द्व्यक्षरं परिकीर्तितम्। श्रीमच्छब्दात् परे युक्तं नारायण इतीर्यते। तत्परे चरणौशब्दः परे शरणं तथा। प्रपद्ये तत्परे युक्तं नमदशब्दमतः परम्। श्रीमते च तथा युक्तं परे नारायणाय चेति मन्त्रोद्धारक्रमोक्तश्च' इत्युक्तमस्ति। अत्र मन्त्रानुपूर्वी स्पष्टा। परन्तु उत्तरखण्डे नमश्शब्दः प्रथममिति अत्र प्रतीयते। श्रुतिमनुसृत्य नमश्शब्दस्यान्ते पाठः साम्प्रदायिक इति तथैव भाष्यम्।

एवं श्रीप्रश्नसंहितादिवत् श्रुतेरपि दर्शितत्वात्, सा च श्रुतिः कठश्रुतिः, कठवल्लीश्रुतिः इत्यवगमजाच्च द्वयोपनिषदियं यज्ञोपवीतमन्त्रादिवत् श्रुतिरेवेत्यवसीयते। पूर्वापरानुपूर्वीसाहित्येनाध्ययना

षट् पदानि । अर्घा(र्धा)दश । पञ्चविंशतिः अक्षराणि । पञ्चदशाक्षरं

साध्योपायोपेयोभयमप्यत्र निरूप्यते तच्छेषतया। अत एवोक्तम्, 'उपायोपेयरूपार्थद्वयप्रतिपादकत्वात् द्वयम्' इति श्रीमद्रहस्यत्रयसारे। 'शरणसमर्पणयोः खण्डद्वये क्रमेण प्रतिपादनात् द्वयमित्यपि केचित्' इति द्वितीयपक्षश्च तत्र निर्दिष्टः। तत् फलान्तरकामनयाऽपि द्वयस्य प्रयोज्यत्वे तत्र द्वयत्वनिर्वाहायेति ध्येयम्।

अथ, 'श्रीमन्नारायण स्वामिन् दासोऽहं तव तस्य वै। परमीप्सुस्तमेवार्थमनुकूलो विवर्जयन्। प्रातिकूल्यं सुविस्रब्धः संप्रार्थ्य शरणं परम्। व्रजामि युष्मच्चरणं नवं चाहं मयाऽर्पितः' इति श्लोकद्वयात्मके प्रपत्तिमन्त्रान्तरेऽपि द्वयमिति व्यवहारसद्भावात् तद्व्यावृत्तं प्रकृतमन्त्रस्वरूपमाह षट्पदानीत्यादिना। अर्धा दशेति पाठः साधीयान्; वाक्यपदतदेकदेश अक्षर संख्यानक्रमात्। अर्धः = शकलम्। दश चेमे 'एकाक्षरपदः प्रथमः' इत्यारभ्य दर्श्यन्ते, श्री-मत्-नारायण-चरणौ-शरणं-प्रपद्ये-श्रीमते-नारायण-आय नमः इति। न च मत् इत्यस्य पृथक्करणे प्र इत्यस्यापि पृथक्कारः कुतो नेति शंक्यम्-एकाक्षरपदः इति पदशब्दप्रयोगात् अर्थवतो भागस्यैवार्धशब्देन विवक्षणात्। प्रेत्यस्य चोपसर्गतया केवलं व्यञ्जकत्वात् धातुनैव तदभिमतार्थवचनात्। ननु पूर्वार्धे मदित्यस्य पृथक्कारे उत्तरत्रापि तथा किं न स्यादिति चेत्-उक्तार्थत्वात्, उपरि चतुर्थीसत्त्वाच्चाविभजनम्। चरणावित्यादौ विभक्तेः अपृथक्कारेपि आयेति पृथक्कारः तस्य पुरुषार्थरूपप्रधानार्थपरत्वात्। नम इत्यत्रापृथक्करणं तु विरोधिनि मन्त्रार्थसमाप्तिर्मा भूत्। किं तु विरोधिप्रहाणे इत्याशयेन। नेत्यस्य पृथक्पदत्वेऽपि मः इति षष्ठ्याः नञा मेलनं विनाऽर्थसमाप्त्यभावात् अभावस्य च प्रतियोगिं विना बोधाभावादिति विमृश्यम्। अर्धाः दशेति पाठे एतदर्धदशकविवक्षितार्थं दशकमेवात्र ग्राह्यम्। तदिदमष्टश्लोक्याम्, "नेतृ च नित्ययोगं समुचितगुणजातं तनुख्यापनञ्चोपाय कर्तव्यभागं त्वथ मिथुनपरं प्राप्यमेवं

पूर्वम् । दशाक्षरं परम् । नवाक्षरं प्रथमपदम् । द्वितीयतृतीयचतुर्थं त्र्यक्षराणि । पञ्चाक्षरं पञ्चमम् । द्व्यक्षरं षष्ठं । एकाक्षरपद. प्रथमः । एकाक्षरो द्वितीयः । चतुरक्षरस्तृतीय । चतुर्थपञ्चमषष्ठसप्तमा एवं त्र्यक्षराणि । अष्टमश्चतुरक्षर । द्व्यक्षरो नवम । दशमो द्व्यक्षर· । एतन्मन्त्रश्च प्रपत्ति । (एतन्मन्त्रस्य प्रतिपत्ति (प्रपत्ति·) ।) पूर्वो नारायण. प्रोक्तोऽनादिसिद्धो मन्त्ररत्न सदाचार्यमूल । [1]आचार्यो वेदसम्पन्नो

प्रसिद्धम् । म्नःमित्वं प्रार्थनाञ्च प्रजल्पनगविरोधिप्रहाणं दधीतान् मन्तारं त्रायते चेत्यधिगतनिगमः षटपदोऽय द्विखण्डः" इत्युक्तम् । शब्दतोऽर्थतश्चानातौल्यादस्य थीभट्टारकश्लोक·घे विग्रदन्ते । श्रीतत्वं नित्ययोगं गुणिनमपि परं विग्रहं प्रापकत्वं कर्तव्यं प्राप्ययुग्मं फलमतुलमपि प्राप्तिरोधिप्रहाणम् इति रीत्या स्यादिति। एवं पुरुषकारस्वम्, उपायोपेयात्मकसिद्धवस्तुद्वयम्, साध्योपेयम्, साध्योपायः, तदङ्गानि च पञ्चेत्यपि दशकं स्यात्। श्रुतत्वादर्थदशकमस्तु; शब्दतोऽर्थतश्चानेकार्थपरत्वात् किमेवं प्रमेयदशकेनेति च मन्यन्ते इत्यलम् ।

पञ्चविंशतिः अक्षराणि । खण्डद्वयगतानि अक्षराणि पञ्चविंशतिरित्यर्थः । पञ्चदशाक्षरं पूर्वम्=पूर्वखण्डे अक्षराणि पञ्चदश । शिष्टं स्पष्टम् ।

आचार्य इत्यादय श्लोकाः येऽत्र पठिताः, तत्रान्तिमश्लोकद्वयम्, 'मन्त्रराजमिमं विद्याद् गुरुरन्दनपूर्वकम्' इत्यधनिन्तरं पठित्वा, उपरि, 'नानुकूल्यं न नक्षत्रं' इत्यादि च पठित्वा, सर्वमिदं प्रपत्तिमन्त्रान्तरोक्त द्वयविषयेऽपि अर्हातु स्यादनमित्युक्त द्वयाधिकारे । म

1 कचिन् कोशे, 'आचार्यो वेदसंपन्नः' इति पादमुपक्रमस्यं पठित्वा सर्वश्लोकावसानस्थं, 'तस्माद् गुरुतरो गुरु·' इति पादमात्रं प्रत्याहारेणेव पठितम् ।

प्रपत्त्यनुष्ठानमपि मा भूत्; श्रुतिस्वारस्यादिति चेन्न—प्रयोगसम-
वेतार्थस्मारकत्वस्यैव मन्त्रसमाचारत्वात् स्मरणस्य चानुष्ठानार्थत्वात्
प्रपत्तेस्त्यागायोगात्। तदुक्तं न्यासविंशतावाचार्यैः, 'नेहाभिक्रान्ति-
नाश' इति श्लोके—

"तस्मात् क्षेत्रे तदर्हे सुविदितसमयैर्देशिकैः सम्यगुप्तं
मन्त्राख्यं मुक्तिबीजं परिणतिवशतः कल्पते सत्फलाय॥"

इति। अत एव प्रपत्तेः मन्त्रोच्चारणात् पूर्वानुष्ठेयत्वं वा उच्चार-
णाङ्गत्वं वा नेति शक्यशङ्कम्—प्रमाणतर्कविरोधात्। न च वचनबलात्
मन्त्रस्यास्याधिकारिविशेषे प्रयोगसमवेतार्थस्मारकत्वं विना स्वोच्चा-
रणमात्रान्मोक्षहेतुत्वमेवास्तु इति वाच्यम्—यत्र यत्र प्रमाणे ज्ञानाति-
रिक्तस्य मोक्षसाधनत्वमुक्तम्, तस्य साक्षात् तथात्वे न तात्पर्यम्,
किंतु ज्ञानद्वारैवेति ज्ञापनायैव, 'नान्यः पन्था अयनाय विद्यते' इति
निषेधश्रुतिप्रवृत्तेः। अतः, 'अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षि-
पेत्। मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति' इति वचनात्
निक्षेपस्य मध्ये आवश्यकतया संसारविमोचनत्वं नाम संसारविमोक्ष-
हेतुप्रपत्तिहेतुत्वरूपमेकमेवाज्ञाभिज्ञसाधारणमत्रोक्तम्, श्रुतेरस्याः
सर्वाधिकारिसाधारण्यात् अज्ञाभिज्ञभेदेनार्थद्वयवर्णने वाक्यभेद
प्रसंगात्॥ तर्हि उक्तेः प्रपत्तिद्वारैव हेतुत्वे उक्तिः कथं पृथक्
उपायत्वेन परिगण्यत इति चेत्—मन्त्रोक्तयाथार्थ्यविशदज्ञानविरहेऽपि
तदधीने अविशदभरसमर्पण एव सत्यपि सर्वापेक्षितार्थसाधनक्षम-
तया पूर्णप्रपत्तिगर्भभूतमन्त्रोच्चारणं कृतमिति तादृशमन्त्रोच्चारण-
रूपाङ्गमात्रस्य पुरस्कारेणैव पुरुषं प्रशस्य भगवान् एतदनुष्ठिताविशद-
प्रपत्तिरवीनाचारेणानुगृह्णातीति उक्तिप्रशंसनार्थैव तथोक्तिः। उभयपौ-
ष्कल्ये स्वनिष्ठा। स्वरूपेण पुष्कलतया भवन्ती स्वात्मिका निष्ठेति। सर्वं
वाक्यं साधारणमिति उक्तिमात्रपौष्कल्ये उक्तिनिष्ठा। किञ्च मन्त्राणां
स्वप्रकाश्यमानेऽर्थे विनियोग इति लिङ्गबलसिद्धम्। मन्त्रार्थं

वाप्नोति) सर्वपुरुषार्थसिद्धिर्भवति । न च पुनरावर्तते इति य एवं वेद । इत्युपनिषत् । ॥ इति द्वयोपनिषत् ॥

[1](अथ द्वयोपनिषदो मातृकान्तरपाठः)

हरिः ओम्—स वा एष महानज आत्मा अन्नादो विन्दते वसु ।

---

श्रीमन्नारायणविषये प्रपत्तिं कण्ठतो वक्ति । प्रपत्तिर्नाम प्रार्थनान्वित-स्वदुष्करकर्मकसमर्पणरूपेति तदर्थस्वाभाव्यात्, क्षुद्रफलादि-भगवत्प्राप्तिपर्यन्तसर्वफलसाधनतायाः प्रपत्तौ परःशतप्रमाणप्रतिपन्नत्वाच्च सर्वफलार्थिनाऽपि प्रपत्तिमनुतिष्ठता मन्त्रः परिग्राह्योऽयमिति लिङ्गाद् सिद्ध्यत्येव । तदेवं प्राप्ताप्राप्तविवेके क्रियमाणे, 'सकृदुच्चारः संसारमोचनो भवति' इति वाक्यांशान्तरस्य अर्थसिद्धत्वात् सकृत्त्व-विधानमात्रेदम्परम् । अतश्च, प्रपत्तिमुखेनैव कार्यकरत्वे 'सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति' इति अक्षरविशेषद्वयस्य चास्य च न विशेष इति न शङ्कनीयम् । श्रीमद्रत-संहिताद्यनेकोपबृंहणबलेन चास्यैव महिमा स्थापितो भवति । तत् सिद्धं अध्ययनानन्तरं विशदज्ञानपूर्वमविशदज्ञानपूर्वं वा जपपुरश्च-रणादिरूपावृत्तिनिरपेक्षमेव एतद्द्वयोच्चारणं प्रपत्तिरूपाङ्गिद्वारा मोक्षपर्यन्तसर्वफलसाधनं भवतीति ह्युक्तं विस्तरेण । विवेचितश्चैतदनु-संधिश्च सर्वं पूर्वाचार्यैः, अस्मदाचार्यैः श्रीरङ्गरामानुजमुनिभिः, अस्माभि-श्चान्यत्रोक्तिप्रपत्तिविवेचने विस्तरेणेति नेह प्रतन्यते । सकृत्त्वमिदं संसारविमोचनरूपफलांश एव, न त्वन्यफले उपयुज्यते इति न मन्त-व्यम् । परमफलत्वात्तु तस्य प्राधान्येनोक्तिरिति बुबोधयिषया सर्व-मपि फलं संगृह्णाति, सर्वपुरुषार्थसिद्धिर्भवति, न च पुनरावर्तत इति ॥

---

1. अयं द्वयोपनिषत्पाठः श्रीविद्वद्वरिष्ठश्रीगोष्ठीपुराभिजनश्रीसौम्य-नारायणाचार्यचरणानुजश्रीरामदेशिकाचार्यदत्ते तालकोशे उपलब्ध इति वेदान्तदीपिकाख्यायां मासिकपत्रिकायां प्रकाशितः ।

अथ मातृकान्तरमधिकृत्य किञ्चिदुच्यते। अत्र 'स वा एष' इति वाक्यं सर्वफलप्रदसिद्धोपायपरम्। विन्दत इति निजार्थगर्भमिह। यो ब्रह्माणमिति प्रपत्त्यादिकथनम्। कामित्यादि प्रपत्तेः सर्ववेदप्रसिद्धिघातये। सत्यं=परं ब्रह्म। श्रद्धां=लक्ष्मीम्। विश्वासमुख्यत्वं वा श्रद्धामित्युच्यते। तदर्थं सत्यमिति सर्वशङ्कातद्धेतून्मूलनमित्यादि भाव्यम्। अत्रत्यं 'सत्यं तद्बह्म सकृदुच्चारः संसारमोचनं भवति' इति वाक्यं सारप्रकाशिकायामुपात्तम्। सारास्वादिन्यां यदुक्तम्, 'पूर्वखण्डं पठित्वा पूर्णमद इत्यादिपाठानन्तरं उत्तरखण्डस्यापि पाठः कृतः' इति, तदप्यत्रैव मातृकायां लक्ष्यते। इदं मनसिकृत्यैवाचार्यैः, मन्त्रोऽयं विभज्याधीतः संमेल्यानुसंधेयत्वेन विहितश्चेत्युक्तमिति चावसीयते। अतो मातृकेयमादरणीया लक्ष्यते। किं पूर्वदर्शितो भागः, अयञ्चेति सर्वमेकैवोपनिषत्? किं वा अग्निरहस्ये बृहदारण्यके चैकस्यामेव शाखायां शाण्डिल्यविद्यायाः विशकलितपाठ इव षष्ठशाखायामेव स्थाने विभिन्ने पृथगनयोः पाठः इत्यादिविमर्शो विमर्शकानां बुद्धिशक्तिमनुरुध्य यथातथा भवतु। स्थितं तु प्रकाश्यते। एकस्यामुपनिषदि श्रूयमाणं वाक्यमुपनिषदन्तरेऽपि तत्रतत्र पठ्यमानं बहुशो दृष्टम्। तथेहापि श्रुतानि वाक्यानि उपनिषदन्तरदृष्टान्येव सन्ति। तथाहि—अत्र स वा एष महानज आत्मा' इति वाक्यं बृहदारण्यके (६. ४) श्रुतप्रायम्। यो ब्रह्माणमिति श्वेताश्वतरीये। सर्वं तदित्यादिना संमिलितोच्चारणं विधीयते। पूर्वखण्डपाठः श्रीमन्नारायणेति। अस्य खण्डस्योत्तरखण्डमेलनेन पूर्णत्वसंपादनार्थोऽर्थवादः इदं पूर्णमित्यादिः। बृहदारण्यके (७. १) 'पूर्णमद' इत्यादिरयं मन्त्रः पठ्यते। श्रीमते इत्यादिरुत्तरखण्डः। बृहदारण्यके एव पूर्णमद इत्येतत्पाठानन्तरम्, "ओं खं ब्रह्म। खं पुराणम्। वायुरं खमिति ह स्माह कौरव्यायणीपुत्रः। वेदोऽयं ब्राह्मणा विदुः वेदैनेन यद् वेदितव्यम्" इत्यानुपूर्वी लक्ष्यते। किं सैवेह लेखकप्रमादात् खं ब्रह्मेत्यादिना किञ्चिदन्यथाभूता, उत परमार्थरीतिरिय-

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ इति होवाच ।
ऋग्वेदं प्रपद्ये । यजुर्वेदं प्रपद्ये । सामवेदं प्रपद्ये । इतिहासपुराणानि प्रपद्ये ।
सत्यं प्रपद्ये । श्रद्धां प्रपद्ये । परमात्मने प्रपद्ये । भागवताय प्रपद्ये ।
वासुदेवाय प्रपद्ये । ओं प्रपद्ये । नमः प्रपद्ये । श्रीं प्रपद्ये । श्रियं प्रपद्ये ।

यद्वेदा दिव्यगायत्री जयति । तदेषाऽभ्युक्ता । इदेव मूर्तं तदुपासितव्यम् । तत् पूर्णसौन्दर्यं लक्ष्म्याः । तदेवममृतं सदानन्दं सत्यम् । तत् द्वयम् । सर्वं तत् सकृदुच्चारणो (सकृदुच्चारः संसारमोचनो !) भवति । श्रीमन्नारायणचरणौ शरणं प्रपद्ये । इदं पूर्णमदः पूर्णं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । सर्वं पूर्णमिति । स होवाच—श्रीमते नारायणाय नमः ॥

खं ब्रह्म । खं वायु । पुराणम् खमितिहास । खं प्रायणीपुत्र । वेदोऽयं ब्रह्मणो [illegible] । वेदानेन वेदितव्यमिति । य एवं वेद । इत्युपनिषत् । हरिः ओं ॥ श्रीरस्तु । शुभमस्तु ।

---

मिति विवेचकविमृश्यम् । नूनमिदं सर्वम्, द्वयस्यापि प्रणवः पूर्वमपेक्षितः प्रणवाधिकर्तृपुरुषविषये इति ज्ञापनार्थं प्रवृत्तमिति बृहदारण्यकानुसारेण भावनीयम् । एतन्मन्त्रार्थश्च रहस्यग्रन्थेषु विदावमनुसंधेयः। अत्र श्रीशब्दार्थानां धारणाय अन्यत्र स्थितोऽस्मदीयोऽयं श्लोकोऽप्यनुसंधानमर्हति ; य एषः—

श्रीरूर्व्यं श्रिता शरणमीप्सुभिरार्तरावं
श्रुत्वा श्रिता सपदि शार्ङ्गिभुजान्तरालम् ।
तं श्रावयस्यथ शृणासि समस्तमेनः
श्रीणासि च प्रगुणदास्यविधादिभिर्नः ॥ इति ।

तत् सिद्धं सर्वोपनिषत्प्रतिपाद्यः परब्रह्मभूतः पुरुषोत्तमः श्रीमन्नारायण एव भक्त्या प्रपत्त्या वा प्रसाद्यमानः सर्वमपि पुरुषार्थं प्रयच्छतीति सर्वं समञ्जसम् ॥ श्रियं प्रपद्य श्रीसूक्तमन्त्रेणाथ श्रियाऽन्वितम् ।
नारायणं प्रपद्येत द्वयेनैतेन मुक्तये ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
द्वयोपनिषदर्थेऽयं परिष्कारः क्रमात् कृतः ॥
स जयति यतिराजः सोऽपि वेदान्तसूरिः
तदुभयपदसेवासादधन्याश्च सन्तः ।
तदनघवचनैकव्यक्तनानार्थमर्थ-
श्रुतिगणसमधीत्या साधु सर्वे जयन्तु ॥
श्रीमद्वेदान्तलक्ष्मणमुनिश्रीपादसेवी श्रुतीः
श्रुत्वा श्रीयुतरङ्गलक्ष्मणमुनिश्रेष्ठात्महिष्ठोक्तिभिः ।
वात्स्यः श्रीशाट्यास्यवीक्षणपदं निर्माय नाना कृतीः
विश्वक्षेमपरो व्यधादिति परिष्कारः परो धीमताम् ॥
ईशाद्या याः श्रुतयः उदिताः श्रीबृहदारण्यकान्ताः
याश्च श्वेताश्वतरमुखतः श्रीद्वयान्ता इहान्याः ।
एताः भाष्यप्रवरविहितव्याख्यया युक्तियुक्ति-
प्राप्तद्वैधाः समुचितपरिष्कारभव्या जयन्ति ॥

इति श्रीवत्सवंशमुक्ताफलायमान सच्चरितवर्ति श्रीचक्रवर्त्यार्य-
तनूद्भवस्य श्रीमद्वेदान्तरामानुजसंयमीन्द्रपदारविन्दमधु-
व्रतस्य श्रीमद्रङ्गरामानुजसंयमीन्द्रचरणारविन्दसेवा-
संप्राप्तसकलवेदान्तार्थस्य तर्कतीर्थादिबिरुदभाजः
श्रीवीरराघवाचार्यस्य कृतिषु उपनिषद्भाष्यपरिष्कारः ।
परिष्कारद्वयोपनिषदर्थसंग्रहकारिकाः
प्रीतये सन्तु विधेशद्वयश्रीरार्पितात्मनाम् ॥
समाप्तम् ॥